श्रीमद्-बाणभट्ट-प्रणीतं

# हर्षचरितम्

"छात्रतोषिणी" संस्कृत-हिन्दी-व्याख्याभ्यां

टिप्पण्या च समलङ्कृतम्

आचार्य-श्रीमोहनदेवपन्तः

श्रीमद्-बाणभट्ट-प्रणीतं



# हर्षचरितम्

"छात्रतोषिणी" संस्कृत-हिन्दी व्याख्याभ्यां टिप्पण्या च समलङ्कृतम्

( ५-८ उच्छ्वासात्मकः उत्तरभागः )

व्याख्याकारः

आचार्य-श्रीमोहनदेवपन्तः

मो ती ला ल ब ना र सी दा स

दिल्ली वाराणसी पटना मद्रास

# विषय-सूची

## पञ्चम उच्छ्वासः ।



नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तडिदिव वज्रं निपातयति ॥ १ ॥

पातयति महापुरुषान्सममेव बहूननादरेणैव ।
परिवर्तमान एकः कालः शैलानिवानन्तः ॥ २ ॥

अथ कदाचिद्राजा राज्यवर्धनं कवचहरमाहूय हूणान्हन्तुं हरिणानिव हरिर्हरिणेशकिशोरकमपरिमितबलानुयातं चिरन्तनैरमात्यैरनुरक्तैश्च महासामन्तैः कृत्वा साभिसरमुत्तरापथं प्राहिणोत् ।

---

**टीका–नियतिरिति**—अन्वयः—तरला तडित् प्रथमम् पुंसाम् आलोकं कृत्वा उपरि दारुणं वज्रम् इव तरला नियतिः पुंसां प्रथमं सुखं निधाय उपरि दारुणं दुःखं निपातयति ।

तरला=चञ्चला तडित्=विद्युत् प्रथमं=पूर्वं पुंसाम्=लोकानाम् आलोकं=प्रकाशं कृत्वा उपरि=पश्चात् तदनन्तरमित्यर्थः दारुणं=कठोरम् वज्रम्=अशनिः इव तरला नियतिः=विधिः प्रथमं पुंसाम् सुखं=हर्षं विधाय=कृत्वा उपरि=तत्पश्चात् दारुणं=भीषणं दुःखं निपातयति ददातीत्यर्थः । अत्र श्लिष्टोपमालङ्कारः । आर्या च छन्दः । तुलनार्थं भवभूतिरपि दृश्यताम्—'सुहृदिव प्रकटय्य सुखप्रदः प्रथमेकरसामनुकूलताम् । पुनरकाण्डविवर्तनदारुणो विधिरहो विशिनष्टि मनोरुजम्' [ उत्तरराम० ४।१५ ] ॥ १ ॥

**पातयतीति**—अन्वयः—परिवर्तमानः एकः अनन्तः समम् एव अनादरेण एव बहून् शैलान् इव परिवर्तमानः अनन्तः एकः कालः समम् एव अनादरेण एव बहून् महापुरुषान् पातयति ।

परिवर्तमानः=घूर्णन् निजसहस्रफणासु पृथिवीं धारयन् श्रमेण स्वफणाः सञ्चालयन् इत्यर्थः एकः=केवलः अनन्तः =शेषनागः ( 'नागाः काद्रवेयास्तदीश्वरः । शेषोऽनन्तः' इत्यमरः ) समम् एव=युगपत् एव अनादरेण एव=अवहेलया एव बहून्=अनेकान् शैलान्=पर्वतान् इव, शेषफणा-सञ्चलन-समये पृथिवीकम्पने पर्वताश्च पतन्ति यथोक्तम्—'यदा विजृम्भतेऽनन्तो मदाघूर्णितलोचनः । तदा चलति भूरेषा साद्रि-तोया सकानना' [विष्णु पु० २।५।२८] परिवर्तमानः =भ्रमन् अनन्तः=पर्यन्तरहितः एकः=एकाकी कालः=समयः कालचक्रमित्यर्थः समम् एव अनादरेण एव किमपि न चिन्तयित्वेत्यर्थः बहून् महापुरुषान् पातयति=ध्वंसयतीत्यर्थः । अत्रापि श्लिष्टोपमा, उभयोः श्लोकयोः विशेषे प्रतिपाद्ये सामान्यं प्रतिपादितम् इत्यप्रस्तुतप्रशंसापि । छन्दोऽपि आर्या ॥ २ ॥

राजा प्रभाकरवर्धनः कवचहरम्=कवचं=वर्म हरति=धारयतीति (कवच+$\sqrt{}$हृ+अच् 'वयसि च'पा० ३।२।१० कवचहरः कुमारः सि० कौ० ) कवचधारणवयोऽवस्थां प्राप्तम् युवानमिति यावत् राज्यवर्धनम् आहूय हूणान्=एतन्नामकान् विदेशीयान् आक्रामकान् हरिः=सिंहः हरिणानाम् ईशः=इन्द्रः मृगेन्द्रः सिंह इति यावत् तस्य किशोरकम्=स्वशावकमित्यर्थः हरिणान्=मृगान् इवेत्युपमायां हन्तुं=विनाशयितुम् अपरिमितम्=विशालमित्यर्थः यत् बलं=सैन्यं तेन अनुगतम् मृतम् चिरन्तनैः=चिरकालाद् आगतैः अमात्यैः=सचिवैः अनुरक्तैः=स्वामिभक्तैः महा-

**टिप्पणी**—प्रारम्भ के इन आर्या-छन्दों में कवि पञ्चम उच्छ्वास के कथानक की ओर संकेत कर रहा है कि इसमें दुर्भाग्य अपना कार्य कर गया है, अपरिहार्य कालचक्र राजा प्रभाकरवर्धन को छीन ले गया है । यह सारा उच्छ्वास शोक के वातावरण में समाप्त होता है ।

**हिन्दी**–चंचल भाग्य लोगों को पहले सुख देकर तदनन्तर ( उनपर ) इस तरह दारुण दुःख डालता है जैसे चंचल बिजली पहले प्रकाश करके तदनन्तर दारुण वज्र डाल दिया करती है ॥ १ ॥

घूमता हुआ अकेला अनन्त काल ( चक्र ) एक साथ ही अवहेलना पूर्वक अनेक महापुरुषों को इस तरह गिरा देता है जैसे ( थकावट के कारण ) डोलता हुआ अकेला अनन्त ( शेषनाग ) एक साथ ही अवहेलना पूर्वक अनेक पर्वतों को गिराया करता है ॥ २ ॥

इसके बाद एक बार राजा (प्रभाकरवर्धन) ने राज्यवर्धन को बुलाकर और विशाल सेना अपने पीछे लिये हुए प्राचीन काल से चले आ रहे अमात्यों तथा स्वामिभक्त बड़े-बड़े सामन्तों को उसके साथ करके हूणों का वध करने के लिये उत्तरापथ की ओर इस तरह भेज दिया जैसे सिंह मृगों का वध करने के लिये सिंह-शिशु ( =अपने शिशु ) को भेजा करता है ।

प्रयान्तं च तं देवो हर्षः कतिचित्प्रयाणकानि तुरङ्गमैरनुवव्राज। प्रविष्टे च कैलासप्रभाभासिनीं ककुभं भ्रातरि वर्तमानो[1] नवे वयसि विक्रमरसानुरोधिनि केसरिशरभशार्दूलवराहबहुलेषु तुषारशैलोपकण्ठेषूत्कण्ठमानवनदेवता-कटाक्षांशुशारितशरीरकान्तिः क्रीडन्मृगयां मृगलोचनः कतिपयान्यहानि बहिरेव व्यलम्बत। चकार चाकर्णान्ता-कृष्टकार्मुकनिर्गतभासुरभल्लवर्षी स्वल्पीयोभिरेव दिवसैर्निःश्वा[2]पदान्यरण्यानि। एकदा तु वासतेय्यास्तुरीये यामे प्रत्युषस्येव स्वप्ने चटुलज्वालापुञ्जपिञ्जरीकृतसकलककुभा दुर्निवारेण दवहुतभुजा दह्यमानं केसरिणमद्राक्षीत्। तस्मिन्नेव च दावदहने समुत्सृज्य शावकानुत्प्लुत्य चात्मानं पातयन्तीं सिंहीमपश्यत्। आसीच्चास्य चेतसि—'लोके

टीका–सामन्तैः=विशिष्टैः अधीननृपैः साभिसरम्=अभिसरति=सहगच्छतीति अभिसरः=सहचरः तैः सहितं कृत्वा विधाय उत्तरापथम् उत्तरा=(अव्य०) उत्तरस्यां दिशि पन्थाः यस्य देशस्य स उत्तरापथः तं=देशस्य उत्तरभागमित्यर्थः स्थाण्वीश्वरात् उत्तरतः पश्चाद्वे काश्मीरदेशे च इति यावत् प्राहिणोत्=प्रेषितवान्।

प्रयान्तम्=गच्छन्तम् तम्=राज्यवर्धनम् हर्षः=हर्षवर्धनः कतिचित् प्रयाणानि एव प्रयाणकानि=यात्रामार्गानित्यर्थः (अध्वनोऽत्यन्तसंयोगे द्वि०) तुरङ्गमैः=अश्वैः अनुवव्राज=अनुजगाम। कैलासस्य=हिमालयस्य शिखरविशेषस्य प्रभया=छटया भासते=द्योतते इति० भासिनी ताम् ककुभम्=दिशाम् ('दिशस्तु ककुभः काष्ठाः' इत्यमरः) प्रविष्टे=कृतप्रवेशे भ्रातरि=राज्यवर्धने इत्यर्थः नवे वयसि युवावस्थायां विक्रमे शौर्ये यः रसः=अभिरुचिः तम् अनुरुणद्धि अनुसरतीति तथोक्तं साहसिककार्योचितं इत्यर्थः वर्तमानः=स्थितः। केसरि०—केसरिणः=सिंहाश्च शरभाः=अष्टपदाः पशु-विशेषाश्च शार्दूलाः=व्याघ्राश्च वाराहाः=शूकराश्च बहुलाः=बहवः येषु तेषु तुषारशैलस्य=हिमालस्य उपकण्ठेषु=समीपवर्तिभूमिषु उत्कण्ठ०—उत्कण्ठमानाः=उत्सुकीभवन्त्यः हर्षस्य अतिसुन्दरत्वात् अथवा हर्षोऽस्मद्रक्षितान् वन-पशून् हनिष्यतीति पशूनधिकृत्य चिन्ताकुलाः याः वनदेवताः=वनरक्षिकाः देव्यः तासां ये कटाक्षाः=अपाङ्गदर्शनानि तेषां किरणैः=अंशुभिः शारिताः=चित्रवर्णीकृताः शरीरस्य कान्तिः=छविः यस्य सः तासामक्ष्णां श्वेत-श्याम-रक्ता छविः तं चित्रयन्ति स्मेति तद्गुणालङ्कारः मृगयाम्=आखेटं क्रीडन् खेलन्, अत्र 'काल-भावाध्वगन्तव्या कर्मसंज्ञा ह्यकर्मणाम्' इति 'भावार्थरूपायाः मृगयायाः कर्मभाव;' इति शङ्करः, मृगस्य लोचने इव लोचने यस्य सः हर्षवर्धनः (अत्र लुप्तोपमा) कति-पयानि=कतिचित् अहानि दिनानि (कालात्यन्तसंयोगे द्वि०) बहिः एव=कैलासकेन्द्राद् अथवा गृहादितिशेषः व्यलम्बत=चिरायितवान् कमपि कालं तत्रैव स्थितः इत्यर्थः। आकर्णा०—आकर्णान्तं=कर्णसमीपपर्यन्तम् आकृष्टं=ततमित्यर्थः यत् कार्मुकं=धनुः तस्मात् निर्गताः=निसृताः भासुराः=भास्वन्तः ये भल्लाः=अर्धचन्द्राकाराः तान् वर्षति=प्रहरतीति तथोक्तः स्वल्पीयोभिः=अतिशयेन स्वल्पैः दिवसैः=दिनैः अरण्यानि=वनानि निःश्वापदानि=निर्गताः श्वापदाः=हिंसकपशवः येभ्यः तथाभूतानि तद्रहितानीत्यर्थः चकार=कृतवान्। वासतेय्या वसनं वसतिः तत्र साधुः वासतेयी=रात्रिः [वसतिः + ढञ् 'पथ्यतिथिवसतिस्वपतेर्ढञ्' पा० ४।४।१०४] अथवा वसतिरेव वासतेयी ['वसती रात्रि-वेश्मनोः' इत्यमरः] तस्याः तुरीये=चतुर्थे यामे=प्रहरे प्रत्युषसि=उषःकाले एव स्वप्ने चटुल०—चटुलाः=चञ्चलाः याः ज्वालाः=अर्चींषि तासां पुञ्जेन=समस्तेन पिञ्जरीकृताः=रक्तवर्णीकृताः सकला=सर्वाः ककुभः=दिशाः येन तेन दुर्निवारेण=दुःखेन निवारयितुं योग्येन दवस्य=वनस्य हुतभुजा=अग्निना ['दवदावौ वनारण्यवह्नी' इत्यमरः] दह्यमानं

हिन्दी–उसके जाते हुए देव हर्षवर्धन (भी) घोड़ों द्वारा कुछ चाचाओं (पड़ावों) तक उसके पीछे-पीछे गया। भाई के कैलास-प्रभा से विभासित दिशा में प्रविष्ट हो जाने पर शौर्य कर्म की ओर सम्मान रखने वाली तरुणावस्था में स्थित वनदेवियों के कटाक्षों की किरणों से रंग बिरंगी बनी शारीर कान्तिवाला वह मृगलोचन (हर्षवर्धन) सिंह शरभ, व्याघ्र और सूअरों से खूब भरी हिमालय की समीपवर्ती—भूमियों में शिकार खेलता हुआ कुछ दिनों तक बाहर ही विलम्ब कर बैठा (= रुक गया) और कानों के समीप तक खींचे हुए धनुष से निकले चमकीले अर्धचन्द्राकार बाणों की वृष्टि करने वाले उसने थोड़े ही दिनों में वनों को हिंसक पशुओं से शून्य कर दिया। एक बार रात के चौथे प्रहर उषाकाल में ही उसने स्वप्न में चपल लपटों के समूह से तमाम दिशाओं को लाल पीला किये हुए, न बुझाई जा सकने वाली वनाग्नि द्वारा जलाया जाता हुआ सिंह देखा और बच्चों को छोड़-छाड़ कर उसी वनाग्नि में कूदकर अपने आप को झोंकती हुई सिंहनी देखी। और उसके मन में विचार आया—

१ 'निवर्तमानो' २ 'निःश्वासप्रदानि'

हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः, यदाकृष्टास्तिर्यञ्चोऽप्येवमाचरन्ति' इति। प्रबुद्धस्य चास्य मुहुर्मुहुर्दक्षिणेतरमक्षि पस्पन्दे। गात्रेषु चाकस्मादेव वेपथुर्विपप्रथे। निर्निमित्तमेवान्तर्बन्धनस्थानाच्चचालेव हृदयम्। अकारणादेव चाजायत गरीयसी दुःखासिका। किमिदमिति च समुत्पन्नविविधविकल्पविमथितमतिरपगतधृतिश्चिन्तावनमितवदनः स्तिमिततारकेण चक्षुषा समुद्भिद्यमानस्थलकमलिनीवनमिव चकार चकोरेक्षणः क्षणं क्षौणीम्। अह्नि च तस्मिञ्शून्येनैव च चेतसा चिक्रीड मृगयाम्। आरोहति च हरितहये मध्यमह्नो भवनमागत्योभयतो मन्दमन्दं संवाह्यमानतनुतालवृन्तः क्षितितलविततामतिशिशिरमलयजरसलवलुलितवपुषमिन्दुधवलोपधानधारिणीं वेत्रपट्टिकामधिशयानः साशङ्क एव तस्थौ।

---

टीका—प्लुष्यमाणं केसरिणं=सिंहम् अद्राक्षीत्=अपश्यत् तस्मिन एव दाव-दहने=वनाग्नौ शावकान्=शिशून् समुत्सृज्य=परित्यज्य उत्प्लुत्य=उत्कूर्द्य आत्मानं पातयन्तीं=प्रक्षिपन्तीमित्यर्थः सिंहीं=सिंहस्त्रीम् अपश्यत। आसीत् च अस्य=हर्षवर्धनस्य चेतसि=मनसि स मनसि अचिन्तयदित्यर्थः—लोहेभ्यः=आयसेभ्यः कठिनतराः=अधिकं कठिनाः कठोराः इत्यर्थः स्नेहः एव स्नेहमयाः=स्नेहात्मकाः बन्धनस्य पाशाः=रज्जवः भवन्तीति शेषः यैः आकृष्टाः=प्रेरिताः इत्यर्थः तिर्यञ्चः=पशुपक्षिणः अपि एवम् पत्यनुगमनम् आचरन्ति=कुर्वन्ति इति यथोक्तम्—बन्धनानि किल सन्ति बहूनि स्नेहपाशकृतबन्धनमन्यत्। दारुभेदनिपुणोऽपि षडंघ्रिर्निष्क्रियो भवति पङ्कजबद्धः। प्रातःकालीनाः स्वप्नाः सत्याः भवन्ति अत एवैतेन राज्ञः प्रभाकरवर्धनस्य मृत्युः यशोमत्याः च अग्निप्रवेशः सूच्यते। प्रबुद्धस्य=जागरितस्य दक्षिणात् इतरं=भिन्नं वाममित्यर्थः अक्षि=चक्षुः पस्पन्दे=अस्फुरत्, पुरुषाणां वामाङ्गस्फुरणमशुभं भवति। गात्रेषु=अङ्गेषु अकस्मात्=सहसा एव वेपथुः=कम्पः विपप्रथे=प्रथितवान् विस्तृतोऽभवदित्यर्थः। निः=न निमित्तं=कारणं यस्मिन्कर्मणि यथा स्यात्तथा हृदयम्, अन्तर्बन्धनस्य=आन्तरिकबन्धनस्य स्थानात्=प्रदेशात् चचाल=चलितम् अभवत् इवेत्युत्प्रेक्षायाम्। अकारणात् एव गरीयसी=अतिशयेन गुर्वी (ईयसुन्) दुःखासिका=दुःखम् असिका इवेति वेदनेत्यर्थः अजायत=उदपद्यत समुःपन्न०—समुत्पन्नाः=संजाता ये विविधाः=नाना विकल्पाः=सन्देहाः तैः विमथिताः=विलोडिताः मतिः=बुद्धिः यस्य सः, अपगता=दूरीभूता धृतिः=धैर्यं यस्य सः चिन्तया अवनमितं=नीचैः कृतं वदनं=मुखं येन सः, स्तिमिता=स्तब्धा तारका=कनीनिका यस्य तथाभूतेन चक्षुषा=नेत्रेण समुद्०—समुद्भिद्यमानं=स्फुटत् स्थलकमलिनी-वनं=स्थलपद्मिनी-काननं यस्याः ताम् इवेत्युत्प्रेक्षायां क्षौणीं=पृथिवीं क्षणं=क्षणपर्यन्तं चकार=कृतवान् चकोरवत् अथवा चकोरस्येव अक्षिणी यस्य सः हर्षवर्धनः अक्ष्णः रक्तत्वं सौन्दर्यचिह्नमुच्यते चकोरा रक्तेक्षणे भवति। चिन्तया कमल-समं मुखं विनमय्य भूमौ स स्थिरदृष्ट्या पश्यतिस्म, कविकल्पनया तत्क्षणे तन्मुखं पृथिवीतः उद्भिद्यमानं स्थलकमलमिव दृश्यते स्म अथवा निश्चलदृष्टिपाताः भूमिं स्थलकमलमयीमिव दर्शयन्ति स्मेति। अह्नि=दिवसे शून्येन=रिक्तेन मृगयाम्=आखेटं चिक्रीड=क्रीडितवान्। हरिताः=हरिद्वर्णाः हयाः=अश्वाः यस्य तस्मिन् सूर्ये इत्यर्थः सूर्यो हि हरिदश्वः, अह्नः=दिनस्य मध्यं=मध्यभागम् आरोहति=प्राप्नुवतीत्यर्थः भवनं=गृहम् आगत्य हर्षवर्धनः उभयतः=उभयोः पार्श्वयोः मन्दमन्दं यथा स्यात्तथा संवाह्यमानं संचाल्यमानं वीज्यमानमिति यावत् तनु=लघु तालवृन्तं=व्यजनं यस्मिन् सः, क्षितितले=भूतले वितताम्=आस्तीर्णाम् अति०—अतिशयेन शिशिरः=शीतलैः मलयजस्य=चन्दनस्य यः रसः=द्रवः तस्य लवैः=कणैः लुलितं=स्पृष्टं वपुः=शरीरं

हिन्दी—'संसार में सचमुच लोहे से भी कठिन स्नेह-रूप बन्धन-पाश हुआ करते हैं जिनसे आकृष्ट हुए पशु-पक्षी भी इस तरह करते हैं'। सोकर उठे उसकी बायीं आँख बार-बार फड़क उठी, अंगों में अकस्मात् ही कँपकँपी फैल गई, बिना कारण ही हृदय ऐसा लगा मानों वह अपने भीतरी बन्धन स्थान से विचलित हो गया हो बिना कारण ही बड़ी भारी वेदना उठ गई। यह क्या बात है? इस तरह उठी हुई अनेक शंकाओं से मथी जा रही बुद्धिवाला वह चकोराक्ष धैर्य त्यागे, चिन्ताओं के कारण मुख नीचे किये, निश्चल पुतलीवाली आँखों से क्षणभर के लिए पृथ्वी को फूट रहे स्थल-कमल-समूह वाली जैसी बना बैठा। और उस दिन उसने खाली मन से ही आखेट किया। सूर्य के मध्याह्न में आरूढ़ हो जाने पर आकर दोनों ओर (भृत्यों द्वारा) छोटे पंखे से मन्द-मन्द वीजित किया जाता हुआ वह भूतल पर बिछाई अतिशीतल चन्दन-रस के छीटों से सिक्त देहवाली चन्द्रमा-जैसे श्वेत तकिया रखे हुए बेंत की चटाई पर लेटा हुआ सशंकित हो रहा।

अथ दूरादेव लेखगर्भया नीलीरागमेचकरुचा चैलचीरि[1]कया रचितमुण्डमालकम्, श्रमातपाभ्यामारोप्यमाण-कायकालिमानमन्तर्गतेन शोकशिखिनाङ्गारतामिव नीयमानम्, अतित्वरागमनद्रुततरपदोद्धूयमानधूलिराजिव्याजेन राजवार्ताश्रवणकुतूहलिन्या मेदिन्येवानुगम्यमानम्, अभिमुखपवनप्रेङ्खत्प्रविततोत्तरीय[2]पटप्रान्तवीज्यमानोभयपार्श्वं-मतित्वरया कृतपक्षमिवाशु परापतन्तम्, प्रेर्यमाणमिव पृष्ठतः स्वाम्यादेशेन, कृष्यमाणमिव पुरस्तादायतैः श्रमश्वास-मोक्षैः, स्विद्यल्ललाटतटघटमानप्रतिबिम्बकेन कार्यकौतुकादपह्रियमाणलेखमिव भास्वता, संभ्रमभ्रष्टैरिवेन्द्रियैः शून्यीकृतशरीरम्, लेखार्पितप्रयोजनगौरवादिव समेऽपि वर्त्मनि शून्यहृदयतया स्खलन्तम्, कालमेघशकलमिव पतिष्यतो दुर्वार्ताशनेः, धूमपल्लवमिव ज्वलिष्यतः शोकज्वलनस्य, बीजमिव फलिष्यतो दुष्कृतशालेरनिमित्तभूत-दीर्घाध्वगं कुरङ्गकनामानमायान्तमद्राक्षीत् ।

---

टीका—यस्याः ताम् इन्दुवत्=चन्द्रवत् धवलं=श्वेतम् उपधानम्=उपबर्हं धारयतीति तथोक्तां वेत्रपट्टिकां=वेत्रनिर्मित-शय्याम् कटमित्यर्थः अधिशयानः=अधितिष्ठन् [ अधियोगात् शी धातोः सकर्मकत्वम् ] शङ्काभिः सहितः एव तस्थौ=स्थितः ।

अथ दूरादेव·······दीर्घाध्वगं कुरङ्गनामानम् आयान्तम् अद्राक्षीत् इत्यस्ति वाक्यम् । लेख०—लेखः=पत्रं गर्भे=मध्ये यस्याः तया नीलीरागेण=नीलवर्णेन मेचका=नीला रुक्=कान्तिः यस्याः तया चैलस्य=वस्त्रस्य चीरिकया=पट्टिकया रचिता=कृता मुण्डमाला=शिरोमाला येन तम् अर्थात् पत्रगर्भनीलवस्त्रपट्टिकया कृतशिरोवेष्टनम् नीलवर्णः अशुभसूचक इति ध्येयम्, श्रमात०—श्रमः=क्लमश्च आतपः=घर्मश्च ताभ्याम् आरोप्यमाणः=जन्यमानः इत्यर्थः कायस्य=शरीरस्य कालिमा: [ काल+इमनिच् ] श्यामिका यस्य तम्, अन्तर्ग०—अन्तर्गतेन=हृदयस्थेन शोकः एव शिखी=अग्निः तेन अङ्गारतां=दग्धकाष्ठत्वम् इवेत्युत्प्रेक्षायां नीयमानं=प्राप्यमाणम्, शोकाग्निदग्धः सः अङ्गारीभवतिस्मेति भावः, अत्र रूपकोत्थापितोत्प्रेक्षालङ्कारः अतित्वरा०—अतिशयेन त्वरया=शीघ्रतया यत् आगमनं तेन द्रुततराणि=वेगवत्तराणि यानि पदानि=पादनिक्षेपाः तैः उद्धूयमानाः=उत्तिष्ठन्ती या धूलेः=रजसः राजिः=समूहः तस्याः व्याजेन=कैतवेन राज्ञः=प्रभाकरवर्धनस्य वार्तायाः=समाचारस्य श्रवणे कुतूहलम् अस्या अस्तीति तथोक्तया मेदिन्या=पृथिव्या इव अनुगम्यमानम्=अनुश्रियमाणम् राजा पृथिवीपतिः अतः पृथिवी स्वपतेः समाचार-श्रवणकुतूहलादिव सन्देशवाहकमनुसरति स्म, अत्र व्याजापह्नुत्युत्थापितोत्प्रेक्षा, अभिमुख०—अभिमुखः=मुखम् अभि वहन्नित्यर्थः यः पवनः=वायुः तेन प्रेङ्खन्=दोलायमानः सञ्चलन्नित्यर्थः प्रविततः=विस्तृतः यः उत्तरीयपटः=उत्तरीयवसनं तस्य प्रान्तेन पर्यन्तभागेन वीज्यमानौ=वीजितीक्रियमाणौ उभये=उभौ ( उभयशब्दस्य द्विवचनं नास्ति ) पार्श्वौ=पार्श्वभागौ यस्य तम् अतिशयेन त्वरया=वेगेन कृतौ=विहितौ पक्षौ=पतत्रे येन तम् इवेत्युत्प्रेक्षायाम् आशु=शीघ्रं परापतन्तम् =आगच्छन्तम्, प्रेर्यमा०—स्वामिनः=राज्ञः प्रभाकरवर्धनस्य आदेशेन=आज्ञया पृष्ठतः=पश्चाद्भागेन

हिन्दी—तदनन्तर उसने आते हुए कुरङ्ग नामक अशकुन भूत संदेशवाहक को दूर से ही आते देख लिया जो भीतर पत्र-बंधी नील रंग के कारण नीली-नीली चमकती हुई वस्त्र-पट्टिका से सिर-माला बनाए हुए था, जो थकावट और धूप से काला पड़ा हुआ ऐसा लग रहा था मानो हृदय के भीतर ( जल रही ) शोकाग्नि ने उसे ( फूंककर ) कोयला बना दिया हो, जो अतिशीघ्र आने में जल्दी-जल्दी पग रखने से उठे हुए धूलि-समूह से ऐसा प्रतीत हो रहा था मानो ( अपने पति ) राजा का समाचार सुनने को उत्सुक हुई पृथ्वी उसके पीछे-पीछे आ रही हो ।

जो सामने से आती हुई पवन से झूलते हुए विस्तृत चादर के छोरों द्वारा दोनों पार्श्वभागों में पंखा झला जाता हुआ ऐसा लग रहा था मानो अति त्वरा के कारण पंख लगाए हुए आ रहा हो, जो पीछे से स्वामी की आज्ञा द्वारा-जैसे प्रेरित किया जा रहा था, जो आगे से थकान के कारण छोड़े जा रहे दीर्घ निश्वासों द्वारा जैसे खींचा जा रहा था, जिससे पसीजते हुए भाल के किनारे में पड़े हुए प्रतिबिम्ब वाले सूर्य द्वारा ( उसके ) कार्य ( जानने ) के कुतूहल से पत्र छीना-जैसा जा रहा था, जिसका शरीर जल्दी-जल्दी में ( पीछे ) छूट पड़ी-जैसी इन्द्रियों से खाली हो रखा था, जो पत्र में लिखे प्रयोजन के महत्त्व के भार से-जैसे समतल मार्ग में भी शून्य हृदय होने के कारण ठोकर खा रहा था, जो बाद में टूट पड़ने वाले अशुभ समाचार—रूपी वज्र का काला मेघ-खण्ड-जैसा था, जो भविष्य में जलने वाली शोक-रूपी अग्नि का धूम-समूह-जैसा था एवं जो आगे फलित होने वाले पाप-रूपी धान का बीज-जैसा

---

१ 'चीरचीरिकया' २ 'उत्तरीयकर्पट'

दृष्ट्वा च पूर्वनिमित्तपरम्पराविर्भावितभीतिरभिद्यत हृदयेन। कुरङ्गकस्तु कृतप्रणामः समुपसृत्य प्रथममानन-लग्नं विषादमुपनिन्ये, पश्चाल्लेखम्। तं च देवो हर्षः स्वयमेवादायावाचयत्। लेखार्थेनैव च समं गृहीत्वा हृदयेन संतापमवग्रहरूपोऽभ्यधात्--'कुरङ्गक, किं मान्द्यं तातस्य' इति। स चक्षुषा बाष्पजलबिन्दुभिर्मुखेन च खञ्जाक्षरैः

---

टीका-प्रेर्यमाणं=प्रणुद्यमानम् इवेत्युत्प्रेक्षायाम्, कृष्य०—पुरस्तात्=अग्रतः आयतानां=दीर्घाणां श्रमश्वासानां श्रमेण=क्लमेन जनितानां=निश्वासवायूनां मोक्षैः=व्यजनैः कृष्यमाणं=नीयमानमित्यर्थः इवेत्युत्प्रेक्षायाम्, स्विद्यत्०-स्विद्यत्=स्वेदजलं स्रवत् यत् ललाटस्य=भालस्य तटं=प्रान्तः तस्मिन् घटमानं=जायमानं प्रतिबिम्बं=प्रतिच्छाया यस्य तथाभूतेन भास्वता=सूर्येण कार्ये सन्देशवाहकक्रियमाणकर्मणि यत् कौतुकं=कुतूहलं तस्मात् अर्थात् किम् कार्यं कर्तुं राज्ञा कुरङ्गकः प्रेषितः इति ज्ञातुमुत्सुकतया अपह्रियमाणः=आच्छिद्यमानः लेखः=सन्देशपत्रं यस्मात् तम् इवेत्युत्प्रेक्षायाम्, संभ्रम०—संभ्रमः=त्वरा तेन भ्रष्टैः=च्युतैः इवेत्युत्प्रेक्षायाम् इन्द्रियैः=चक्षुरादिभिः शून्यीकृतं=रिक्तीकृतं शरीरं यस्य तम् तेषां जडत्वाप्तेः अर्थात् तस्येन्द्रियाणि न साधारणतया कार्यं कुर्वन्ति स्म, शीघ्रगमनेन तस्य मनसि आसीत् अत एव कवि-कल्पना स इन्द्रियरहित इव इन्द्रियाणि पश्चात् त्यक्तवानितीति, लेखा०—लेखे=पत्रे अर्पितं=निहितमित्यर्थः यत् प्रयो-जनं=कृत्यं तस्य यत् गौरवं=महत्त्वम् एव गौरवं=भारित्वं तस्मात् इवेत्युत्प्रेक्षायाम् समे=समतले अपि वर्त्मनि=मार्गे शून्यं=रिक्तं हृदयं यस्य तस्य भावः तत्ता तया स्खलन्तम्=पतन्तम्, काल०—कालः कृष्णवर्णः यः तस्य शकलं=खण्डम् इवेत्युत्प्रेक्षायाम् पतिष्यतः=पतनविषयीभविष्यत. दुर्वार्ता=अशुभ-समाचारः एव वज्रं तस्य अत्र रूपकम्, अयं भावः प्रथमं गगने कृष्णमेघखण्डम् एवाविर्भवति ततः वज्रं, सन्देशवाहकोऽपि श्रमातपकारणात् कृष्णकायः पश्चात् च स वज्रसमं समाचारं श्रावयिष्यति, धूम०--ज्वलिष्यतः=ज्वलनविषयीभविष्यतः शोकः एव ज्वलनः=वह्निः तस्य धूमस्य पल्लवं=प्रसारम् इवेत्युत्प्रेक्षा सा च रूपकोत्थापिता, बीज०—फलिष्यतः=फलोन्मुखस्य दुष्कृतं=पापम् एव शालिः=श्यामवर्णो धान्यविशेषः तस्य बीजम् इवेति पूर्ववत् रूपकोत्था उत्प्रेक्षा, अनभिभूतम्; अपशकुनीभूतं दीर्घाध्वगं=सन्देशहरं कुरङ्गकः नाम यस्य तम् आयान्तम्=आगच्छन्तम् अद्राक्षीत्=अपश्यत्।

दृष्ट्वा=अवलोक्य तं पूर्वाणि यानि निमित्तानि=स्वप्नाङ्गस्फुरणादीनि लक्षणानि तेषां परम्परया=क्रमेण अविर्भाविता=समुत्पादिता भीतिः=भयं यस्य स हर्षवर्धनः हृदयेन अभिद्यत=अस्फुटत् भीत्या तद्हृदय-स्फोटनं जात-मित्यर्थः। कृतः प्रणामः येन स समुपसृत्य=समीपे आगत्य प्रथमं=पूर्वं आनने=मुखे लग्नं=स्थितं विषादं=शोकम् उपनिन्ये=उपाहरत् उपस्थापितवानित्यर्थः पश्चात् लेखं=पत्रम् अर्थात् पत्रसमर्पणात् पूर्वमेव स विषण्णमुखाकारेण अशुभं सूचितवान् पत्रेण तु पश्चात्। आदाय=गृहीत्वा अवाचयत्=वाचितवान् अपठदित्यर्थः। लेखस्य=पत्रस्य अर्थेन=विषयेण एव च समं=सह गृहीत्वा=ज्ञात्वा ( पितृरुग्णावस्थाम् ) हृदयेन च गृहीत्वा=प्राप्य संतापम् अवग्रहरूपः=अवग्रहात्मकः मूर्तिमान् अवग्रहः इत्यर्थः [ 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ इत्यमरः ] अत्र लेखार्थग्रहणं प्रथमं जातं ततः सन्तापग्रहणम् अत्र द्वयोर्यौगपद्यात् कार्यकारणपौर्वापर्यरूपातिशयोक्तिमूलकः सहोक्तिरलङ्कारः अभ्यधात्=अकथयत्—तातस्य=पितुः किं मान्द्यम्=मन्दस्य भावः शरीरमान्द्यम् रोग इति यावत्। चक्षुषा=नेत्रेण बाष्पजलस्य=अश्रु-जलस्य बिन्दुभिः क्षरद्भिः=स्रवद्भिः मुखेन च खञ्जैः=त्रुटितैः अक्षरैः=शब्दैरित्यर्थः युगपत्=समम् एव आचचक्षे

टिप्पणी—अवग्रहरूपः—अवग्रह=अवर्षण अथवा अनावृष्टि को कहते हैं। छः ईतियों ( विपत्तियों ) में अना-वृष्टि भी आती है। अनावृष्टि से खेती न होने पर प्रजा में हाहाकार मच जाता है। पिता की बीमारी के समाचार से हर्षवर्धन साकार अवग्रह बन बैठा। उसके शोकाक्रान्त होने से प्रजा में हाहाकार स्वाभाविक है। वास्तव में अवग्रह शब्द यहाँ ठीक संगत नहीं दिखाई दे रहा है। इसीलिए एक प्रति में 'आविग्नरूपः' पाठ देख रखा है जो ठीक लगता है अर्थात् हर्षवर्धन का रूप-चेहरा आविग्न हो बैठा।

हिन्दी-था। और उसको देखकर पूर्व ( अनुभूत ) दुर्निमित्तों की परम्परा से भयभीत हुए उसका हृदय फट गया। प्रणाम किये हुए कुरंगक पहले मुख पर छाये हुए विषाद को और पीछे पत्र को अर्पित किया। देव हर्षवर्धन ने उसे लेकर स्वयम् पढ़ा और पत्र के समाचार-ग्रहण के साथ-साथ ही हृदय में से सन्ताप ग्रहण करके मूर्तिमान आकर्षण बना हुआ बोला—'कुरंगक पिताजी को क्या रोग है? 'वह आँखों से बहते अश्रुबिन्दुओं और मुख से निकलते हुए टूटे-फूटे शब्दों

क्षरद्भिर्युगपदाचचक्षे—'देव दाहज्वरो महान्' इति। तच्चाकर्ण्य सहसा सहस्रधेवास्य हृदयं पफाल। कृताचमनश्च जनयितुरायुष्कामोऽपरिमितमणिकनकरजतजातमात्मपरिबर्हमशेषं ब्राह्मणसादकरोत्। अभुक्त एवोच्चचाल। 'दापय वाजिनः पर्याणम्' इति च पुरः स्थितं शिरःकृपाणं बिभ्राणं बभाण युवानम्। वेपमानहृदयश्च संभ्रम-प्रधावितपरिवर्धकोपनीतमारुह्य तुरङ्गमेकाक्येव प्रावर्तत।

अकाण्डप्रयाणसंज्ञाशङ्खक्षुभितं तु संभ्रमात्सज्जीभूतमुद्भूतमुखरखुररवभरितसकलभुवनविवरमागत्यागत्य सर्वाभ्यो दिग्भ्यो धावमानमश्वीयमढौकत। प्रस्थितस्य चास्य प्रदक्षिणेतरं प्रयान्तो विनाशमुपस्थितं राजसिंहस्य हरिणाः प्रकटयांबभूवुः। अशिशिररश्मिमण्डलाभिमुखश्च हृदयमवदारयन्निव दावशुष्के दारुणि दारुणं रराण

---

टीका—=अकथयत्—महान् दाहज्वरः=दाहजनको ज्वरः (मध्यमपदलो०)। आकर्ण्य=श्रुत्वा सह सुधा—सहस्रप्रकारैः इव हृदयं पफाल (√फल निष्पत्तौ+लिट्) स्फुटितमित्यर्थः। कृतम् आचमनं येन सः कस्याः अपि धार्मिकक्रियाया प्रारम्भे 'त्रिराचम्येति विधानमस्ति, जनयितुः=पितुः आयुः=दीर्घजीवत्वं कामयते इच्छतीति तथोक्तः अपरिमितानाम्= असंख्यानां मणीनां=रत्नानां कनकानां=सुवर्णानां रौप्याणां=रजतानाञ्च जातं=निचयम्, अत्र सुवर्णरौप्यैः सुवर्ण-रौप्यमुद्राः विवक्षिताः आत्मनः=स्वस्य च अशेषं=निखिलं परिवर्हं परिच्छदं नृपार्हार्यजातं छत्रादिकमित्यर्थः ['परिच्छदे नृपार्हेऽर्थे परिवर्हः' इत्यमरः] ब्राह्मणानाम् अधीनम् अकरोदिति (ब्राह्मण+सात्√कृ+लङ्) अभुक्तः=न भुक्तं= भोजनं (भावे क्तः) यस्य अकृतभोजन-एवेत्यर्थः उच्चचाल=उत्थितवान् वाजिनः=अश्वस्य पर्याणं=पल्ययनं दापय= दातुं प्रेरय अश्वपालम् इति पुरः=अग्रेस्थितं शिरः संमुखे कृपाणम् (मध्य पद लो०) बिभ्राणं=धारयन्तम् अर्थात् प्रणमनव्यापारे कृपाणमुत्तोल्य स्वशिरोग्रे धारयन्तम् युवानम्=रक्षापुरुषं युवमित्यर्थः बभाण=अवदत् वेपमानं=कम्प-मानं हृदयं यस्य तथाभूतश्च संभ्रमेण=वेगेन प्रधावितः=प्रद्रुतः यः परिवर्धकः=अश्वपालः तेन उपनीतम्=उपस्थापितं तुरङ्गम्=अश्वम् आरुह्य=आरूढो भूत्वा एकाकी=एकलः एव प्रावर्तत=चलितुं प्रवृत्तः।

अकाण्डे=असमये अकस्मादित्यर्थः यत् प्रयाणं=प्रस्थानं तस्य संज्ञायै=संकेताय यः शङ्खः=शङ्खध्वनिरित्यर्थः तेन क्षुभितं=क्षोभमवापितं चकितमिति यावत् संभ्रमात्=त्वरया सज्जीभूतं=सज्जितम् उद्यतमित्यर्थः उद्भूत० उद्भूतः= उत्थितः मुखरः=सर्वत्र प्रतिध्वनन्नित्यर्थः यः खुर-रवः=अश्वानां शफ-शब्दः तेन भरितं=पूरितं सकलभुवनस्य= निखिलसंसारस्य विवरं=छिद्रम् अन्तरालमित्यर्थः येन तत् आगत्य आगत्य=एत्य एत्य धावमानं=विद्रवन् अश्वीयम् =अश्वानां समूहः इति ['अश्व+छः' केशाश्वाभ्यां यञ्छावन्यतरस्याम् पा० ४।२।४८] अढौकत [√ढौक्+लङ्

टिप्पणी—प्रदक्षिणेतरं—मृगों का पुरुषों के बायीं तरफ से जाना अपशकुन होता है, स्त्रियों के दायीं ओर से जाने का अपशकुन बाण ने कादम्बरी में बता रखा है—'प्रस्थिताम् इव अनभीष्ट-दक्षिणवातमृगागमनाम्'। यहाँ कवि ने राजसिंहादि शब्दों में श्लेष का प्रयोग कर रखा है। मृग वन में सिंह से डर-डर के जाया करते हैं। किन्तु यदि वे प्रदक्षिणेतर=आदर या भय के भाव से न जाएं उद्धत होकर जायें तो वे (वन) राजा सिंह का विनाश=अभाव सिद्ध करते हैं। यहाँ हम क्लिष्टोपमा कहेंगे।

हिन्दी—के साथ-साथ ही बोला—'महाराज, बड़ा भारी दाह ज्वर है।' और सुनकर उसका हृदय सहस्रधा-जैसे फूट पड़ा। आचमन किये पिता की दीर्घायु की कामना रखे हुए उसने असंख्य मणियाँ और सोने-चाँदी के ढेर तथा सभी अपनी राजोचित वस्तुएं (छत्रादि) ब्राह्मणों को दान दे दी। वह बिना भोजन किये ही उठ बैठा और सामने खड़े हुए कृपाण को सिर के आगे खड़ा किये युवक को बोला—'घोड़े पर काठी कसवाओ' और हृदय से काँपता हुआ जल्दी जल्दी दौड़े अश्वपाल द्वारा लाये घोड़े पर चढ़कर अकेला ही चलने लगा। असमय में ही चल पड़ने के संकेत की शंख-ध्वनि से चौंका हुआ, जल्दी-जल्दी तय्यार हुआ, घोड़ों के खुरों से उठे गूंजते हुए शब्द से सफल भुवन के अन्तराल को व्याप्त करता हुआ, सभी दिशाओं से आ-आकर दौड़ता हुआ अश्व समूह (अश्व-सैन्य) आ पहुँचा। प्रस्थान करते हुए उस (हर्षवर्धन) के प्रदक्षिणेतर (बायीं ओर) जाते हुए हिरण इस प्रकार राज-सिंह [राजाओं में सिंह जैसे प्रभाकर वर्धन] के विनाश (निधन) की सूचना दे बैठे जैसे प्रदक्षिणेतर (अनादर के साथ उद्धततापूर्वक) जाते हुए हरिण राजसिंह (वन के राजा सिंह) के विनाश (अभाव) की सूचना दिया करते हैं। सूर्यमण्डल की ओर मुँह किए हुए कौआ (हर्षवर्धन का) हृदय विदीर्ण करता हुआ-जैसा वनाग्नि से सूखे पड़े हुए पेड़ पर दारुण स्वर में बोल

वायसः। कज्जलमय इव बहुदिवससमुपचितबहलमलपटलमलिनिततनुरभिमुखमाजगाम शिखिपिच्छालाञ्छनो नग्नाटकः। दुर्निमित्तैरनभिनन्द्यमानगमनश्च नितरामशङ्कित हृदयेन पितृस्नेहाहितम्रदिम्ना च तत्तदुपेक्षमाणस्तुरङ्गमस्कन्धबद्धलक्ष्यं चक्षुरविचलं दधानो दुःसमवसितहसितसङ्कथस्तूष्णींभूतेन भूपाललोकेनानुगम्यमानो बहुयोजनसम्पिण्डितमध्वानमेकेनैवाह्ना समलङ्घयत्।

उपलब्धनरेन्द्रमान्द्यवार्ताविषण्ण इव नष्टतेजस्यधोमुखी भवति भगवति भानुमति भण्डिप्रमुखेन प्रणयिना राजपुत्रलोकेन बहुशो विज्ञाप्यमानोऽपि नाहारमकरोत्। पुरःप्रवृत्तप्रतीहारगृह्यमाणग्रामीणपरम्पराप्रकटितप्रगुणवर्त्मा च बहन्नेव निन्ये निशाम्।

---

आत्म० ] आगच्छदित्यर्थः प्रस्थितस्य=कृतप्रस्थानस्य च अस्य हर्षवर्धनस्य प्रदक्षिणात्=दक्षिणभागात् इतरं वाममित्यर्थः अथ उद्धतं यथा स्यात्तथा प्रयान्तः=गच्छन्तः हरिणाः=मृगाः उपस्थितं=सन्निहितं राजसिंहस्य=राजसु सिंह इव तस्य प्रभाकरवर्धनस्य अथ च राजवत् सिंहः तस्य विनाशं=निधनम् अथ च अभावं प्रकटयाम्बभूवुः=प्रकटीकृतवन्तः सूचयामासुः इति यावत्। अशिशिर०—अशिशिराः=उष्णाः रश्मयः=किरणाः यस्य सः सूर्यः इत्यर्थः तस्य यन्मण्डलं=बिम्बं तस्य मुखम् अभि इत्यभिमुखः वायसः=काकः हृदयं हर्षस्येति शेषः अवदारयन्=विदीर्णं कुर्वन्निव दावेन=वनाग्निना शुष्के शुष्कतां नीते दारुणि=काष्ठे द्रुमे इत्यर्थः वायसः=काकः दारुणं=कठोरं यथा स्यात्तथा रराण=शब्दं चकार। एतदपि दुर्निमित्तम्। कज्जल०—कज्जलम्=अञ्जनं तन्मयः तद्रूप इवेत्युत्प्रेक्षायाम् बहवः=दिवसाः यस्मिन् कर्मणि यथा स्यात्तथा उपचितं=प्रवृद्धं बहलेन=प्रचुरेण मलपटलेन=मलसमूहेन मलिनितं=मलिनीकृतं तनुः=शरीरं यस्य सः शिखिनः=मयूरस्य पिच्छापिच्छं लाञ्छनं=चिह्नं यस्य सः नग्नाटकः नग्नः सन् अटति भ्रमतीति तथोक्तः नग्नः क्षपणकः इत्यर्थः मुखम् अभि इति अभिमुखम् ( अव्ययी० ) संमुखम् आजगाम=आगच्छत्। दिगम्बरजैन-दर्शनमपि अपशकुनं भवति। दुर्निमि०—दुर्निमित्तैः=अपशकुनैः न अभिनन्द्यमानं=स्तूयमानमित्यर्थः गमनं यस्य सः नितरां=भृशम् अशङ्कित=शङ्कितो जातः, पितरि यः स्नेहः=अनुरागः तेन आहितः जनितः म्रदिमा (मृदु+इमनिच् भावे ) यस्मिन् तेन हृदयेन=मनसा न तत् तत् दुर्निमित्तम्=दुर्लक्षणम् उपेक्षमाणः=अगणयन् तुरङ्गमस्य=अश्वस्य स्कन्धे=अंसे बद्धं=नियमितं लक्ष्यं येन तत् चक्षुः=नयनं अविचलं=स्थिरं यथा स्यात्तथा दधानः=धारयन् दुः=दुःखेन सदुःखमित्यर्थः समवसितं=समाप्तं हसितं=हासः सङ्कथा=वार्तालापश्च यस्य तथाभूतं तूष्णींभूतेन=मौनम् आकलयता भूपालानां लोकेन=वृन्देन अनुगम्यमानः=अनुश्रियमाणः बहुभिः=अनेकैः योजनैः=क्रोशचतुष्कैः सम्पीडितं=संकलितम् अनेकक्रोशपरिमितमित्यर्थः अध्वानं=मार्गम् एकेन एव अह्ना=दिवसेन समलङ्घयत्=अतिक्रान्तवान्।

उपलब्धा=ज्ञाता नरेन्द्रस्य=प्रभाकरवर्धनस्य मान्द्यस्य=रुग्णतायाः या वार्ता=समाचारः तया विषण्णे=जातविषादे इवेत्युत्प्रेक्षायाम् नष्टं=क्षीणं तेजः=प्रकाशः यस्य तस्मिन् भगवति भानुमति=सूर्ये अधोमुखीभवति=निम्नमुखी भवति सति भण्डिः प्रमुखः मुख्यः यस्मिन् तथाभूतेन प्रणयिना=स्नेहिना राजपुत्राणां लोकेन=समूहेन बहुशः=बहुवारं विज्ञाप्यमानः=प्रार्थ्यमानः अपि हर्षवर्धनः आहारं=भोजनं न अकरोत्=कृतवान्। पुरः=अग्रे प्रवृत्ताः=

हिन्दी-पढ़ा। बहुत दिनों से जमा हुए प्रचुर मैल के ढेर से शरीर मैला बनाए नग्न क्षपणक मोर पंख ( हाथ में) लिये सामने से आ गया। अपशकुनों द्वारा यात्रा में अभिनन्दित न किया जाता हुआ और स्नेह द्वारा मृदु बनाए हुए हृदय से उस-उस ( अपशकुन की ) उपेक्षा करता हुआ, घोड़े के कन्धे को लक्ष्य बनाये एकटक दृष्टि रखे, दुःखपूर्वक हास परिहास और वार्तालाप से विरत हो, चुपचाप चलते आ रहे राजा लोगों को अपने पीछे लिए हुए वह अनेक योजन विस्तीर्ण मार्ग को एक ही दिन में पार कर गया।

नरेन्द्र ( प्रभाकरवर्धन ) की बीमारी का समाचार जान खिन्न हुए -जैसे निस्तेज बने सूर्य भगवान् के मुँह नीचे कर देने पर भण्डि आदि स्नेही राज-पुत्र लोगों द्वारा प्रार्थित किये जाते हुए भी उसने भोजन नहीं किया। आगे-आगे जा रहे प्रतिहारों द्वारा पकड़-पकड़ कर ( साथ में ) लिये जा रहे ग्रामीणों के क्रम से अच्छे से अच्छा मार्ग दिखाया जाता हुआ विना विश्राम किये चलते-चलते रात बिता बैठा।

अन्यस्मिन्नहनि मध्यन्दिने विगतजयशब्दम्, अस्तमिततूर्यनादम्, उपसंहृतगीतम्, उत्सारितोत्सवम्, अप्रणीतचारणम्, अप्रसारितापणपण्यम्, स्थानस्थानेषु पवनबलकुटिलाभिः कोटिहोमधूमलेखाभिरुल्लसन्तीभिर्यमहिषविषाणकोटिभिरिवोल्लिख्यमानम्, कृतान्तपाशवागुराभिरिवावेष्टयमानम्, उपरि कालमहिषालङ्कारकालायसकिङ्किणीभिरिव कटु क्वणन्तीभिर्दिवसं वायसमण्डलीभिर्भ्रमन्तीभिरावेद्यमानप्रत्यासन्नाशुभम्, क्वचित्प्रतिशायितस्निग्धबान्धवाराध्यमानाहिर्बुध्नम्, क्वचिद्दीपिकादह्यमानकुलपुत्रकप्रसाद्यमानमातृमण्डलम्, क्वचिन्मुण्डोपहाराहरणोद्यतद्रविडप्रार्थ्यमानामर्दकम्, क्वचिदान्ध्रोद्ध्रियमाणबाहुवप्रोपयाच्यमानचण्डिकम्, अन्यत्र शिरोविधुतविलीयमानगुग्गुलुविक्लवनवसेवकानुनीयमानमहाकालम्, अपरत्र निशितशस्त्रीनिकृत्तात्ममांसहोमप्रसक्ताप्तवर्गम्, अपरत्र

---

टीका—प्रचलिताः इत्यर्थः ये प्रतीहाराः=दौवारिकाः भृत्या इति यावत् तैः गृह्यमाणाः आत्मना सह नीयमानाः इत्यर्थः या ग्रामीणानां=ग्रामवास्तव्यानां परम्परा=श्रेणी तया प्रकटितं=प्रदर्शितं प्रगुणं=प्रकृष्टं सरलतमं निकटतमञ्च वर्त्म=मार्गः यस्य सः वहन्=अविश्रान्ति गच्छन्नित्यर्थः एव निशां=रात्रिं निन्ये=अत्यवाहयत् ।

अन्यस्मिन्=अपरस्मिन् अहनि=दिने मध्यन्दिने=मध्याह्ने""स्कन्धावारं समाससाद इत्यस्ति वाक्यम्, विगतः=अपगतः जयशब्दः=जयनादः यस्मात् तम् । अस्तम् इतः=विरतः तूर्याणां=वाद्यविशेषाणां नादः=शब्दः यत्र तम्, उपसंहृतानि=समाप्तानि न श्रूयमाणानीत्यर्थः गीतानि=गानानि यत्र तम् उत्सारितः=अपनीतः उत्सवः=आनन्दः यस्मात् तम्, न प्रणीताः ( कर्तरि क्तः ) कृतस्तुतिगानाः चारणाः=स्तुतिपाठकाः यत्र तम्, न प्रसारितानि विक्रयार्थं विस्तारितानि आपणेषु=पण्यवीथिषु पण्यानि=विक्रय वस्तूनि यस्मिन् तम्, स्थान०—स्थानेषु स्थानेषु पवनस्य=वायोः बलेन = वेगेन कुटिलाभिः=वक्राभिः तरङ्गायमाणाभिरित्यर्थः कोटिहोमानां=कोटिसंख्यकहविषां धूमलेखाभिः—धूमराजिभिः उल्लसन्तीभिः=गगने गच्छतीभिः यमस्य=यमराजस्य यः महिषः=वाहनीभूतः सैरिभः तस्य येन विषाणे=शृङ्गे तयोः कोटिभिः=अग्रैः इवेत्युत्प्रेक्षायाम् उल्लिख्यमानं=घृष्यमाणम्, राज्ञः रोगशान्त्यर्थं राजधान्यां कोटिहोमयज्ञः क्रियते स्म, उद्गच्छद्यज्ञधूमकुटिललेखायाः यममहिषकोटित्वेनोत्प्रेक्षणं समुचितमेव, राजा मृत्युशय्यायामासीत्, महिषारूढो यमश्च तत्प्राणान् ग्रहीतुं तत्रागतः आसीत्, कृतान्त०—कृतान्तस्य=यमराजस्य या पाशस्य=बन्धनस्य वागुरा=जालं ताभिः इवेत्युत्प्रेक्षायां धूमलेखाभिः आवेष्टयमानं=परिश्रियमाणम्, उपरि०—उपरि=आकाशे कालस्य=

टिप्पणी—दीपिकादह्यमान—वाक्य अस्पष्टार्थ है । नवयुवकों ने नो दीपों द्वारा अपने अंग नहीं जलाये प्रत्युत वे दिव्य मातृगण को प्रसन्न करने के लिये अपने सिरों पर दीपक धरे हुए थे । कभी-कभी उनसे अकस्मात् उनके अंग जल जाते होंगे अब भी कितने ही लोग देवी को प्रसन्न करने के लिए अपने सिरों पर दीपक रखकर मूर्ति की परिक्रमा किया करते हैं । विक्लनवसेवक—पुराने स्वामिभक्त सेवक तो अपने स्वामी के निमित्त सभी मुसीबतों को झेलने के लिए सदा तैयार रहते हैं, यहाँ तक कि स्वयं को बलिदान तक कर बैठते हैं, परन्तु नये सेवक जरा से गलते हुए गुग्गुल से अकुला जाते हैं । महामांस—शाक्त लोग नर-मांस से देवी की आराधना किया करते हैं । देखें शब्द-कल्पद्रुम—'अष्टम्यो रुधिरैर्मांसैर्महामांसैः सुगन्धिभिः । पूजयेद्बहुजातीयैर्बलिभिर्भोजनैः शिवम् ।' महामांस का विक्रय राजपुत्र लोग पिशाचों को किया करते थे और उसके बदले राजा का आरोग्य माँगते थे । पिशाचों में आरोग्यादि देने की शक्ति होती है । इस सम्बन्ध में भवभूति का मालती माधव अंक ५ देखिए ।

हिन्दी—दूसरे दिन दोपहर को वह राजधानी पहुँच गया—जहाँ न जय-जय ध्वनि हो रही थी, न तुरही बज रही थी, जहाँ गीत-गान बन्द हुआ पड़ा था, चारण स्तुति गान नहीं कर रहे थे, जहाँ बाजारों में बिक्री की वस्तुएँ नहीं फैलाई हुई थीं, जो स्थान-स्थानों में उठती हुई पवन के वेग से टेढ़ी-मेढ़ी ( "" ) करोड़ों होमों की धूम पंक्तियों से यम के भैंसे के सींगों की नोकों से जैसे खोदा जा रहा था ( अथवा ) यमराजके बन्धन के जालों से जैसे घेरा जा रहा था, जहाँ ऊपर ( आकाश में ) यमराज के भैंसों की अलङ्कार-भूत काले लोहे की घंटियों जैसे कटु शब्द करते हुए तमाम दिन मँडराते हुए कौओं की मण्डलियाँ निकट आशम की सूचना दे रही थीं, जहाँ कहीं निराहार लम्बे लेटे हुए प्रिय बान्धवों द्वारा महादेव की आराधना की जा रही थी, कहीं प्रदीपों से जल रहे कुलीन युवकों द्वारा मातृ-मण्डल प्रसन्न किया जा रहा था, कहीं नर-मुण्ड की भेंट लाने को उद्यत हुआ ( कोई ) द्रविड़ वेताल की प्रार्थना कर रहा था, कहीं आन्ध्रप्रदेशीय ऊपर उठाई हुई दीवार-जैसी भुजा से चंडिका की मनौती कर रहा था, जहाँ दूसरी जगह कहीं बन्धुगण तेज छुरे से

**प्रकाशनरपतिकुमारकक्रियमाणमहामांसविक्रयप्रक्रमम्, उपहतमिव श्मशानपांशुभिरमङ्गलैरिव परिगृहीतम्, यातुधानैरिव विध्वस्तम्, कलिकालेनेव कवलितम्, पापपटलैरिव सञ्छादितम्, अधर्मविक्षेपैरिव लुण्ठितम्, अनित्यताधिक्का¹रैरिवाक्रान्तम्, नियतिविलासैरिवात्मीकृतम्, शून्यमिव सुप्तमिव मुषितमिव विलक्षितमिव छलितमिव मूर्छितमिव स्कन्धावारं समाससाद ।**

**टीका**—यमस्य यः महिषः तस्य अलङ्काराः=अलङ्कारभूताः या कालायसस्य=श्यामलोहस्य किङ्किण्यः=क्षुद्रघण्टिकाः ताभिः इवेत्युत्प्रेक्षायां कटु=श्रवणदुःखकरं यथा स्यात्तथा क्वणन्तीभिः=शब्दायमानाभिः दिवसं=दिवसपर्यन्तं ( कालात्यन्तसंयोगे द्वि० ) वायसानां=काकानां पंक्तिभिः=राजिभिः भ्रमन्तीभिः=इतस्ततः विचरन्तीभिः आवेद्यमानं=सूच्यमानं प्रत्यासन्नम् अशुभं=राज्ञः मरणरूपम् अमङ्गलम् यत्र तत्, प्रतिशा०-प्रतिशायिताः=उपोषिताः स्वाभीप्सितसिद्ध्यर्थं कस्याः अपि देवतायाः अग्रे कृतोपवासाः दण्डवत् प्रणताः इत्यर्थः स्निग्धाः=स्नेहिनः ये बान्धवाः=बन्धवः तैः आराध्यमानः=प्रसाद्यमानः अहिर्बुध्न्यः=शिवः यत्र तम्, दीपि०—दीपिकाभिः=दीपैः दह्यमानाः=ज्वलन्तः कुलपुत्रकाः=उच्चकुलोत्पन्नाः युवानः तैः प्रसाद्यमानम्=आराध्यमानम् मातृणां=दिव्यमातृणां मण्डलं=समूहः यत्र तम् ( 'ब्राह्मी-माहेश्वरी चैन्द्री वाराही वैष्णवी तथा । कौवेरी चापि कौमारी सप्तैव मातरः स्मृता' इति हलायुधः ), मुण्डो०—मुण्डस्य=नरमुण्डस्य उपहारः=उपायनं तस्य आहरणे=आनयने उद्यतः=उद्युक्तः यः द्रविडः=द्रविडदेशीयः जनः तेन प्रार्थ्यमानः=प्रार्थनाविषयीक्रियमाणः आमर्दकः=वेतालः इति शङ्करः रौद्रदेवताभेदः इत्यन्ये यस्मिन् तम् मुण्डोपहारेण चण्डिकायाः आराधनं बाणः कादम्बर्यामपि प्रतिपादयति—'फलितामिव मुण्ड-मण्डलैरुपहाराहिंसां दर्शयन्तीम्', आन्ध्रो०—आन्ध्रेण=आन्ध्रदेशीयेन भक्तजनेन उद्ध्रियमाणः=उत्थाप्यमानः बाहुः=भुजः वप्रः=प्राकारः इवेत्युपमित तत्पु० तेन उपयाच्यमाना=प्रार्थ्यमाना चण्डिका=भगवती दुर्गा यत्र तम्, शिरो०—शिरसि विधृतः=स्थापितः विलीयमानः=उष्णिम्ना विगलन् यः गुग्गुलुः=सुगन्धितद्रव्यविशेषः तेन विकलाः=व्याकुलाः ये नवाः सेवकाः=नवनियुक्ताः भृत्याः तैः अनुनीयमानः=प्रसाद्यमानः महाकालः जगद्विनाशको रुद्रः यस्मिन् तम्, निशित०—निशिता=तीक्ष्णा या शस्त्री=छुरिका तया निकृत्तं=छिन्नं यत् आत्मनः=स्वस्य मांसं तस्य होमे=हवने प्रसक्तः व्यापृतः आप्तवर्गः=बन्धुगणः यस्मिन् तम्, प्रकाश०—प्रकाशं=सर्वजनसमक्षं यथा स्यात्तथा नरपतिकुमारकैः=राजपुत्रैः क्रियमाणः विधीयमानः महामांसस्य=नरमांसस्य विक्रयस्य प्रक्रमः=प्रारम्भः यत्र तम्, श्मशानस्य=शवदाहस्थानस्य पांशुभिः=धूलिभिः उपहतम्=दूषितम् इव, अमङ्गलैः=अकल्याणैः परिगृहीतम्=आयत्तीकृतम् इव, सर्वत्र प्रजासु रोदनाद्यमङ्गलक्रियादर्शनात्, यातुधानैः=राक्षसैः ( 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी' इत्यमरः, 'यातूनि=यातनाः धीयन्ते अस्मिन्' इति क्षीरस्वामी ) इव विध्वस्तम्=विनाशितम्, कलिकालेन कलियुगसमयेन कवलितम्=कवलीकृतं=ग्रासीकृतमिति यावत् इव, पापस्य=दुष्कृतस्य पटलैः=समूहैः इव सञ्छादितम्=आवृतम्, अधर्मस्य विक्षेपैः=सञ्चारैः आक्रमणैरित्यर्थः इव लुण्ठितम्=मुषितम्, अनित्यतायाः=विनश्वरतायाः धिक्कारैः=अवज्ञाभिः इव आक्रान्तम्=अभिभूतम् प्रत्येक-व्यक्ति जगनित्यताभावनाभिभूता आसीदितिभाव, नियतिः=भाग्यं तस्य विलासैः=चेष्टितैः इव आत्मीकृतम्=आयत्तीकृतम्, वयं सर्वे भाग्याधीनतया विचाराक्रान्तमितिभावः, शून्यम्=रिक्तम् इव, तत्र जना न दृश्यन्ते स्मेति भावः, सुप्तम्=निद्रितम् इव शोकाकुलत्वेन निःशब्दत्वात्, मुषितम्=लुण्ठितम् इव शोके भूषणादिपरित्यागात्, विलक्षितम्=हतप्रतिभं स्तब्धमित्यर्थः इव छलितम्=प्रतारितम् इव मूर्छितम्=गतचेतनम् इवेति उपरि सर्वत्र उत्प्रेक्षालङ्कारः, स्कन्धावारम्=कटकं राजधानीमित्यर्थः समाससाद=प्राप्तवान् ।

**हिन्दी**—काटे हुए अपने मांस से होम करने में लगे हुए थे, जहाँ दूसरी जगह कहीं राजकुमार प्रत्यक्ष-रूप में नर मांस बेचना प्रारम्भ कर रहे थे, जो श्मशान की धूलियों से दूषित-जैसे हुआ पड़ा था, अमंगलों से घिरा हुआ-जैसा था, राक्षसों से नष्ट-ध्वस्त-जैसे किया हुआ था, कलिकाल का ग्रास-जैसा बन गया था, पाप-समूहों से आच्छादित-जैसा हुआ पड़ा था, अधर्म के आक्रमणों से लूटा हुआ-जैसा था, अनित्यता के धिक्कारों से जैसे आक्रान्त था, भाग्य के खिलवाड़ों से=जैसे अपनाया हुआ था, जो सुनसान-जैसा, सोया हुआ-जैसा, लुटा-पुटा हुआ-जैसा, हक्का-बक्का हुआ-जैसा, छला हुआ जैसा और मूर्छित हुआ-जैसा पड़ा था ।

१ 'अनित्यताधिकारैः'

प्रविशन्नेव च विपणिवर्त्मनि कुतूहलाकुलबहलबालकपरिवृतमूर्ध्वयष्टिविष्कम्भवितते वामहस्तवर्तिनि भीषणमहिषाधिरूढप्रेतनाथसनाथे चित्रवति पटे परलोकव्यतिकरमितरकरकलितेन शरकाण्डेन कथयन्तं यमपट्टिकं ददर्श। तेनैव च गीयमानं श्लोकमश्रृणोत्—

'मातापितृसहस्राणि पुत्रदारशतानि च।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान्॥ ३॥' इति

तेन चाधिकतरमवदीर्यमाणहृदयः क्रमेण राजद्वारं प्रतिषिद्धसकललोकप्रवेशं ययौ। तुरगादवतीर्णश्चाभ्यन्तरान्निष्क्रामन्तमप्रसन्नमुखरागमुन्मुक्तमिवेन्द्रियैः सुषेणनामानं वैद्यकुमारकमद्राक्षीत्। कृतनमस्कारं चाप्राक्षीत्—'सुषेण, अस्ति तातस्य विशेषो न वा' इति। सोऽब्रवीत्—'नास्तीदानीं यदि भवेत्कुमारं दृष्ट्वा' इति। मन्दं-मन्दं द्वारपालैः

---

टीका—प्रविशन्=प्रवेशं कुर्वन् एव विपण्याः=पण्यवीथ्याः वर्त्मनि मार्गे 'परलोकव्यतिकरे कथयन्त पट्टिकं' ददर्श इत्यन्वयः, कुतूहल०—कुतूहलेन=कौतुकेन आकुलाः=आक्रान्ताः ये बहलाः=बहवः बालकाः=बालाः तैः परिवृतं=परिगतं (पट्टिकं), ऊर्ध्व०—ऊर्ध्वाः=उन्नताः याः यष्टयः एव विष्कम्भः=अवष्टम्भः तस्मिन् वितते=विस्तारिते वामे हस्ते वर्तते इति तथोक्ते, भीषण०—भीषणं=भयङ्करं महिषं=सैरिभम् आरूढः=अधिष्ठितः यः प्रेतनाथः=यमराजः तेन सनाथे=युक्ते चित्रवति=चित्रपूर्णे पटे=वस्त्रपट्टे परलोकस्य=लोकान्तरस्य प्रेतलोकस्येत्यर्थः व्यतिकरम्=सम्बन्धम् वृत्तान्तम् कृतपापपुण्यफलस्वरूपघटनाचक्रमिति यावत् इतरेण=अपरेण दक्षिणेनेत्यर्थः करेण कलितेन=धृतेन शरस्य=नलस्य घासविशेषस्येति यावत् काण्डेन=नालेन कथयन्तम्=कृतकर्मणां फलं प्रतिपादयन्तम् यमपट्टिकं=यमस्य पट्टिका=वस्त्रपट्टं यस्य तम् अर्थात् वस्त्रपट्टे परलोके यमेन दीयमानाः तास्ताः यातनाः भुञ्जानानां लोकानां चित्राणि दर्शयन् यः स जीवति यमपट्टिकः उच्यते, ददर्श=दृष्टवान् हर्षवर्धनः। तेन यमपट्टिकेन एव गीयमानं=गानविषयीक्रियमाणं श्लोकम् अश्रृणोत्=श्रुतवान्।

मातेति०—माता च पिता च मातापितरौ तयोः सहस्राणि पुत्राः=सुताः दाराः=पत्न्यश्च तेषां शतानि युगे-युगे=प्रतियुगं व्यतीतानि=गतानि, अर्थात् अस्मिन् जगति युगे युगे अनेके मातापितरः, पुत्राः पत्न्यश्च लोकानां जायन्ते म्रियन्ते च, ते मातापित्रादयः कस्य? न कस्यापीत्यर्थः। एतेन प्रभाकरवर्धनस्य मरणं सूच्यते, तत्कृतशोके च पतिष्यति हर्षवर्धने वैराग्यमुत्पाद्य समाश्वासनं दीयते। अत्र विशेषे प्रभाकरवर्धनरूपपितरि प्रतिपाद्ये सामान्यपित्रादिकम् अभिहितम्, अतः अप्रस्तुतात् सामान्यात् प्रस्तुतस्य विशेषस्य गम्यत्वेन अप्रस्तुतप्रशंसालंकारः। छन्दश्च श्लोकः अनुष्टुभम् इति यावत्॥ ३॥

तेन श्लोकेन च अधिकतरं=भृशम् अवदीर्यमाणं=भिद्यमानं हृदयं यस्य सः प्रतिषिद्धः=निवारितः सकलानां=सर्वेषां लोकानां=जनानां प्रवेशः=गमनं यस्मिन् तत् राजद्वारं ययौ=गतवान्। तुरगात्=अश्वात् अवतीर्णः=अवरूढश्च अभ्यन्तरात्=राजगृहमध्यादित्यर्थः निष्क्रामन्तं=बहिर्निर्गच्छन्तम् न प्रसन्नः=प्रसादपूर्णः मुखस्य रागः=वर्णः यस्य तम् विवर्णम् विषण्णवदनमिति भावः इन्द्रियैः=चक्षुरादिभिः उन्मुक्तं=परित्यक्तमिवेत्युत्प्रेक्षायां राज्ञो रोगस्य असाध्यत्वात् हतबुद्धिमिति यावत् वैद्यश्चासौ कुमारकश्चेति वैद्ययुवकमित्यर्थः अद्राक्षीत् अपश्यत्। कृतः

हिन्दी—बाजार के मार्ग में प्रवेश करते ही (हर्षवर्धन ने) कौतूहलपूर्ण बहुत से बालकों द्वारा घिरा हुआ यमपट्टिक देखा-जो ऊपर खड़े किये लट्ठे के सहारे फैलाये, बायें हाथ में स्थित, भयानक भैंसे पर चढ़े यमराज (के चित्र) से युक्त (कैन्वस के) चित्रित पट पर परलोक के वृत्तान्तों को दायें हाथ से पकड़े हुए सरकण्डे की छड़ी से बता रहा था और उसी के द्वारा गया जा रहा श्लोक सुना :—

"माता-पिता हजारों इस जग में, पत्नी-पुत्र सौक से होते मरते।
युग-युग से यह चला आ रहा है, किसके वे? और आप किसके होते? ॥ ३॥

उससे और भी अधिक विदीर्ण हुए हृदय वाला वह क्रमशः राजद्वार पहुँचा, जहाँ सभी लोगों का प्रवेश बन्द कर दिया गया था। घोड़े से उतारा हुआ वह भीतर से निकल रहे सुषेण-नामक वैद्य युवक को देख बैठा, जिसके मुख का रंग अप्रसन्न हुआ पड़ा था और जो ऐसा लग रहा था मानो इन्द्रियों ने उसे जबाब दे दिया है। नमस्कार किये हुए उसे पूछा—सुषेण, पिताजी (की हालत) में सुधार है या नहीं? वह बोला—अभी तक तो नहीं है,

प्रणम्यमानश्च दीयमानसर्वस्वम्, पूज्यमानकुलदेवतम्, प्रारब्धामृतचरुपचनक्रियम्, क्रियमाणषडाहुतिहोमम्, हूयमान-पृषदाज्यलवलिप्तप्रचलद्दूर्वापल्लवं, पठ्यमानमहामायूरीप्रवर्त्यमानगृहशान्तिनिर्वर्त्यमानभूतरक्षावलिविधानं, प्रयत-विप्रप्रस्तुतसंहिताजपम्, जप्यमानरुद्रैकादशीशब्दायमानशिवगृहं, अतिशुचिशैवसम्पाद्यमानविरूपाक्षक्षीरकलशस-हस्रस्नपनं, अजिरोपविष्टैश्चानासादितस्वामिदर्शनदूयमानमानसैरभ्यन्तरनिष्पतितनिकटवर्तिपरिजननिवेद्यमान-वार्त्तैर्वार्तीभूतस्नानभोजनशयनैरुज्झितात्मसंस्कारमलिनवेशैर्लिखितैरिव निश्चलैर्नरपतिभिर्नीयमाननक्तन्दिवं

---

टीका—नमस्कारः=अभिवादनं येन तम् च अप्राक्षीत्=अपृच्छत्-अस्ति तातस्य=पितुः विशेषः=पूर्वापेक्षया रोगोपशमः इत्यर्थः। सः वैद्यकुमारः अब्रवीत्=अवदत्—इदानीं=सम्प्रति नास्ति कश्चिद् विशेष इति शेषः, कुमारं=भवन्तं दृष्ट्वा यदि भवेत्=सम्भवतः रोगोपशम विशेषः स्यात्। 'मन्दं मन्दं ''''''''राजकुलं विवेश' इत्यस्ति वाक्यम्। द्वारपालैः=दौवारिकैः प्रणम्यमानः=अभिवाद्यमानः दीयमानं=ब्राह्मणेभ्यः दीनेभ्यश्च वितीर्यमाणं सर्वस्वम्=सर्वधनं यत्र तत्, एतत् अन्यानि च राजकुलम् इत्यस्य विशेषणानि सन्ति, पूज्यमानाः=अर्च्यमानाः कुलदेवताः=कुलाधिष्ठातृभूताः देवताः यत्र तत्, प्रारब्धा०-प्रारब्धा=प्रस्तुतीकृता-अमृतचरोः=घृतदुग्धसंपृक्तयवाद्याहवनीयद्रव्यस्य पचनस्य=पाकस्य क्रिया=व्यापारः यत्र तत्, क्रिय०—क्रियमाणः=अनुष्ठीयमानः षड्भिः आहुतीभिः होमः यत्र तत्, शङ्करानुसारेण 'प्रजापतये स्वाहा' इति क्रमेण षण्णां देवतानां नाम गृहीत्वा षण्णामेवाहुतीनां प्रक्षेपः षडाहुतिहोम उच्यते' ताश्च षड्देवताः सम्भवतः प्रजापतिः, सोमः, अग्निः, इन्द्रः, द्यावापृथिवी, धन्वन्तरिश्च सन्ति, हूय०—हूयमानाः=अग्नौ प्रक्षिप्यमाणाः पृषदाज्यस्य सदध्याज्यस्य ['पृषदाज्यं सदध्याज्ये' इत्यमरः, अत्र पृषद्भिः=दधिविन्दुभिः सहितमाज्यम् (घृतम्)' इतिस्वामी] लवेन=अंशेनं लिप्ताः=अक्ताः प्रचलाः=चञ्चलाः दूर्वायाः पल्लवाः=किसलया यत्र तत्, पठ्य०—पठ्यमाना=पाठविषयीक्रियमाणा वाच्यमाना इत्यर्थः महामायूरी=बौद्धविद्या इति शङ्करः शैवमन्त्रः इतिकेचित् यस्मिन् तत् च प्रवर्त्यमाना=प्रारभ्यमाणा गृहशान्तिः=गृहसंकटोपशमः यस्मिन् तत् च निवर्त्यमानः=सम्पाद्यमानः भूतेभ्यः=योनि-विशेषेभ्यः रक्षायै=रक्षणाय बलि-विधानं बलिप्रदानमित्यर्थः यस्मिन् तच्चेति पाठ्यमान' विधानम्, प्रयत०-प्रयताः=पवित्राः [ 'पवित्रः प्रयतः पूतः' इत्यमरः ] ये विप्राः ब्राह्मणाः तैः प्रस्तुतः=प्रारब्धः संहितानां=ऋगादिवेदानां जपः==जापः यस्मिन् तत्, ते वेदमन्त्रान् जपन्ति स्मेति भावः, जप्य०—जप्यमाना=पठ्यमाना इत्यर्थः या रुद्रैकादशी=रुद्राष्टाध्याय्याः एकादशावृत्तयः तया शब्दायमानं=मुखरमित्यर्थः शिवगृहं=शिवमन्दिरं यस्मिन् तत्, एकादशरुद्राध्याय-पाठस्य महत्त्वे वायुपुराणमहा—'रागवान् पापवांश्चैव रुद्रं जप्त्वा जितेन्द्रियः रोगात् पापाद् विनिर्मुक्तो ह्यतुलं सुख-मश्नुते'॥ अतिशुचि—अतिशुचयः=अतिपवित्राः ये शैवाः=शिवोपासकाः तैः सम्पाद्यमानं=क्रियमाण विरूपाक्षस्य=शिवस्य क्षीरकलशानां=दुग्धपूर्णकलशानां सहस्रैः स्नपनं=स्नानानुष्ठापनम् यस्मिन् तत्, रुद्रस्य क्षीराभिषेकप्रथा अद्यापि प्रचलति, अजिरो०—अजिरे=अङ्गने [ 'अङ्गनं चत्वराजिरे' इत्यमरः ] उपविष्टैः=स्थितैः न आसादितं=प्राप्तं स्वामिनः प्रभोः प्रभाकरवर्धनस्येत्यर्थः यत् दर्शनं साक्षात्कारः तेन दूयमानं=दुःखायमानं मानसं येषां तैः अभ्यन्तरात्=अन्तःपुरात् निष्पतन्तः=वहिःनिस्सरन्तः ये निकटवर्तिनः=राज्ञः समीपस्थाः परिजनाः=भृत्याः तैः निवेद्यमाना=विज्ञाप्यमाना वार्ता=राज्ञः समाचारः येभ्यः तैः वार्तीभूतानि=समाचारमात्रत्वं प्राप्तानि स्नानं च भोजनं च शयनं च

हिन्दी—आप को देखकर संभव हो जाय। द्वारपालों द्वारा प्रणाम किया जाता हुआ वह धीरे-धीरे राजगृह पहुँच गया जहाँ (ब्राह्मण आदि को) सर्वस्व दिया जा रहा था, कुल देवता पूजे जा रहे थे, अमृत-चरु पकाने का काम आरम्भ हो गया था, छः आहुतियों का होम किया जा रहा था, पृषदाज्य के अंश से लिप्त हिलते हुए दूर्वांकुरों का हवन किया जा रहा था, महामायूरी (बौद्ध विद्या मंत्रों) का पाठ हो रहा था, गृहशान्ति की जा रही थी और भूत प्रेतों से रक्षा के लिए बलि दी जा रही थी, जहाँ पवित्र ब्राह्मण वेद-संहिताओं [ के मंत्रों ] का जप कर रहे थे, शिव मन्दिर पढ़ी जा रही रुद्राष्टाध्यायी की ग्यारह आवृत्तियों से गूँज रहा था, अति पवित्र शिवोपासक हजारों क्षीर कलशों से शिव को नहला रहे थे, जहाँ राजे लोग आंगन में बैठे चित्र-जैसे बने हुए चुप चाप दिन-रात काट रहे थे,—जो स्वामी के दर्शन न प्राप्त किये मन से दुःखी हो रहे थे, जिन्हें भीतर से निकले हुए निकटवर्ती भृत्यों द्वारा (राजा प्रभाकरवर्धन का) समाचार सूचित किया जाता रहता था, जिनके स्नान भोजन और शयन नाममात्र में ही रह गये थे और शरीर का प्रसाधन छोड़े हुए जिनकी वेष-भूषा मैली हुई पड़ी थी, जहाँ दुःख से दीन-मुख हुए, ड्योढ़ी में घेरा मारकर बैठे बाहर रहने वाले नौकर-चाकर फुसफुसाहट से राजा की कष्ट-पूर्ण दशा

दुःखदीनवदनेन च प्रघनेषु बद्धमण्डलेनोपांशुव्याहृतैः केनचिच्चिकित्सकदोषानुद्भावयता, केनचिदसाध्यव्याधिलक्षणपदानि पठता, केनचिद्दुःस्वप्नानावेदयता, केनचित्पिशाचवार्तां विवृण्वता, केनचित्कार्तान्तिकादेशान्प्रकाशयता, केनचिदुपलिङ्गानि गायता, अन्येनानित्यतां भावयता संसारं चापवदता कलिकालविलसितानि च निन्दता दैवं चोपालभमानेनापरेण धर्माय कुप्यता राजकुलदेवताश्चाधिक्षिपता, अपरेण क्लिष्टकुलपुत्रकभाग्यानि गर्हयता, बाह्यपरिजनेन कथ्यमानकष्टपार्थिवावस्थं राजकुलं विवेश।

अविरलबाष्पपयःपरिप्लुतलोचनेन पितृपरिजनेन वीक्ष्यमाणो विविधौषधिद्रव्यद्रवगन्धगर्भमुत्क्वथतां क्वाथानां सर्पिषां तैलानां च पच्यमानानां गन्धमाजिघ्रन्नवाप तृतीयं कक्ष्यान्तरम्।

---

टीका—येषां तैः। तेषां कृते स्नानादिकं वार्ता एव स्थितम्, राज्ञः गम्भीररुग्णकारणात् तैः स्नानादिकं न कृतमिति भावः, उज्झित०—उज्झितः=परित्यक्तः आत्मनः=स्वस्य स्वदेहस्येति यावत् यः संस्कारः=वस्त्रप्रक्षालन-केशविन्यासादिः तेन मलिनः=मलीमसः वेशः येषां तैः लिखितैः=चित्रगतैः इवेत्युत्प्रेक्षायां निश्चलैः=निश्चेष्टैः नरपतिभिः=नृपैः नीयमानं=याप्यमानं नक्तंदिनं=अहर्निशं यत्र यत्, दुःख०—दुःखेन=संतापेन दीनानि=विषण्णानि वदनानि=मुखानि येषां तेन एतत् अन्यानि च बाह्यपरिजनेन इत्यस्य विशेषणानि, प्रघनेषु=बहिर्द्वारप्रकोष्ठेषु [ 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः ] बद्धं=रचितं मण्डलं=वृत्तं मण्डला-कारेणावस्थानमित्यर्थः येन तेन उपांशु=मन्द-मन्दवाण्या व्याहृतैः=भाषितैः ( भावे क्तः ) संलापैः इत्यर्थः केनचित् ( भृत्येन ) चिकित्सकानां=वैद्यानां दोषान्=त्रुटीः उद्भावयता=प्रकटयता, केनचित् असाध्यः=चिकित्सितुमशक्यः यः व्याधिः=रोगः तस्य लक्षणानां=चिह्नानां पदानि=वचनानि पठता=उच्चारयता केनचित् दुःस्वप्नान्=अशुभस्वप्नान् आवेदयता=सूचयता, केनचित् पिशाचस्य=दुष्टयोनि-विशेषस्य राक्षसस्येत्यर्थः वार्तां=कथां विवृण्वता=व्याचक्षाणेन अर्थात् पिशाचकथां व्याख्याय तमेव राज्ञः रोगकारणं प्रतिपादयता, केनचित् कार्तान्तिकस्य=कृतान्तं=दैवं वेद इति ( कृतान्त + ठक् ) कार्तान्तिकः ज्योतिषीत्यर्थः तेषाम् आदेशान्=भविष्यवाणी इत्यर्थः प्रकाशयता=प्रकटयता, केनचित् उपलिङ्गानि=प्राकृतिकान् उत्पातान् धूमकेत्वादीन् गायता=कीर्तयता, अन्येन=अपरेण च अनित्यतां=भंगुरतां जीवनस्येति शेषः भावयता=मनसि विचारयतः, संसारं=जगत् अपवदता=निन्दता कलिकालस्य कलियुग-समयस्य विलासितानि=विलासान् चेष्टितानीत्यर्थः निन्दता=अवजानता दैवं=भाग्यं च उपलभमानेन आक्रुशता, अपरेण धर्माय=सुकृताय कुप्यता=क्रोधं कुर्वता अर्थात् तादृशानि धर्मकर्माणि कुर्वतोऽपि अस्य धर्मः न रोगात्, उन्मोचयति, राजकुलस्य=राजवंशस्य देवताः=अधिष्ठातृभूताः देवताः इत्यर्थः अधिक्षिपता=अतिगर्हता, अपरेण क्लिष्टाः=क्लेशपतिताः ये कुलपुत्राः=उच्चकुलोत्पन्नाः युवकाः तेषां भाग्यानि=दैवानि गर्हयता=निन्दितवता बाह्यः=बहिरंगः यः परिजनः=भृत्यवर्गः तेन कथ्यमाना=निगद्यमाना कष्टा=दुःखिता पार्थिवस्य=नृपस्य प्रभाकरवर्धनस्य अवस्था=दशा यस्मिन् तथाभूत राजकुलं=राजगृहं विवेश=प्रविष्टवान्।

अविरलं=घनं यत् बाष्पपयः=अश्रुजलं तेन परिप्लुतं=पूर्णमित्यर्थः लोचनं=नेत्रं यस्य तेन पितुः परिजनेन=सेवक-वर्गेण वीक्ष्यमाणः=आलोक्यमानः विविधानि यानि औषधिद्रव्याणि=औषधरूपपदार्थाः तेषां द्रवस्य=रसस्य गन्धः गर्भे=अन्तः यस्मिन् कर्मणि यथा स्यात्तथा उत्क्वथतां=पच्यमानानां क्वाथानां=निर्यासानां सर्पिषां=घृतानां तैलानां च पच्यमानानां=पाकविषयीक्रियमाणानां गन्धम्=वासम् आजिघ्रन्=घ्राणविषयीकुर्वन् तृतीयायाः कक्ष्यायाः=अन्तःपुराङ्गणस्य अन्तरम्= अभ्यन्तरम् अवाप=प्राप्तवान्।

हिन्दी—का बखान कर रहे थे—जिनमें कोई तो वैद्यों का दोष निकाल रहा था, कोई असाध्य रोग के लक्षणों के वचन पढ़ रहा था, कोई बुरे-बुरे स्वप्नों की बात कर रहा था, कोई ( राजा पर लगे हुए ) पिशाच की बात प्रकट कर रहा था, कोई ज्योतिषियों की भविष्यवाणियों को प्रकाश में ला रहा था, कोई प्राकृतिक उत्पातों को अलाप रहा था, दूसरा (जीवन की) अनित्यता को मन में विचार रहा था, संसार की निन्दा कर रहा था, कलि-समय के करतूतों को बुरा-भला कह रहा था, और भाग्य को उलाहना दे रहा था, तथा अन्य कोई धर्म पर कुपित हो रहा था, एवं राजकुल के देवताओं को दोष दे रहा था, और अन्य कोई क्लेश में पड़े हुए कुलीन युवकों के भाग्यों को फटकार रहा था। पिता के निरन्तर अश्रुजलपूर्ण नेत्रों वाले सेवकों द्वारा देखा जाता हुआ, विविध औषधिवस्तुओं के रस की गन्ध भीतर रखे खौलते हुए क्वाथों और पकाये जा रहे घृतों एवं तेलों की गन्ध सूँघता हुआ हर्षवर्धन ( महल के ) तीसरे आंगन के भीतर पहुँचा।

तत्र चातिनिःशब्दे गृहावग्रहणीग्राहिबहुवेत्रिणि, त्रिगुणतिरस्करिणीतिरोहितसुवीथीपथे, पिहितपक्षद्वारके, परिहृतकपाटरटिते, घटितगवाक्षरक्षितमरुति, दूयमानपरिचारके, चरणताडनस्वनत्सोपानप्रकुपितप्रतीहारे, निभृतसंज्ञानिर्दिश्यमानसकलकर्मणि, नातिनिकटोपविष्टकञ्चुकिनि, कोणस्थिताह्वानचकिताचमनवाहिनि, चन्द्रशालिकालीनमूकमौललोके, महाधिविधुरबान्धवाङ्गनावर्गगृहीतप्रच्छन्नप्रग्रीवके, सञ्जवनपुञ्जितोद्विग्नपरिजने, प्रविष्टकतिपयप्रणयिनि, गम्भीरज्वरारम्भभीतभिषजि, दुर्मनायमानमन्त्रिणि, मन्दायमानपुरोधसि, सीदत्सुहृदि, विद्राणवि-

---

टीका—तत्र च ···· धवलगृहे स्थितं ········ पितरम् अद्राक्षीत् इत्यस्ति वाक्यम् अतिशयेन निःशब्दे=शब्दरहिते एतत् अन्यानि च सप्तम्यन्तानि पदानि 'धवलगृहे' इत्यस्य विशेषणानि, गृहा०—गृहावग्रहणीं=देहलीम् [ 'गृहावग्रहणी देहली' इत्यमरः ] तां गृह्णन्ति=आश्रयन्ति ग्राहिणः देहलीस्थिताः इत्यर्थः बहवः=अनेके वेत्रिणः=वेत्रदण्डधारिणः द्वारपालाः यत्र तस्मिन्, त्रिगुणा०—त्रिगुणा=त्रिभिर्गुणिता त्रिरावृत्तेत्यर्थः या तिरस्करणी=जवनिका अन्तर्धानपटः इति यावत् तया तिरोहितः=छादितः सु=शोभनायाः वीथ्याः गृहप्रान्तस्येति क्षीरस्वामी पन्थाः=मार्गः यस्मिन् तस्मिन् असूर्यंपश्याः खलु राजदाराः भवन्ति, पिहित०—पिहितानि=अपिहितानि [ भागुरिमते न अल्लोपः ] आवृतानीत्यर्थः पक्षद्वारकाणि=प्रच्छन्नानि अन्तर्द्वाराणि [ 'प्रच्छन्नमन्तर्द्वारं स्यात् पक्षद्वारं तु पक्षकः' इत्यमरः ] यस्मिन् तस्मिन्, परिहृत०—परिहृतं=परिवर्जितं कपाटानां=द्वारावरककाष्ठपट्टानां रटितं=कर्कशध्वनिः पटपटाकारः इति यावत् यस्मिन् तस्मिन्, घटित०—घटितैः=संवृतैः गवाक्षैः=वातायनैः रक्षितः=निवारितः इत्यर्थः मरुत्=वायुः यस्मिन् तत्, दूय०—दूयमानाः=सन्तप्यमानाः परिचारकाः=सेवका यस्मिन् चरण०—चरणयोः=पादयोः ताडनेन=आघातेन स्वनत्=शब्दायमानम् यत् सोपानम्=अधिरोहिणी तेन प्रकुपिताः=क्रुद्धाः प्रतिहाराः=दौवारिकाः यत्र तस्मिन् शब्दारोहणेन रुग्णस्य राज्ञः शान्तिभङ्गो भवतीति कोपकारणं, निभृत०—निभृताभिः=निःशब्दाभिः संज्ञाभिः=संकेतैः निर्दिश्यमानानि=आदिश्यमानानीत्यर्थः सकलानि=समग्राणि कर्माणि=कार्याणि यस्मिन् तस्मिन् नाति०—न अति निकटे=अति समीपे उपविष्टाः=स्थिताः कञ्चुकिनः=कवचधारिणः पुरुषाः यस्मिन् तस्मिन् यया वर्मशब्देन शान्तिभङ्गो मा स्यादिति, [ 'उरच्छदः कङ्कटको जगरः कवचोऽस्त्रियां' इत्यमरः ] कोण०—कोणे=प्रान्तभागे स्थितः आह्वानैः=आकरणैश्चकितः आचमनं=हस्तमुखादिप्रक्षालनजलपात्रं वहतीति वाही पानीयसंहारक इति यावत् यस्मिन् तस्मिन् चन्द्र०—चन्द्रशालिकायां=चन्द्रशाला एव चन्द्रशालिका=शिरोगृहम् [ 'चन्द्रशाला शिरोगृहम्' क्षीरस्वामी ] भवनस्य उपरितनभागीयःप्रकोष्ठः इति यावत् तस्यां लीनः=स्थितः मूकः=तूष्णींभूतः मौलः लोकः=मूलम्=प्रतिष्ठा तद् अस्य अस्तीति मौलः=कुलपरम्परागतः मन्त्रिगणः यस्मिन् तस्मिन्, महाधि०—महान् विपुलः यः आधिः=मनोव्यथा तेन विधुरः=व्याकुलः यः बान्धवानां=बन्धूनां अङ्गनानां=स्त्रीणां वर्गः=गणः तेन गृहीतम्=आश्रितम् अधिष्ठितं इति यावत् प्रच्छन्नम्=विविक्तं एकान्तमित्यर्थः प्रग्रीवम् एव प्रग्रीवकं=वातायनं ( इति सुभूतिः ) यस्मिन् तस्मिन् सञ्जव०—सञ्जवने=चतुःशाले [ 'समा सञ्जवनं त्विदं चतुःशालं' इत्यमरः ] पुञ्जितः=एकत्रितः उद्विग्नः दुःखितः परिजनः=भृत्यवर्गः यस्मिन् तस्मिन् प्रविष्ट०—प्रविष्टाः प्रवेशं प्राप्ताः कतिपये=परिमिताः अल्पाः इति यावत् प्रणयिनः=सुहृदः यत्र तस्मिन्, गम्भीर०—गम्भीरः=भयङ्करः इत्यर्थः यः ज्वरस्य आरम्भः तेन भीताः=भयमवाप्ताः भिषजः=वैद्या यस्मिन् तस्मिन् दुर्मना०—दुर्मनायमानाः=दुः=दुखितं मनः येषान्ते दुर्मनसः अदुर्मनसः दुर्मनसो भवन्तीति ( दुर्मनस् + क्यङ् + शानच् ) मन्त्रिणः अमात्याः यस्मिन् तस्मिन्, मन्दा०—मन्दायमानः=अवसीदन्

हिन्दी–वहाँ उसने धवलगृह में–जो सुनसान था, जहाँ गृह की देहली पर बहुत से वेत्रधारी द्वारपाल खड़े थे, बरांडे का सुन्दर मार्ग तिहरे पर्दे से ढका हुआ था, भीतर के दरवाजे बन्द पड़े थे, (खोलते समय) किवाड़ों की चरमराहट रोक दी गई थी, बन्द की हुई खिडकियों से (बाहर की) हवा से बचाव कर रखा था, नौकर चाकर दुःखी हुए पड़े थे, पैरों की चोट से बजती हुई सीढ़ी से प्रतीहारी कुपित हो जाते थे, चुपचाप संकेतों से ही सभी कार्यों का निर्देशन होता रहता था, कवचधारी पुरुष बहुत निकट नहीं बैठे हुए थे, कोने में खड़ा पानी लाने वाला नौकर (लोगों की) पुकारों से भौंचक्का हुआ बैठा था, कुलक्रमागत मन्त्री लोग महल के चौवारों में मौन हुए बैठे थे, बड़ी भारी मनोव्यथा से आकुल बान्धवों की स्त्रियों का दल एकान्त खिड़कियों पर बैठा हुआ था, उद्विग्न भृत्यवर्ग कोठे के चौक में इकट्ठा हुआ बैठा था, कतिपय स्नेही मित्र ( भीतर ) प्रवेश पाये हुए थे, (राजा) के गम्भीर ज्वर चढ़ जाने से वैद्य भयभीत हो पड़े थे, मन्त्री बेचैन हो पड़े थे, पुरोहित ढीला–ढाला पड़ रहा था, सुहृदय दुःखी हो रहे थे, पंडित

परिवति, सन्तप्ताप्तसामन्ते, विचित्तचामरग्राहिणि, दुःखक्षामशिरोरक्षिणि, क्षीयमाणप्रसादवित्तमनोरथसम्पदि, स्वामिभक्तिपरित्यक्ताहारहीयमानबलविकलवल्लभभूभृति, क्षितितलपतितसकलरजनीजागरूकराजपुत्रकुमारके, कुलक्रमागतकुलपुत्रकनिवहोह्यमानशुचि शोकसङ्कुचितकञ्चुकिनि, निरानन्दवन्दिनि, निःश्वसन्निराशासन्नसेवके, निःसृतताम्बूलधूसराधरवारयोषिति, विलक्षवैद्योपदिश्यमानपथ्याहरणावहितपौरोगवे, अनुजीविपीयमानोच्चचषक[1]धारावारि-

टीका—शिथिलीभवन्निति यावत् पुरोधाः=पुरोहितः यस्मिन् तस्मिन्, सीद०—सीदन्तः=नैराश्ये मज्जन्तः इत्यर्थः सुहृदः=मित्राणि यत्र तस्मिन्, विद्रा०—विद्राणाः=निद्रा-रहिताः जागरिताः इत्यर्थः विपश्चितः=पण्डिताः यत्र तस्मिन्, सन्त०—सन्तप्ताः=सन्तापपूर्णाः आप्ताः=विश्वस्ताः सामन्ताः=अधीनभूपालाः यत्र तस्मिन् विचित्त०—विचित्ताः=विगतचित्ताः शून्यमनसः इत्यर्थःचामरग्राहिणः=चामरधारिणः यत्र तस्मिन् दुःख०—दुःखेन=विषादेन क्षामाः=कृशतागताः शिरोरक्षिणः=अङ्गरक्षकाः यत्र तस्मिन्, क्षीय०—क्षीयमाणा=क्षयमुपगच्छन्ती प्रसाद-वित्तानां=प्रसादेन (राज्ञः) कृपया वित्ताः=प्रख्याताः प्रसादवित्ताः इति शङ्करः राज्ञः कृपापात्राणीत्यर्थः अथवाप्रसादेन=राजानुग्रहेण वित्तं=धनं येषां तथाभूताः तेषां मनोरथानां राजप्रेप्सित-धनकामनानां सम्पद्=पूर्तिरित्यर्थः यत्र तस्मिन् स्वामि०—स्वामिनि=महाराजप्रभाकरवर्धने या भक्तिः=अनुरागः तया परित्यक्तः=परिहृतः आहारः=भोजन यैः तेच हीयमानं=क्षीयमाणं बलं येषां ते च विकलाः=अवसन्नाः श्लथाङ्गाः इति यावत् वल्लभाः=राज्ञः प्रियाः भूभृतः=राजानः अथवा स्वामि०—आहारेण हीयमानं यद् बलं तेन विकलाः इति विग्रहः, यत्र तस्मिन्, क्षिति०—क्षितितले=भूतले पतिताः सकलायां=समग्रायां रजन्यां=रात्रौ जागरूकाः=कृतजागरणाः राजपुत्रकुमारकाः=युवानो राजपुत्राः यस्मिन् तस्मिन्, कुल०—कुलक्रमात्=वंशपरम्परातः आगतानां कुलपुत्राणां=कुलीनयुवकानां यः निवहः=समूहः तेन उह्यमाना=धार्यमाणा अनुभूयमानेत्यर्थः शुक्=शोकः यस्मिन् तस्मिन्, शोक०—शोकेन=शुचा सङ्कुचिताः=सङ्कोचमिताः संपिण्डिताङ्गा इति यावत् कञ्चुकिनः=अन्तःपुर-रक्षक-भृत्यविशेषाः [ 'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते' ] यस्मिन् तस्मिन्, निरान०—निरानन्दाः=अपगतानन्दाः दुःखिताः इति यावत् बन्दिनः=स्तुतिपाठकाः [ 'स्युर्मागधास्तु मगधा बन्दिनः स्तुतिपाठकाः' इत्यमरः ] यस्मिन् तस्मिन्, निःश्वस०—निश्वसन्तः=दीर्घनिश्वासमुत्सृजन्तः निराशाः=राज्ञः नैरुज्यसम्बन्धे त्यक्ताशाः आसन्नाः=समीपवर्तिनः सेवकाः यस्मिन् तस्मिन्, निःसृत०—निःसृतं=निर्गतं ताम्बूलं यस्मात् सः अतएव धूसरः=आपाण्डुः अधरः यासां तथाभूताः वारयोषितः=नृत्याङ्गनाः यस्मिन् तस्मिन् राज्ञः रुग्णत्वकारणात् ताः त्यक्तताम्बूलाः आसन् इति भावः, विलक्ष०—विलक्षाः=लज्जिताः ये वैद्याः=चिकित्सकाः तैः उपदिश्यमानं यत् पथ्यं=स्वास्थ्यकरं भोजनं तस्य

टिप्पणी—उच्चचषक—भृत्यलोग बड़ा श्रम कर रहे थे इसलिए उन्हें प्यास लगती रहती थी, जिसकी तृप्ति गिलास मुँह पर लगाकर पीने से नहीं प्रत्युत ऊपर से खूब धार छोड़कर पीने से होती थी किन्तु कॉवल और थामस ने यह अर्थ किया है—"Attendents were drinking streams of water from uplifted cups in order to distract the pain of the kings dry mouth"

यही अर्थ श्री जगन्नाथ पाठक ने भी कर रखा है समझ में नहीं आता कि भृत्यों के जल पीने से राजा के शुष्क मुख को कैसी शान्ति मिलती थी यहाँ म० म० काणे का कहना है कि प्रकरणानुसार दाह ज्वर से राजा का मुँह सूख रहा था, उन्हें जल पिलाया जा रहा था: इसलिए 'पीयमान' शब्द के स्थान में प्रेरणार्थक 'पाय्यमान' शब्द होता तो अच्छा था।

हिन्दी—नींद खो बैठे थे, विश्वास-पात्रसामन्त सन्तप्त थे, चामर डुलाने वाले अचेत से थे, दुःख के कारण अंगरक्षक कृश हो पड़े थे, (राजा की) कृपा से धन पाने वालों की मनोरथ-सिद्धि क्षीण होती जा रही थी, प्रिय राजे लोग स्वामि-भक्ति के कारण भोजन छोड़ देने पर बल से क्षीण होते हुए विकल थे, सारी रात जागते हुए राजपुत्र युवक भूतल पर पड़े हुए थे, कुल-क्रम से आये हुए कुलीन युवकों के समूह में शोक छाया हुआ था, कञ्चुकी शोक से सिकुड़े जा रहे थे, स्तुतिपाठकों का आनन्द चला गया था, समीपवर्ती सेवक निराश हुए आहें भर रहे थे, नृत्याङ्गनाओं के अधर बिना पान के धूसर वर्ण हो गये थे, लज्जित हुए वैद्यों द्वारा बताया जा रहा पथ्य लाने में पाकशाला का अध्यक्ष सावधान था, भृत्यों द्वारा पात्र ऊँचा करके (गिर रही) धार के जल से (अपने) मुख-शोष के रोग का

[1] 'पीयमानोच्चचषक'

विनोद्यमानास्यशोषरुजि, राजाभिलाषभोज्यमानबहुभुजि, भेषजसामग्रीसम्पादनव्यग्रसमग्रव्यवहारिणि, मुहुर्मुहुराहूयमानतोयकर्मान्तिकानुमितघोरातुरतृषि, तुषारपरिकरितकरकशिशिरीक्रियमाणोदश्विति,[1] श्वेतार्द्रकर्पटार्पितकर्पूरपरागशीतलीकृतशलाके, नाश्यानपङ्कलिप्यमाननवभाण्डगतगण्डूषग्रहणमस्तुनि, तिम्यत्कोमलकमलिनीपलाशप्रावृतमृदुमृणालके, सनालनीलोत्पलपूलीसनाथसलिलपानभाजनभुवि, धारानिपातनिर्वाप्यमाणक्वथिताम्भसि

---

टीका—आहरणे=आनयने अवहितः=सावधानः पौरोगवः=पाकशालाध्यक्षः [ 'रसवत्यां तु पाकस्थानमहानसे । पौरोगवस्तदध्यक्षः' इत्यमरः ] यस्मिन् तस्मिन्, अनु०—अनुजीविभिः=परिचारकैः [ 'सेवकास्त्वनुजीविनः' इत्यमरः ] पीयमानम्=पानविषयीक्रियमाणम् उच्चषकम्=उत्+ऊर्ध्वं चषकं=पानपात्रम् [ 'चषकोऽस्त्री पानपात्रम्' इत्यमरः ] यस्मिन् तथाभूतं यत् धारा-वारि=धारारूपेण पतत् जलं तेन विनोद्यमाना=दूरीक्रियमाणा आस्यस्य=मुखस्य शोषरुक्=शोषणरूपव्याधिः यस्मिन् तस्मिन्, पात्रद्वारा जलपानेन न तथा शुष्यन्मुखतृषा तृप्तिर्जायते यथा धारारूपजलपानद्वारेति भावः, राजा०—राज्ञः=प्रभाकरवर्धनस्य अभिलाषेण=इच्छया भोज्यमानाः=भोक्तुं प्रेर्यमाणाः बहुभुञ्जते इति बहुभुजः=औदरिकाः अत्याहारिणः भोजनभट्टाः इत्यर्थः यत्र तस्मिन्, स्वयं तु राजा न भुङ्क्ते स्म अतः आत्मानं सन्तोषयितुं स बहुभोजिनो भोजयति स्मेति भावः, भेषज०—भेषजस्य=औषधस्य या सामग्री=उपकरणानि तस्याः सम्पादने=प्राप्तये व्यग्राः=व्यापृताः समग्राः=सकलाः व्यवहारिणः=व्यापारिणः यस्मिन् तस्मिन्, मुहु०—मुहुर्मुहुः=पुनः-पुनः आहूयमानः=आकार्यमाणः तोयस्य=जलस्य लोकेभ्यो पानार्थं जलदानस्येत्यर्थः कर्मान्तिकः=भृत्यः तेन अनुमिता=अनुमितिविषयीक्रियमाणा घोरा=प्रबला आतुरस्य=रोगार्तस्य तृट्=तृषा यस्मिन् तस्मिन्, तुषार०—तुषारेण=हिमेन परिकरितः परिकरः=वेष्टनं सञ्जातम् अस्येति आवृतः इत्यर्थः यः करकः=भाण्डम् पात्रमिति यावत् तस्मिन् शिशिरीक्रियमाणं=शीतलीक्रियमाणम् उदश्वित्=उदकेन=जलेन श्वयति वर्धते इति अर्थात् अर्धजलमिश्रितं तक्रम् [ 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम्' इत्यमरः ] अत्र क्षीरस्वामी-द्विगुणाम्बु श्वेतरसमर्धोदकमुदश्वितम् । तक्रं त्रिभागभिन्नाम्बु केवलं मथितं स्मृतमिति धन्वन्तरिः ] शिशिरीभूतं तक्रं सम्भवतः राज्ञः ज्वरदह्यमाने शिरसि अथवा चरणयुगले प्रयुज्यते स्म, श्वेता०—श्वेते=श्वेतवर्णे आर्द्रे=क्लिन्ने च कर्पटे=वस्त्रखण्डे अर्पिताः=निहिताः ये कर्पूरस्य घनसारस्य परागाः=रेणवः तैः शीतलीकृता=शिशिरीकृता शलाका=अञ्जनशलाका यस्मिन् तस्मिन्, शीतोपचार-रूपेण शीतलीकृता शलाका राज्ञः नयनयोः उपयुज्यतेस्मेति भावः, नाश्यान०—न आश्यानः=शुष्कः शीतलः इत्यर्थः यः पङ्कः=कर्दमः आर्द्रा मृत्तिकेत्यर्थः तेन लिप्यमानं=दिह्यमानं यत् नवं=नूतनं भाण्डम्=भाजनम् तस्मिन् गतं=स्थितं गण्डूषस्य=चुलुकस्य ग्रहणाय=आदानाय मुखपूरणायेत्यर्थः मस्तु=दधिभवं मण्डम् दधिमिश्रितजलमित्यर्थः [ 'मण्डं दधिभवं मस्तु' इत्यमरः ] यस्मिन् तस्मिन्, तिम्यत्०—तिम्यति=[ तिम् आर्द्रीभावे+शतृ ] आर्द्राणीत्यर्थः कोमलानि=मृदूनि यानि कमलिन्याः=पद्मिन्याः पलाशानि=दलानि तैः प्रवृताः=वेष्टिताः मृदवः=सुकुमाराः मृणालाः एव मृणालकाः=बिसानि यत्र तस्मिन् शीतोपचारार्थमिति भावः, सनाल०—सनालानि=नालैः वृन्तैः सहितानि यानि नीलोत्पलानि तेषां पुल्या=गुच्छेन सनाथाः=युक्ताः सलिल-पानस्य=जलपानस्य भाजनानां=पात्राणां भूः=भूमिः स्थानमित्यर्थः यस्मिन् तस्मिन्, एषा सर्वा शैत्यसम्पादिका सामग्री वर्तते, धारा०—धाराणां= जलधाराणां निपातनैः=प्रक्षेपैः निर्वाप्यमाणं

टिप्पणी—नाश्यान—यहाँ अनाश्यानः (न+आश्यानः) उचित लगता है। संभवतः अकार का पूर्वरूप हो रखा हो और मूल प्रति में '० शलाके' के बाद वह (केऽला) बताने से रह गया हो। मस्तु (दही का पानी) ठंडा करके इसलिए रखा हुआ था कि ज्वर की गर्मी में राजा उसकी चुल्ली करके अपने मुख की खुश्की को शान्त कर सके।

हिन्दी—निवारण किया जा रहा था, राजा की इच्छानुसार भोजनभट्टों को जिमाया जा रहा था, सभी बनिये औषध-सामग्री जुटाने में व्यस्त थे, पानी देने वाले भृत्य के बार-बार बुलाये जाने से अनुमान होता था कि लोग घोर तृषा से कितने आतुर हैं, वर्फ से घिरी हँडिओं में आधा जल मिला हुआ तक्र ठंडा किया जा रहा था, सफेद गीले कपड़े में रखी कपूर की रज से सुरमा की सलाई ठंडी बनाई हुई थी, गीली मिट्टी से लिपे हुए भाड़े में कुल्ला करने के लिए दही का पानी रखा हुआ था, मृदु मृणालों को आर्द्र कोमल कमलिनी के पत्तों से ढक रखा था, जलपान के पात्रों के स्थान नाल वाले नील कमलों की गुच्छियों से युक्त थे, उबला हुआ पानी ( बाहर ठंडी ) धार छिड़ककर

---

१. 'शिवति'

पटुपाटलशर्करामोदमुचि, मञ्चकाश्रितसिकतिलकर्करीविश्रान्तान्तरचक्षुषि, सरस¹शैवलवलयितगलद्गोलयन्त्रके गल्वर्कशालाजिरोल्लासितलाजसक्तुनि निपीतमसारपारीपरिगृहीतकर्कशर्करे, शिशिरषधरसचूर्णविकीर्णस्फटिक-शुक्तिशङ्खसञ्चये, सञ्चितप्रचुरप्राचीनामलकमातुलुङ्गद्राक्षादाडिमादिफले, प्रतिग्राहितविप्रविप्रकीर्यमाणशान्त्युदकविप्रुषि, प्रेष्यापेष्यमाणललाटलेपोपदिग्धदृषदि धवलगृहे स्थितम्, परलोकविजयाय नीराज्यमानमिव ज्वरज्वलेन, अनवरतपरिवर्तनैस्तरङ्गिणि शयनीये शेषमिव विषोष्मणा क्षीरोदन्वति विचेष्टमानम्, मुक्ताफलवालुकाधूलि-

शीतलीक्रियमाणं क्वथितम्=उष्णीकृतम् अम्भः=क्वथितं जलं पानाय शीतीक्रियते स्मेति भावः, पटु०—पटुः= तीव्रः यः पाटलायाः=पीतरक्तवर्णायाः शर्करायाः=सितायाः खण्डविकारस्येति यावत् आमोदं=परिमलः तं मुञ्चति= उद्गिरतीति (क्विप्) तयोक्ते, मञ्चाः०—मञ्चकम्=उपष्टम्भम् आधारम् इति यावत् आश्रिता=अधिष्ठिता या सिकतिला=सिकता ( बालुका ) अस्मिन्नस्तीति ( सिकता+इलच् ) बालुकानिर्मितेत्यर्थः याक र्करी=वारिधानी जलभाण्डमित्यर्थः तस्यां विश्रान्तम्=स्थितम् संसक्तमिति यावत् आन्तरं चक्षुः, कार्कश्यकारणात् अन्तर्निलीनं नेत्रम् अथवा मनः यस्मिन् तस्मिन्, सरस०—सरसेन=क्लिन्नेन शैवलेन=जलघास-विशेषेण वलयितं=परिगतम् अत एव गलत्=स्यन्दमानं गोलयन्त्रकं=बहुच्छिद्रं जलभाण्डमिति शङ्करः गोलाकारजलयन्त्रमित्यर्थः यस्मिन् तस्मिन्, गल्वर्क०—गल्वर्कः=स्फटिकः (आप्टे) तस्य शालाजिरे=पात्रे उल्लासिताः=विस्तारिताः शङ्करः लाजानां=भृष्ट-धान्यानां सक्तवः=चूर्णानि यस्मिन् तस्मिन्, रोगार्तानां कृते लघुभोजनरूपे भृष्टधान्यसक्तवः दीयन्ते, पीत०— पीता=पीतवर्णा मसारस्य=मरकतस्य पारी=पानपात्रं ( 'पारी-पात्रशरावयोः' इति विश्वः ) तस्यां परिगृहीता= निहिता कर्कशर्करा=श्वेतशर्करा यस्मिन् तस्मिन्, शिशि०—शिशिरैः=शीतलैः औषधानां रसैः=द्रवैः चूर्णैः च अव-कीर्णः=आकीर्णः पूर्णः इति यावत् स्फटिकानां=मणिविशेषाणां शुक्तीनां=मुक्तास्फोटानां च शङ्खानां=कम्बूनां च सञ्चयः=समूहः यस्मिन् तस्मिन्, स्फटिकादीनि शीतस्पर्शानि भवन्तीति यतः, सञ्चित०—सञ्चितानि=औषध-निर्माणार्थं संगृहीतानि प्राचीनानि=पुरातनानि आमलकानि च मातुलुङ्गाः=बीजपूराः च द्राक्षाः मृद्वीकाः च दाडिमानि च आदौ येषां तानि फलानि यस्मिन् तस्मिन्, प्रति०—प्रतिग्राहिताः=दानंग्राहिताः ग्रहीतदानाः इत्यर्थः ये विप्राः= ब्राह्मणाः तैः विप्रकीर्यमाणाः=शान्तिजलस्य विप्रुषः=बिन्दवः [ 'पृषन्ति बिन्दुपृषता पुमांसो विप्रुषः स्त्रियः' इत्यमरः]

टिप्पणी—आन्तरचक्षु-(यह स्पष्ट नहीं हो रहा है कि 'आन्तरचक्षु' क्या होती है। कुछ प्रतिलिपियों में 'आतुरचक्षु' पाठ मिलता है, वही हमें ठीक लग रहा है। सच्छिद्र नाल-पात्र से टपकता हुआ जल देखकर आतुर--रुग्ण-राजा की चक्षु को कुछ शान्ति—सान्त्वना मिलती रहती होगी अथवा अन्तर चक्षु से मन ले लें या कृशता के कारण भीतर धँसी हुइ आँख।

**नीराज्यमान**—परलोक जाने को तय्यार हुए राजा दाहज्वर की अग्नि की नीराजन से उत्प्रेक्षा की गई है। नीराजन रणस्थल में जाने से पूर्व वीरों की मङ्गलार्थ की जाने वाली आरती को कहते हैं। यह बड़ी पुरानी प्रथा है। कालीदास ने भी इसका उल्लेख कर रखा है—( तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ। प्रदक्षिणार्चि-र्व्याजेन हस्तेनेव जयं ददौ" ॥ [रघु० ४ । २५ ]

**हिन्दी**—ठंडा किया जा रहा था, पीली शक्कर तेज गंध छोड़ रही थी, घड़ोंची पर रेतीली मिट्टी की सुराही पर राजा की भीतर धँसी आँख टिकी हुई रहती थी, गिनी शैवाल से आवृत गोल जलयन्त्र टपक रहा था, स्फटिक के पात्र पर लाजाओं (फूलियों) का सत्तू फैलाया हुआ था पीले मरकत के पात्र पर सफेद शक्कर धर रखी थी, ठंडी औषधियों के रस और चूर्ण से भरे हुए स्फटिकों, सीपियों और शंखों का ढेर लगा हुआ था, बहुत से पुराने आंवले, बिजौरे, अंगूर एवं अनार आदि फल संचित हुए थे, दान ग्रहण किये हुए ब्राह्मणों द्वारा शान्ति जल के बिन्दुओं से प्रोक्षण किया जा रहा था और जहाँ दासियों द्वारा पीसे जा रहे माथे पर लगाने के लेपों से (पीसने के) पत्थर लिप्त हुए पड़े थे—स्थित पिता को देखा, जिसकी परलोक विजय के लिए ज्वराग्नि द्वारा नीराजना--जैसी की जा रही थी, जो (ज्वर के कारण) अंग परिवर्तनों से तरंगित (सिकुड़नों वाली बनी) शय्या पर इस प्रकार छटपटा रहा था जैसे तरंगित (तरंगों वाले) क्षीर समुद्र में विष की अग्नि के कारण शेषनाग छटपटाता है, जो मोतियों की बालुका ( चूर्ण ) की रज से श्वेत बना हुआ क्षयकाल ( मृत्यु समय ) में इस प्रकार सूखता जाता है जैसे मोतियों और

१. 'सरल'

धवलितं जलधिमिव क्षयकाले शुष्यन्तम्, कालेन कैलासमिव दशाननेनोद्ध्रियमाणम्, अविरतचन्दनचर्चापराणां परिचारकाणामत्युष्णावयवस्पर्शभस्मीभूतोदरैरिव धवलैः करैः स्पृश्यमानम् लोकान्तरप्रस्थितं स्थास्नुना स्वयशसेव चन्दनानुलेपनच्छलेनापृच्छ्यमानम्, अविच्छिन्नदीयमानकमलकुमुदेन्दीवरदलं कालकटाक्षपतनशबलमिव शरीरमुद्वहन्तम्,

---

टीका—यस्मिन् तस्मिन्, प्रेष्या०—प्रेष्याभिः=परिचारिकाभिः पेष्यमाणाः=संचूर्यमाणाः ये ललाटार्थं लेपाः तैः उपदिग्धाः=लिप्ताः दृषदः=प्रस्तराः यस्मिन् तस्मिन्. धवल–गृहे=सुधालेपेन श्वेते भवने। पर०—परलोकस्य=लोकान्तरस्य विजयाय जयार्थं नीराज्यमानं= नीराजनविषयीक्रियमाणम् इवेत्युत्प्रेक्षायाम् ज्वरस्य यः ज्वलनः=अग्निः तेन, अनवरत०—अनवरतैः=सततैः परिवर्तनैः=शय्याया विलोठनैः तरङ्गिणि=तरङ्गयुक्ते क्षीरस्य उदन्वति=सागरे क्षीरसमुद्रे इति यावत् फणास्थितस्य विषस्य ऊष्मणा=उष्णिम्ना विचेष्टमानं=विविधं चेष्टमानं=लुठन्तमित्यर्थः शेषं=शेषनागमिवेत्युपमायाम् तरङ्गिणि=तरङ्गायमाणे भङ्गयुक्ते इत्यर्थः शयनीये=शय्यायां दाहज्वरोष्मकारणात् विचेष्टमानम् एतत् अन्यानि च द्वितीयान्तपदानि 'पितरम्' इत्येतस्य विशेषणानि, मुक्ता०—मुक्ता-फलैः=मौक्तिकैः वालुकायाः=सिकतायाः धूलिभिः=रजोभिः कणैरिति यावत् धवलितं=श्वेतीकृतम् क्षयस्य=प्रलयस्य [ 'संवर्तः प्रलयः—कल्पः क्षयः—कल्पान्त 'इत्यपि' इत्यमरः ] काले=समये शुष्यन्तम्=शुष्कीभवन्तम् जलधिम्=समुद्रम् इवेति। श्लिष्टोपमा, प्रलयकाले हि सर्वमेव जगत् विनश्यति, समुद्रोऽपि च शुष्यतीति पुराणवार्ता, (राजपक्षे) मुक्ता-फलानां वालुकायाः=चूर्णस्य धूल्या=रजसा धवलितं, णैत्यमानेतु मुक्ताफलरजः प्रयुज्यते इत्यायुर्वेदे प्रोक्तम्, क्षयस्य=विनाशस्य मृत्योरित्यर्थः काले शुष्यन्तम्=म्लायमानम् मृत्युसमये रोगी म्लायते। कालेन०—कालेन=श्याम-वर्णेन, राक्षसाः हि श्यामवर्णा जायन्ते दशाननेन दश आननानि=मुखानि यस्य तेन रावणेनेत्यर्थः उद्ध्रियमाणम्=उत्थाप्यमानम् कैलासम्=एतदाख्य-पर्वतम् इव कालेन मृत्युना मृत्युरूपेण रावणेन=व्याधिना इति शङ्करः उद्ध्रिय-माणम्=स्वलोकं नीयमानमित्यर्थः अत्रापि श्लिष्टोपमा, मृत्युसमये श्वेतिमाच्छन्नदेहस्य राज्ञः श्वेतकैलासेन अर्थसाम्य-मपि वर्तते, अविरत०—अविरता=निरन्तरा चन्दनस्य चर्चा=लेपः परं=प्रधानं येषां तेषां राज्ञः शरीरे सततं चन्दनलेपं कुर्वतामित्यर्थः परिचारकाणां=सेवकानाम् अतिशयेन उष्णाः=तप्ताः ये (राज्ञः) अवयवाः=अङ्गानि तेषां स्पर्शेन=संसर्गेण भस्मीभूतं=भस्मत्वं गतम् उदरं=मध्यभागः येषां तैः इत्युत्प्रेक्षायाम्, धवलैः=श्वेतैः करैः=हस्तैः स्पृश्यमानम्=स्पर्शविषयीक्रियमाणम्, भस्मापि श्वेतं भवति, अतः चन्दनश्वेतकरा भस्मी भूतत्वेन सम्भाव्यन्ते, लोका०—अन्यः लोकः इति लोकान्तरम् मरणानन्तरं परलोकः तत्र प्रस्थितं=कृतप्रस्थानं स्थास्नुना=तिष्ठतीति [ √स्था + ग्स्नुः 'ग्लाजिस्थश्च ग्स्नुः' पा० ३।२।१३२ ] स्थायिना शरीरे अनुलेपनेन पृथिव्यां ( यशसा ) स्वेन=स्वकीयेन यशसा=कीर्त्या इव चन्दनस्य यत् अनुलेपनं=लेपः तस्य छलेन=व्याजेन आपृच्छ्यमानम्=आम-न्त्र्यमाणम् विसर्जनीक्रियमाणमिति यावत् चन्दनं यशश्चोभयमेव श्वेतम्, अतः स्थायि यशः प्रतिष्ठमानं राजानं विसर्जय-तीव अत्र अपह्नुत्युत्थापितोत्प्रेक्षा, अविच्छिन्न०—अविच्छिन्नं=निरन्तरं यथा स्यात्तथा दीयमानानि=तापशान्त्यर्थं शरीरे निधीयमानानीत्यर्थः कमलानि च कुमुदानि च इन्दीवराणि च तेषां दलानि=पत्राणि यस्मै तम्, कालस्य=मृत्योः

टिप्पणी—दशाननेनोद्ध्रि—रामायण के सप्तम काण्ड में कथा आती है कि एक बार रावण पुष्पक विमान में कैलाश के पास से जा रहा था कि नन्दी ने उसे रोक लिया और कहा कि उधर महादेव–पार्वती एकान्त में बैठे हुए हैं। रावण कुपित हो उठा अभिमान में आकर और दोनों भुजाओं से कैलास को पकड़कर हिला बैठा। पर्वत के हिलने से पार्वती डर गई, तो महादेव को भी क्रोध आ गया उन्होंने अपने पैर के अँगूठे से कैलास को नीचे दबाया जिससे रावण की भुजायें पिस गईं और वेदना से वह चीख उठा। कादम्बरी में भी बाण ने इस घटना का उल्लेख किया है—'कैलासश्रियमिव दशमुखोन्मूलनक्षोभनियतिताम्'।

हिन्दी—बालुका (रेत) की रज से श्वेत बना हुआ समुद्र क्षयकाल (प्रलयकाल) में सूख जाता है, को काला (मृत्यु-रूप) दशानन ( रोग ) द्वारा (संसार से) इस तरह उठाया जा रहा था जैसे काल ( काले रंग के ) दशानन ( रावण ) द्वारा कैलाश उठाया गया था, जो निरंतर चन्दन-लेप में लगे हुए सेवकों के अत्युष्ण ( राजा के ) अंगों को छूने से भस्मीभूत मध्यभाग वाले-जैसे बने सफेद हाथों से छुआ जा रहा था, परलोक को प्रस्थान किये हुए जिसे ( शरीर पर ) स्थित चन्दन-लेप के बहाने ( जगत् में ) स्थित अपने यश से—जैसे विदा दी जा रही थी, जो काल के कटाक्ष-पातों से रंग-बिरंगा हुआ जैसा ( ऊपर ) रखे जा रहे कमलों, कुमुदों और इन्दीवरों की पंखुड़ियों से युक्त शरीर धारण कर

निबिडदुकूलपट्टनिपीडितकेशान्तकथ्यमानकष्टवेदनानुबन्धं मूर्धानं धारयन्तम्, दुर्धरवेदनोन्नमन्नीलशिराजालककरालेन च कालाङ्गुलिलिख्यमानलेखाख्यातमरणावधिदिवससंख्यानेनेव ललाटफलकेन भयमुपजनयन्तम्, आसन्नयमदर्शनोद्वेगादिव च किंचिदन्तःप्रविष्टतारकं चक्षुर्दधानम्, शुष्यद्दशनपङ्क्तिप्रसूतधूसरदीधितितरङ्गिणीं मृगतृष्णिकामिवोष्णां निश्वासपरम्परामुद्वहन्तम्, अत्युष्णनिश्वासदग्धयेव श्यामायमानया रसनया निवेद्यमानदारुणसन्निपातारम्भम्, उरःस्थलस्थापितमणिमौक्तिकहारचन्दनचन्द्रकान्तं कृतान्तदूतदर्शनयोग्यमिवात्मानं कुर्वाणम्, अङ्गभङ्गवलनोत्क्षिप्त-

---

टीका—कटाक्षपतनेन = अपाङ्गावलोकनेन शबलं = चित्रम् इवेत्युत्प्रेक्षायां शरीरम् = देहम् उद्वहन्तं = बिभ्राणम्, मृत्युः राज्ञि कटाक्षपातं करोति अर्थात् स आसन्नमृत्युरास्ते, कमलं रक्तं, कुमुदं श्वेतम् इन्दीवरञ्च नीलं भवति, नयनमपि रक्त-श्वेतश्यामं भवति अतः कमलादिदलेषु मृत्योः कटाक्षत्वमुत्प्रेक्ष्यते, निबिड०—निबिडेन = अशिथिलेन दृढेनेत्यर्थः दुकूलस्य = कौशेयवस्त्रस्य पट्टेन = खण्डेन निपीडिताः = दृढं बद्धाः इत्यर्थः ये केशान्ताः = केशप्रान्ताः तैः कथ्यमानः = प्रोच्यमानः अनुमीयमान इत्यर्थः कष्टस्य वेदनानां = पीडानाम् अनुबन्धः = सातत्यं यस्य तम् मूर्धानं = शिरः उद्वहन्तम् = दधानम्, अतितीव्रवेदनाकारणेन राज्ञः शिरः वस्त्रखण्डेन दृढबद्धः आसीदिति भावः, दुर्धर०—दुर्धराः = दुर्वाहाः याः वेदनाः ताभिः उन्नमन् = उत्तिष्ठत् यत् नीलं = नीलवर्णं शिराणां = धमनीनां [ 'नाडी तु धमनिः शिरा' इत्यमरः ] जालकं = जालं समूहः इत्यर्थः तेन करालं = पूर्णं तेन ललाटफलकेन = भालपट्टेन कालस्य मृत्योः अङ्गुलिभिः = करशाखाभिः लिख्यमानाः = अङ्क्यमानाः याः लेखाः = पङ्क्तयः ताभिः आख्यातं = कथितं मरणस्य अवधेः = काल-सीमायाः दिवसानां = दिनानां संख्यानं = गणनं यस्मिन् तेन इवेत्युत्प्रेक्षायां भयं = भीतिम् उपजनयन्तम् = उत्पादयन्तम्, अर्थात् ललाटे उत्थिताः नीलधमन्यः मृत्युदिवसगणनापंक्तयः इवासन्, गणना हि पंक्तिभिः क्रियते, आसन्न०—आसन्नः = सन्निहितः यः यमः = मृत्युरित्यर्थः तस्य दर्शनेन = साक्षात्कारेण यः उद्वेगः = भयं तस्मात् इवेत्युत्प्रेक्षायां किञ्चित् = ईषत् यथा स्यात्तथा अन्तः प्रविष्टा = गता कोटराभ्यन्तरगतेत्यर्थः तारका = कनीनिका यस्य तत् चक्षुः = नयनं दधानम्। अन्योऽपि भये अन्तः प्रविशति, शुष्य०—शुष्यन्ती = शोषं गच्छन्ती या दशनानां = दन्तानां पङ्क्तिः = श्रेणिः तस्याः प्रसूताः = उत्पन्नाः याः धूसराः = धूसरवर्णाः = ईषच्छ्वेताः इत्यर्थः दीधितयः = रश्मयः तैः तरङ्गिणीम् = तरङ्गयुक्ताम् मृगतृष्णिकाम् इवेत्युपमायाम् उष्णाम् = उत्तप्तां निःश्वासानां = निश्वसितानां परम्पराम् = सन्तानम् उद्वहन्तम् = धारयन्तम् दन्तधूसर-किरणानां तरङ्गैः मिश्रितान् दीर्घोष्णनिश्वासान् राजा मुञ्चति स्म, मृगतृष्णायामपि तरङ्गा भवन्ति उष्णापि च सा भवति, अत्युष्ण०—अतिशयेन उष्णाः ये निश्वासाः तैः दग्धा = प्लुष्टा इवेत्युत्प्रेक्षायां श्यामा भवतीति श्यामायमाना = कृष्णवर्णीभवन्ती तया रसनया = जिह्वया निवेद्यमानः = सूच्यमानः दारुणस्य = भयङ्करस्य सन्निपातस्य वात-पित-कफवैषम्यजनितस्य असाध्यं ज्वरविशेषस्य आरम्भः यस्मिन् तम्, उरः०—उरःस्थले = वक्षःस्थले स्थापिताः = शान्त्यर्थं निहिताः मणीनां = रत्नानां मौक्तिकानां—मुक्ताफलानाञ्च हाराः = स्रजश्च चन्दनानि च चन्द्रकान्ताः = चन्द्र-

**टिप्पणी—मृगतृष्णा**—यह एक प्राकृतिक दृश्य होता है। गर्मियों में ऊपर से तो सूर्य की गर्मी पड़ती है और नीचे से पृथ्वी भी अपनी गर्मी उगलती है तब दोनों गर्मियाँ मिलकर दूर रेतीले मैदानों में तरंगें मारते हुए जल का सा दृश्य उपस्थित कर देती हैं। यह एक भ्रम है। इसे मृगतृष्णा इसलिये कहते हैं कि जल जैसा दिखाई देने से मृगों की तृष्णा-प्यास—इसमें हो उठती है वे तृष्णा बुझाने दौड़ते जाते हैं पर वह दृश्य आगे-आगे जाता रहता है। मृग प्यासे ही मर जाया करते हैं। इस मृगतृष्णा का दूसरा नाम मृगमरीचिका है।

हिन्दी—रहा था जो केशों के प्रान्त-भागों में कसकर बँधे हुए रेशमी वस्त्र-खण्ड से (अपनी) सतत हो रही तीव्र वेदना को कहते हुए सिर को धारण कर रहा था, जो काल की अंगुलियों द्वारा लिखी जा रही पंक्तियों से मृत्यु-अवधि के दिनों की गिनती वाले—जैसे लग रहे असहनीयवेदना के कारण ऊपर उठी हुई काली-काली नसों के जल से भरे भाल-पट्ट से भय उत्पन्न कर रहा था, जो समीप में स्थित यम के दर्शन के भय के कारण से—जैसे कुछ भीतर गई हुई पुतली वाले चक्षु को धारण कर रहा था, जो मृगतृष्णा के समान सूखती हुई दन्तपंक्ति से निकली धूसर वर्ण की किरणों की तरंगें साथ लिए उष्ण निश्वास-समूह रखा था, जो अत्यन्त उष्ण निश्वासों से जली हुई—जैसी काली बनी जिह्वा से भीषण सन्निपातज्वर के प्रारम्भ की सूचना दे रहा था, जो छाती पर रखे हुए मणियों तथा मोतियों की मालाओं, चन्दन और चन्द्रकान्त से युक्त ऐसा लग रहा था, मानो अपने को यम-दूत के दर्शन-योग्य बना रहा हो, जो अंगों को तोड़ने-

...नेदिष्ठसलिलमणिकुट्टिमादर्शोदरेषु निपतद्भिः भुजयुगलम् पर्यस्तहस्तनखमयूखैर्धारागृहमिव तापशान्तये रचयन्तम्, नेदिष्ठसलिलमणिकुट्टिमादर्शोदरेषु निपतद्भिः प्रतिबिम्बैरपि सन्तापातिशयमिव कथयन्तम्, स्पृशन्तीं प्रणयिनीमिव विश्राम[1]भूमिं मूर्छामपि बहु मन्यमानम्, अन्तकाह्वानाक्षरैरिव सभयभिषग्दृष्टैरारिष्टैराविष्टम्, महाप्रस्थानकाले स्वसन्तापसन्तानमाप्तहृदयेषु सञ्चारयन्तम्, अरतिपरिगृहीतमीर्ष्ययेव छायया मुच्यमानम्, उद्योगमिवोपद्रवाणाम्, सर्वास्त्रमोक्षमिव क्षामतायाः, हस्तीकृतं विहस्ततया, विषयीकृतं वैषम्येण, क्षेत्रीकृतं क्षयेण, गोचरीकृतं ग्लान्या, दष्टं दुःखासिकया, आत्मीकृतमस्वास्थ्येन

---

टीका—कान्तमणयश्च यस्य तम् कृतान्तस्य=यमराजस्य दूतस्य यद् दर्शनं=साक्षात्कारः आत्मकर्मकं दूतकर्तृकञ्च दर्शन-
मित्यर्थः तस्य योग्यम् इवेत्युत्प्रेक्षायाम् आत्मानं=स्वं कुर्वाणम्=कुर्वन्तम्, यदा कश्चिद्विशिष्टपुरुषः द्रष्टुमागच्छति, तदा
द्रष्टव्याः पुरुषाः आत्मानं सुसज्जितं भूषणभूषितञ्च कुर्वन्तीति प्रथा वर्तते; अङ्ग॰—अङ्गानाम्=अवयवानाम् यः भङ्गः
=आकुञ्चनं मोटनमिति यावत् वलनं=सञ्चालनञ्च तयोः उत्क्षिप्तम्=उत्थापितम् भुजयोः=बाह्वोः युगलं=द्वयं येन
तम् पर्यस्ताः=प्रसृताः ये हस्तयोः=करयोः नखानां मयूखाः=किरणाः तैः तापस्य=ज्वरकृतसन्तापस्य शान्तये=शम-
नाय धारागृहम्=जलयन्त्रगृहम् इवेत्युत्प्रेक्षायां रचयन्तम=निर्मान्तिम् नेदिष्ट॰ · नेदिष्ठानि=अतिशयेन अन्तिकानि
इति ( अन्तिक + इष्ठन् नेदादेशश्च ) यानि सलिलानि=जलानि च मणिकुट्टिमाः=मणिमयबद्धभूमयश्च आदर्शाः=
दर्पणाश्च तेषाम् उदरेषु=मध्येषु निष्पतद्भिः=प्रतिफलद्भिःप्रतिबिम्बैः=निजप्रतिच्छायाभिः अपि सन्तापस्य=उष्णिम्नः
अतिशयम्=आधिक्यम् इवेत्युत्प्रेक्षायाम् कथयन्तम्=ब्रुवन्तम् अर्थात् जलादिशीतलद्रव्येषु पतन्तः राज्ञः प्रतिबिम्बाः
अपि स्वतापोपशमनायेव तत्र प्रविष्टाः राज्ञस्तु वार्तैव का उत्प्रेक्षार्थापत्योः संकरः, स्पृश॰—स्पृशन्तीम्=स्पर्शविष-
यीकुर्वतीं विश्रामस्य=शान्तेः सुखस्येति यावत् भूमिं=स्थानम् कारणमित्यर्थः प्रणयिनीं=प्रियतमाम् इव स्पृशन्तीम्
आगच्छन्तीमित्यर्थः विश्रामभूमिं=शान्ति-सुखदायिनीमिति यावत् मूर्छां=मोहम् अपि बहु यथा स्यात्तथा मन्यतेस्म=
गणयति स्म, यथा स्पृशन्ती सुखदात्री प्रेयसी बहु मन्यते स्म तथैव मूर्छाऽपि, मूर्छाया तापस्य पीडायाश्च अनुभवाभावात्,
अत्र श्लिष्टोपमा अर्थापत्तिश्चापि, अन्तका॰—अन्तकस्य=यमस्य यत् आह्वानम्=यमकर्तृकम् आकरणमित्यर्थः तस्य
अक्षरैः=वर्णैः लेखैरिति यावत् इवेत्युत्प्रेक्षायाम् सभयैः=भयभीतैः भिषग्भिः=वैद्यैः दृष्टैः=आलोकितैः अरिष्टैः=
मरणचिह्नैः [ 'तक्रे मरणचिह्ने चारिष्टं वृक्षे च फेनिले' इति क्षीरस्वामी अथवा अरिष्टैः=काकैः [ सुराणां च शुभेऽपि
स्यात् काके निम्बे च पुंस्ययम्' इति क्षीरस्वामी ] उपरि शब्दायमाना भ्रमन्तः काकाः अपशकुनं मृत्युचिह्नं चोच्यते
आविष्टम्=आक्रान्तम्, महा॰—महाप्रस्थानं=महायात्रा मृत्युरित्यर्थः तस्य काले=समये स्वस्य सन्तापस्य सन्तानं
=समूहम् आप्तानां=बन्धु-बान्धवानां हृदयेषु सञ्चारयन्तम्=संक्रामयन्तम् स्थानान्तरयन्तमिति यावत्, मरणासन्नं
राजानं दृष्ट्वा बान्धवाः भृशं समतप्यन्तेति भावः, अरति॰—अरतिः=एकत्रानवस्थितिः अर्तिः पीडेति यावत् तया

टिप्पणी—सन्तापसन्तानम्—प्रस्थान और सन्तान शब्द श्लिष्ट हैं, प्रस्थान यात्रा को और सन्तान पुत्री-पुत्रों को भी कहते हैं। शब्दशक्ति से यह व्यङ्ग्यार्थ भी निकल जाता है कि जैसे यात्रा पर जाता हुआ कोई व्यक्ति अपनी सन्तानों-बालबच्चों की देखभाल करने के लिए अपने बन्धु-बान्धवों के सुपुर्द कर दिया करता है वैसे ही राजा भी कर रहा है। इसलिये यहाँ उपमा ध्वनि है।

हिन्दी—मरोड़ने और हिलाने-डुलाने में दोनों भुजायें ऊपर उठाए हुए, फैली हुई हाथों की नख-किरणों से ताप-शमन के लिए मानों धारा-यन्त्रगृह (फव्वारा) बना रहा था, जो निकट के जलों, मणिमय फर्शों और दर्पणों में पड़ रहे प्रतिबिम्बों द्वारा तक भी मानो अतिशय संताप कर रहा था।

जो छूती हुई सुखदायिनी प्रेयसी की तरह छूती हुई ( आती हुई ) सुखदायिनी मूर्छा को भी बहुत मान रहा था, जो भयभीत वैद्यों द्वारा देखे जा रहे यम के बुलावा के अक्षरों जैसे मृत्यु चिह्नों से घिरा हुआ था, जो महा-यात्रा ( मृत्यु ) के समय अपने सन्ताप-समूह को बन्धु-बान्धवों के हृदयों में संक्रामित कर रहा था, जो बेचैनी द्वारा अपनाया हुआ ईर्ष्या से मानों ( शारीरिक ) कांति द्वारा त्याग दिया जा रहा था, जिसपर ( ज्वर-जनित ) अन्य बीमारियाँ ( भी ) मानो ( अपना २ ) जोर लगा रही थीं और कृशता मानो अपने सभी अस्त्र छोड़ रही थी, जिसे विवशता ने ( अपना ) विषय बना लिया था, धातुक्षय ने अपना क्षेत्र बना दिया था, ग्लानि ने ( अपना ) विषय कर लिया था, तीव्र वेदना ने डस लिया था, अस्वास्थ्य ने अपना लिया था, व्याधि ने ( अपने ) अधीन कर

---

1 'विश्वास'

विधेयीकृतं व्याधिना, क्रोडीकृतं कालेन, लक्ष्यीकृतं दक्षिणाशया, पीतमिव पीडाभिः, जग्धमिव जागरेण, निगीर्णमिव वैवर्ण्येन, ग्रासीकृतं गात्रभङ्गेन, ह्रियमाणमिव विपद्भिः, वण्ट्यमानमिव वेदनाभिः, लुण्ठ्यमानमिव दुःखैः, आदित्सितं दैवेन, निरूपितं नियत्या, घ्रातमनित्यत्वेन, अभिभूयमानमभावेन, परिकलितं परासुतया, दत्तावकाशं क्लेशस्य, निवासं वैमनस्यस्य, समीपे कालस्य, अन्तिकेऽन्त्योच्छ्वासस्य, मुखे महाप्रवासस्य[1], द्वारि दीर्घनिद्रायाः, जिह्वाग्रे जीवितेशस्य वर्तमानम्, विरलं वाचि, चलितं चेतसि, विह्वलं वपुषि, क्षीणमायुषि, प्रचुरं प्रलापे, सन्ततं श्वसिते, जितं जृम्भिकाभिः पराधीनमाधिभिः, अनुबद्धमनुबन्धिकाभिः, पार्श्वोपविष्टयामवरतरोद-

टीका—परिगृहीतम् = आत्मीयीकृतम् ईर्ष्यया = असूयया इव छायया = कान्त्या शरीरस्येति शेषः मुच्यमानं = परित्यज्यमानम् राज्ञः शरीरकान्तिर्नष्टा अरतिश्च तमाश्रितवतीति भावः अत्र अरति-च्छाययोः सापत्न्यभावो व्यज्यते अतः प्रस्तुतयोः अरति-च्छाययोः अप्रस्तुतयोः सपत्न्योः व्यवहारसमारोपात् समासोक्त्यलङ्कारः तदुत्थापिता चोत्प्रेक्षा, उद्योगम्— उद्यमम् इव उपद्रवाणाम् = रोगारम्भकदोषप्रकोपजन्या ये अन्ये विकाराः व्याधेरुपरि अन्ये व्याधयः इति यावत् यथोक्तं वैद्यके—'यो व्याधिस्तस्य यो हेतुर्दोषस्तस्य प्रकोपतः। योऽन्यो विकारो भवति सः उपद्रव उच्यते॥ तेषाम्, अर्थात् दाहज्वरजनितानामन्येषाम् अनेकेषां व्याधीनां स केन्द्रभूतमासीत्, क्षामतायाः = कृशतायाः सर्वेषाम् अस्त्राणाम् = आयुधानां मोक्षम् = प्रहारम् इव कृशतया निजसर्वास्त्राणि तस्मिन् प्रक्षिप्तानीति भावः, उपरि उभयत्र उत्प्रेक्षा, विगतः हस्तः यस्य सः विहस्तः तस्य भावः तत्ता तया = अशरणतया निस्सहायतयेत्यर्थः हस्तीकृतम् = वशीकृतम् वैषम्येण = विषमया दशयेत्यर्थः विषयीकृतम् = पात्रीकृतम् क्षयेण = धातूनाम् अपचयेन क्षेत्रीकृतम् = स्वस्थानीकृतम् ग्लान्या = हर्षक्षयेण गोचरीकृतम् = विषयीकृतम्, दुःखम् असिका इवेति उपमिततत्पु॰ दुःखासिका तया तीव्रवेदनया दष्टम् = क्षतम्, अस्वास्थ्येन = स्वास्थ्याभावेन आत्मीकृतम् = स्वायत्तीकृतम् व्याधिना = रोगेण विधेयीकृतम् = आज्ञापालकीकृतम् अधीनीकृतमिति यावत्, कालेन = यमराजेन क्रोडीकृतम् = अङ्कधृतम् आलिङ्गितमित्यर्थः, दक्षिणया आशया = दिशया लक्ष्यीकृतम् = अक्षिपथीकृतम् दक्षिणादिशाया-मधिष्ठितो भवति, उपरि सर्वत्र उत्प्रेक्षा, परन्तु वाचकाभावात् सा प्रतीयमानैव क्षामतादिषु चेतनव्यवहार-समारोपात् समासोक्तिसमुत्थापिता च, पीडाभिः पीतम् = पानविषयीकृतम् इव, जागरेण = निद्राक्षयेण जग्धम् = भक्षितम् इव, वैवर्ण्येन = विगतः ( मुखस्य ) वर्णो यस्य तस्य भावः वैवर्ण्यम् तेन = रोगकृतेन मुखमालिन्येन मुखपीतत्वेन वा निगीर्णम् = निगलितम् इवेत्युपरि सर्वत्रोत्प्रेक्षा, गात्राणां = अङ्गानां भङ्गः = मोटनं तेन ग्रासीकृतं = कवलीकृतं, विपद्भिः = विपत्तिभि ह्रियमाणं = अपनीयमानम् इव वेदनाभिः = पीडाभिः वण्ट्यमानं = विभज्यमानं इव तस्य अङ्गे पीडा जायते स्मेति भावः, दुःखैः = क्लेशैः लुण्ठ्यमानम् = मुष्यमाणं इवेति उपरि सर्वत्रोत्प्रेक्षा, दैवेन = भाग्येन आदित्सितम् = आदातुमिष्टं ( आ + $\sqrt{}$ दा + सन् + क्त ) नियत्या = विधिना [ 'भाग्यं स्त्री नियतिर्विधिः' इत्यमरः ] निरूपितं = ग्रहणाय दृष्ट अनित्यत्वेन = अनित्यतया विनश्वरतयेति ावत् घ्रातं = घ्राणविषयीकृतं अभावेन मृत्युनेत्यर्थः अभिभूयमानं = आक्रम्यमाणं, परा = दूरम् गताः असवः = प्राणाः यस्य सः परासुः मृत इत्यर्थः तस्य भावः तत्ता तया मृत्युनेति यावत् परिकलितम् = परितः गृहीतम्, क्लेशस्य = दुःखस्य दत्तः अवकाशः = स्थानं येन तम् अर्थात् येन दुःखाय स्थानं दत्तम्, विगतः मनः यस्य स विमनाः विमनसः भावः वैमनस्यम् = मानसिको विषादः व्यामोहः इति यावत् तस्य

हिन्दी—लिया था, काल ने (अपनी) गोद में ले लिया था, एवं दक्षिण दिशा ने अपना लक्ष्य बना दिया था, जो पीडाओं द्वारा पिया-जैसा गया था, निद्राक्षय द्वारा खाया-जैसा गया था, चेहरे के पीलेपन द्वारा निगला-जैसा गया था, अङ्गों की तोड़-मरोड़ द्वारा ( अपना ) ग्रास बना दिया था, विपत्तियों द्वारा हर लिया जैसा जा रहा था, एवं दुःखों द्वारा लूटा जैसा जा रहा था, जिसे दैव ने लेना चाह लिया था, नियति ने देख लिया था, अभाव ने दबा दिया था और मौत ने पकड़ लिया था, जिसने क्लेश को स्थान दे दिया था, जो मानसिक उच्चाट का निवास स्थान था, मृत्यु के समीप था, अन्तिम साँस के निकट था, महाप्रवास के मुख में था, दीर्घनिद्रा ( मृत्यु ) के द्वार पर था, यमराज की जिह्वा की नोक पर था, जो बोलने में कमजोर, चित्त में कम्पायमान, शरीर में विह्वल, आयु में क्षीण, प्रलाप में अधिक ( गहरी ) साँसों में सतत् प्रवृत्त, जमुहाइयों से हार खाया हुआ तथा मानसिक वेदनाओं के पराधीन था एवं जिसकी लगातार हिचकियाँ बँध रही थीं और जो निकट बैठी हुई, निरन्तर रोते रहने के कारण सूजी हुई आँखों वाली

१. महाप्रयासस्य

नोच्छूननयनया गृहीतचामरिकयापि निःश्वसितैरेव वीजयन्त्या विविधौषधिधूलिधूसरितशरीरया मुहुर्मुहुः 'आर्यपुत्र स्वपिषि' इति व्याहरन्त्या देव्या यशोमत्या शिरसि वक्षसि च स्पृश्यमानं पितरमद्राक्षीत् ।

दृष्ट्वा च प्रथमदुःखसम्पातमथ्यमानमतिराशङ्कित इव भागधेयेभ्यः समभवत् । अन्तकपुरवर्तिनमेव च पितरममन्यत । निराकृत इव चान्तःकरणेन क्षणमासीत् । अवधूतश्च धैर्येण, क्षेत्रीकृतः क्षोभेण, रिक्तीकृतो रत्या, विषयीकृतो विषादेन, पातकमयमिव हृदयमुद्वहन्, विषमविषदूषितानीव मुह्यन्तीन्द्रियाणि बिभ्राणः, तमसा रसातलमपि विशेषयन्, शून्यत्वेनाकाशमप्यतिशयानो नाविन्दत कर्तव्यम् । पस्पर्श च हृदयेन भियमुत्तमाङ्गेन च गाम् ।

---

टीका–निवासम्=निवासस्थानं, अवसन्नमनसमित्यर्थः, उपरि सर्वत्र प्रतीयमानोत्प्रेक्षा कालस्य=मृत्योः समीपे स्थितमितिशेषः अन्त्यस्य=अन्तिमस्य महाप्रवासस्य महायात्रायाः मृत्योरित्यर्थः मुखे स्थितं उच्छ्वासस्य=निश्वासस्य अन्तिके=निकटे स्थितं, दीर्घनिद्रायाः=मृत्युरूपायाः महानिद्रायाः द्वारि=द्वारे स्थितम्, जीवितेशस्य=यमस्य [ 'जीवितेशो यमः पुंसि' इत्यमरः ] जिह्वायाः=रसनायाः अग्रे=अग्रभागे वर्तमानं, वाचि=वचने विरलम्=अल्पं बहुवक्तुमशक्तमित्यर्थः, चेतसि= मनसि चलितं=कल्पितं, वपुषि=शरीरे विह्वलं, आयुषि=जीवितकाले क्षीणं, क्षीणायुषमित्यर्थः, प्रलापे=असम्बद्धे अनर्गले च भाषणे प्रचुरं=अत्यधिकं, जृम्भिकाभिः=जृम्भणैः जितम्=अभिभूतं=आधिभिः=मनोवेदनाभिः पराधीनं= परायत्तम्, अनुबन्धिकाभिः=गात्रसन्धिपीडाभिः इति शङ्करः, किन्तु मेदिन्यनुसारेण हिक्काभिः [ 'अनुबन्धी तु हिक्काय तृष्णायामपि योषिति ] अनुबद्धम्=अनुसृतं, पार्श्वे=समीपे उपविष्टया=स्थितया अनवरतं=निरन्तरम् यद् रोदनं तेन उच्छूने=उत्स्फीते नयने यस्याः तया, गृहीता=धृता चामरिका=चामरः बालव्यजनमिति यावत् यया तया अपि निश्वसितैः=निजदीर्घनिश्वासैः=एव वीजयन्त्या=वीजनं कुर्वत्या, विविधाः या ओषधयः=औषधानि तासां धूलिभिः=रजोभिः धूसरितः=श्वेतश्यामीभूतं शरीरं यस्याः तया मुहुर्मुहुः=पुनः पुनः 'आर्यपुत्र =नाथ, स्वपिषि= शेरसे इति व्याहरन्त्या=कथयन्त्या देव्या=महिष्या शिरसि=मूर्ध्नि वक्षसि=उरसि स्पृश्यमानं=परामृश्यमानं पितरं अद्राक्षीत्=अपश्यत् ।

प्रथमः यस्य सम्पातः=आघातः तेन मथ्यमाना=आलोड्यमाना मतिः=बुद्धिः मनः इति यावत् यस्य सः इतः पूर्वं तत्र न कदापि एतादृग् दुःखाघातोऽनुभूतः इति भावः भगा एव भागधेयानि [स्वार्थे धेयट्]=भाग्यानि तेभ्यः [ पञ्चमी ] [ 'दैवं दिष्टम् भागधेयं भाग्यं स्त्री नियतिः विधिः' इत्यमरः ] आशङ्कितः=भीतः इव समभवत्=समजायत । अन्तकस्य=यमस्य पुरे वर्तते इति० वर्ती तम् एव पितरम् अमन्यत=अवगतवान् । निराकृतः=व्यक्तः इवेत्युत्प्रेक्षायां अन्तःकरणेन=मनसा क्षणं=क्षणपर्यन्तं आसीत् जड़ीभूतः इवाभवदित्यर्थः । धैर्येण=धृत्या अवधूतः=अपास्तः निराकृतः इति यावत् क्षोभेण=उद्वेगेन क्षेत्रीकृतः=विषयीकृतः रत्या=आनन्देन रिक्तीकृतः= शून्यीकृतः हर्षस्य=हर्षे लवोऽपि नासीदिति भाव, विषादेन=दुःखेन विषयीकृतः=गोचरीकृतः, पावकः= अग्निः एव पावकमयं हृदयं उद्वहन्=बिभ्राणः, विषमं=भीषणं यद् विषं=गरलं तेन दूषितानि= विकृतानि इवेत्युत्प्रेक्षायां मुह्यन्ति=मूर्छन्ति ( शतृ ) इन्द्रियाणि=चक्षुरादीनि बिभ्राणाः=धारयन्, तमसा=अन्धकारेण रसातलं=पातालं अपि विशेषयन्=अतिशयानः शून्यत्वेन=रिक्तत्वेन आकाशम् अपि

हिन्दी–पंखा (हाथ में) लिये हुए होते भी आहों से ही हवा करती हुई, तरह-तरह की औषधियों की रज से शरीर को धूसर बनाए हुए, बार-बार–'नाथ, क्या सो रहे हो ? इस तरह कहती हुई रानी यशोमती द्वारा शिर और छाती पर छुआ जा रहा था ।

और ( पिता को ) को देखकर ( जीवन ) में पहले पहल ही हुए दुःख के आघात से मन में क्षुब्ध होता हुआ भाग्य से डर-जैसा गया । और पिता को यम-पुरी गया हुआ समझ बैठा । क्षणभर के लिए वह मन से शून्य जैसा हो गया । और धैर्य द्वारा त्यागा हुआ, क्षोभ द्वारा ( अपना ) खेत बनाया हुआ, सुख-शान्ति द्वारा रिक्त किया हुआ, विषाद द्वारा ( अपना ) विषय बनाया हुआ, वह अग्निमय जैसा हृदय रखता हुआ, भयङ्कर विष से दूषित हुई जैसी अचेत हो रही इन्द्रियों को धारण करता हुआ, अन्धकार से पाताल का भी अतिक्रमण करता हुआ और सूनेपन से आकाश को भी पछाड़ता हुआ किंकर्तव्य-विमूढ़ हो गया । और उसने हृदय से भय का तथा शिर से भूमि का स्पर्श किया ।

अवनिपतिस्तु दूरादेव दृष्ट्वातिदयितं तनयं तदवस्थोऽपि निर्भरस्नेहार्वाजितः प्रधावमानो मनसा प्रसार्य भुजौ 'एह्येहि' इत्याह्वयञ्शरीरार्धेन शयनादुदगात् । ससंभ्रममुपसृतं चैनं विनयावनम्रमुन्नमय्य बलादुरसि निवेश्य विशन्निव प्रेम्णा निशाकरमण्डलमध्यम्, मज्जन्निवामृतमये महासरसि, स्नापयन्निव महति हरिचन्दनरसप्रस्रवणे, अभिषिच्यमान इव तुषाराद्रिद्रवेण, पीडयन्नङ्गैरङ्गानि, कपोलेन कपोलमवघट्टयन्, निमीलयन्पक्ष्माग्रग्रथिताजस्रास्रविस्राविणी विलोचने विस्मृतज्वरसंज्वरः सुचिरमालिलिङ्ग कथं कथमपि चिराद्विमुक्तमुपसृत्य कृतनमस्कारं प्रणतजननीकमुपागमासीनं च शयनान्तिके पिबन्निव विगतनिमेषनिश्चलेन चक्षुषा व्यलोकयत् । पस्पर्श च पुनः पुनर्वेपथुमता पाणितलेन क्षयक्षामकण्ठश्च कृच्छ्रादिवावादीत्—'वत्स, कृशोऽसि' इति । भण्डिस्त्वकथयत्—'देव, तृतीयमहः कृताहारस्यास्याद्य' इति ।

---

टीका—अतिशयानः = अतिक्रमन् स शून्यमना अभवदित्यर्थः, अत्रार्थापत्तिः, कर्तव्यं = विधेयं न अविन्दत = ज्ञातवान्, कर्तव्याकर्तव्यविवेकशून्योऽभवदिति भावः, हृदयेन = मनसा भियं = भयं उत्तमाङ्गेन = शिरसा च गाम् = पृथिवीं पस्पर्श = स्पृष्टवान् हृदयेन भयाक्रान्तः स पितुरग्रे स्वशिरः प्रणाममुद्रया भूमौ नमितवानिति भावः । अत्र प्रस्तुतयोः हृदयोत्तमाङ्गयोः स्पर्शरूपैकक्रियाभिसम्बन्धात् तुल्ययोगिता । अवनिपतिः = राजा ( प्रभाकरवर्धनः ) दूरात् एव अतिशयेन दयितं = प्रियं तनयं = पुत्रं दृष्ट्वा सा = रुग्णेत्यर्थः अवस्था = दशा यस्य तथा भूतोऽपि निर्भरः = अतिशयितः यः स्नेहः = प्रेम तेन आवर्जितः = आकृष्टः इत्यर्थः मनसा न तु शरीरेण धावमानः = त्वरितं गच्छन् भुजौ = बाहू प्रसार्य = विस्तार्य 'एहि-एहि = आगच्छ, आगच्छ' इति आह्वयन् = आकारयन् शरीरस्य अर्धेन = अर्धभागेन शयनात् = शय्यातः उदगात् = उदगच्छत् । सम्भ्रमेण = त्वरया उपसृतम् = उपागतं च एनं = हर्षवर्द्धनं विनयेन = नम्रभावेन अवनम्रम् = अवनतं बलात् उन्नमय्य = उत्थाप्य उरसि = वक्षसि = निवेश्य निधाय प्रेम्णा = स्नेहेन निशाकरस्य = चन्द्रस्य मण्डलस्य = विम्बस्य मध्यं = अन्तः विशन् = प्रविशन् इवेत्युत्प्रेक्षायां, अमृते एव अमृतमये अमृतात्मके इत्यर्थः महति सरसि = सरोवरे मज्जन् = मग्नो भवन् पुत्रदर्शनेन राजा महानन्दं प्राप्तवानिति भावः, स्नापयन् = स्नानं कारयन् इवेत्युत्प्रेक्षायां आत्मानमिति शेषः महति = विपुले हरिचन्दनस्य = पीतवर्णातिशीतलचन्दनविशेषस्य [ 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियां' इत्यमरः 'हरेरिद्रुमस्य चन्दनं हरि = कपिलं वा, तच्चातिशीतलं पीतमाहुः' इति क्षीरस्वामी ] रसस्य = जलस्य प्रस्रवणे = धारायां तुषाराद्रेः = हिमालयस्य द्रवेण = स्रवेण अभिषिच्यमानः = सिक्तीक्रियमाणः इवेत्युत्प्रेक्षायां, अङ्गैः = अवयवैः स्वकीयैरितिशेषः अङ्गानि पुत्रस्येति शेषः पीडयन् = गाढं स्पृशन्नित्यर्थः कपोलेन स्वकीयेन कपोलं पुत्रस्येति शेषः अवघट्टन् = घृषन्, निमीलयन् = मुकुलयन् पक्ष्मणां = नेत्रलोम्नां अग्रे = प्रान्ते ग्रथितानि = संसक्तानि विस्रावयतः = स्यन्दयतः इति विस्राविणी [ द्वि० नपुं० द्विव० ] विलोचने नयने विस्मृतः = विस्मृर्ति नीतः ज्वरस्य संज्वरः = तापः येन सः सुचिरं = दीर्घकालपर्यन्तं आलिलिंग = आलिंगितवान् कथं कथमपि केनापि प्रकारेण चिरात् विमुक्तम् व्यक्तम् आलिंगनतः = इति शेषः अपसृत्य = अपगम्य कृतः नमस्कारः पितुः कृते इति शेषः येन तम् प्रणता = अभिवादिता जननी = माता येन तम् उपागतं = पितुः समीपे आगतं, आसीनं = उपविष्टं च शयनस्य अन्तिके = समीपे पिबन् = पानविषयीकुर्वन्

हिन्दी–किन्तु राजा दूर से ही अतिप्रिय पुत्र को देखकर वैसी अवस्था में होता हुआ भी अतिशय स्नेह से आकृष्ट हुआ, मन से दौड़ता हुआ दोनों भुजाएँ पसार कर–'आओ आओ, यों पुकारता हुआ शय्या से आधे शरीर से उठ बैठा । जल्दी-जल्दी पास में आये और विनय से झुके हुए उसे जोर से उठाकर छाती पर रख प्रेम से चन्द्रमण्डल के मध्य में प्रवेश करते हुए जैसे, अमृत के महासरोवर में मग्न होते हुए जैसे, हरिचन्दन के बड़े भारी प्रवाह में ( अपने को ) नहलाते हुए जैसे, हिमालय के पिघले हुए जल से सींचे जाते हुए जैसे, ( अपने ) अंगों से ( उसके ) अंगों को दबाते हुए, कपोल से कपोल भिड़ाते हुए बरौनियों की नोकों पर गुथे अविच्छिन्न अश्रु बहाने वाली आँखों को मींचते हुए ज्वर-ताप को भूले हुए राजा ने देर तक छाती से लगा रखा । और किसी तरह ( आलिंगन से ) छोड़े हुए हटकर ( पिता को ) प्रणाम किये, माता को सिर झुकाए और ( फिर पिता के पास ) आये और शय्या के पास बैठे हुए उसे निर्निमेष, स्थिर नयनों से पीता हुआ जैसा राजा देखता रहा । और फिर-फिर काँपते हुए करतल से उसका स्पर्श करता रहा और बल ह्रास के कारण सूखे हुए कण्ठ से कठिनाई के साथ बोला—'बेटा, दुबले हो गये हो' किन्तु भण्डि ने कहा—'महाराज, इन्हें भोजन किये हुए आज तीसरा दिन है' ।

---

१ 'स्नानिव' २ 'उपसृत्य'

तच्छ्रुत्वा बाष्पवेगगृह्यमाणाक्षरं कथं कथमप्यायतं निःश्वस्योवाच—'वत्स, जानामि त्वां पितृप्रियमतिमृदुहृदयम्। ईदृशेषु विधुरयति धीमतोऽपि धियमतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी [1]यतो नार्हस्यतिमात्रमात्मानं शुचे दातुम्। उद्दामदाहज्वरदग्धोऽपि दह्ये खल्वहमधिकरमनेनायुष्मदाधिना। निशितमिव शस्त्रं तक्ष्णोति मां त्वदीयस्तनिमा। सुखं च राज्यं च वंशश्च प्राणाश्च परलोकश्च त्वयि मे स्थिताः। यथा मम तथा सर्वासां प्रजानाम्। त्वद्विधानां पीडाः पीडयन्ति सकलमेव भुवनतलम्। न ह्यल्पपुण्यभाजां वंशमलङ्कुर्वन्ति भवादृशाः। फलमस्यनेकजन्मान्तरोपार्जितस्याकलुषस्य कर्मणः। करतलगमिव कथयन्ति चतुर्णामर्णवानामाधिपत्यं ते लक्षणानि। त्वज्जन्मनैव कृतार्थोऽस्मि। निरभिलाषोऽस्मि जीवितव्ये। भिषगनुरोधः पाय यति मामौषधम्। अपि च

---

टीका—इवेत्युत्प्रेक्षायां विगतः=परिहृतः निमेषः=निमीलनं यस्मात् तथाभूतश्च तद् निश्चलं च तेन चक्षुषा व्यलोकयत्=अपश्यत् पस्पर्श=स्पृष्टवान् च वेपथुः=कम्पः अस्यास्तीति तथोक्तेन पाणितलेन=करतलेन क्षयेण क्षीणतया बलह्रासेनेत्यर्थः क्षाम=शुष्कः कण्ठः यस्य सः कृच्छ्रात्=काठिन्येन इवेति वाक्यालङ्कारे अवादीत्=अवदत्—'कृशः=दुर्बलः असि=वत्से' इति। भण्डिः=हर्षवर्धनस्य मातुल-पुत्रः तु अकथयत्—देव,=महाराज, कृतः आहारः=भोजनं येन तस्य अस्य=हर्षवर्धनस्य अद्य तृतीयम् अहः=दिनम् अस्तीति० शेषः।

तत् श्रुत्वा=आकर्ण्य बाष्पाणाम्=अश्रूणां वेगेन गृह्यमाणानि=अवरुध्यमानानीत्यर्थः अक्षराणि=वर्णाः यस्मिन् कर्मणि यथा स्यात्तथा आयतम्=दीर्घं यथा स्यात्तथा निःश्वस्य उवाच=अकथयत्—पिता प्रियो यस्य तम् अतिशयेन मृदु=कोमलं हृदयं यस्य तथाभूतं त्वां जानामि। ईदृशेषु संकटेषु इति शेषः अतिशयेन दुर्धरः=दुर्वहः, दुःसहः त्यक्तुमशक्य इति यावत् सर्वान् प्रमथ्नाति=अभिभवतीति तथोक्तः बान्धव-स्नेहः=बान्धवविषयकं—प्रेम धीमतः=बुद्धिमतः अपि पुरुषस्य धियं=बुद्धिं विधुरयति=विधुरां करोति आकुलयतीत्यर्थः यतः=यस्मात् कारणात् न अर्हसि=योग्योऽसि अतिमात्रं भृशं यथा स्यात्तथा आत्मानं=स्वं शुचे=शोकाय दातुम् अतिशोको न कर्तव्य इतिभावः। उद्दामः=निर्यन्त्रणः उत्कटः इत्यर्थः यः दाहज्वरः तेन दग्धः=प्लुष्टः अपि अहम् अनेन आयुष्मतः=भवतः आधिना=मनोव्यथया अधिकतरं पूर्वापेक्षया अधिकं दह्ये=दग्धो भवामि। निशितं=तीक्ष्णं शस्त्रम् इवेत्युपमायाम् तव अयम् इति त्वदीयः तनिमा=तनोर्भावः (इमनिच्) कृशत्वं मां तक्ष्णोति=कृन्तति त्वयि स्थिताः=अवलंबिताः। अत्र 'स्थितानि' इतिवक्तुमुचितम्। यदि तु अन्तिमेन पदेन सम्बद्धचेत तर्हि परलोकशब्देन संबन्धे स्थितः 'इत्येव युक्तम्' अतएव क्वचित्पुस्तकेषु परलोकशब्द एव नास्ति 'ततः प्राणाः स्थिताः इति साध्वेव। यथा मम तथा सुख-राज्यादिकं प्रजानाम् अर्थात् आसां सुखादिकमपि त्वयि एवायत्तम्। त्वद्विधानां=त्वादृशानां पीड़ाः=दुःखानि सकलं=समग्रम् एव भूतलं=क्षितितलं पीडयन्ति=दुःखयन्ति। भवान् इव दृश्यन्ते ये भवादृशाः=भवद्विधा-अपुण्यं=पापं भजन्तीति तथोक्तानाम् पापात्मनामित्यर्थः वंशं=कुलं न अलङ्कुर्वन्ति=भूषयन्ति। त्वं फलं=परिणामः असि अन्यानि जन्मानि इति जन्मान्तराणि अनेकानि च तानि जन्मान्तराणि तेषु उपार्जितस्य=सञ्चितस्येत्यर्थः अकलुषस्य=अवदातस्य पुण्यरूपस्येत्यर्थः कर्मणः। ते लक्षणानि=चिह्नानि चतुर्णाम् अपि अर्णवानां=सागराणाम् आधिपत्यं=प्रभुत्वं करतले गतं=स्थितम् इवेत्युत्प्रेक्षायाम् कथयन्ति=प्रतिपादयन्ति। जीवितव्ये=जीवने (भावे तव्य प्रत्ययः) निर्गतः अभिलाषः=इच्छा यस्य सः=इच्छारहितः। भिषजाम्=वैद्यानाम् अनुरोधः=आग्रहः

हिन्दी—यह सुन लम्बी आह भर के अश्रुवेग से रुकते-रुकते अक्षरों के साथ बोला-'बेटा, पिता-प्रेमी और अति मृदु हृदय वाले तुम्हें मैं जानता हूँ ऐसी अवस्था में अति दुःसह और सभी को अभिभूत कर देने वाला राजा किसी न किसी तरह बान्धव स्नेह मतिमान् की भी बुद्धि को अधीर बना दिया करता है। जिसके कारण तुम्हें अपने आपको अत्यन्त शोक में नहीं डाल देना चाहिए। बड़े भारी दाहज्वर से जला हुआ भी मैं तुम्हारी मनोव्यथा से और भी अधिक जल रहा हूँ। तुम्हारी कृशता तेज शस्त्र की तरह मुझे काट रही है। ( मेरा ) सुख, राज्य, कुल, प्राण और परलोक ( सब ) तुम पर ही अवलम्बित हैं। जैसे मेरे वैसे प्रजा के भी ( समझो )। तुम जैसों की पीड़ायें सारे ही भुवनतल को पीड़ित कर देती हैं। आप जैसे ( पुत्र ) पापियों के कुल को नहीं अलंकृत करते। तुम अनेक जन्मों में अर्जित पुण्य-कर्म के फल हो। तुम्हारे लक्षण चारों समुद्रों का आधिपत्य हाथ में आया हुआ—जैसा कह रहे हैं। तुम्हारे जन्म से मैं कृतार्थ हो गया हूँ। जीने की मेरी इच्छा नहीं रही। वैद्यों का आग्रह मुझे दवा पिला रहा है। अपि च माता-

---

1. अतो

सर्वप्रजापुण्यैः सकलभुवनतलपरिपालनार्थम् उत्पत्स्यमानानां भवादृशां जन्मग्रहणोपायः पितरौ। प्रजाभिस्तु बन्धुमन्तो राजानः, न ज्ञातिभिः। तदुत्तिष्ठ। कुरु पुनरेव सर्वाः क्रियाः। कृताहारे च त्वय्यहमपि स्वयम् उपयोक्ष्ये पथ्यम्' इत्येवमभिहितस्य चास्य धक्ष्यन्निव हृदयमतितरां शोकानलः सन्दुधुक्षे। क्षणमात्रं च स्थित्वा पित्रा पुनराहारार्थमादिश्यमानो धवलगृहादवततार। चकार च चेतसि—'अकाण्डे खल्वयं सम् उपस्थितो महाप्रलयो ऽनभ्र इव वज्रपातः। सामान्योऽपि तावच्छोकः सोच्छ्वासं मरणम्, अनुपदिष्टौषधो महाव्याधिः, अभस्मीकरणोऽग्निप्रवेशः, अनुपरतस्यैव नरकवासः, निर्ज्योतिरङ्गारवर्षम्, अशकलीकरणं क्रकचदारणम्, अव्रणो वज्रसूचीपातः। किम् उत विशेषाश्रितः। किमत्र करवाणि' इति।

---

टीका–टीकामाम् औषधिम् पाययति = पातुं प्रेरयति। सर्वासां प्रजानां पुण्यैः = सुकृतैः सकलस्य भुवनतलस्य परिपालनाय = परितो रक्षणाय उत्पत्स्यमानानाम् = जनिष्यमाणानां उत्पत्तुमिच्छतामित्यर्थः जन्मनः ग्रहणस्य = धारणस्य उपायः = साधनम् पितरौ = माता च पिता च (एकशेष०) प्रजाभिः = लोकैः बन्धुमन्तः = बान्धववन्तः राजानः न ज्ञातिभिः = सगोत्रैः सजातीयैरित्यर्थः अर्थात् प्रजाः हि राज्ञः बन्धवः न तु स्वजातीयाः, कालिदासोऽपि शाकुन्तले एवमाह—'येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना। स स पापादृते तासां दुष्यन्त इति घुष्यताम्'॥ (अंक ७) कृतः आहारः = भोजनं येन तथाभूते त्वयि उपयोक्ष्ये = सेविष्ये पथ्यम् = रोगे हितकारकमन्नमित्यर्थः इति एवं अभिहितस्य = कथितस्य अस्य = हर्षवर्धनस्य हृदयं धक्ष्यन् = दग्धुमिच्छन्नित्यर्थः (भविष्यति शतृ) अतितराम् = भृशम् यथा स्यात्तथा शोक एव अनलः = अग्निः सन्दुधुक्षे = (सम + √धुक्ष् + लिट्) प्रजज्वाल। आहारार्थं = भोजनार्थं आदिश्यमानः = आज्ञाप्यमानः अवततार = अवातरत्। अकाण्डे = असमये अकस्मात् इति यावत् महान् प्रलयः = विनाशः विगतम् अभ्रम् = मेघरहितः इति यावत् वज्रस्य अशनेः पातः = पतनम् इवेत्युपमायाम्। सामान्यः = साधारणः अल्पः इत्यर्थः अपि शोकः उच्छ्वासेन = श्वासोच्छ्वासाभ्यां सहितं मरणं = मृत्युः, मृत्यौ हि श्वासोच्छ्वासौ न भवतः परन्तु सामान्यशोकः ईदृशो मृत्युः यत्र श्वासोच्छ्वासौ भवतः अस्य किमुत विशेषाश्रितः शोकः इत्यनेनान्वयः न उपदिष्टं = निर्दिष्टं औषधं यस्य तथाभूतः महान् व्याधिः = रोगः औषधासाध्यरोगः इत्यर्थः न भस्मीकरणं यस्मिन् तथा भूतः अग्नौ प्रवेशः, न उपरतः = मृतः तस्यैव जीवितस्यैवेत्यर्थः नरके वासः, मनुष्यो हि मरणानन्तरं नरके वसति किन्तु शोकः मरणं बिनाऽपि नारकीं यातनां ददातीति भावः, निर्गतं ज्योतिः = दीप्तिः यस्मात् तथाभूतम् अङ्गाराणां वर्षणं = वृष्टिः, न शकलीकरणं = खण्डीकरणं यस्मिन् तथाभूतं क्रकचेन = करपत्रेण दारणं = विपाटनम् क्रकच—दारणेन मनुष्यः खण्डशः क्रियते, किन्तु शोके दारणं तु भवति, परं स न खण्ड-खण्डी भवति, न व्रणं = क्षतं यस्मिन् तथाभूतः वज्रस्य = हीरकस्य सूच्या = शलाकया सूई इति भाषायां प्रसिद्धायाः पातः = पतनम् प्रवेशः इति यावत् किमुत = किमु वक्तव्यं विशेषम् आश्रितः शोकः पितृवियोगजनितः इति यावत्, अत्रोपरि सर्वत्र मरणाद्यपेक्षया आधिक्यप्रदर्शनात् व्यतिरेकालङ्कारः तदुत्थापिता च अर्थापत्तिः।

हिन्दी–पिता तो सारी प्रजा के पुण्यों से सकल भुवन-तल की रक्षा के लिए जन्म ग्रहण करने के निमित्त हुआ करते हैं। राजे प्रजाओं से बन्धुमान् हुआ करते हैं, अपने सजातीयों से नहीं, इसलिए उठो! फिर सभी काम-धन्धे करो। तुम्हारे भोजन कर लेने पर मैं भी स्वयं पथ्य लूंगा'। इस तरह कहे जाते हुए उसके हृदय को फूंक डालना चाहती हुई—जैसी शोकाग्नि खूब भड़क उठी। थोड़ी देर ठहर कर पिता द्वारा भोजन करने के लिए फिर आज्ञा दिया जाता हुआ वह धवलगृह से उतरा। और मन में सोचने लगा 'विना मेघों के वज्रपात की तरह सचमुच यह महा विनाश अकस्मात् ही आ पड़ा है। पहले तो साधारण शोक ही ऐसी मृत्यु है जिसमें सांस चलती रहती है, ऐसी महाव्याधि है, जिसकी दवा नहीं बतलाई गई है, ऐसा अग्निप्रवेश है जिसमें (मनुष्य) राख नहीं बनता वह विना मरे ही नरक वास है, विना प्रकाश के अंगारों की वर्षा है, विना टुकड़े टुकड़े हुए आरी से चीरा जाना है और विना घाव किये वज्र की सूई का घुंसना है, फिर विशेष शोक की तो बात ही क्या। अब क्या करूं?"

राजपुरुषेणाधिष्ठितश्च गत्वा स्वधाम धूममयानिव कृताश्रुपातान्, अग्निमयानिव जनितहृदयदाहान् विषमयानिव दत्तमूर्छावेगान् महापातकमयानिवोत्पादितघृणान्, क्षारमयानिवानीतवेदनान्, कतिचित्कवलानगृह्णत्। आचामंश्च चामरग्राहिणमादिदेश—'विज्ञायागच्छ कथमास्ते तातः' इति। गत्वा च प्रतिनिवृत्य च 'देव तथैव' इति विज्ञापितस्तेनागृहीतताम्बूल एवोत्ताम्यता मनसास्ताभिलाषिणि सवितरि सर्वानाहूयोपह्वरे वैद्याः किमस्मिन्नेवंविधे विधेयमधुनेति विषण्णहृदयः पप्रच्छ। ते तु व्यज्ञापयन्—'देव, धैर्यमवलम्बस्व। कतिपयैरेव वासरैः पुनः स्वां प्रकृतिमापन्नं श्रोष्यसि पितरम्' इति।

तेषां तु भिषजां मध्ये पौनर्वसवो युवाष्टादशवर्षदेशीयस्तस्मिन्नेव राजकुले कुलक्रमागतो गतः पारमष्टाङ्ग-

---

टीका—राजपुरुषेण = केनापि अधिकारिणा अधिष्ठितः = अनुगतः प्रतिरक्षितः इत्यर्थः स्व धाम = गृहं धूमः एव धूममयः तान् धूमरूपान् इवेत्युत्प्रेक्षायाम् कृतः = जनितः अश्रुपातः = बाष्पपातः = यैः तान् कवलान् गृह्णन् स रोदिति स्मेति भावः एवमन्यत्रापि बोध्यम्, एतानि द्वितीयान्तानि कवलान् इत्यस्य विशेषणानि, अग्निमयान् = अग्निरूपान् इवेत्युत्प्रेक्षायां दत्तः मूर्छायाः = मोहस्य वेगः यैः तान्, विषमपि मूर्छां जनयति, महापातकानि = महापापानि एव महापातकमयान् इवेत्युत्प्रेक्षायाम् उत्पादिता = जनिता घृणा = जुगुप्सा यैस्तान्, महापातकानि पञ्च भवन्ति यथाह मनुः—ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमम्। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह (२।६४) यथा लोके महापातकानि स्वविषये जनानां हृदि घृणामुत्पादयन्ति तथैव कवलेषु हर्षवर्धनस्यापि घृणा जातेति भावः क्षारः = सर्जिः तद्रूपान् इवेत्युत्प्रेक्षायाम् आनीता = उत्पादितेत्यर्थः वेदना = पीड़ा यैः तान् सर्जिभक्षणेनापि वेदना भवति, कतिचित् = कांश्चत् कवलान् = ग्रासान् अगृह्णात् = गृहीतवान्। आचामन् = आचमनं कुर्वन् चामरग्राहिणं = चामरधारिणं पुरुषम् आदिदेश = आज्ञापितवान्—विज्ञाय = ज्ञात्वा कथम् आस्ते = अस्ति तातः = पिता आगच्छ! प्रतिनिवृत्य = प्रत्यागम्य विज्ञापितः = बोधितः तेन न गृहीतं ताम्बूलं येन तथाभूत एव उत्ताम्यता = अधीरीभवता मनसा = हृदयेन अस्तम् = अस्तमयम् अभिलषति = इच्छतीति तथोक्ते सवितरि = अस्तोन्मुखे सूर्ये इत्यर्थः सर्वान् वैद्यानिति शेषः आहूय उपह्वरे = एकान्ते—वैद्याः! एवंविधे = ईदृशे व्यतिकरे इति शेषः किं विधेयं कार्यम् इति विषण्णं दुःखाकुलं हृदयं यस्य स पप्रच्छ = पृष्टवान्। ते व्यज्ञापयन् = निवेदितवन्तः = धैर्यम् अवलम्बस्व = धारय कतिपयैः = कतिभिः वासरैः = दिवसैः स्वां प्रकृतिं = स्वभावम् आपन्नं = प्राप्तं श्रोष्यसि = श्रवणविषयीकरिष्यसि अर्थात् प्रकृतिस्थः नरेण इति यावत् भविष्यति, एषोऽर्थ आपाततः एव, वस्तुतः वैद्यैः इदं सत्यं श्लेषद्वारा प्रकटितम् यत् प्रकृतिं = पञ्चतत्वं = पञ्चभूतात्मकत्वं मरणमिति यावत् आपन्नम् स्वस्थं (स्वर्गतम्) मृतो हि जीवः पञ्चमहाभूतात्मप्रकृतौ लीयते इति शास्त्रेषु प्रतिपादितम्, कालिदासेनाप्युक्तम्—'मरणं प्रकृतिः शरीरिणां विकृतिर्जीवनमुच्यते बुधैः' [रघु० ८।८७]।

टिप्पणी—पौनर्वसवः—चरकसंहिता के अनुसार इन्द्र ने भरद्वाज को आयुर्वेद पढ़ाया, भरद्वाज ने कितने ही ऋषियों को पढ़ाया जिनमें एक पुनर्वसु भी है। पुनर्वसु ने अग्निवेश और पांच अन्य शिष्यों को इसकी शिक्षा दी जिनमें से प्रत्येक ने अपने-अपने पृथक् गन्थ रचे। चरक ने अग्निवेष की रचना का ही प्रति संस्कार किया है। अष्टाङ्ग—सुश्रुत के अनुसार आयुर्वेद के आठ अंग ये हैं—शल्य, शालाक्य, कायचिकित्सा, भूतविद्या, कौमारभृत्य, अगदतन्त्र, रसायनतन्त्र और वाजीकरण तन्त्र। विस्तार के लिए सुश्रुत का सूत्रस्थान देखिए।

हिन्दी—राज-पुरुष द्वारा संरक्षित उसने अपने गृह में जाकर भोजन के कुछ ग्रास लिये, जो धूममय हुए जैसे (उसको) अश्रु गिराए हुए थे, अग्निमय हुए—जैसे (उसके) हृदय में ताप उत्पन्न किये हुए थे, विषमय हुए—जैसे (उसे) मूर्छा का वेग दिए हुए थे, महापापमय हुए—जैसे (उसमें) घृणा पैदा किये हुए थे, एवं सज्जीखार बने हुए—जैसे (उसमें) वेदना लाये हुए थे। और आचमन करते हुए उसने चामरग्राही को आज्ञा दी—'पिताजी कैसे हैं यह पता लेकर आ जा।' जाकर और लौटकर—'देव, वैसे ही हैं', यों सूचित किया जाता हुआ बिना पान लिये हुए ही घबराये हुए मन से, सूर्य के अस्त होने को तय्यार हुए बैठे, सभी (वैद्यों) को बुलाकर एकान्त में—(वैद्यो!) ऐसी हालत में अब क्या करना चाहिए?' इस तरह खिन्न हृदय से पूछ बैठा। उन्होंने निवेदन किया—'देव, धैर्य धरिए, कुछ ही दिनों में आप पिता को अपनी प्रकृति को प्राप्त हुआ (व्यंग्यार्थ—मरा हुआ) सुनेंगे।'

किन्तु उन वैद्यों में से ही पुनर्वसु मुनि द्वारा प्रोक्त आयुर्वेद पढ़ा हुआ, लगभग अठारह वर्ष का, उसी राजकुल

स्यायुर्वेदस्य भूभुजा सुतनिर्विशेषं लालितः प्रकृत्यैवातिपटीयस्या प्रज्ञया यथावद्विज्ञाता व्याधिस्वरूपाणां रसायनो नाम वैद्यकुमारकः सास्रस्तूष्णीमधोमुखोऽभूत्। पृष्टश्च राजसूनुना—'सखे रसायन, कथय तथ्यं यद्यसाध्विव पश्यसि' इति। सोऽब्रवीत्—'देव, श्वः प्रभाते यथावस्थितमावेदयितास्मि' इति।

अत्रैव चान्तरे भवनकमलिनीपालः कोकमाश्वासयन्नपरवक्त्रमुच्चैरपठत्—

'विहग कुरु दृढं मनः स्वयं त्यज शुचमास्स्व विवेकवर्त्मनि।
सह कमलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः॥ ४॥'

---

टीका–तेषां च भिषजां=वैद्यानां पौनर्वसवः=पुनर्वसुना मुनिना प्रोक्तम् आयुर्वेदम् अधीते वेद वा इति [पुनर्वसु + अण् 'तदधीते तद्वेद' पा० ४।२।५२] युवा=युवकः अष्टादशवर्षदेशीयः ईषदूनः अष्टादशवर्षेभ्यः इति [अष्टादश + देशीयः 'ईषदसमाप्तौ कल्पप्–देश्य–देशीयरः'] पा० [५।३।६] प्रायः अष्टादशवर्षवयोऽवस्थः कुलक्रमात्=वंशपरम्परया आगतः=प्रातः अष्टाङ्गस्य—अष्टौ अङ्गानि=भागाः इत्यर्थः यस्य तस्य आयुर्वेदस्य='आयुरस्मिन् विद्यते अनेन' वा आयुर्विन्दति' इत्यायुर्वेदः वैद्यशास्त्रमित्यर्थः तस्य पारं=अन्तं गतः=प्राप्तः भूभुजा=राज्ञा प्रभाकरवर्धनेन सुतात्=पुत्रात् निर्गतः विशेषः यस्मिन् कर्मणि यथा स्यात्तथा पुत्रवत् लालितः=पालितः प्रकृत्या=स्वभावतः एव अतिशयेन पट्वी इति पटीयसी [ईयसुन]। तया प्रज्ञया=बुद्धया व्याधीनां=रोगाणां स्वरूपाणां=प्रकृतीनां यथावत्=याथार्थ्येन विज्ञाता=वेत्ता रसायनो नामेत्यव्ययम् वैद्यकुमारकः=तरुणवैद्यः अस्रैः=अश्रुभिः सहितः तूष्णीम् (अव्य०)=मौनमालम्ब्य अधः=नीचैः मुखं यस्य सः अभूत्=अभवत्। राजसूनुना=राजपुत्रेण हर्षवर्धनेन पृष्टः—सखे=मित्र, तथ्यं=सत्यं यदि असाधुः=अशुभम् पितुः सम्बन्धे इति शेषः। अब्रवीत्=अवदत्—श्वः=आगामि दिवसे प्रभाते=प्रातःकाले अवस्थितम्=(भावे क्तः) अवस्थितिम् अनतिक्रम्य आवेदयितास्मि=सूचयिष्यामि अर्थात् वास्तवीं स्थितिं कथयिष्यामि।

अन्तरे=मध्ये भवनस्य=प्रासादस्य कमलिनीः=पद्मिनीः कमलवनमित्यर्थः पालयति=रक्षतीति तथोक्तः कोकम्=चक्रवाकम् [ 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः' इत्यमरः ] अत्रेदं ध्येयं यत् हर्षवर्धनेन सायंकाले वैद्या आहूताः आसन् सायञ्च चक्रवाक-पक्षिणः वियुज्यन्ते, आश्वासयन्=सान्त्वयन् अपरवक्त्रम्=एतन्नामक-छन्दोविशेषम् उच्चैः=तारस्वरेण अपठत्। विहगेति०—हे विहग=पक्षिन् चक्रवाक इत्यर्थः त्वं स्वयं मनः=चित्तं दृढं=धैर्ययुक्तमित्यर्थः कुरु, शुचम्=शोकम् त्यज=मुञ्च, विवेकस्य=बोधस्य वर्त्मनि=आस्स्व तिष्ठ, विरोचनः=सूर्यः ['सूरसूर्यार्यमादित्यः चित्रभानुर्विरोचनः' इत्यमरः ] कमलैः पूर्णा या सरोजिनी=पद्मिनी (मध्यपदलोपी स०) पद्मवनं पद्मसरोवरः इति यावत् ['पुष्करादिभ्यो देशे' ( पा० ५।२।१३५ ) पुष्करिणी पद्मिनी सि० कौ०] अत्र सरोजिनीपदेन च गतार्थत्वात् कमलपदमधिकम्, तस्याः श्रिया=कान्त्या सह सुमेरोः=मेरुपर्वतस्य ['मेरुः सुमेरुर्हेमाद्रिः' इत्यमरः] शिरः=शृङ्गं श्रयति=आश्रयति अस्तंगच्छतीत्यर्थः, ज्योतिर्विद्यानुसारेण सूर्यादिग्रहाः मेरुपर्वतं परितः परिभ्रमन्ति, यथोक्तम्—'सप्तद्वीपा वसुमती यस्याः सुमेरुर्मध्ये पर्वतराजः·······तस्य सूर्यप्रचाराद्रात्रिन्दिवं लग्नमिव वर्तते' [योगसूत्रेव्यासभाष्यम्] अस्य श्लोकस्य व्यञ्जनया अन्योऽप्यर्थः बोध्यते—विरोचनः=प्रतापी [राजा प्रभाकरवर्धनः] कमलसरोजिनीश्रिया=कमलवरसौन्दर्यवत्या यशोमत्या सह सुमेरुं=स्वर्गं गच्छति, अतः हे विहग

हिन्दी—में वंश-परम्परा से चला आ रहा, अष्टांग आयुर्वेद में पारंगत, राजा द्वारा पुत्र के समान पाला-पोसा, स्वभावतः अत्यन्त निपुण प्रज्ञा से व्याधियों के स्वरूपों का यथार्थ विज्ञाता रसायन नामक युवा वैद्य आँसू बहाये नीचे मुँह किये हुए था। 'मित्र रसायन सच सच कह दो यदि तुम बुरी सी बात देखते हो' इस तरह राजपुत्र ने उसे पूछा, तो वह बोला—'देव, जैसी इनकी स्थिति है, मैं कल प्रातःकाल निवेदन करूँगा।'

इसी बीच महल के कमल वन का संरक्षक चक्रवाक को सान्त्वना देता हुआ ऊँचे स्वर में अपरवक्त्र पढ़ बैठा—

चक्रवाक ! तूं मन दृढ़ कर ले अपना,
शोक त्याग हो जाय विवेक-पथ आरूढ़।
कमलवन श्री के साथ विरोचन यह,
हो रहा सुमेरु पर्वत पर आरूढ़॥ ४॥

**तच्चाकर्ण्य, वाङ्निमित्तज्ञः पितरि सुतरां जीविताशां शिथिलीचकार। गतेषु च भिषक्षु क्षतधृतिः क्षपामुखे क्षितिपालसमीपमेव पुनरारुरोह। तत्र च—'दाहो महान्। आहर हारान्हरिणि, मणिदर्पणान्मे देहे देहि वैदेहि, हिमलवैर्लिम्प ललाटं लीलावति, घनसारक्षोदधूलीर्निधेहि धवलाक्षि, निक्षिप चक्षुषि चन्द्रकान्तं कान्तिमति, कपोले कलय कुवलयं कलावति, चन्दनचर्चां रचय चारुमति, पाटय पटमारुतं पाटलिके, मन्दय दाहमिन्दुमति अरविन्दैः, जनय जलार्द्रया मुदं मदिरावति, समुपनय मृणालानि मालति, तरलय तालवृन्तमावन्तिके, मूर्धानं बधान बन्धुमति, कन्धरां धारय धारणिके, उरसि सशीकरं करं कुरु कुरङ्गवति, संवाहय बाहू बलाहिके, पीडय पादौ पद्मावति, गृहाण गात्रमनङ्गसेने, का वेला विलासवति नैति निद्रा, कथाः कथय कुमुद्वति, इत्येवप्रायान्पितुरालापाननवरतमाकर्णयन्दूयमानहृदयो दुःखदीर्घां जाग्रदेव निशामनैषीत्।**

---

टीका—हर्षवर्धन! धैर्यं धर, शोकं त्यज, विवेकमाश्रयेति। सायंकाले चक्रवाकाः नियतेः अनुसारेण वियुज्यन्ते, एष शाश्वतिको नियमः, जीवोऽपि जायते म्रियते च इत्यपि विधेर्विधानम् यथोक्तम् गीतायाम्—'जातस्य हि ध्रुवो मृत्युः' इति। अत्र चक्रवाकीतः चक्रवाकस्य वियोगः अथ च माता-पितृभ्यां हर्षवर्धनस्य वियोगः इत्युभयं प्रस्तुतम् अतः प्रस्तुतात् प्रस्तुतस्य व्यज्यमानत्वेन कुवलयानन्दानुसारेण प्रस्तुताकुङ्रालङ्कारः अन्येषां मतानुसारेण तु अप्रस्तुतप्रशंसैव। अपरवक्त्रम् अर्धसमं वृत्तं प्रथम-तृतीयपादयोः एकादशवर्णाः [न, न, र, ल, ग] द्वितीय-चतुर्थयोश्च द्वादशवर्णाः [न, ज, ज, ल, ग] भवन्ति, यथोक्तम् —अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ॥

आकर्ण्य=श्रुत्वा वाचः=वाण्याः निमित्तं=शुभाशुभलक्षणं जानातीति तथोक्तः पितरि=पितृविषये सुतराम्=सम्यक्तया जीवितस्य=[भावे क्तः] जीवनस्य आशां शिथिलीचकार=मन्दीकृतवान्। भिषक्षु=वैद्येषु गतेषु=यातेषु क्षता=विनष्टा धृतिः=धैर्यं यस्य सः, क्षपायाः=निशायाः मुखे=प्रारम्भे क्षितिपालस्य=राज्ञः पितुरित्यर्थः समीपं=निकटं एव आरुरोह=धवलगृहे आरूढवानित्यर्थः। तत्र च दाहो महान्..........आकर्णयन् जाग्रदेव निशामनैषीदित्यन्वयः। हे हरिणि=एतन्नामकपरिचारिकायाः सम्बोधनमिदम् हारान्=मौक्तिकस्रजः आहर=आनय मदुपरि शैत्यार्थं स्थापयेत्यर्थः। वैदेहि मे=मम देहे=शरीरे मणिदर्पणान्=मणिखचितमुकुरान् देहि=निधेहीत्यर्थः, लीलावति! हिमस्य=तुषारस्य लवैः=कणैः ललाटं=भालं लिप=लिप्तं कुरु, धवलाक्षि! घनसारस्य=कर्पूरस्य यः क्षोदः=चूर्णं तस्य धूलीः=रजांसि निधेहि=स्थापय, कान्तिमति! चक्षुषि=नयने चन्द्रकान्तं=चन्द्रकान्तमणिं निक्षिप=न्यस्य, कलावति! कपोले=गण्डस्थले कुवलयं=नीलकमलं कलय=धर, चारुमति! चन्दनस्य चर्चां=लेपं रचय=कुरु, पाटलिके! पटेन मारुतं=पवनं पाटय पटुं कुरु इति शङ्करः अर्थात् तीव्रं कुरु, अथवा पाटय=भिन्दि रुद्धं वायुं पटेन भिन्दि पटचालनेन पवनं कुरु इत्यर्थः, इन्दुमति! अरविन्दैः=कमलैः दाहं=तापं मन्दय=मन्दीकुरु, मदिरावति! जलार्द्रया=क्लिन्नवसनेन ['जलार्द्रा क्लिन्नवाससि' इत्यभिधानचिन्तामणिः] मुदं=सुखं दाहोपशममित्यर्थः जनय=कुरु, मालति! मृणालानि=बिसानि समुपनय=समुपाहर, अवन्तिके! तालवृन्तं=व्यजनं तरलय=तरलीकुरु, सञ्चालयेत्यर्थः. बन्धुमति! धावमानं=प्रद्रवन्तं घूर्णन्तमित्यर्थः मूर्धानं=शिरः बधान=वस्त्रबद्धं कुरु, धारणिके! कन्धरां=ग्रीवां धारय=कलय, कुरङ्गवति! उरसि=वक्षसि शीकरैः=जलबिन्दुभिः सहितं

हिन्दी—यह सुनकर वाणी के (शुभाशुभ) लक्षणों का ज्ञाता वह पिता के जीवन के सम्बन्ध में आशा खो बैठा। वैद्यों के चले जाने पर धैर्य खोये हुए वह सायंकाल राजा के पास ही फिर (धवलगृह में) आ चढ़ा। और वहाँ उसने पिता के—'बड़ा भारी दाह है। हरिणी! मोती के हार ला', 'वैदेही! (मेरे) देह पर मणिजड़ित दर्पण रख', 'लीलावती! ललाट को वर्फ के कणों से लिप', 'धवलाक्षि! कपूर के चूर्ण की रज रख', 'कान्तिमति! आँख पर चन्द्रकान्त मणि धर', 'कलावती! कपोल पर कुवलय रख,' 'चारुमती! चन्दन का लेप कर', 'पाटलिका! कपड़े से हवा कर', 'इन्दुमती, कमलों से जलन को कम कर', 'मदिरावती, जल से गीले किये वस्त्र से शांति दे', 'मालती! मृणाल ला', 'अवन्तिका! पंखा हिला', 'बन्धुमती! दौड़े जा रहे सिर को बाँध', 'धरणिका! गर्दन थाम', 'कुरंगवती! जलबिन्दुओं से गीला हाथ छाती पर रख', 'बलाहिका, बाजुओं को दबा', 'पद्मावती! पैर दबा', 'अनंगसेना! (अंगों को) जोर से पकड़', 'विलासवती! क्या समय है', नींद नहीं आ रही है,' 'कुमुद्वती! कहानियाँ कह', प्रायः इस तरह पिता की बड़बड़ाहट सुनते हृदय में दुःखी हुए जागते-जागते ही दुःख में लम्बी हुई रात काटी।

उषसि चावतीर्य राजद्वारदेशोपसर्पिणा परिवर्धकेनोपस्थापितेऽपि तुरङ्गे चरणाभ्यामेवाजगाम स्वमन्दिरम् । तत्र च त्वरमाणो भ्रातुरागमनार्थम् पर्युपरि क्षिप्रपातिनो दीर्घाध्वगान्प्रजविनश्चोष्ट्रपालान्प्राहिणोत् । प्रक्षालितवदनश्च परिजनोपनीतमपि प्रतिकर्म नाग्रहीत् । अग्रतः स्थितानां राजपुत्रयूनां विमनसां 'रसायनो रसायनः' इति जल्पित-मव्यक्तमश्रौषीत् । पर्यपृच्छच्च तान्—'भद्राः, कथयत किं रसायनः' इति । पृष्टाश्च ते सर्वे सममेव तूष्णींबभूवुः । भूयो-भूयश्चानुबध्यमाना दुःखेन कथंकथमप्याचचक्षिरे—'देव, पावकं प्रविष्टः' इति । तच्च श्रुत्वा प्लुष्ट इवान्तस्तापेन सद्यो विवर्णतामगात् । उत्पाट्यमानमिव च न शशाक शोकान्धं धारयितुं हृदयम् । आसीच्चास्य चेतसि 'कामं स्वयं न भवति न तु श्रावयत्यप्रियं वचनमरतिकरमितर इवाभिजातो जनः । कृच्छ्रे च यथानेनानुष्ठितमुज्ज्वलीकृत-मधिकतरं ज्वलनप्रवेशेन कल्याणप्रकृति कार्तस्वरमिव कौलपुत्रमस्य' इति । पुनश्चाचिन्तयत्—'समुचितमेवाथवा

---

टीका—करं=हस्तं कुरु=निधेहीत्यर्थः वलाहिके ! बाहू=भुजौ संवाहय=पीडय, पत्रावति ! पादौ=चरणौ पीडय = मर्दय अनङ्गसेने ! गाढं=दृढं यथा स्यात्तथा अङ्गं हस्तादिकं गृहाण=आपीडयेत्यर्थः वेला=समयः, निद्रा न एति=आगच्छति, इति एवं प्रायान्=एतद्बहुलान् आलापान्=प्रलापान् अनवरतं=निरन्तरं यथा स्यात्तथा आकर्णयन्=शृण्वन् दूयमानं=खिद्यमानं हृदयं यस्य सः दुःखेन दीर्घाम्=आयताम् निशां=रात्रिम् जाग्रत्=निद्रां न लभमान एव अनैषीत्=यापितवान् ।

उषसि=प्रातःकाले अवतीर्य=धवलगृहात् नीचैः आगत्येत्यर्थः राजद्वारस्य देशं=स्थानं उपसर्पति=उपगच्छतीति तथोक्तेन राजद्वारस्य समीपे आगतेनेत्यर्थः परिवर्धकेन=एतन्नामकेन अश्वपालेन उपस्थापिते=आनीते अपि तुरङ्गे=अश्वे स्वमन्दिरं स्वगृहम् त्वरमाणः=त्वरां कुर्वन् भ्रातुः=राज्यवर्धनस्य (यः हूणान् हन्तुम् उत्तरापथे गतः आसीत्) आगमनार्थम् उपरि उपरि एकस्यानन्तरम् अपरिमितकृत्वा क्षिप्रं=त्वरितं पतन्ति=गच्छन्तीति तथोक्तान् शीघ्रगामिनः इत्यर्थः दीर्घम् अध्वानं=मार्गं गच्छन्तीति तथोक्तान् प्रजविनः=प्रकृष्टजवः वेगः येषान्तान् उष्ट्रपालान्=उष्ट्ररक्षकान् उष्ट्रारोहिदूतानित्यर्थः प्राहिणोत्=प्रेषितवान् । प्रक्षालितं=धौतं वदनं=मुखं येन सः, परिजनेन=भृत्यवर्गेण उपनीतम्=आनीतम् अपि प्रतिकर्म=प्रसाधनम् शारीरिकसज्जासामग्रीमित्यर्थः [ 'प्रतिकर्म प्रसाधनम्' इत्यमरः ] राजपुत्राश्च ते युवानश्च, तेषां तरुणराजपुत्राणामित्यर्थः विमनसाम् विगतं मनः येषां तेषां किंकर्तव्यविमूढानामित्यर्थः जल्पितम्=( भावे क्तः ) वचनम् अव्यक्तम्=अस्पष्टं अश्रौषीत्=श्रुतवान् । पर्यपृच्छत्=परिपृष्टवान् च । समम् एव=युगपत् एव तूष्णीं बभूवुः=मौनम् आकलयामासुः भूयो भूयः=अनुरुध्यमानाः आचचक्षिरे=आख्यातवन्तः, पावकं=वह्निं प्रविष्टः अर्थात् रसायनो नाम वैद्यकुमारः अग्निप्रवेशं कृतवान् । अन्तः=हृदये तापेन=संतापेन प्लुष्टः=दग्धः इवेत्युत्प्रेक्षायाम् सद्यः=तत्कालमेव विवर्णताम्=विगतः वर्णः=मुखस्य रंगः यस्य तस्य भावः तत्ता ताम् अगात्=आगच्छत् मलिनमुखोऽभवदित्यर्थः । उत्पाट्यमानम्=उन्मूल्यमानम् इवेत्युत्प्रेक्षायां शोकेन अन्धम्=आकुल-मित्यर्थः हृदयं धारयितुम्=उद्वोढुम् न शशाक=नाशक्नोत् । कामम्=( अव्य० ) अनिच्छानुमतौ ('अकामानुमतौ कामम्' इत्यमरः ) स्वयं न भवति=नश्यति म्रियते इत्यर्थः, तु=किन्तु न श्रावयति=श्रोतुं न ददाति अप्रियम्=अशुभमित्यर्थः अरतिकरं=रतिः सुखं तत्करोतीति न रतिकरम् इत्यरतिकरम्=दुःखकरमित्यर्थः वचनम् इतरः=नीचपुरुषः

हिन्दी—तड़के सुबह नीचे उतरकर द्वारदेश पर पहुँचे परिवर्धक द्वारा घोड़े के लाये जाने पर भी पैदल ही अपने महल में चला गया । और वहाँ शीघ्रता करते हुए उसने भाई ( राज्यवर्धन ) के आने के लिए एक के बाद एक तेज दौड़ने, और लंबा मार्ग पार करने वाले अतिवेगगामी उष्ट्रारोही पुरुष भेजे । मुँह धोये हुए उसने नौकरों द्वारा लाया हुआ शृंगार-साधन नहीं ग्रहण किया । आगे खड़े हक्केबक्के हुए राजपुत्र युवकों का 'रसायन, रसायन' यह अस्पष्ट शब्द वह सुन बैठा । उसने उन्हें पूछा—'भले लोगो ! कहो रसायन क्या ? पूछे गए वे सब के सब चुप हो गए और बार-बार जब उनसे अनुरोध किया गया, तब दुःख के साथ किसी न किसी तरह बोल ही बैठे—देव, (रसायन) अग्नि में प्रवेश कर गया । यह सुनकर हृदय में ताप से जला हुआ—जैसा वह तत्काल मलिनमुख हो गया । जड़-मूल से उखाड़े हुए—जैसे शोकाकुल हृदय को धारण न कर सका । और उसके मन में आया—'कुलीन जन भले ही स्वयं समाप्त हो जाय, किन्तु नीच पुरुष की तरह वह अप्रिय और दुःखदायक बात नहीं सुनाता संकट में जिस तरह उसने किया उससे उसने अग्निप्रवेश से अपनी भद्रप्रकृति वाली कुलपुत्रता को और भी अधिक उज्ज्वल बना दिया है । जैसे—भद्र प्रकृति वाला सोना किया करता है ।

स्नेहस्येदम् । किमस्य तातो न तातः, किं वाम्बा न जननी, वयं न भ्रातरः । अन्यस्मिन्नपि तावत्स्वामिनि दुर्लभीभवति भवन्त्यसवो ध्रियमाणा ह्रीहेतवो लोके किमुतामृतमयेऽनुजीविनां निर्व्याजबान्धवेऽवन्ध्यप्रसादे सुगृहीतनाम्नि ताते। संप्रति सांप्रतमाचरितमनेनात्मानं दहता कि वास्याकल्पमवस्थितस्य स्थेयसो यशोमयस्य दह्यते । पतितः स केवलं दहने । दग्धास्तु वयम् । धन्यः खल्वसावग्रणीः पुण्यभाजाम् । अपुण्यभाक्त्विदमेव राजकुलं कुलपुत्रेण यत्तादृशा वियुक्तम् । अपि च ममापि कः खल्वेतेषां प्राणानां कार्यातिभारः कृतशेषो वा, का वा व्यापृतता, येन नाद्यापि, निष्ठुराः प्राणाः प्रतिष्ठन्ते, को वान्तरायो हृदयस्य येन सहस्रधा न दलति' इति । दुःखार्तश्च न जगाम राजसद्म । समुत्ससर्ज च सर्वकार्याणि । शयनीये निपत्य उत्तरीयवाससा सोत्तमाङ्गमात्मानमवगुण्ठ्यातिष्ठत् ।

---

टीका–['इतरस्त्वन्यनीचयोः' इत्यमरः] इवेत्युपमायाम् अभिजातः=कुलीनः जनः=पुरुषः कृच्छ्रे=संकटे ['स्यात् कष्टं कृच्छ्रमाभीलम्' इत्यमरः ] यथा अनेन=रसायनेन अनुष्ठितम्=कृतम्, ज्वलने=अग्नौ प्रवेशेन अधिकतरम्=अतिशयेन अधिकम् उज्ज्वलीकृतम्=उज्ज्वलतां नीतम् कल्याणा=भद्रा प्रकृतिः=स्वभावः यस्य तत् कार्तस्वरम्=कृतस्वरः=आकरः तत्र भवं सुवर्णमित्यर्थः इवेत्युपमायाम् अस्य=रसायनस्य कल्याणप्रकृति कौलपुत्रस्य भावः ( अण् ) कुलपुत्रत्वमित्यर्थः, ततः=मे पिता किम् अस्य=रसायनस्य तातः पिता न ? किंवा जननी=मे माता अस्य अम्बा=जननी न ? वयम् रसायनस्य भ्रातरः न ? अन्यस्मिन्=अपरस्मिन् साधारणे इति यावत् अपि स्वामिनि=भर्तरि दुर्लभो भवति=दुर्लभे सति मृते सतीत्यर्थः ध्रियमाणाः=धार्यमाणाः रक्ष्यमाणाः इति यावत् असवः=प्राणाः लोके=संसारे ह्रियः=लज्जायाः हेतवः=कारणानि भवन्तीति शेषः, किमुत=किमु वक्तव्यम् अनुजीविनां=सेवकानाम् अमृतमये=अमृतरूपे, निर्गतः व्याजः=कपटं यस्मात् तथाभूते निष्कपटे इति यावत् बान्धवे=बन्धौ, अवन्ध्यः=अनिष्फलः प्रसादः=अनुग्रहो यस्य तस्मिन् सुगृहीतं=सुष्ठुग्रहणयोग्यमित्यर्थः नाम यस्य तस्मिन्, स्वनामधन्ये, प्रातः स्मरणीये इति यावत् ताते=पितरि, अर्थापत्तिरलङ्कारः । सम्प्रति=अस्मिन् समये आत्मानं दहता=भस्मीकुर्वता साम्प्रतम् उचितम् आचरितम्=कृतम् । किं वा आकल्पं=कल्पं मर्यादीकृत्य कल्पपर्यन्तमित्यर्थः ( अव्ययी० ) अवस्थितस्य=स्थितस्य, स्थेयसः=अतिशयेन स्थिरः इति [ स्थिर+ईयसुन् स्थादेशश्च ] स्थिरतरस्येति यावत् यशोमयस्य=यशोरूपस्य अर्थात् यशोरूपेण स्थितस्य अस्य अग्निना न किमपि दह्यत इति काकुः । सः=रसायनः दहने=अग्नौ केवलं पतितः, न तु दग्धः यशोदेहे तस्य आकल्पस्थायित्वात् दग्धाः=पितृशोकाग्नौ भस्मीभूतास्तु वयं स्मः । पुण्यभाजां=पुण्यात्मनाम् अग्रणीः=अग्रगामी असौ रसायनः धन्यः=भाग्यशाली । अपुण्यं भजतीति तथोक्तम्, अपुण्यवत् पापीति यावत् तु इदं राजकुलम्=राजगृहम् यत् तादृशा= तद्विधेन कुलपुत्रेण वियुक्तम्=विरहितम् । मम अपि खलुनिश्चयेन एतेषां प्राणानां=जीवनस्येत्यर्थः कः कार्यस्य अतिशयितः भारः अर्थात् अत्यन्तमहत्त्वपूर्णं कार्यं, कृतात्=अनुष्ठितात् कार्यात् शेषः अवशिष्टकार्यम् अकृतकार्यमित्यर्थः, का वा व्यापृतता=कार्यव्यग्रता येन न अद्य अपि निष्ठुराः=कठोराः प्राणाःअसवः प्रतिष्ठन्ते=गच्छन्ति कः वा अन्तरायः= विघ्नः सहस्रधा=सहस्रखण्डेष्वित्यर्थः न दलति=स्फुटति । दुःखेन आर्तः=पीडितः राजसद्म=राजगृहम्

हिन्दी—और फिर सोचने लगा—'अथवा यह उसके स्नेह के उचित ही था। क्या पिता जी उसके पिता नहीं है ? क्या माता जी उसकी माता नहीं हैं ? क्या हम उसके भाई नहीं हैं ? अन्य ( साधारण ) स्वामी के भी दुर्लभ ( मृत ) हो जाने पर धारण किये जा रहे प्राण संसार में लज्जा के कारण ( बन जाते ) हैं फिर जो सेवकों के लिए अमृतमय हैं, उनके निष्कपट बन्धु हैं और जिनका अनुग्रह कभी व्यर्थ नहीं जाया करता है—ऐसे स्वनामधन्य पिता जी की तो बात ही क्या। इस समय अपने को जलाते हुए उसने उचित ही किया है। अथवा कल्पान्त तक स्थित, अतिस्थिर, यशोमय ( बने हुए ) उसका ( अब ) क्या जलना है। वह केवल अग्नि में पड़ा है। जले तो हम हैं। वस्तुतः पुण्यात्माओं का अग्रणी वह धन्य है। अपुण्यवान् तो यह राजकुल है जो उस जैसे कुलपुत्र से रहित हुआ है। और मेरे इस जीवन का भी कौन सा अतिमहत्त्वपूर्ण कार्य रहा हुआ है अथवा कौन सा कार्य करने को बाकी है अथवा कौन सी कार्य-व्यस्तता है जो ये कठोर प्राण नहीं जा रहे हैं। अथवा ( मेरे ) हृदय की कौन सी बाधा है जो यह सहस्रों खण्डों में नहीं फट रहा है ? और दुःख पीड़ित हुआ वह राजमहल नहीं गया और सभी काम-धन्धे छोड़ बैठा। शय्या पर पड़कर चादर से सिर सहित अपने को ढक कर लेटे रहा।

इत्थंभूते च देवे हर्षे राजनि च तदवस्थे सर्वस्य लोकस्य कपोलेषु कीलिता इव कराः, लोचनेषु लेप्यमय्य इवाश्रुस्रुतयः, नासाग्रेषु ग्रथिता[1] इव दृष्टयः, कर्णेषूत्कीर्णा इव रुदितध्वनयः, जिह्वासु सहजानीव हाकष्टानि; लपनेषु पल्लवितानीव श्वसितानि, अधरेषु लिखितानीव परिदेवितपदानि, हृदयेषु निधानीकृतानीव दुःखान्यभवन् । उष्णाश्रुदाहभीतेव नाभजत नेत्रोदराणि निद्रा । निःश्वासवातविधुता इव व्यलीयन्त हासाः । निरवशेषदग्धेव च सन्तापेन न प्रावर्तत वाणी । कथास्वपि नाश्रूयन्त परिहासाः । क्वागमन्निति नाज्ञायन्त गीतगोष्ठ्यः । जन्मान्तरातीतानीव नास्मर्यन्त लास्यानि । स्वप्नेऽपि नागृह्यन्त प्रसाधनानि । वार्तापि नालभ्यतोपभोगानाम् । नामापि नाकीर्त्यताहारस्य । खपुष्पप्रतिमान्यासन्नापानमण्डलानि । लोकान्तरमिवानीयन्त बन्दिवाचः । युगान्तर इवावर्तन्त निर्वृतयः[2] । पुनरिवादह्यत शोकाग्निना मकरकेतुः । दिवापि नामुच्यन्त शयनानि । शनैः शनैश्च महापुरुषविनिपातपिशुनाः समं समन्तात्समुदभवन्भुवने भूयांसो भूपतेरभावाय भयमुत्पादयन्तो भूतानां महोत्पाताः ।

टीका—न जगाम=अगच्छत् । सर्वाणि कार्याणि समुत्ससर्ज=परित्यक्तवान् । शयनीये=शय्यायाम् निपत्य=पतित्वा उत्तरीयवाससा=प्रावारकेण उत्तमाङ्गेन=शिरसा सहितम् आत्मानम् अवगुण्ठ्य=आवृत्य अतिष्ठत् ।

देवे हर्षे इत्थंभूते=ईदृशीम् अवस्थां प्राप्ते, राजनि=प्रभाकरवर्धने च सा रुग्णेत्यर्थः अवस्था यस्यत थाभूते सति, सर्वस्य लोकस्य=प्रजाजनस्य कपोलेषु=गण्डस्थलेषु कराः=हस्ताः कीलिताः=बद्धाः इवेत्युत्प्रेक्षायाम्, अर्थात् शोके सर्वैः कपोलौ स्वहस्तयोः निरन्तरं स्थापितौ शोके तथा दर्शनात्; कालिदासोऽपि शकुन्तलां दुःखे 'वामहस्तोपाहृतवदनेति' वर्णितवान्; लोचनेषु=नयनेषु अश्रूणां स्रुतयः=प्रवाहः लेप्यं=लेपनीयं द्रव्यं [ यथा 'सीमेंट' प्रभृति ] एव लेप्यमय्यः इव, अर्थात् अश्रुप्रवाहाः तथा सततस्थिताः यथा लेपनद्रव्येण स्थापिता इव स्युः, दृष्टयः=लोचनानि ग्रथिताः=बद्धाः इव, कर्णेषु=श्रोत्रेषु रुदितस्य ( भावे क्तः ) रोदनस्य ध्वनयः=शब्दाः उत्कीर्णाः=मुद्रिताः इव, जिह्वासु=रसनासु हाकष्टानि=हा ! कष्टम् इत्यार्तनादाः सहजानि=सहजातानि स्वाभाविकानीत्यर्थः इव, लपनेषु=मुखेषु श्वसितानि=दीर्घोष्णनिश्वासाः पल्लवितानि=किसलयितानि किसलयवत् प्रसृतानीत्यर्थः, अधरेषु=ओष्ठेषु परिदेवितस्य=विलापस्य पदानि=शब्दाः लिखितानि=लेखबद्धानि इव, हृदयेषु दुःखानि निधानीकृतानि=निधीकृतानि निधिवत् सङ्गृहीतानीत्यर्थः इवेति सर्वत्रोत्प्रेक्षा । उष्णानि=शोकाग्नितप्तानि यानि अश्रूणि तैः यः दाहः=प्लोषः तस्मात् भीता=त्रस्ता इव नेत्रयोः उदराणि=अवटाः खातानीत्यर्थः निद्रा न अभजत=सेवितवती निःश्वासस्य=निश्वसितस्य वातेन वायुना विधुताः=दूरीकृताः अपाकृताः इत्यर्थः हासाः=हसितानि व्यलीयन्त=विलयं गताः नष्टाः इत्यर्थः न कोऽपि हसति स्म स्मयते स्मेति भावः । सन्तापेन=शोकतापेन निरवशेषं=निःशेषं पूर्णमिति यावत् यथा स्यात्तथा दग्धा=प्लुष्टा इव वाणी=वाक् न प्रावर्तत=न मुखात् निःसृता । सर्वे दुःखे तूर्ष्णीभूताः इति भावः उपरि सर्वत्रोत्प्रेक्षा । कथासु=कथानकेषु अपि परिहासाः=हास्यानि नर्माणि वा न अश्रूयन्त=श्रुतिपथमागताः स्वयं

हिन्दी—देव हर्ष के ऐसे होने और राजा के वैसी अवस्था में पड़ने पर सभी लोगों का हाथ कपोलों पर कील से जकड़-जैसे गए, आँखों में अश्रु-प्रवाह लिये जैसे हो गए, नाक के अग्रभागों पर दृष्टियाँ बँध-सी गई, कानों में रोने के शब्द उत्कीर्ण-जैसे हो गए; जिह्वाओं में हा ! राम ! शब्द जन्म-सिद्ध-जैसे हो गए, मुखों में आहेंपल्लवों-जैसे फैल उठे, ओठों में विलाप के शब्द लिखे हुए – जैसे हो गए, और हृदयों में दुःख खजाने-जैसे संचित हो बैठे । नींद गर्म-गर्म आँसुओं से जल जाने से डरी हुई—जैसी आँखों के भीतर नहीं आती थी । हँसी आहों की हवा से उड़ाई हुई—जैसी गायब हो गई ।वाणी सन्ताप ( गर्मी, दुःख ) ये पूरी तरह जली हुई जैसी नहीं निकलती थी। हास्य-विनोद कथाओं तक में भी नहीं सुनाई पड़ते थे। संगीत-गोष्ठियाँ कहाँ चली गईं—इसका पता भी नहीं लगता था, नृत्य जन्मान्तर की बीती हुई बातों की तरह स्मृति-पथ में नहीं आते थे । अंगों का प्रसाधन ( अलंकरण ) स्वप्न में भी नहीं किया जाता था । उपभोगों की बात तक भी नहीं पाई जाती थी । भोजन का नाम तक भी नहीं लिया जाता था । मदिरापान की गोष्ठियों के आयोजन आकाश के पुष्प हो बैठे । स्तुतिपाठकों की वाणियाँ लोकान्तर-जैसे चली गई थीं । आनन्द-आमोद युगान्तर के—जैसे हो गए थे । काम शोकाग्नि द्वारा दोबारा-जैसे जला दिया गया था । दिन में भी शय्यायें नहीं छोड़ी जाती थीं; धीरे-धीरे चारों ओर एक साथ ही महापुरुष के विनाश के सूचक, प्राणियों को भय उत्पन्न करते हुए बड़े-बड़े उत्पात भुवन में प्रकट हो उठे ।

१. 'प्रथिताः' २. 'निवृत्तयः'

तथा हि । दोलायमानसकलकुलाचलचक्रवाला पत्या सार्धं गन्तुकामेव प्रथममचलद्धरित्री । धन्वन्तरेरिवान्तरे तस्मिन्स्मरन्तः परस्परास्फालनवाचालवीचयो विजुघूर्णिरेऽर्णवाः । मृमूर्षमाणभीतानां विततशिखि[1]कलापविकटकुटिलाः केशपाशा इवोर्ध्वीबभूवुर्धूमकेतवः ककुभाम् । धूमकेतुकरालितदिङ्मुखं दिक्पालारब्धायुष्कामहोमधूमधूम्रशिखा-

---

टीका—परिहासस्य वार्ता तु दूरे अस्तु कथासु अपि परिहासो न वर्ण्यते स्मेति अर्थापत्तिः । गीतगोष्ठयः=सङ्गीतसभाः क्व अगमत=गताः इति न अज्ञायन्त=ज्ञानविषयीभूताः, विस्मरणं गताः इति भावः लास्यानि=नृत्यानि जन्मान्तरे अन्यस्मिन् जन्मनि अतीतानि=व्यतीतानि इवेत्युपमायाम् न अस्मर्यन्त=स्मृतिविषयीभवन्ति स्म, यथा पूर्वजन्मानुभूतानि वस्तूनि न स्मर्यन्ते तथैव लास्यान्यपीति भावः । प्रसाधनानि=प्रतिकर्माणि शरीरवेषभूषा इत्यर्थः स्वप्ने अपि न अगृह्यन्त=अक्रियन्त जाग्रदवस्थायां तु वार्तैव केत्यर्थापत्तिः । उपभोगानाम्=स्रक्चन्दनवनितादिविषय-भोगानां वार्ता=समाचारोऽपि न अलभ्यत=लब्धाऽभवत् इत्यर्थापत्तिः । आहारस्य=भोजनस्य नामापि=प्रसङ्गोपीत्यर्थः न अकीर्त्यत=अकथ्यत अत्राप्यर्थापत्तिः । आपानस्य=मदिरापनगोष्ठ्याः [ 'आपानं पानगोष्ठिका' इत्यमरः ] मण्डलानि=समूहाः खस्य=आकाशस्य पुष्पं=कुसुमं तेन प्रतिमा=साम्यं येषान्तानि आकाशपुष्पवदसंभवानीत्यर्थः, खपुष्पवदसंभवार्थवाचकानां संग्रहश्लोकः एष—'मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः' ।। वन्दिनां=स्तुतिपाठकानां वाचः=वाण्यः अन्यो लोकः लोकान्तरं तत् इवेत्युत्प्रेक्षायाम् अनीयन्त=नीताः निर्वृत्तयः=आनन्दाः अन्यत् युगम् इति युगान्तरम् तस्मिन् इवेत्युत्प्रेक्षा-याम् अवर्तन्त=वृत्तानि आमोद-प्रमोदाः युगान्तरस्येव वस्तूनि जातानीति भावः । मकरकेतुः=कामः शोकः एव अग्निः तेनेति रूपकम् पुनः इवेत्युत्प्रेक्षायाम् अदह्यत=दग्धोऽभवत्, पुरा शिवेन कामो दग्धः पुनरिदानीं मुमूर्षु-प्रभाकरवर्धन-शोकाग्निना इव दग्धः, न कोऽपि कामोपभोगं करोतिस्मेति भावः । शयनानि=शय्याः दिवापि=दिनेऽपि न अमुच्यन्त=अत्यजन्त, शोकाक्रान्ताः सर्वे शय्यारूढ़ाः जाता इति भावः । समन्तात्=परितः महापुरुषस्य=विशिष्टपुरुषस्ययः विनिपातः=पतनम् विनाशः इत्यर्थः तस्य पिशुनाः=सूचकाः [ 'पिशुनो खल-सूचकौ' इत्यमरः ] समम्=युगपत् एव भुवने=जगति भूपतेः=राज्ञः अभावाय=मृत्यवे भूतानां=प्राणिनां भयं=भीतिम् उत्पादयन्तः=जनयन्तः भूयांसः=बहवः महान्तः उत्पाताः=प्रकृतिकृतदुर्लक्षणानि समुदभवन्=समुद्भूताः जाता इत्यर्थः ।

तथाहि उदाहृणार्थं यथा—दोला०-दोलायमानं=प्रेङ्खत् सकलानां कुलाचलानां=कुलपर्वतानां, कुल-पर्वताः सप्त खलु भवन्ति—"महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैते कुल-पर्वताः" ।। भूकम्पः आगामिसंकट-सूचक उत्पातो मन्यते । धन्व०—धन्वन्तरेः समुद्र-मथनसमये अमृतघटमादाय समुद्रादुत्थितस्य व्यक्तिविशेषस्य इवेत्युत्प्रेक्षायाम् तस्मिन् अन्तरे=मध्ये समये

टिप्पणी—धन्वन्तरि—पुराणानुसार देवासुरों द्वारा समुद्र-मन्थन से निकले हुए अन्य रत्नों के साथ २ अमृतघट हाथ में लिए धन्वन्तरि भी निकला था । वह स्वर्ग-वैद्य कहलाता है । राजा चारों समुद्रों का पति था । उसकी रुग्णता से समुद्र क्षुब्ध हो उठे यह उत्पात था पर कवि की कल्पना यह है कि क्षुब्ध हुए समुद्र धन्वन्तरि की मानों याद कर रहे हों और इस लिए क्षुब्ध हो रहे हों कि हमारे क्षोभ से फिर दूसरा धन्वन्तरि निकले जो हमारे राजा को निरोग कर दे ।

वितत—दिशाओं पर राजा की वधुओं की कल्पना की गई है । कोई भी वधू अपने म्रियमाण पति के कारण शोकाकुल होकर केश-शृंगार नहीं किया करती । उसके वैसे ही ऊपर बिखरे हुए बाल रहते हैं । धूम केतु की टेढ़ी-मेढ़ी पूंछ पर दिग्वधू के बिखरे केशों की उत्प्रेक्षा की गई है । उत्प्रेक्षा श्लेषगर्भित है ।

हिन्दी—उदाहरण के लिए-जैसे—डोलते हुए सकल कुलपर्वतों के समूह वाली धरती पति के साथ-साथ जाना चाहती हुई-जैसी पहले ही हिल उठी । उस समय के बीच धन्वन्तरि की जैसी याद करते हुए परस्पर टकराने से शब्द करती हुई वीचियों वाले समुद्र क्षुब्ध हो पड़े । राजा की मृत्यु से भयभीत हुई दिशायें बिखरे मोर पंख के समान घने घुंघराले केशपाश-जैसे लग रहे बिखरी अग्नि—ज्वालासमूह से भीषण और टेढ़े-मेढ़े बने पुच्छल तारे ऊपर ( आकाश में ) प्रकट हो गए । पुच्छल तारों से भयानक बने दिग्विभागों वाला भवन ऐसा लग रहा था मानों दिक्पालों द्वारा ( राजा की ) आयुःकामनार्थ आरम्भ किये गए यज्ञ के धुएँ से

---

1. 'विततशिखा०'

भवद् भुवनम् । भ्रष्टभासि तप्तकालायसकुम्भवभ्रुणि भानुमण्डले भयङ्करकबन्धकायव्याजेन कोऽपि पार्थिवप्राणितार्थी पुरुषोपहारमिवोपजहार । ज्वलितपरिवेशमण्डलाभोगभास्वरो जिघृक्षाजृम्भमाणस्वर्भानुभयादुपरचिताग्निप्राकार इव प्रत्यदृश्यत श्वेतभानुः । अवनिपतिप्रतापप्रसाधिताः प्रथमतर कृतपावकप्रवेशा इवादह्यन्तानुरक्ता दिशः । स्रुतशोणितशीकरारुणिततनुरनुमरणाय प्रावृतपाटलांशुकपटेवादृश्यत वसुधावधूः । नराधिपविनाशसंभ्रमभीतैर्लोक-

---

टीका—इत्यर्थः स्मरन्तः = स्मृतिविषयीकुर्वन्तः, धन्वन्तरेः कर्मणि षष्ठी [ 'अधीगर्थदयेषां कर्मणि' पा० २।३।५२ ] परस्परम् = अन्योन्यं यत् आस्फालनं = संघट्टः तेन वाचालाः = मुखराः शब्दायमानाः इत्यर्थः वीचयः = तरङ्गाः येषां तथाभूताः अर्णवाः = समुद्राः विजुघूर्णिरे [ वि + √घूर्ण + लिट् प्रय० बहु० ] घूर्णितवन्तः क्षुब्धाः बभूवुरित्यर्थः । भूभृद०—भूभृतः = राज्ञः यः अभावः = विनाशः भाविमृत्युरिति यावत् तस्मात् भीतानां = त्रस्तानां ककुभां = दिशाम् विततः = विस्तृतः शिखिनः यः कलापः = पिच्छम् तद्वत् विकटाः = घनाः कुटिलाः = भङ्गुराः केशपाशाः = केशसमूहाः इव वितताः शिखिनः = अग्नेः [ 'शिखिनौ वह्नि-बर्हिणौ' इत्यमरः ] यः कलापः = ज्वालानिचयः इत्यर्थः तेन विकटाः = भीषणाः कुटिलाः = वक्राः धूमकेतवः पुच्छलताराः उर्ध्वीबभूवुः = उपरि ददृशिरे । अत्र ककुभां नायिकाव्यवहारसमारोपेण समासोक्तिः तदुत्थापिता च धूमकेतुषु केशपाशोत्प्रेक्षा सा च उपमया संसृष्टा अयं भावः दिशः राज्ञः वध्वः तस्य दिङ्नाथत्वात् दिक्षु उत्पातरूपेण आविर्भवन्त्यः पुच्छलताराः तासाम् ऊर्ध्वीकृतकेशपाशा इव प्रतीयन्ते स्म । धूमकेतोः उत्पातत्वे कालिदासोप्याह—'उपप्लवाय लोकानां धूमकेतोरिवोत्थितं [ कुमा० २।३२ ] । धूम०—धूमकेतुभिः = पुच्छलताराभिः करालितानि = व्याप्तानि भीषणीकृतानि च दिङ्मुखानि यस्मिन् तत् ( भुवनम् ) दिक्पालैः इन्द्राद्यष्ट-दिगीशैः आरब्धः = प्रक्रान्तः यः आयुषः = राज्ञः दीर्घजीवनस्य कामः = अभिलाषः यस्मिन् तथाभूतः होमः = यज्ञः तस्य धूमेन धूम्रं = धूमलम् इवेत्युत्प्रेक्षायाम् अभवत् । भ्रष्ट०—भ्रष्टा = च्युता लुप्तेत्यर्थः भाः = कान्तिः यस्य तस्मिन्, प्रभारहिते इत्यर्थः, तप्तः = अग्नौ तापितः यः कालायस्य = लोहस्य कुम्भः = घटः तद्वत् बभ्रुणि = बभ्रुवर्णे रक्तपिङ्गले इति यावत् भानोः = सूर्यस्य मण्डले = बिम्बे भयङ्करम् = भीषणं कबन्धस्य = क्रियायुक्तस्य अपमूर्धकलेवरस्य [ 'कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम्' इत्यमरः ] छिन्नशिरसः प्राणिनः इत्यर्थः, कायः = देहः तस्य = कैतवेन कोऽपि पुरुषः पार्थिवस्य = राज्ञः राज्यवर्धनस्येत्यर्थः प्राणितम् ( भावे क्तः ) = जीवितम् प्राणानितियावत् अर्थयते = याचते इति०

टिप्पणी—कबन्धव्याजेन—एक उत्पात यह भी है कि सूर्य बिम्ब के भीतर कबन्ध दिखाई देता है बिना सिर के धड़ को कबन्ध बोलते हैं । वास्तव में सूर्य के भीतर एक धब्बा दिखाई पड़ता है, जो आकाश में कबन्ध–जैसा होता है । उस पर कवि राजा के आरोग्य के लिए किसी के द्वारा सूर्य को दी जा रही नरबलि की कल्पना करता है । आरोग्य की देवता सूर्य ही होता है । दूसरा उत्पात दिग्दाह है, जिसमें दिशायें लाल हो जाती हैं । उस पर कवि पति से पूर्व अनुरक्त पत्नी-रूप दिशाओं का अग्नि में सती होने की कल्पना करता है ।

अदह्यन्त दिशः, वसुधावधूः—दिशाओं के सहसा लाल-लाल हो जाने को दिग्दाह कहते हैं, आकाश से लाल-लाल पानी बरसना रुधिर-वृष्टि कही जाती है । ये दोनों उत्पातों में गिने जाते हैं । दोनों में कवि कल्पना देखिये—राजा दिशाओं एवं वसुधा का पति माना जाता है । राजा के प्रताप से प्रसाधित-सजी-धजी-दिशाएँ आसन्न मरण पति से पहले ही मानों अग्नि में प्रवेश कर बैठी हों, वसुधा-वधू लाल साड़ी पहने पति के अनुमरण में सजी-धजी तय्यार है,

हिन्वी–धूमिल हो गया हो । (अपनी) चमक खोये हुए, तपे लोहे के घड़े की तरह लाल-पीले वर्ण वाले सूर्य-मण्डल के भीतर 'दिखाई पड़ रहे ) भयंकर कबन्ध के शरीर के बहाने राजा के ( दीर्घ ), जीवन का इच्छुक कोई ( सूर्य को ) नर-बलि-जैसे दे बैठा हो । प्रदीप्त परिघ-मण्डल के प्रसार से प्रकाशमान चन्द्रमा ऐसा लग रहा था मानों ग्रास करने की इच्छा से मुँह खोले हुए राहु के भय से ( अपने चारों ओर ) अग्नि की दीवार—जैसे बनाये हुए हों । राजा के प्रताप ( शौर्य ) से जीती हुई अनुरक्त ( लाल-लाल ) बनी दिशायें ऐसी लग रही थी मानों राजा के प्रताप ( तेजस्विता ) से अलंकृत हुई ( राजा की ) अनुरक्त ( अनुरागिणी ) वे ( राजा से ) बहुत ही जल गई हों । गिर रहे रुधिर बिन्दुओं की वृष्टि से लाल शरीर वाली बनी पृथिवी ऐसी लगती थी मानों सती होने के लिए लाल रेशमी वसन पहने हुए हो । राजा

पालैरिव कालायसकपाटपुटैरकालकालमेघपटलैररुध्यन्त दिग्द्वाराणि । प्रेतपतिप्रयाणप्रहताः पटवः पटहा इवारटन्तो हृदयस्फोटनाः पस्फायिरे[1] निर्घातानां घोरा निर्घोषाः । निकटीभवद्यममहिषखुरपुटोद्भूता इव द्युमणिधाम धूसरीचक्रुः क्रमेलककचकपिलाः पांशुवृष्टयः । विर[2]सविराविणीनामुन्मुखीनां शिखिनो ज्वालाः प्रतीच्छन्त्य इव पतन्तीरुल्का नभसो ववाशिरे शिवानां राजयः । राजधामनि धूमायमानकवरीविभागविभावितविकाराः प्रकीर्णकेशपाशप्रकाशित-

टीका—अर्थी पुरुषस्य=नरस्य उपहारम्=वलिम् इवेत्युत्प्रेक्षा सा च कैतवापह्नुत्युत्थापिता, उपजह्रार=उपनीतवान् । ज्वलित०—ज्वलितं=दीप्तं यत् परिवेशस्य=परिधेः . [ परिवेशस्तु परिधिरुपसूचक-मण्डले' इत्यमरः ] मण्डलम्=वृत्तम् तस्य आभोगेन=विस्तारेण भास्वरः=उज्ज्वलः ( श्वेतभानुः ) गृहीतुम् इच्छा जिघृक्षा ( ग्रह + सन् + अ + टाप् ) ग्रसनेच्छेत्यर्थः तया विजृम्भमाणः मुखं व्याददानः यः स्वर्भानुः=राहुः ( 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः,' इत्यमरः ) तस्मात् भयात्=भीतेः कारणात् उपरचितः=निर्मितः अग्नेः=वह्नेः प्राकारः=वप्रः वरणः इति यावत् ( 'प्राकारो वरणः साल' इत्यमरः ) येन तथाभूतः इवेत्युत्प्रेक्षा सा च चन्द्रे चेतनव्यवहारसमारोपात् समासोक्त्युत्थापिता, श्वेताभनुः=चन्द्रः प्रत्यदृश्यत=दृश्यते स्म अवनि०—अवनिपतिः=राजा, राज्यवर्धनः तस्य तापेन=शौर्येण प्रसाधिताः=जिताः आत्मीकृताः इत्यर्थः अथ च अवनिपतेः प्रतापेन=तेजसा कान्त्या इत्यर्थः प्रसाधिताः=भूषिताः प्रथमतरम्=अतिशयेन प्रथमम्=पूर्वं कृतः पावके=वह्नौ प्रवेशः याभिः तथाभूताः अनुरक्ताः=रक्तवर्णाः अथ च अनुरागवत्यः प्रणयिन्यः इति यावत् दिशः अदह्यन्त=दग्धाः अभवन्, पतिव्रता स्त्रियो हि पत्युः मरणात् पूर्वमेव अग्निप्रवेशं कुर्वन्ति । दिग्दाहोऽपि उत्पातेषु गण्यते । अत्र समासोक्त्युत्थापिता श्लिष्टोत्प्रेक्षा । स्रुत०—स्रुतः=क्षरितः आकाशात् पतित इत्यर्थः यः शोणितस्य=रुधिरस्य शीकराणां=बिन्दूनाम् आसारः=वर्षं यस्याः सा वसुधा=पृथिवी एव वधूः=पत्नी राज्ञः भूपतित्वात्, अनुमरणाय प्रावृतः=परिहितः इत्यर्थः पाटलः=रक्तवर्णः अंशुकपटः=चीनांशुकवसनं यया सा, इव अदृश्यत=दृक्पथं गता अत्र रूपकोत्थापिक्षोत्प्रेक्षा । नराधिप०—नराधिपस्य=राज्ञः प्रभाकरवर्धनस्य यः विनाशः=सन्निहितो मृत्युः तेन ( लोके संम्भाव्यमानः ) यः सम्भ्रमः=तुमुलम् उद्वेगः अव्यवस्थेति यावत् तस्मात् भीतैः=त्रस्तैः लोकपालैः=इन्द्रादिभिः अष्टदिगीशैः कालायस्य=लोहस्य कपाट-पुटैः=द्वारावरक-काष्ठ-फलकानां पुटैः इवेत्युत्प्रेक्षायाम् अकालाः=असामयिकाः ये मेघाः तेषां पटलैः=घटाभिः दिशां द्वाराणि अरुध्यन्त=रुद्धानि अक्रियन्त । प्रेत०—प्रेतानां=मृतानां पतिः=स्वामी यमराजः तस्य प्रयाणे=राज्ञः प्राणहरणार्थं प्रस्थाने प्रहताः=ताडिताः वादिताः इत्यर्थः पटवः=तीव्रध्वनय पटहाः=भेर्यः इवेत्युत्प्रेक्षायाम् आरटन्तः=शब्दायमानाः हृदयं स्फोटयन्ति=विदारयन्तीति तथोक्ताः ( कर्तरि ल्युट् ) निर्घातानां परस्परं संघट्टमानानां वायुविशेषाणाम् [ यदन्तरिक्षे बलवान् मारुतो मरुताहतः । पतत्यधः स निर्घातो जायते वायुसंभवः ] घोराः=भीषणाः निर्घोषाः=शब्दाः पस्फायिरे=[√स्फाय + लिट्] ववृधिरे निकटी०—निकटीभवन्=सन्निहितः यमस्य यः महिषः तस्य खुराणां=पुटाकार खुरैः उद्भूताः=उत्थिताः इवेत्युत्प्रेक्षायाम् क्रमेलकस्य=उष्ट्रस्य कचाः=केशाः इव कपिलाः पिंगला-पांशुवृष्टयः=धूलि-वर्षा द्युमणेः=सूर्यस्य धाम=स्थानम् आकाशमित्यर्थः अथवा तेजधूसरीचक्रः=धूसरवर्णं कृतवन्तः । धूपरपांसुवृष्टि रपि उत्पातो गण्यते । विरस०—विगतः रसः=आनन्दः यस्मिन् कर्मणि यथा स्यात्तथा विरसं कर्कशमित्यर्थः विरुवन्ति=शब्दायन्ते इति॰ विराविण्यः, तासाम्, उत्=ऊर्ध्वं मुखं यासां तासाम् उपरि कृतमुखीनामिति यावत् शिवानां=शृगालीनां शृगालानाञ्च राज्यः=पंक्तयः समूहाः इति यावत् शिखिनः=अग्नेः ज्वालाः=अर्चींषि

हिन्दी—की मृत्यु पर होने वाली भागदौड़ से डरे हुए लोकपालों ने लोहे के किवाड़–जैसे लग रहे असमय के मेघ-समूहों से दिशाओं के द्वार ढक दिए । यमराज के प्रस्थान में बज रहे तीव्र नगाड़े—जैसे गड़गड़ाते और परस्पर टकराते पवनों के हृदय दहल जानेवाले निर्घोष बढ़ गये । निकट-निकट आते हुए यम के भैंसे के खुर-पुटों से उठी हुई–जैसी ऊँट के बालों के समान पीली-पीली धूल-वृष्टियाँ सूर्य के तेज को धूसर बना बैठीं । बुरी तरह चिल्लाने वाले गीदड़-गीदड़ियों के झुण्ड ऊपर मुँह किये आग की लपटों के समान गिरती हुई उल्काओं को ( मुँह से ) ग्रहण करते हुए—जैसे चिल्ला उठे । राजप्रासाद में धुओं छोड़ते हुए सीमन्तों द्वारा विकार प्रकट किये हुए कुलदेवताओं की मूर्तियाँ ऐसी प्रतीत हो

१. 'पस्फायिरे निपततां' २. 'विसर०'

शोका इव प्राकाशन्त प्रतिमाः कुलदेवतानाम्। उपसिंहासनमाकुलं कालरात्रिविधूयमानवृजिनवेणीबन्धविभ्रमं बिभ्राणं बभ्राम भ्रामरं पटलम्। अटतामन्तःपुरस्योपरि क्षणमपि न शशाम व्याक्रोशी वायसानाम्। श्वेतातपत्रमण्डलमध्याज्जीवितमिव राज्यस्य सरसपिशितपिण्डलोहितं चञ्चच्चञ्चुरुच्चैरुच्चखान खण्डं माणिक्यस्य कूजञ्जरद्गृध्रः। महोत्पातदूयमानश्च कथमपि निनाय निशाम्।

अन्यस्मिन्नहनि समीपमस्य राजकुलाद्द्रुतगतिवशविशीर्यमाणालङ्कारझांकारिणी विजयघोषणेव विषादस्याकुलचरणचलत्तुलाकोटिक्वणितवाचालिताभिरुद्ग्रीवाभिः किं किमिति पृच्छ्यमानेव दूरादेव भवनहंसीभिः, स्खलितविशाल-

---

टीका–प्रतीच्छन्त्यः=गृह्णन्त्यः इवेत्युत्प्रेक्षायाम् नभसः=गगनात् 'पतन्तीः उल्काः=तेजःपुञ्जान्' इत्यमरटीकायां भरतः, अस्याः लक्षणञ्च काश्यपः एवमाह—"वृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिलोज्वला। पौरुषीयप्रमाणेन उल्का नानाविधा स्मृता" ॥ ववाशिरे=आक्रन्दन। राज०—राजधामनि=राजगृहे धूमायमानः=धूमम् उद्गिरन् यः कबर्याः विभागः=सीमन्तः कबरीशब्देनात्र कचाः लक्ष्यन्ते कचानामित्यर्थः तेन विभावितः=प्रदर्शितः इत्यर्थः विकारः=मनोविकारः याभिः तथाभूताः प्रकीर्णेन=पर्याकुलेन स्रस्तेनेति यावत् केशपाशेन=केशसमूहेन प्रकाशितः=प्रकटितः शोकः याभिस्ताः इवेत्युत्प्रेक्षायां कुलदेवतानां=कुलाधिष्ठातृदेवीनां प्रतिमाः=मूर्तयः प्रकाशन्तः=दृश्यन्ते स्मेति भावः लोके एष विश्वासः प्रचलति यत् दौर्भाग्य-समये गृहदेवी-प्रतिमानां केशाः धूममुदगिरन्ति, स च धूमः कविना पर्याकुलकेशत्वेनोत्प्रेक्ष्यते उभयस्य श्यामत्वात्। उपसिं०—सिंहासनस्य समीपे इत्युपसिंहासनम् ( अव्ययी० ) आकुलं=चञ्चलं कालरात्र्याः=प्रलयनिशाया विधूयमानः=लम्बमानः वृजिनः=कुटिलः [वृजिनं कल्मषे क्लीवं केशे ना कुटिले त्रिषु' इति मेदिनी] यः वेणीबन्धः=कबरीति यावत् तस्य विभ्रमं=विलासं बिभ्राणं=धारयन्तं भ्रामरम्=भ्रमराणाम् इदमिति ( अण् ) पटलं=समूहः बभ्राम=भ्रमणं चकार राज्ञः कालरात्रिः सन्निहिता अतः भ्रमद्भ्रमरेषु तद्वेणीबन्धविभ्रमधारणरूपा निदर्शना प्रसक्तैव। अटताम्—अन्तःपुरस्य=राजगृहस्य उपरि अटतां=भ्रमताम् उड्डीयमानानामित्यर्थः वायसानां=काकानां व्याक्रोशी=व्याक्रोशः विकृतस्वरेण विरावः इति यावत् न शशाम=विरराम। श्वेता०—श्वेतातपत्रस्य=श्वेतच्छत्रस्य मण्डलस्य=वृत्तस्य मध्यात् ( उच्चखा नेत्यनेनान्वयः ) राज्यस्य जीवितं=प्राणान् इवेत्युत्प्रेक्षायाम् सरसम्=आर्द्रं रुधिरलिप्तमित्यर्थः यत् पिशितस्य=मांसस्य पिण्डं=खण्डं तद्वत् लोहितं=रक्तवर्णम् माणिक्यस्य=रत्नस्य खण्डं चञ्चन्ती=चलन्ती चञ्चलेत्यर्थः चञ्चुः=मुखं यस्य तथाभूतः कूजन्=शब्दायमानः जरन्=वृद्धः गृध्रः=दाक्षाय्यः उच्चैः उपरि छत्रस्येति शेषः उच्चखान=उत्खातवान् उत्पाटितवानिति यावत् छत्रोपरि खचितं रत्नखण्डं मांसखण्डभ्रान्त्या गृध्रः उत्पाट्य नीतवान्, अत एवात्र भ्रान्तिमानलङ्कारः स च उपमया सङ्कीर्यते। एतदपि अपशकुनम्। महो०—महान्तः=विपुलाः ये उत्पाताः=उपर्युक्ताः प्राकृतिकोपद्रवाः तैः दूयमानः=खिद्यमानश्च कथमपि=केनापि प्रकारेण निशां=रात्रिं निनाय=अत्ययापयत् हर्षवर्धनः इति शेषः।

अन्यस्मिन्नहनि....वेलेति नाम्ना यशोमत्याः प्रतीहारी आजगाम' इत्यस्ति वाक्यम्। अन्यस्मिन् अहनि=दिने अस्य हर्षवर्धनस्य समीपम् राजकुलात्=राजगृहात् द्रुतः०—द्रुता=त्वरिता या गतिः गमनम् तस्याः वशात्=कारणादित्यर्थः

हिन्दी–रही थीं मानो बिखरे हुए केश-समूहों द्वारा ( अपना ) शोक दिखाए हुए हों। राजसिंहासन के पास काल-रात्रि के लटकते हिलते हुए टेढ़े वेणी-बन्ध का आकार धारण करता हुआ चपल भ्रमर-समूह मंडरा पड़ा। अन्तःपुर के ऊपर उड़ते हुए कौओं की काँव-काँव क्षण भर भी नहीं रुकी। कूजता हुआ चंचल चोंच वाला बूढ़ा गीध श्वेत छत्र के घेरे के बीच में से खून-सने मांस खण्ड के समान ( दीख रहे ) लाल रत्न-खण्ड को राज्य के प्राण को—जैसे ऊपर से उखाड़ बैठा। और बड़े-बड़े उत्पातों से दुःखी होते हुए ( हर्षवर्धन ने ) किसी तरह रात काटी।

दूसरे दिन राजगृह से उसके पास यशोमती की वेला नाम की प्रतीहारी आई—जो द्रुतगति के कारण टूटे जा रहे आभूषणों की झनझनाहट करती हुई ऐसी लग रही थी मानो विषाद की विजय घोषणा हो, जो जल्दी-जल्दी में पड़ रहे पैरों पर हिलते हुए नूपुरों की झंकार ( सुनने ) से शब्द करती हुई, ऊपर गर्दन उठाए गृह-हंसियों द्वारा दूर से ही मानो पूछी जा रही थी—क्या ( हुआ ), क्या ( हुआ )? अश्रुओं से अन्धी बने हुए जिसे गिर पड़ने में विशाल नितम्ब पर

श्रोणिशिञ्जानरशनानुराविणीभिश्च बाष्पान्धा समुपदिश्यमानमार्गेव गृहसारसीभिः, अदृष्टकवाटपट्टसङ्घट्टस्फुटितललाटपट्टरुधिरपटलेन [1]पटान्तेनेव रक्तांशुकस्य मुखमाच्छाद्य प्ररुदती, सन्तापबलविलीनकनकवलयरसधारामिव वेत्रलतामुत्सृजन्ती, मुखमरुत्तरङ्गितामुत्तरीयांशुकपटीं स्फुरन्तीं फणिनीव निर्मोकमञ्जरीमाकर्षन्ती, नम्रांसस्रंसिनानिलविलोलेन नीलतमेन तमालपल्लवचीरचीवरेणेव शोकोचितेन धम्मिल्लरचनारहितेन शिरोरुहसञ्चयेन वञ्चता प्रावृतकुचा, कुचताडनपीडया समुच्छूनाताम्रश्यामतलं मुहुर्मुहुरत्युष्णाश्रुप्रमार्जनप्रदग्धमिव करकिशलयं धुनाना, चक्षुर्निर्झरे शोयेति स्नपयन्तीव शोकाग्निप्रवेशाय स्वकपोलतलप्रतिबिम्बितमासन्नलोकं, लोललोचनप्रवृत्तैस्तरलैस्तारकांशुभिः श्यामायमानमात्मदुःखेन दिवसमपि वहन्तीव 'क्व कुमारः, क्व कुमारः' इति प्रतिपुरुषं

टीका—विशीर्यमाणाः = त्रुट्यन्तः ये अलङ्काराः = भूषणानि तैः झाङ्करोतीति = झाङ्कारिणी (शब्दानुकृतिः) विषादस्य = शोकस्य विजय-घोषणा=जयप्रख्यापना इवेत्युत्प्रेक्षायाम्, आकुल०-आकुलयोः = सत्वरयोः चरणयोः = पादयोः चलन्ती = चञ्चन्ती या तुलाकोटिः = नूपुरं ['पादाङ्गदे तुलाकोटिमञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः] तस्याः क्वणितेन=झणत्कारेण वाचालिताभिः मुखराभिः उत् = ऊर्ध्वीकृता ग्रीवा याभिः ताभिः भवनस्य = राजगृहस्य हंसीभिः = हंसस्त्रीभिः दूरात् एव किं किम् जातमिति शेषः इति पृच्छयमाना = अनुयुज्यमाना इवेत्युत्प्रेक्षायाम्, स्खलित०—स्खलिते = ( भावे क्तः ) स्खलने विशालायां = बृहत्यां श्रोण्यां = नितम्बे शिञ्जाना = रणन्ती शब्दायमानेत्यर्थः या रशना काञ्ची ताम् अनुरौति तदनुसारं अनुरणन्तीति० राविणी ताभिः गृहस्य = राजभवनस्य सारसीभिः = सारसस्त्रीभिः बाष्पेण = अश्रुणा अन्धा = मार्गे द्रष्टुमशक्तेत्यर्थः समुपदिश्यमानः = निर्दिश्यमानः मार्गः = वर्त्म यस्यै तथाभूता इवेत्युत्प्रेक्षायाम्, अदृष्ट०—अदृष्टम् = अनालोकितम् यत् कवाट-पट्टं = कपाटफलकं तस्य संघट्टेन = आघातेन स्फुटितं विदीर्णं यत् ललाटस्य = भालस्य पट्टं = फलकं फलकसदृशस्थानमित्यर्थः तस्य रुधिरपटलेन = रक्तसमूहेन रक्तांशुकस्य = रक्तवर्णकौशेयस्य पटस्य = वस्त्रस्य अवगुण्ठनस्येति यावत् अन्तेन = प्रान्तभागेन मुखम् आच्छाद्य = आवृत्य रुदती = प्रकर्षेण रोदनं कुर्वती, सन्ताप०—सन्तापः = दुःखम् एव सन्तापः = उष्णिमा तस्य बलेन = वेगेन विलीनं = विलयं प्राप्तं द्रवीभूतमित्यर्थः यत् कनकस्य = सुवर्णस्य वलयं कंकणं तस्य रस-धाराम् = द्रवप्रवाहम् इवेत्युत्प्रेक्षाया, वेत्रलताम् = वेत्रम् लता इवेत्युपमित-तत्पु० ताम् वेत्रयष्टिमित्यर्थः, प्रतीहारी सदा हस्ते वेत्रयष्टिकां वहति, किन्तु दुःख-कारणात् तया सा त्यक्ता, तत्र

**टिप्पणी—चक्षुर्निर्झरे**—उसके उज्ज्वल कपोलस्थल में पास खड़े हुए लोगों के प्रतिबिम्ब पड़ रहे थे। वह शोक में रो रही थी और आँसुओं के प्रवाह छोड़ रही थी। वह अश्रुप्रवाह वाले कपोलों पर प्रतिबिम्बित लोगों को नहला जैसी रही थी, क्योंकि उसके रोने के कारण लोगों को अशुभ सूचना मिल गई और वे शोकाग्नि में प्रवेश कर गए। जो व्यक्ति अपने को अग्निप्रविष्ट करता है वह उससे पूर्व स्नान करता ही है।

**हिन्दी**—बजती हुई करधनी के शब्द के पीछे शब्द करती हुई गृह-सारसियों द्वारा पथप्रदर्शन—जैसा किया जा रहा था, जो ( अश्रु के कारण ) अनदेखे किवाड़ों की टक्कर से फूटे हुए भाल-स्थल के रुधिर-समूह से लाल रेशमी वस्त्र के छोर से—जैसे मुख ढक कर रो रही थी, जो सन्ताप ( दुःख ) रूपी सन्ताप ( ऊष्मा ) के वेग से पिघले हुए सोने के कड़े की बहती हुई धारा—जैसी बेंत की छड़ी त्याग रही थी, जो मुख की निश्वास-वायु से तरंगित, चमकती हुई केंचुली को खींचे जाती हुई सर्पिणी की तरह ( मुख को निश्वास वायु से तरंगित, चमकती हुई ) रेशमी चादर को ( अपने स्थान में ) खींचती जा रही थी, जो झुके हुए कन्धों पर लटके, वायु से चंचल, काले-काले, शोक के उचित, बिना जूड़ा के हिलते हुए केशसमूह से तमाल वृक्ष के काले-काले पल्लवों के जर्जर वस्त्र से—जैसे कुचों को ढके हुए थी, जो बार-बार अत्यन्त उष्ण आंसुओं को पोंछने से जले हुए—जैसे प्रतीत हो रहे, छाती पीटने की पीड़ा से सूजे और कुछ लाल-काले बने हुए तलभाग वाले कर-किशलय को हिला रही थी, जो ( अपने ) कपोल-स्थल में प्रतिबिम्बित हुए समीपवर्ती लोगों को शोकाग्नि में प्रवेश करने के लिए ( अपनी ) आँखों से गिरते हुए ( अश्रुओं के ) झरने में नहला जैसे रही थी, जो चपल नयनों से निकली पुत्तलियों की चंचल किरणों से काले बने हुए दिन को भी अपने दुःख से जला—जैसे रही थी, और जो प्रत्येक पुरुष को पूछती जा रही थी—'राजकुमार कहाँ है ? राजकुमार कहाँ है ?' और

1. 'पटान्तेनेव'

पृच्छन्ती वेलेति नाम्ना यशोमत्याः प्रतीहार्याजगाम। विषण्णलोकलोचनप्रत्युद्गता चोपसृत्य कुट्टिमन्यस्तहस्तयुगला गलन्तीभिः सिञ्चतीव शुष्यन्तं दशनवीधितिधाराभिराधूसरमधरमधोमुखी विज्ञापितवती—'देव, परित्रायस्व परित्रायस्व। जीवत्येव भर्तरि किमप्यध्यवसितं देव्या' इति।

ततस्तदपरमाकर्ण्य च्युत इव सत्त्वेन, द्रुत इव दुःखेन, आचान्त इव चिन्तया, तुलित इव तापेन, अङ्कोलित इवातङ्केनाप्रतिपत्तिरासीत्। आसीच्चास्य चेतसि प्रतिपन्नसंज्ञस्य—'बहुशोऽपि हृदये दुःखाभिषङ्गो निपतन्नश्मनीव लोहप्रहारः कठिने हुतभुजमुत्थापयति न तु भस्मसात्करोति मे निरनुक्रोशस्य कायम्' इति। उत्थाय च त्वरमाणोऽन्तःपुरमगात्। तत्र च मर्तुंमुद्यतानां राजमहिषीणामश्रृणोद्दूरादेव 'तात चूत, चिन्तयात्मानं प्रवसति ते जननी।

टीका—कविकल्पनेयम् यत् समुत्सृज्यमाना वेत्रयष्टिः शोकाग्निबलेन गलित-स्वर्ण कङ्कण द्रवधारेवासीत् द्वयोः पीतवर्णत्वात्। मुख०—मुखस्य मरुता=वायुना तरङ्गितां=सञ्जाततरङ्गाम्=उत्तरासङ्गं प्रवाहकमिति यावत् अंशुकपटीम्=कौशेयवसनम् स्फुरन्तीं=लसन्तीं फणिनी=सर्पिणी इवेत्युपमायाम् निर्मोकस्य=कञ्चुकस्य मञ्जरीं=पट्टीमित्यर्थः आकर्षन्ती=यथास्थानं स्थापयन्तीत्यर्थः, नम्रांस०—नम्रौ=नतौ यौ अंसौ=स्कन्धौ तयोः संस्रते=पततीति तयोक्तेन, अनिलेन=वायुना। विलोलेन=चञ्चलेन नीलतमेन=अतिशयेन नीलेन तमालस्य=वृक्षविशेषस्य पल्लवानां किसलयानां चीरचीवरेण=जर्जरवस्त्रेण इवेत्युत्प्रेक्षायाम् शोकस्य उचितेन=योग्येन धम्मिल्लस्य=वेणीबन्धस्य या रचना=योजना तया रहितेन=शून्येन शिरोरुहाणां=केशानां सञ्चयेन=समूहेन चञ्चता=प्रेंखता प्रावृतौ=आच्छादितौ कुचौ=स्तनौ यया सा, कुच०—कुचयोः=स्तनयोः शोककारणात् यत् ताडनम्=आघातः तेन (जायमानया) पीडया=वेदनया समुच्छूनं=स्फीतम् आताम्रम्=ईषद्रक्तं श्यामं=कृष्णवर्णञ्च तलं=तलभागो यस्य तादृशं करं=किशलयमिवेत्युपमिततत्पु० मुहुर्मुहुः=पुनः पुनः अत्युष्णम् अत्यन्तं उष्णं यत् अश्रु=वाष्पं तस्य प्रमार्जनेन=(हस्तद्वारा) प्रोञ्छनेन प्रदग्धम्=प्रकर्षेण प्लुष्टम् इवेत्युत्प्रेक्षायाम् धुनाना=व्याधुन्वन्ती। चक्षु०—शीर्यति=गलति प्रवहतीत्यर्थः (√शृ+शतृ) चक्षुषः=नयनस्य निर्झरे=अश्रुजलस्य प्रस्रवणे स्नपयन्ती=स्नानं कारयन्ती इवेत्युत्प्रेक्षायाम् शोकः एव अग्निः (रूपकम्) तस्मिन् प्रवेशाय=प्रवेशं कर्तुमित्यर्थः स्वकपोलस्य=स्वगण्डस्य तले=स्थले प्रतिबिम्बितम् प्रतिफलितम् आसन्नं=सन्निहितम् लोकम्=जनम्, लोल०—लोलाभ्यां=चञ्चलाभ्यां लोचनाभ्यां=नयनाभ्यां प्रवृत्तैः=प्रसृतैः तरलैः=चपलैः तारकयोः=कनीनिकयोः अंशुभिः=किरणैः श्यामायमानं=कृष्णवर्णीभवन्तं दिवसम्=दिनम् अपि आत्मदुःखेन निजविषादेन दहन्ती=प्लुष्यन्ती इवेत्युत्प्रेक्षायाम्, कुमारः=हर्षवर्धनः इति पुरुषं पुरुषमिति प्रतिपुरुषम् (अव्ययी०) पृच्छन्ती प्रतीहारी=द्वारपालिका आजगाम=आगमत्। विषण्ण०—विषण्णाः=दुःखिताः ये लोकाः=जनाः तेषां लोचनैः=नयनैः प्रत्युद्गता=कृतस्वागता कुट्टिमे बद्धभूमौ न्यस्तं=निहितं हस्तयोः युगलं=द्वयं यया सा शुष्यन्तं=शुष्कं भवन्तम् आधूसरम्=ईषद्धूसरवर्णम् अधरम्=ओष्ठम् दशनानां=दन्तानां दीधितिभिः=रश्मिभिः सिञ्चन्ती=सिक्तंकुर्वती इवेत्युत्प्रेक्षायाम् अधोमुखी=निम्नमुखी विज्ञापितवती=निवेदितवती—देव, परित्रायस्व=रक्ष। जीवति=प्राणिति एव भर्तरि=स्वामिनि प्रभाकरवर्धने देव्या=महिष्या यशोमत्या किमपि=अद्भुतमित्यर्थः अध्यवसितम्=निश्चितम्।

हिन्दी—दुःखाकुल लोगों के नयनों द्वारा स्वागत की जाती हुई—जैसी वह पास में आकर फर्श पर दोनों हाथ रखे, (अपने) सूखे जा रहे धूसर वर्ण के से अधर को गिर रही दन्त-किरणावली से सींचती हुई—जैसी, नीचे मुँह किये हुए निवेदन कर बैठी—'कुमार बचाओ, बचाओ स्वामी के जीते रहते ही देवी कुछ निश्चित कर बैठी हैं।'

तदनन्तर दूसरी (दुःख-समाचार की) बात सुनकर धैर्य से च्युत हुआ—जैसा, दुःख से द्रवीभूत हुआ—जैसा, चिन्ता से पिया हुआ—जैसा, ताप से तोला हुआ—जैसा और भय से मुद्रित हुआ—जैसा वह चेतना खो बैठा। और चेतना आने पर उसके मन में (विचार) हुआ—'जिस तरह कई बार कठिन पत्थर पर पड़ती हुई लोहे की चोट अग्नि उत्पन्न कर देती है, वैसे ही कठिन हृदय पर पड़ती हुई दुःख की चोट अग्नि उत्पन्न करती है, किन्तु मेरे कठोर शरीर को वह भस्म नहीं करती'। और उठकर जल्दी-जल्दी वह अन्तःपुर गया। और वहाँ मरने को तत्पर हुई बैठी रानियों के दूर से ही प्रायः ऐसे-ऐसे आलाप सुन बैठा—'प्रिय आम्र! अपनी चिन्ता करना तेरी माँ (लोका-

वत्स जातीगुच्छ, गच्छाम्यापृच्छस्व माम्। मया विनाद्यानाथा भवसि भगिनि भवनदाडिमलते। रक्ताशोक, मर्षणीयाः पादप्रहाराः कर्णपूरपल्लवभङ्गापराधाश्च। पुत्रक अन्तःपुरबालबकुलक वारुणीगण्डूषग्रहणदुर्ललित, दृष्टोऽसि। वत्से प्रियङ्गुलतिके, गाढमालिङ्ग मां दुर्लभा भवामि ते। भद्र भवनद्वारसहकारक, दातव्यो निवापतोयाञ्जलिरपत्यमसि। भ्रातः पञ्जरशुक, यथा न विस्मरसि माम्, किं व्याहरसि दूरीभूतास्मि ते। शारिके, स्वप्ने नः समागमः पुनर्भूयात्। मातः, मार्गलग्नं कस्य समर्पयामि गृहमयूरकम्। अम्ब, सुतवल्लालनीयमिदं हंसमिथुनं, मन्दपुण्यया मया न सम्भावितोऽस्य चक्रवाकयुगलस्य विवाहोत्सवः। मातृवत्सले, निवर्तस्व गृहहरिणिके। समुपनय

---

टीका—ततः तत् = प्रतिहार्या निवेदितम् अपरम् = मातृविषयकदुःखकारणम् आकर्ण्य सत्त्वेन = धैर्येणेत्यर्थः च्युतः = भ्रष्टः इव, दुःखेन = विषादेन द्रुतः = गलितः इव, चिन्तया आचान्तः = पीतः इव, तापेन = सन्तापेन तुलितः = कृतोत्तोलनः लघूकृतः इत्यर्थः इव, आतङ्केन = भयेन अङ्कीकृतः = मुद्रितः इवेति उपरि सर्वत्रोत्प्रेक्षा अप्रतिपत्तिः न प्रतिपत्तिः = ज्ञानं संज्ञेति यावत् यस्य सः मूर्छितः इत्यर्थः आसीत्। आसीत् अस्य प्रतिपन्ना = प्राप्ता संज्ञा = चेतना येन तस्य मनसि आसीत् = प्राप्तसंज्ञः सः अचिन्तयत् — बहुशः बहुवारम् अपि कठिने = कठोरे हृदये निपतन् = आपतन् दुःखस्य अभिषङ्गः = प्रतिघातः संसर्गः इति यावत् कठिने अश्मनि = प्रस्तरे निपतन् लोहस्य प्रहारः = आघातः इवेत्युपमायाम् हुतभुजम् = अग्नि उत्थापयति = उत्पादयति तु = किन्तु निरनुक्रोशस्य = निर्दयस्य कठोरस्येत्यर्थः मे = मम कायं = शरीरं न भस्मसात् करोति = भस्मतां नयति। त्वरमाणः = त्वरां कुर्वन् अन्तःपुरम् = अवरोधम् अगात् = आगच्छत्। तत्र च मर्तुम् = मरणाय उद्यतानां = सज्जीभूतानां राजमहिषीणाम् = राजपत्नीनाम् अशृणोत् = आकर्णयत् दूरात् एव....एवं प्रायान् आलापान् इत्यस्ति वाक्यम्. तात = प्रिय चूत! = आम्र! आत्मानं चिन्तय = स्वविषयकचिंतां स्वयं कुरु, ते जननी = माता प्रवसति = प्रवासं करोति लोकान्तरं गच्छतीत्यर्थः, वत्स जाती = पुष्पविशेषः तस्याः गुच्छस्तवक! अहं गच्छामि इतो लोकादिति शेषः माम् आपृच्छस्व = आमन्त्रयस्व विसृजेत्यर्थः। मया विना अद्य अनाथा = नाथरहिता भवनस्य दाडिम-लते != करकवृक्ष! मर्षणीयाः = क्षन्तव्याः पादयोः प्रहाराः = आघाताः, कर्णपूरस्य = कर्णाभरणीकरणायेत्यर्थः पल्लवानां = किसलयानां भङ्गस्य = त्रोटनस्य अपराधाः = आगांसि। पुत्र एव पुत्रक! अन्तःपुरस्य = अवरोधस्य बाल-बकुल = लघुबकुल वृक्ष इत्यर्थः वारुणी = सुरा तस्याः यः गण्डूषः = मुखपूरणं तेन दुर्ललित = दुर्विनीत! दृष्टः असि = अद्यपर्यन्तं दृष्टः असि = इतः परं न द्रक्ष्यामीति भावः। वत्से = प्रिये प्रियङ्गुलतिके! गाढम् = निविडं यथा स्यात्तथा माम् आलिङ्ग = आश्लिष्य, दुर्लभा भवामि = मम पुनर्दर्शनं दुर्लभमेव। भद्र = महाभाग! भवनस्य द्वारस्य सहकारक = अतिसौरभ आम्र! [आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः] त्वम् अपत्यं = पुत्रः असि, अतः निर्वापः = मृतमुद्दिश्य दीयमानं जलपिण्डादिकं ['पितृदानं निवापः स्यात्' इत्यमरः] तद्रूपः तोयस्य —जलस्य अञ्जलिः = अञ्जलिबद्धं जलमित्यर्थः दातव्यः =

टिप्पणी—पाद-प्रहाराः वारुणी-गडूषाः—संस्कृत कवि-जगत् में कुछ पुष्पविकास-सम्बन्धी मान्यतायें प्राचीनकाल से चली आ रही हैं जैसे—नवयुवती के पदाघात से अशोक का खिलना, सुरा के गण्डूष से बकुल (मौलसरी) का खिलना इत्यादि। ये मान्यतायें संक्षेप में इस श्लोक में संगृहीत हैं :—स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति वकुलः सीधुगण्डूषसेकात्, पादाघातादशोकस्तिलक-कुरबकौ वीक्षणालिङ्गनाभ्यां मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको, वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात् कर्णिकारः॥

हिन्दी—न्तर में) प्रवास कर रही हैं।' 'बेटे चमेली के गुच्छे! मैं जा रही हूँ, मुझे विदा दे।' 'बहिन घर की दाडिम लता! मेरे बिना तू अनाथ हो रही है।' 'रक्त अशोक! (मेरे) पाद-प्रहार एवं कर्णपूर बनाने के लिए पत्ते तोड़ने के अपराध क्षमा करना।' 'अन्तःपुर के छोटे बकुल वृक्ष पुत्र! मदिरा की चुल्ली ग्रहण करने के कारण दुर्विनीत! तुझे आखिरी बार देख लिया है।' 'बच्ची प्रियङ्गुलता! मेरा गाढ़ आलिंगन कर, मैं फिर दुर्लभ हो जाऊँगी।' अन्तःपुर के द्वार के सहकार महाभाग! मुझे श्राद्धतर्पण की जलाञ्जलि देना, तू मेरी सन्तान है।' भाई पिंजरे के तोते! जिस तरह तू मुझे भूल न बैठे [ऐसा करना] क्यों बोल रहा है? मैं तुझसे दूर हुई जा रही हूँ' 'मैना! स्वप्न में फिर हमारा मेल हो' रास्ते में पीछे लगा हुआ यह पालतू मोर किसको सौंपूँ।' अम्मा! इस हंसों के जोड़े को पुत्र की तरह पालना, मुझ अभागिन ने इस चकवों के जोड़े का विवाह उत्सव नहीं मनाया।' 'माँ की प्यारी पालतू हरिणी! लौट जा।'

सौविदल्ल वल्लभवल्लकीं परिष्वजे तावदेनाम् । चन्द्रसेने, सुदृष्टः क्रियतामयं जनः । बिन्दुमति, इयं तेऽन्त्या वन्दना । चेटि, मुञ्च चरणौ । आर्ये कात्यायनिके, किं रोदिषि नीतास्मि दैवेन । तात कञ्चुकिन्, किं मामलक्षणां प्रदक्षिणीकरोषि । धात्रेयि, धारयात्मानं किं पादयोः पतसि । भगिनि, गृहाण मामपश्चिमां कण्ठे । कष्टं न दृष्टा प्रियसखी मलयवती । कुरङ्गवति, अयमामन्त्रणाञ्जलिः । सानुमति, अयमन्त्यः प्रणामः । कुवलयवति, एष तेऽवसानपरिष्वङ्गः । सख्यः, क्षन्तव्याः प्रणयकलहाः' इत्येवंप्रायानालापान् ।

दह्यमानश्रवणश्च तैः प्रविशन्नेव निर्यान्तीं दत्तसर्वस्वापतेयां गृहीतमरणप्रसाधनाम्, जानकीमिव जातवेदसं पत्युः पुरः प्रवेक्ष्यन्तीम्, प्रत्यग्रस्नानाद्रवेहतया श्रियमिव भगवतीं सद्यः समुद्रादुत्थिताम्, कुसुम्भवर्णी वाससी

---

टीका—देयः । पञ्जरगतः शुकः पञ्जरशुकः तत्सम्बुद्धौ यथा त्वं मां न विस्मरसि तथा कुरु इति शेषः, किं=कस्मात् व्याहरसि =संलपसि ? दूरीभूता=दूरंगता भविष्यामीत्यर्थः । शारिके !=पक्षि-शेष ! मेना इति भाषायां प्रसिद्धेः । नः=अस्माकं समागमः=सम्मेलनम् स्वप्ने न तु जगति । मातः ! अम्ब ! मार्गे=पथि लग्नं=संसक्तम् मे मार्गे स्थितमित्यर्थः गृहस्य मयूरकम् पालनार्थं कस्य पार्श्वे समर्पयामि । अम्ब ! इदं हंसश्च हंसी च तयोः मिथुनं=द्वन्द्वम् सुतवत्=पुत्रवत् लालनीयं =पालनीयम्, मन्दं पुण्यं सुकृतं यस्याः तया मन्दभाग्ययेत्यर्थः अस्य पुरो दृश्यमानस्य चक्रवाकश्च चक्रवाकी च तयोः ( एकशेष द्व० ) युगलस्य=द्वयस्य विवाहोत्सवः न सम्भावितः=मानितः कृत इत्यर्थः । मातुः वत्सले=प्रिये ! गृहस्य हरिणिके लघुहरिणि ! निवर्तस्व=प्रतिगच्छ । सौविदल्ल !=कञ्चुकिन् [ 'सौविदल्लाः कञ्चुकिनः' इत्यमरः ] सुविदन्तं विवाहं जानन्तं लान्ति सुविदल्लाः ऊढाः स्त्रियः तत्र भवाः सौविदल्लाः इति क्षीरस्वामी ] वल्लभस्य=प्रियतमस्य वल्लकीम्=वीणाम् [ 'वीणा तु वल्लकी' इत्यमरः ] समुपनय=मम पार्श्वे आनय, तावत् एनां=वीणां परिष्वजे=आलिङ्गामि अयं जनः अहमित्यर्थः सुदृष्टः=सम्यक् अवलोकितः क्रियताम् अर्थात् मां सम्यक् पश्य, न पुनस्ते द्रष्टव्या भविष्यामीत्यर्थः । अन्ते भवा अन्त्या=अन्तिमा वन्दना=अभिवन्दनम् । कात्यायिनि=काषायवसने विधवे ! ('कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा' इत्यमरः) दैवेन=दौर्भाग्येन नीतास्मि=लोकान्तरम् प्रापितास्मि । अलक्षणाम् =कुलक्षणामित्यर्थः प्रदक्षिणीकरोषि=परिक्रामसि । धात्रेयि=धातृपुत्रिके ! आत्मानं धारय=धैर्यं धरेत्यर्थः अपश्चिमाम्=अविद्यमानं पश्चिमं यस्याः ताम् अर्थात् या इतः परं न द्रष्टुमापतिष्यति ताम् आमन्त्रणस्य=आप्रच्छन्नस्य अञ्जलिः त्वत्तो वियुज्यमानायाः मे अयम् अञ्जलिबद्धोऽन्तिमः नमस्कारः इति भावः । अवसाने=अन्ते परिष्वङ्गः=आलिङ्गनम् । क्षन्तव्याः=मर्षणीयाः प्रणय-कलहाः=प्रेमविवादाः इति एवं प्रायः=बाहुल्यम् ['प्रायो भूम्नि' इत्यमरः] येषां तथोक्तान् आलापान्=संलापान् वार्तालापानित्यर्थः ।

तैः आलापैः दह्यमानौ=प्लुष्यमाणौ श्रवणौ=कर्णौ यस्य तथोक्तः स प्रविशन्=प्रवेशं कुर्वन् एव निर्यान्तीम्=निस्सरन्तीम् मातरं ददर्शेति वाक्यम्, दत्त०—दत्तं=ब्राह्मणादिभ्यः वितीर्णं सर्वं स्वापतेयम्=स्वपतौ साधु इति ( स्वपति+ढञ् 'पथ्यतिथिवसति स्वपतेर्ढञ्' पा० ( ४।४।१०४ ) धनम् ( द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं

टिप्पणी—जानकी-रावण वध के बाद राम ने सीता को स्वीकार करने में आनाकानी की क्योंकि वह इतने दिन परगृह में रही । सीता ने तत्काल लक्ष्मण को चिता तय्यार करने को कहा और राम के सामने अग्नि ने उसे शुद्ध प्रमाणित कर दिया था ।

हिन्दी—'कञ्चुकी ! स्वामी की वीणा ला, इसे पहले गले लगा लूँ ।' चन्द्रसेना ! इस जन को (मुझे) अच्छी तरह देख ले ।' 'बिन्दुमती ! तुझे यह अन्तिम वन्दना है ।' 'दासी ! ( मेरे ) पैर छोड़ ।' 'मान्य विधवा संन्यासिनी ! क्यों रोती हो ?' मुझे ( मेरा ) दुर्भाग्य ले बैठा है' 'तात कञ्चुकी ! मुझ कुलक्षणी की क्यों परिक्रमा करते हो ?' 'धायी बहिन ! अपने को संभाल क्यों पैरों में गिर रही है' 'बहिन ! फिर बाद को न मिलने वाली मुझे गले लगा ।' 'हाय ! प्रिय सखी मलयवती ! नहीं देखी ।' । 'कुरंगवती ! यह बिदा की अंजलि ( करबद्ध वन्दना ) है ।' 'सानुमती ! यह आखरी प्रणाम है ।' कुवलयवती ! यह अन्त का आलिंगन है 'सखियों ! प्रणय के कलह क्षमा करें ।'

और उन ( आलापों ) से कानों में जलाया जाता हुआ वह प्रविष्ट होते ही ( भीतर से ) निकलती हुई माँ को देख बैठा—जो अपना सारा धन ( ब्राह्मणादि को ) दे चुकी थी, और मरण के लिए सजीधजी हुई थी, जो सीता की तरह पति के आगे ही अग्नि में प्रवेश करना चाह रही थी, जो अभी-अभी किये हुए स्नान से शरीर गीला हुए रहने के कारण ऐसी लग रही थी मानो अभी-अभी समुद्र से निकली हुई लक्ष्मी हो, जो कुसुम्भ (रंग) से लाल बने

दिवमिव तेजसी सांध्ये दधानाम्, ताम्बूलदिग्धरागान्धकाराधरप्रभापटलपाटलं पट्टांशुकमिव विधवामरणचिह्न-मङ्गलग्नमुद्वहन्तीम्, रक्तकण्ठसूत्रेण कुचान्तरावलम्बिना स्फुटितहृदयविगलितरुधिरधाराशङ्कां कुर्वतीम्, तिर्यक्कुटिल-कुण्डलकोटिकण्टकाकृष्टतन्तुना हारेण वलितेन सितांशुकपाशेनेव कण्ठमुत्पीडयन्तीम्, सरसकुङ्कुमाङ्गरागतया कवलितामिव दिधक्षता चितार्चिष्मता, चितानलार्चनकुसुमैरिव धवलधवलैरश्रुबिन्दुभिरंशुकोत्सङ्गमापूरयन्तीम्, गृहदेवतामन्त्रणबलिमिव वलयैर्विगलद्भिः पदे पदे विकिरन्तीम्, आप्रपदीनां कण्ठे गुणकुसुममालां यमदोलामिवा-रूढाम्, अन्तर्गुञ्जन्मधुकरमुखरेणामन्त्र्यमाणलोचनोत्पलामिव कर्णोत्पलेन, प्रदक्षिणीक्रियमाणामिव मणिनूपुरबन्धु-

---

टीका—वसु' इत्यमरः) यौतुकरूपेण प्राप्तं स्त्रीधनमिति भावः यया ताम्, गृहीतं=धृतं मरणाय प्रसाधनम्=अलङ्करणं यया ताम् पत्या सह मरणाय स्त्रियो हि रक्तवसनभूषणादिभिः आत्मानं प्रसाधयन्तीति प्रथाऽस्ति।

जानकी०—जानकीम्=सीताम् इवेत्युपमाया पत्युः=भर्तुः, पुरः=पूर्वमेव सीतापक्ष.......... .... .. ........ जातवेदसम् अग्निम् प्रवेक्ष्यन्तीम्=[भविष्यदर्थे शतृ] प्रवेष्टुमिच्छतीं प्रत्य०प्र०—प्रत्यग्रं=सद्यः कृतमित्यर्थः यत् स्नानं तेन आर्द्रः=क्लिन्नः देहः=कायः यस्याः सा तस्याः भावः तत्ता तया भगवतीं=देवीं श्रियं=लक्ष्मीम् इवेत्युत्प्रेक्षायाम् सद्यः=तत्क्षणे ['सद्यः सपदि तत्क्षणे' इत्यमरः] समुद्रात्=सागरात् उत्थिताम्=निर्गताम्, कुसुम्भ०—कुसुम्भेन=कुसुम्भपुष्परसेन बभ्रुणी=बभ्रुवर्णे रक्तपिङ्गले इत्यर्थः वाससी=द्वे वसने दिवम्=द्युलोकम् इवेत्युपमायाम् सान्ध्ये=सन्ध्योः इमे (अण्) प्रातः सायं सन्ध्ययोः इत्यर्थः तेजसी=तेजोद्वयम् प्रातःकालीन—सायंकालीन रक्तप्रभे इतियावत् दधानाम्=बिभ्राणाम्, ताम्बूल०—ताम्बूलेन=ताम्बूलपत्र-भक्षणेन दिग्धः=लिप्तः अत एव रागः=लालिमा अन्धकारः=कालिमा च यस्मिन् तथाभूतः यः अधरः=अधरोष्ठः तस्य प्रभापटलेन=कान्तिपुञ्जेन पाटलं=रक्तं पट्टांशुकम्=पट्टवसनम् इवेत्युत्प्रेक्षायाम् अङ्गे=शरीरे लग्नं संसक्तं विधवायाः=मृतभर्तृकायाः मरणचिह्नं=पत्या सह चितारोहण-चिह्नम्, सहमरणे हि स्त्रियो रक्तवसनं परिदधते, उद्वहन्तीम्=धारयन्तीम्, रक्त०=रक्तवर्णं यत् रक्तसूत्रं मङ्गलसूत्रमिति यावत्, सौभागिन्यः स्त्रियः जीवनपर्यन्तम् सौभाग्यचिह्नरूपेण रक्तवर्णं मङ्गलसूत्रं कण्ठे बध्नन्ति, कुचयोः=स्तनयोः अन्तरे=मध्ये, अथवा कुचौ अन्तरा=मध्ये (अव्यय०) अवलम्बिना=प्रेंखता स्फुटितं=दलितं यत् हृदयं तस्मात् विगलिता=प्रस्रुता या रुधिरस्य=रक्तस्य धारा तस्याः शङ्कां=संशयं कुर्वतीम्=जनयन्तीम् अत्र सन्देहालङ्कारः, तिर्यक्०—तिर्यक्=अनृजु यथा स्यात्तथा कुटिलेन=वक्रेण कुण्डलस्य=कर्णाभरणविशेषस्य कोटेः=अग्रस्य कण्टकेन=शल्येन कण्टकाकाराग्रभागेनेत्यर्थः आकृष्टः तन्तुः=सूत्रं यस्य तेन हारेण मौक्तिकस्रजा वलितेन=मण्डलितेन मण्डलाकारस्थितेनेति यावत् सितांशुकस्य=श्वेतकौशेयवस्त्रस्य पाशेन=रज्ज्वा इवेत्युत्प्रेक्षायाम् कण्ठं=गलम् उत्पीडयन्तीम्=मर्दयन्तीम् अर्थात् उभयकुण्डलाग्रसंसक्तसूत्रमौक्तिकहारेण श्वेतांशुकेनेवात्मानं गले बद्ध्वा श्वासावरोधेन हन्तुमिच्छति स्म, सरस०—सरसः=क्लिन्नः कुंकुमस्य=काश्मीरजस्य अंगरागः=लेपनं यस्याः सा तस्याः भावः तत्ता तया दिधक्षता ($\sqrt{}$ दह् + सन् + शतृ + तृ०) दग्धुमिच्छता चितायाः अर्चिष्मता=अनलेन कवलिताम्=ग्रासीकृताम् इवेत्युत्प्रेक्षायाम्, चिता०—चितानलस्य=चितायाः वह्नेः अर्चनार्थं=पूजनार्थं कुसुमैः=पुष्पैः इवेत्युत्प्रेक्षायाम् धवलधवलैः=अतिधवलैः अतिश्वेतैरित्यर्थः अश्रूणां=बाष्पाणां बिन्दुभिः अंशुकस्य=कौशेयवसनस्य उत्सङ्गः=मध्यम् आपूरयन्तीं=भरन्तीम्, गृह०—पदे-पदे=प्रतिपदम् विगलद्भिः=पतद्भिः वलयैः=कंकणैः गृहदेवतानां=गृहाधिष्ठातृ-देवतानां कुलदेवतानामित्यर्थः आमन्त्रणे=आपृच्छणे विसर्जने इति यावत् बलिम्=उपहारम् इवेत्युत्प्रेक्षायां विकिरन्तीं=

हिन्दी—दो वस्त्रों को पहने हुए (प्रात: और सायं के) दो सन्ध्या कालीन तेजों को धारण करती हुई द्यु के समान बनी हुई थी, जो पान से लिप्त, लाल-काले बने अधर के कान्ति-समूह से लाल-लाल हुआ रेशमी-वस्त्र-जैसा अंग पर लगा विधवा-मरण का चिह्न रख रही थी, जो स्तनों के मध्य लटके लाल कंठ-सूत्र से फटे हुए हृदय से निकली रुधिर धारा की शंका उत्पन्न कर रही थी. जो टेढ़े पड़े कुटिल कुंडल के काँटे—जैसी नाक से खींचे हुए धागे वाली मंडलाकार बनी मोतियों की लड़ से ऐसी लग रही थी मानों श्वेत रेशमी वस्त्र की रज्जु से गला दबा रही हो, जो गीली केशर का अंगराग लगाए रहने के कारण ऐसी लगती थी मानो जलाना चाह रही चिताग्नि द्वारा ग्रास बना दी गई हो, जो श्वेत-श्वेत अश्रुबिन्दुओं से चिताग्नि की पूजा के लिए (अपेक्षित) पुष्पों से—जैसे आँचल भर रही थी, जो पग-पग में गिरती जा रही चूड़ियों से गृह-देवताओं को विदाई की भेंट—जैसी बिखेर रही थी, जो गले में (पड़ी) पैरों तक लटकी सूत्रग्रथित पुष्पमाला से ऐसी लग रही थी मानो मृत्यु के झूले पर चढ़ी हुई हो, जिसके नयनोत्पल को भीतर गूँज रहे भ्रमरों से वाचालित हुए कर्णोत्पल द्वारा बिदा—जैसी दी जा रही थी, जिसकी मणि-जड़ित नूपुरों के मित्र, घेरा बाँध

भिर्बद्धमण्डलं भ्रमद्भिर्भवनहंसैः, संनिहितप्राणसमं मरणाय चित्तमिव चित्रफलकमविचलं धारयन्तीम्, अर्चाबद्धोद्धूयमानधवलपुष्पदामकाम् पतिव्रतापताकामिव पत्युःप्रासयष्टिमिष्टामुपगूहमानाम्, बन्धोरिव निजचारित्रधवलस्य पुरो नेत्रोदकमुत्सृजन्तीम्, पत्युः पादपतनसमुद्गच्छदभ्यधिकबाष्पाम्भःप्रवाहप्रतिरुद्धदृशः कथमपि प्रतिपन्नादेशान्सचिवान्सन्दिशन्तीम्, अनुनयनिवर्तितविधुरवृद्धबन्धुवर्गवर्धमानध्वनिभिर्गृहाक्रन्दैराकृष्यमाणश्रवणाम्, भर्तुर्भाषितनिभैः पञ्जरसिंहबृंहितैर्ह्रियमाणहृदयाम्, धात्रया भर्तुर्भक्त्या च निजया प्रसाधिताम्, जरत्या मूर्च्छया च संस्तुतया

---

टीका—प्रक्षिपन्तीम्, आप्रप०—आप्रपदीनां=पादस्य अग्रम् प्रपदं तन्मर्यादीकृत्येति आप्रपदीना। ['आप्रपदं प्राप्नोति' पा० ५।२।८] पादाग्रपर्यन्तदीर्घा ताम् ग्रणे=सूत्रे ग्रथितां (मध्यमपदलो०) कुसुममालां=पुष्पमालां यमस्य=मृत्योः दोलाम्=दोलायन्त्रम् इवेत्युत्प्रेक्षायाम् आरूढाम्=अधिष्ठिताम्, अन्तर्गु०-अन्तः=मध्ये गुञ्जन्तः=शब्दायमानाः ये मधुकराः=भ्रमराः तैः मुखरेण=वाचालेन कर्णोत्पलेन=कर्णधृतकमलेन आमन्त्र्यमाणम्=आपृच्छ्यमाणम् लोचनं=नयनम् एव उत्पलं यस्याः ताम्, तस्याः लोचनोत्पलं तयैव सह विनाशोन्मुखमस्ति, अत एव तत्कर्णोत्पलं भ्रमर-झङ्कार-वाण्या स्वजातीयं नयोत्पलम् आमन्त्रयते स्मेवेति भावः। अत्र रूपकोत्थापितोत्प्रेक्षा, प्रदक्षिणी०—मणिनूपुराणां=मणिखचित-मञ्जीराणां बन्धुभिः सजातीयैः भवनहंसैः=राजभवनहंसैः, हंसा हि नूपुर-रवानुगामिनो भवन्तीति प्रसिद्धमेव अतः परस्परं बन्धुभावः। बद्धं रचितं मण्डलं=वृत्तं यस्मिन् कर्मणि यथा स्यात्तथा, मण्डलाकारेणेत्यर्थः भ्रमद्भिः=सञ्चरद्भिः प्रदक्षिणीक्रियमाणाम्=परिक्रम्यमाणाम् इवेत्युत्प्रेक्षायाम्, संनिहि०—संनिहितः=समीपे स्थितः आलिखितः इति यावत् प्राणसमः=प्राणतुल्यः पतिरित्यर्थः यस्मिन् तत् चित्रफलकम्=चित्रपटम् राज्ञः चित्रमिति यावत् संनिहितः=प्रत्यासन्नः प्राणसमः पतिः यस्मिन् तत् चित्तम्=मनः इवेत्युत्प्रेक्षायाम् करणाय अविचलं यथा स्यात्तथा दृढतयेत्यर्थः धारयन्तीम्=बिभ्राणाम् सहमरणे सा दृढचित्ता आसीदिति भावः, अर्चा०—अर्चार्थं=पूजार्थं बद्धं=संयमितम् उद्धूयमानं=वायुना सञ्चाल्यमानं धवलानां=श्वेतानां पुष्पाणां दामः=माला यस्यां ताम् (पताकाम् यष्टिञ्चेत्युभयत्र समानम्) पतिव्रतायाः=सत्या नार्याः पताकाम्=वैजयन्तीं ध्वजमिति यावत् इवेत्युत्प्रेक्षायाम्, इष्टां=पत्युः प्रियां पत्युः प्रासस्य=कुन्तस्य ['प्रासस्तु कुन्तः' इत्यमरः] यष्टिं दण्डम् उपगूहमानाम्=आश्लिष्यन्तीम्, बन्धो०—बन्धोः=बान्धवस्य निजं=चरित्रं चरित्रमेव चारित्रम् (स्वार्थे अण्) शुद्धचरितं तद्वद् धवलस्य=उज्ज्वलस्य नृपस्य=राज्ञः आतपत्रस्य=छत्रस्य पुरः अग्रे नेत्रोदकम्=अश्रुजलम् उत्सृजन्तीम्=त्यजन्तीम्, दृश्यते हि दुःखाकुलव्यक्तिः स्वजनं वीक्ष्य अश्रुपातं रोदिति। भवभूतिनाऽपि एष भावः प्रकटितः 'सन्तानवाहिन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि। दृष्टे जने प्रेयसि

टिप्पणी—पति के अन्यत्र मरने के कारण या किसी अन्य कारण से पति-देह न मिलने पर पति की पादुकायें अथवा प्रिय चिह्न पताकादि लेकर स्त्री को सती होने की अनुमति है। यहाँ राजा अभी जीवित ही हैं। इसलिए क्षत्रियाणी होने के नाते रानी पति की प्रिय बर्छी लेकर और उसे श्वेतपुष्पमाला से विभूषित करके सहमरण करना उचित ही है।

हिन्दी—घूमते हुए गृह-हँसों द्वारा परिक्रमा—जैसी की जा रही थी, जो प्राण-समान (पति) को रखे हुए चित्त की तरह प्राणसमान (पति) को (चित्रित) रखे हुए चित्रपट को मरणार्थ दृढ़ता से धारण कर रही थी, जो पूजार्थ बांधी और (हवा में) हिलती हुई श्वेतपुष्पमाला वाली प्रतिव्रता की पताका की तरह पूजार्थ (हवा में) हिलती हुई श्वेतपुष्पमाला वाली पति की बर्छी की छड़ी को गले लगा रही थी, जो अपने चरित्र के समान श्वेत राजछत्र के आगे इस तरह आँसू गिरा रही थी– जैसे बन्धु के आगे अश्रु गिराया करते हैं; जो पांव पड़ते समय निकल रहे अश्रुजल-प्रवाह से रुँधी हुई दृष्टिवाले एवं कठिनाई से (रानी के) आदेशों को समझे हुए पति के सचिवों को सन्देश दे रही थी, जिसके कान अनुनय-विनय करके वापस लौटाये गए दुःखाकुल वृद्ध-बन्धुवर्ग (के रुदन) से वृद्धि को प्राप्त हुई चिल्लाहट वाले घर के आर्तनादों की ओर खींचे जा रहे थे, जिसका हृदय पति के भाषण (–स्वर) के समान पिंजरों में बंधे सिंहों की दहाड़ों की ओर आकृष्ट हो रहा था, जो अपनी धाई और पतिभक्ति (दोनों) से अलंकृत की गई थी, परिचित (घर की) बूढ़ी

वार्यमाणाम्, सख्या पीडया च व्यसनसङ्गतया समालिङ्गिताम्, परिजनेन सन्तापेन च गृहीतसर्वावयवेन परीताम्, कुलपुत्रैरुच्छ्वसितैश्च महत्तरैरधिष्ठिताम्, कञ्चुकिभिर्दुःखैश्चातिवृद्धैरनुगताम्, भूपालवल्लभान्कौलेयकानपि सास्रमालोकयन्तीम्, सपत्नीनामपि पादयोः पतन्तीम्, चित्रपुत्रिका अप्यामन्त्रयमाणाम्, गृहपतत्रिणामप्यञ्जलिपुरस्तादुपरचयन्तीम्, पशूनप्यापृच्छयमानाम्, भवनपादपानपि परिष्वजमानां मातरं ददर्श ।

---

दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते' ॥ ( उत्तर रा० ४।८ ) पत्युः-पादयोः=चरणयोः यशोमत्या इति शेषः पतने=प्रणमने इत्यर्थः समुद्गमत्=समुद्गच्छत् अभ्यधिकं=प्रचुरं यत् बाष्पाम्भः=अश्रुजलं तस्य प्रवाहेण=स्रोतसा प्रतिरुद्धा=प्रतिबद्धा दृक्=दृष्टिः येषां तान् कथमपि=कृच्छ्रेण प्रतिपन्नः=ज्ञातः आदेशः=राज्ञ्या आज्ञा एतदनन्तरं भवद्भिः एवमेवं कार्यम् इत्यादिरूपा यैः तान् पत्युः=भर्तुः प्रभाकरवर्धनस्येत्यर्थः सचिवान्=मन्त्रिणः सन्दिशन्तीम्=संदिष्टान् कुर्वतीम्, अनुनय० अनुनयेन=प्रार्थनयेत्यर्थः निर्वर्तितः=परावर्तितः गृहं गन्तुं प्रेरितः इत्यर्थः अत एव विधुरः=विह्वलः वृद्धानां बन्धूनां यः वर्गः=गणः तेन वर्धमानः=उपचीयमानः ध्वनिः=शब्दः येषां तैः गृहस्य=भवनस्य आक्रन्दैः=करुणरोदनैः आकृष्यमाणं=ह्रियमाणमित्यर्थः श्रोत्रं=कर्णं यस्याः ताम्, भर्तृ०—भर्तुः=स्वामिनः भाषितनिभैः=वचस्तुल्यैः पञ्जरसिंहनादं=पञ्जरबद्धकेशरिणां ( मध्यपदलो० ) बृंहितैः=गर्जितैः ह्रियमाणम्=आकृष्यमाणं हृदयं यस्याः ताम्, भर्तुःध्वनिसादृश्येन सिंहध्वनिस्तस्यै रोचते स्मेति भावः, निजया=स्वीयया धात्र्या=उपमात्रा भर्तृभक्त्या=स्वामिप्रेम्णा च प्रसाधिताम्=भूषिताम्, अर्थात् सहमरणाय धात्र्या अथ च पतिभक्त्या अपि तस्यै स्वशरीर-प्रसाधने सहायता दत्ता, पतिभक्तिकारणादेव सा भर्तुः सज्जितेति यावत्, जरत्या=कयाऽपि वृद्धया अथ च मूर्छया संस्तुतया=परिचितया धार्यमाणाम् अवलम्ब्यमानाम् अन्यत्र आश्वास्यमानाम्, अर्थात् वृद्धा सा चिरपरिचिता आसीत्, मूर्छाऽपि मुहुर्मुहुरागमनेन परिचिता जाता, मुहुर्मुहुः मूर्छा तस्याः व्यथितहृदयं आश्वसयति स्म तां च धारयति स्म, व्यसने=संकटे सदा सङ्गतया=मिलितया सख्या=आल्या समालिङ्गिताम्=आश्लिष्टाम् अथ च व्यसने=भर्तुर्मरणरूपानिष्टे सङ्गतया=सम्बद्धया तदुत्पन्नयेत्यर्थः पीडया=वेदनया समालिङ्गिताम्=आक्रान्ताम्, गृहीताः=कलिताः सर्वे अवयवाः=अङ्गानि ( राज्ञ्याः ) येन तथाभूतेन परिजनेन=भृत्यवर्गेण परीताम्=परिवृताम् अथ च गृहीताः=आक्रान्ताः सर्वे अवयवा येन तेन सन्तापेन=शोकेन परीताम्=व्याप्ताम्, महत्तरैः=महिमवद्भिः कुलपुत्रैः=उच्चकुलोत्पन्नैः युवकैः अधिष्ठिताम्=कृताधिष्ठानाम् पुरोगतामिति यावत् अथ च महत्तरैः अतिदीर्घैः उच्छ्वसितैः=निश्वासैः अधिष्ठिताम्=पराभूताम्, अतिशयेन वृद्धैः=स्थविरैः कञ्चुकिभिः सौविदल्लैः अनुगताम्=अनुसृताम् अथ च अतिशयेन वृद्धैः=वृद्धिं प्राप्तैः दुःखैः=क्लेशैः अनुगताम्=आक्रान्ताम्, उपरि सर्वत्र प्रस्तुतानां धात्रीवभर्तृभक्त्यादीनाम् एक धर्माभिसम्बन्धेन तुल्ययोगितालङ्कारः स च श्लिष्टः सहोक्तिश्चात्र व्यङ्ग्या भूपालस्य=राज्ञः पत्युरित्यर्थः वल्लभान्=प्रियान् कौलेयकान्=कुले=( समूहे ) भवाः इति ( कुल+ढकञ् 'कुल कुक्षि-ग्रीवाभ्यः श्वास्यलङ्कारेषु' ( पा० ४।२।९६ ) श्वानः कुक्कुराः इति यावत् तान् अपि अस्रेण=वाष्पेण सहितं यथा स्यात्तथा आलोकयन्तीं=पश्यन्ती भर्तुः प्रियेभ्यः कुक्कुरेभ्यः वियुज्यमाना सा खिद्यतेस्मेति भावः सपत्नीनाम्=समानः=एकः पतिः, यासाम् तासाम् स्वभर्तुः अन्यपत्नीनामित्यर्थः पादयोः पतन्तीम्=प्रणमन्तीम् मृत्युसमये सा सपत्नीषु अपि ईर्ष्याम् अत्यजत् इति भावः, चित्रपुत्रिकाः चित्रगत पुत्तलिकाः ( मध्यपदलो० ) अपि आमन्त्र्यमाणाम्=आपृच्छमानाम्, गृहस्य पतत्त्रिणां=पक्षिणाम् पुरस्तात्=अग्रे अञ्जलिं=कराञ्जलिम् आरचयन्तीम्=कुर्वतीम्, पशून्=गोप्रभृतीन् आपृच्छमानाम्=आमन्त्रमाणाम्, पादपान्=वृक्षान् अपि परिष्वजमानाम्=आश्लिष्यन्तीम् मातरं ददर्श=दृष्टवान् ।

हिन्दी—मूर्छा और बूढ़ों (दोनों) से सँभाली जा रही थी, विपत्ति में साथ रहने वाली सखी और पीड़ा द्वारा गले लगाए हुए थी, सभी अंगों को पकड़े हुए भृत्यवर्ग और सन्ताप से घिरी हुई थी जिसके आगे आगे बड़े-बड़े कुलपुत्र और बड़े-बड़े उच्छ्वास चल रहे थे तथा पीछे अत्यन्तवृद्ध (बूढ़े) कञ्चुकी और अत्यन्त वृद्ध (वृद्धि) को प्राप्त हुए दुःख लगे हुए थे, जो राजा के प्रिय कुत्तों को भी अश्रु बहाती देख रही थी, सपत्नियों के भी पाँव पड़ रही थी, चित्रगत पुतलियों से भी विदा ले रही थी, घर के पक्षियों के आगे भी अँजलि बाँध रही थी, पशुओं से भी विदा ले रही थी, और घर के वृक्षों को भी गले लगा रही थी ।

---

१. कुलपुत्रोच्छ्वसितैः ।

दूरादेव च बाष्पायमाणदृष्टिरभ्यधात्—'अम्ब त्वमपि मां मन्दपुण्यं त्यजसि। प्रसीद। निवर्तस्व' इत्यभिदधान एव च सस्नेहमिव नूपुरमणिमरीचिभिश्चुम्ब्यमानचूडश्चरणयोर्न्यपतत्। देवी तु यशोमती तथा तिष्ठति पादनिहितशिरसि विमनसि कनीयसि प्रेयसि तनये गुरुणा गिरिणेवोद्वेगावेगेनावष्टभ्यमाना, मूर्च्छान्धतमसं रसातलमिव प्रविशन्ती, बाष्पप्रवाहेणेव चिरनिरोधसम्पिण्डितेन स्नेहसम्भारेण निर्भराविर्भूतेनाभिभूयमाना, कृतप्रयत्नापि निवारयितुं न शशाक बाष्पोत्पतनम्। उत्कटकुचोत्कम्पप्रकटितासह्यशोकाकूता च गद्गदिकागृह्यमाणगलविकला निःसामान्यमन्युतरलीक्रियमाणाधरोद्देशा पुनरश्वत्स्फुरणनिविडितनासापुटा निमील्य नयने नयनाम्भःसेकप्लवेन प्लावयन्ती विमलौ कपोलौ सञ्छाद्य करनखमयूखमालाखचिततनुना तन्वन्तरनिर्गच्छदच्छाश्रुस्रोतसेवांशुकपटान्तेन

---

टीका—उपरि सर्वत्र अपिशब्द-बलात् दण्डापूपन्यायेन अर्थापत्तिरलङ्कारः।

बाष्पम् = अश्रु उद्गिरन्तीति बाष्पायमाणा दृष्टिः नयनं यस्य स हर्षवर्धनः अभ्यधात् = अकथयत्—अम्ब! मातः! मन्दं पुण्यं यस्य तम् मन्दभाग्यमित्यर्थः त्यजसि = मुञ्चसि। प्रसीद = प्रसन्ना भव। निवर्तस्व = परावर्तस्व तस्मात् मरणनिश्चयादिति शेषः। अभिदधानः = कथयन् एव स्नेहेन सहितं यथा स्यात्तथा इव नूपुरयोः = मञ्जीरयोः मणीनां = रत्नानां मरीचिभिः = रश्मिभिः चुम्ब्यमाना = स्पृश्यमाना चूडा = शिखा यस्य तथाभूतः चरणयोः = मातुः पादयोः न्यपतत् पतितवान्। पादयोः निहितं = स्थापितं शिरः येन तस्मिन् विगतं मनः यस्य तस्मिन् उद्विग्ने इत्यर्थः कनीयसि = द्वयोः तनययोः अतिशयेन अल्पः (अल्प + ईयसुन् कनादेशश्च) इति कनीयान् तस्मिन् प्रेयसि = अतिशयेन प्रिये। तनये = पुत्रे हर्षवर्धने तथा तेन प्रकारेण तिष्ठति = वर्तमाने सति गुरुणा = महता उद्वेगस्य = क्षोभस्य आवेगेन = आवेशेन अवष्टभ्यमाना = गृह्यमाणा, मूर्छा = मोह एव अन्धतमसम् = अन्धयति अन्धीकरोतीति यावत् इति (अन्ध + णिच् + अच्) अन्धम् तमः इति अन्धतमसम् [ अव, सम, अन्ध, एभ्यः परस्य तमः शब्दस्य अच् भवति 'अवसमन्धेभ्यस्तमसः' पा० ५।४।७२ ] निविडान्धकारमित्यर्थः रसातलम् = पातालम् इवेत्युपमायाम् प्रविशन्ती = प्रवेशं कुर्वती, बाष्पप्रवाहेण = अश्रुप्रवाहेण इवेत्युपमायाम्, चिरेण = दीर्घकालेन यः निरोधः नियन्त्रणमित्यर्थः तेन सम्पिण्डितेन = सञ्चितेन स्नेहस्य = वात्सल्यस्य सम्भारेण राशिना निर्भरं = साकल्येन पूर्णतयेति यावत् यथा स्यात्तथा आविर्भूतेन = प्रकटितेन अभिभूयमाना = आक्रम्यमाणा आकुलीक्रियमाणेत्यर्थः, कृतः प्रयत्नः = बाष्परोधनप्रयासः यया सा बाष्पोत्पतनम् = अश्रुप्रवाहम् निवारयितुं = रोद्धुं न शशाक = अशक्नोत्। उत्कट०—उत्कटः = महान् यः कुचयोः = स्तनयोः उत्कम्पः = वेपथुः तेन प्रकटितं = सूचितम् असह्यस्य = सोढुमशक्यस्य शोकस्य = दुःखस्य आकूतम् = अभिप्रायो यया, सा गद्गदिकया = गद्गदम् एव गद्गदिका गद्गदस्वरः इत्यर्थः तया गृह्यमाणः रुध्यमानः यः गलः = कण्ठः तेन विकला = व्याकुला, निर्गतं सामान्यं

टिप्पणी—बाष्पप्रवाहेण—हम देखते हैं कि जल-प्रवाह को देर तक रोक रखा जाय, तो वह जोर से फूटता है और मुश्किल से रोका जा सकता है। यही बात आँसुओं की भी समझें। देर तक रोके हुए वे बड़े वेग से फूट पड़ते हैं। स्नेह = प्रवाह भी इसी तरह वेग से फूट पड़ा।

करनख— रानी भी रेशमी चादर ओढ़ रही थी जिसके आँचल से वह अपना मुंह ढक रही थी। चादर के भीतर से कर के नखों की किरणें छन कर आ रही थीं। वे सफेद थीं इसलिये अश्रु जैसी दिखाई पड़ रही थीं।

हिन्दी—आँखों में आँसू भरे हुए वह दूर से ही बोल उठा—'मां! क्या तुम भी मुझ मन्दभागी को छोड़ रही हो? कृपा करो। इस (मरणनिश्चय) से वापस हो जाओ' इस तरह कहते-कहते ही वह नूपुरों की मणियों की किरणों द्वारा बालों में चूमा जाता हुआ (मां के) चरणों में गिर गया। चरणों में सिर रखे छोटे पुत्र के इस तरह विह्वल होते हुए रानी यशोमती पर्वत के समान महान् उद्वेग के आवेग के वशीभूत हुई, पाताल के समान मूर्छा के घनान्धकार में प्रवेश करती हुई, अश्रु-प्रवाह के समान चिरकाल तक रोके रहने से इकट्ठे ही फूट पड़े स्नेह-प्रवाह से अभिभूत होती हुई, प्रयत्न किये हुए भी (अपने) अश्रुपात को न रोक सकी। कुचों के प्रबल कम्प द्वारा असह्य शोक का भाव प्रकट किये, गद्गद स्वर से गला रुक जाने के कारण विकल हुई, असाधारण दुःख के कारण अधर-प्रान्त को स्फुरित करती हुई, बार-बार फड़कने से घ्राण-पुट को सिकोड़ती हुई आँखें मींचकर अश्रुजल के सेक प्रवाह से कपोलों को सींचती हुई, हाथ के नखों की किरणावली से व्याप्त कलेवर वाले सूक्ष्म भीतरी भागों से (छनकर) निकल रहे अश्रुजल प्रवाह से—जैसे

किञ्चिदुत्तानितं वदनेन्दुं दूयमानमानसा स्मरन्ती प्रस्नुतस्तनी प्रसवदिवसादारभ्य सकलमङ्कशायिनः शैशवमस्य ज्ञातिगृहगतहृदया 'अम्ब, तात, न पश्यतं पापां परलोकप्रस्थितां मामेवमतिदुःखिताम्' इति मुहुर्मुहुराक्रन्दन्ती पितरौ, 'हा वत्स, विश्रान्तभागधेयया न दृष्टोऽसि' इति प्रेष्ठं ज्येष्ठं तनयमसंनिहितं क्रोशन्ती' 'अनाथा जाता' इति श्वशुरकुलवर्तिनीं दुहितरमनुशोचन्ती, 'निष्करुण, किमपराद्धं तवामुना जनेन' इति दैवमुपालभमाना, 'नास्ति मत्समा सीमन्तिनी दुःखभागिनी' इति निन्दन्ती बहुविधमात्मानम्, 'मुषितास्मि नृशंस त्वया' इत्यकाण्डे कृतान्तं गर्हमाणा मुक्तकण्ठमतिचिरं प्राकृतप्रमदेव प्रारोदीत् ।

---

टीका—यस्मात् असामान्येन असाधारणेनेति यावत् मन्युना = दुःखेन तरलीक्रियमाणः=चञ्चलीक्रियमाणः सञ्चाल्यमानः इति यावत् अधरस्य = अधरोष्ठस्य उद्देशः=अन्तः यस्याः सा, पुनरुक्तेन = पुनः पुनः जातेन स्फुरणेन = स्पन्दनेन निविडितं = सान्द्रीभूतं सङ्कुचितमिति यावत् नासापुटं=घ्राणपुटं यस्याः सा, नयने निमील्य = मुद्रयित्वा नयनयोः अम्भसः अश्रुजलस्य सेकस्य = अभ्युक्षणस्य प्लवेन = प्रवाहेण विमलौ = स्वच्छौ कपोलौ = गण्डौ प्लावयन्ती = आपूरयन्ती करयोः = हस्तयोः नखानां = करुहाणां मयूखानां = किरणानां मालया = आवल्या खचिता = छुरिता संयुक्तेत्यर्थः तनुः = कलेवरं यस्य तेन तनुभ्यः = सूक्ष्मेभ्यः अन्तरेभ्यः = मध्यभागेभ्यः उद्गतपटस्य सूक्ष्मतन्तुमध्यभागेभ्यः निर्गच्छत् = निःसरत् अच्छं = स्वच्छं यत् अश्रम् = बाष्पः अश्रु इति यावत् तस्य स्रोतसा = प्रवाहेण इवेत्युत्प्रेक्षायाम् अंशुकपटस्य = कौशेयवसनस्य अन्तेन प्रान्तेन किञ्चित् = ईषद् यथा स्यात्तथा उत्तानितम् = उन्नमितं वदनं = मुखम् इन्दुं = चन्द्रम् इवेत्युपमितत्पु० सञ्छाद्य = पिधाय आवृत्येत्यर्थः दूयमानं = व्यथमानं मानसं = हृदयं यस्याः सा, प्रसवः = अपत्य-जननं तस्य दिवसात् आरभ्य = आदाय अङ्के = क्रोडे शयितुं शीलमस्यास्तीति तथोक्तस्य अस्य = हर्षवर्धनस्य सकलं = सर्वं शैशवं = शैशवावस्थां स्मरन्ती = स्मृतिविषयीकुर्वती अत एव प्रस्नुतौ = क्षरितौ स्तनौ = पयोधरौ यस्याः तथा सती, ज्ञाति-गृहं = पितृभवनं तत्र गतं हृदयं यस्याः सा—'परलोके = लोकान्तरे प्रस्थितां = गमनोद्यताम् एवम् अतिदुःखिताम् दुःखाकुलां मां न पश्यतम् = अवलोकयतम् ( द्विव० ) इति पितरौ = मातापितरौ मुहुर्मुहुः = आक्रन्दती सार्तनादं संबोधयन्ती, हा वत्सक = पुत्र राज्यवर्धन ! विश्रान्तं = समाप्तं भागः एव भागधेयम् ( भाग + धेयट् स्वार्थे ) भाग्यमित्यर्थः यस्याः तया मयेत्यर्थः न दृष्टः असि = मरण-समये नावलोकितोऽसि' इति प्रेष्ठम् = अतिशयेन प्रियम् ( प्रिय + इष्ठन् ) ज्येष्ठम् = अतिशयेन वृद्धम् ( वृद्ध + इष्ठन् ज्यादेशश्च ) असंनिहितम् = असमीपस्थं तनयं = पुत्रं राज्यवर्धनम् क्रोशन्ती = आक्रन्दती, निर्गता करुणा = दया यस्मात् तत्सम्बुद्धौ निर्दय ! इत्यर्थः अमुना जनेन मयेत्यर्थः तव किम् अपराद्धम् = अपराधः कृतः इति दैवं = भाग्यं उपालभमाना = भर्त्सयन्ती मत्समा = मया समा मनुल्येत्यर्थः सीमन्तिनी = नारी दुःखभागिनी = दुःखभाजनम् इति आत्मानं बहुविधं = नानाप्रकारं यथा स्यात्तथा निन्दन्ती = अधिक्षिपन्ती, नृशंस ! नॄन् = नरान् शंसति = हिनस्तीति ( नृ + √ शंस + अण् कर्मणि ) क्रूर इत्यर्थः त्वया अहं मुषिता = लुण्ठिता अस्मि इति अकाण्डे = सहसा कृतान्तं = यमं गर्हमाणा = निन्दन्ती, मुक्तः कण्ठः यस्मिन् कर्मणि यथा स्यात्तथा उच्चैः तारस्वरेणेति यावत् प्राकृता = साधारणा प्रमदा = स्त्री इव प्रारोदीत् = रुरोद ।

हिन्दी—रेशमी चादर के आंचल से कुछ ऊपर किये हुए चन्द्रमुख को ढककर मन में व्यथित होती हुई, प्रसव-दिन से लेकर गोद में लेटे रहने वाले उस (हर्षवर्धन) की सारी बाल्यावस्था को स्मरण करती हुई, स्तनों से दूध बहाती हुई, अपने मां बाप के घर (की याद) को मन में लाये—'मां जी, पिताजी ! क्या परलोक को प्रस्थित हुई इस तरह अति दुःखी मुझ पापिन को आप नहीं देखते ? यों माता-पिता के प्रति आर्तनाद करती हुई—हां बेटे ! मैं मन्दभागिनी तुझे नहीं देख पाई'—इस तरह पास में न रहते हुए अपने बहुत प्यारे ज्येष्ठ पुत्र ( राज्यवर्धन ) को लक्ष्य करके चिल्लाती हुई—'तू अनाथ हो गई है' यों ससुराल में रहती हुई ( राजश्री ) की तरफ शोक करती हुई 'निर्दय ! इस जन ने तेरा क्या बिगाड़ा है; यों भाग्य को कोसती हुई, मुझ-जैसी दुखिया स्त्री ( कोई ) नहीं' 'इस तरह तरह-तरह से अपनी ही निन्दा करती हुई 'रे निर्दयी ! तेरे द्वारा मैं लूट ली गई हूं' यों सहसा यम को फटकारती हुई साधारण स्त्री की तरह देर तक गला फाड़-फाड़ कर रोती रही ।

प्रशान्ते च मन्युवेगे सस्नेहमुत्थापयामास सुतम्। हस्तेन चास्य प्ररुदितस्य पक्ष्मपालीपुञ्ज्यमानानखकिरण-निवहां द्रुतामिवाधिकतरं क्षरन्तीं दृष्टिमुन्ममार्ज। स्वयमपि कठोररागपरिपीयमानेन धवलिम्ना मुच्यमानोदरे क्वथदस्रश्वयत्पर्यन्ते शुक्लशीकरतारतारकितपक्ष्मणी सूक्ष्मतराश्रुबिन्दुपरिपाटीपतनानुबन्धविधुरे लोचने पुनः पुनरापूर्यमाणे प्रमृज्य बाष्पार्द्रगण्डगृहीतां च श्रवणशिखरमारोप्य शोकलम्बामलकलतामधःस्रस्तविलोलबालिकाव्याकुलितां च समुत्सार्य तिरश्चीं चिकुरसटामश्रुप्रवाहपूरितमार्द्रं च किंचिच्च्युतमुत्क्षिप्य हस्तेन स्तनोत्तरीयं तरङ्गितमिव[1] मग्नांशुकपटान्ततनुताम्रलेखालाञ्छितलावण्यकुब्जि[2]कार्जितराजतराजहंसास्यसमुद्गीर्णेन पयसा प्रक्षाल्य

---

टीका—मन्यु = दुःखं तस्य वेगे = आवेशे प्रशान्ते=समाप्ते सस्नेहं=स्नेहेन सह सुतं = पुत्रं हर्षवर्धनम् उत्थापयामास= उत्थापितवती। हस्तेन = स्वकरेण च प्ररुदितस्य = प्रकर्षेण रोदनं कृतवतः अस्य = हर्षवर्धनस्य पक्ष्म०—पक्ष्मणां तत्र रोम्णां पालीषु = प्रान्तेषु पुञ्ज्यमानः = प्रोञ्छनसमये एकत्रीक्रियमाणः नखकिरणानां=कररुहांशूनां निवहः = समूहः यस्याः सा द्रुताम् = द्रवीभूताम् इवेत्युत्प्रेक्षायाम् अधिकतरम् = पूर्वापेक्षया अतिशयेन अधिकं यथा स्यात्तथा क्षरन्तीम्= स्रवन्तीं दृष्टिं = चक्षुः उन्ममार्ज = प्रोञ्छितवती। स्वयमपि कठोरः = गहनः यः रागः=लालिमा तेन परितः पीयमानेन = पानविषयीक्रियमाणेन अभिभूयमानेनेत्यर्थः धवलिम्ना = श्वैत्येन मुच्यमानम् = त्यज्यमानम् उदरम् = अभ्यन्तरभागः ययोः तथाभूते ( लोचने ) सतत-रोदनात् लोचनयोः श्वेतिमागतः लालिम्ना च तत् स्थानं गृहीतमिति भावः, क्वथत् = पच्यमानम् उष्णोष्णमिति यावत् यत् अस्रम् = अश्रु तेन श्वन् = स्फायमानः पर्यन्तः प्रान्तभागः ययोः ते शुक्लेन = धवलेन शीकरेण = अश्रुकणेन तारम् = भासमानम् तारकितं=सञ्जाततारकं [ 'तदस्य सञ्जातं तारकादिभ्य इतच्' पा० ५।२।३६ ] तारकसदृश-भासमान-शीकरयुक्तमित्यर्थः पक्ष्म = नेत्र लोम ययोः ते, सूक्ष्मतराणाम् = अतिशयेन सूक्ष्माणाम् अश्रुबिन्दूनाम्=वाष्पबिन्दूनां या परिपाटी = परम्परा तस्याः पतनस्य = गलनस्य यः अनुबन्धः – सातत्यं तेन विधुरे= विह्वले, पुनः पुनः आपूर्यमाणे = अश्रुणा भ्रियमाणे लोचने = स्वनयने प्रमृज्य = प्रोञ्छ्य, बाष्पेण=अश्रुवारिणा आर्द्रः = क्लिन्नः यः गण्डः = कपोलः तेन गृहीताम् = आकृष्टाम् तत्र संसक्तामिति यावत् अलकलताम् अलकं लतामिवेत्युपमिततत्पु० लतासदृशचूर्णकुन्तलमित्यर्थः श्रवणस्य = कर्णस्य शिखरं = उपरितनं भागम् आरोप्य कर्णोपरि संस्थाप्येति यावत् अधः = नीचैः स्रस्ता = पतिता, नीचैः गतेत्यर्थः विलोला:प्रेंखती च या बालिका = गोलाकारकर्णाभरणविशेषः ( 'बालिका। बालायां बालुकापत्रकाहूला कर्णभूषणे' इति मेदिनी ] तेन व्याकुलितां=संसक्तामित्यर्थः तिरश्चीम्=वक्रताम् वक्रतया तस्याः स्कन्धे लम्बमानामिति भावः चिकुरसटा = केशसमूहम् समुत्सार्य=अपनीय, अश्रूणां=

टिप्पणी—तरङ्गितमिव—इसके अनेक पाठान्तर मिलते हैं। यह रानी के मुखकमल का विशेषण है। यहाँ 'तरंगितमिव नखांशुपटलेन' वाला पाठ हमें अच्छा लगता है। रानी पानी से मुख धो रही थी, नखों की किरणावली मुख पर पड़ने से मुख 'तरंगित'–तरंगोंवाला–जैसा प्रतीत हो रहा था। अच्छा भाव है किन्तु हमने काश्मीरी संस्करण का पाठ लेकर 'तरङ्गित' को 'पयसा' से सम्बद्ध किया है। रानी जिस पानी से मुख धो रही थी उससे मुख तरंगित-जैसा हो रहा था। इसमें भी कोई कठिनाई नहीं। किंतु कठिनाई तो 'मग्न''''समुद्गीर्णेन' इस एक ही समस्त पद की व्याख्या में आ रही है।

हिन्दी-दुःख वेग के ठंडा पड़ जाने पर उसने स्नेह के साथ पुत्र को उठाया और खूब रोये हुए उसकी आँख जो बरौनियों पर एकत्रित नख किरणों के समूह वाली लग रही थी मानो पिघली हुई वह पहले की अपेक्षा और भी अधिक बह रही हो—हाथ से पोंछी' अपने आप भी आँखें पोंछ कर - गहरी लाली से पी जाती हुई जिनकी सफेदी भीतरी भाग को छोड़ बैठी थी, जिनके छोर उबलते हुए ( गर्म-गर्म ) आँसुओं से सूज रहे थे, जिनकी बरुनियों पर श्वेत अश्रुकण तारों के समान चमक रहे थे, जो बड़े सूक्ष्म अश्रुबिन्दुओं के तांते के लगातार गिरते रहने से विकल हो रहे थे और जो बार-बार ( आंसुओं से ) भरते जा रहे थे – अश्रुओं से गीले बने कपोल पर चिपकी शोक के कारण लंबी बिखरी बालों की लता-जैसी लट कान के ऊपर करके, नीचे खिसकी और हिलती हुई कान की बाली में फँसे हुए कुटिल केश-समूह को हटाकर, अश्रुप्रवाह से भरी और गीली, कुछ नीचे खिसकी स्तनों की चादर को हाथ से ऊपर करके (मुख पर) जोर से दबाई गई रेशमी चादर की किनारी भी लाल धारियों से चिह्नित हुए लावण्य वाले, कुब्जा दासी के द्वारा झुकाये हुए

---

१. 'तरङ्गितमिव नखांशुपटलेन' २. 'कुब्जिका'

**मुखकमलं कलमूकलोकविधृते वासःशकले शुचिनि समुन्मृज्य पाणी सुतवदनविनिहितनिभृतनयनयुगला चिरं स्थित्वा पुनः पुनरायतं निःश्वस्यावादीत्—'वत्स, नासि न प्रियो निर्गुणो वा परित्यागार्हो वा। स्तन्येनैव सह त्वया पीतं मे हृदयम्। अस्मिंश्च समये प्रभूतप्रभुप्रसावान्तरिता त्वां न पश्यति दृष्टिः। अपि च पुत्रक, पुरुषान्तर-विलोकनव्यसनिनि राज्योपकरणमकरुणा वा नास्मि लक्ष्मीः क्षमा वा। कुलकलत्रमस्मि चारित्रमात्रधना धर्म-धवले कुले जाता। किं विस्मृतोऽसि मां समरशतशौण्डस्य पुरुषप्रकाण्डस्य केशरिण इव केशरिणीं गृहिणीम्।**

---

टीका—बाष्पाणां प्रवाहेण=आपूरेण पूरितम्=आप्लावितम् आर्द्रं=क्लिन्नं च किञ्चित्=ईषत् यथा स्यात्तथा च्युतं=स्वस्था-नात् स्रस्तं स्तनोत्तरीयं=स्तनवस्त्रं हस्तेन उत्क्षिप्य=उत्थाप्य यथास्थानं विन्यस्येति यावत्, तरङ्गितमिव एतद् 'मुखकमलम्' विशिनष्टि, किन्तु अस्यार्थो न स्पष्टीभवति। कॉवल-महोदयानुसारेण वयमपि काश्मीरसंस्करणमनुसृत्यात्र मग्नोंशु''''लावण्यम्' इति पृथग् विशेषणं 'कुञ्चिका' स्थाने च 'कुब्जिका' इति कृत्वा व्याख्यास्यामः। तरङ्गितमिवेति 'पयसा' योज्यम्। मग्ना०—मग्नः=सम्पीडितः वाष्पवारिणा क्लिन्ने कपोलस्थले दृढं संसक्तः इति यावत् यः अंशुकपटः =कौशेयवस्त्रम्=उत्तरीयमित्यर्थः तस्य अन्तस्य=अञ्चलस्य तनवः=सूक्ष्माः ताम्राः=ताम्रवर्णाः याः लेखाः=रेखाः पंक्तयः इत्यर्थः ताभिः लाञ्छितं=चिह्नितं लावण्यं=सौन्दर्यं यस्य तत् मुखं कमलमिवेत्युपमिततत्पु०, कमलपक्षे मग्नाः अंशुकपटान्तवत् तनवः ताम्राः लेखाः ताभिः लाञ्छितमिति पूर्ववद् योज्यम्, कुब्जिका०—कुब्जिकया=कयाऽपि अन्तःपुरवासिन्या कुब्जया स्त्रिया [ कुब्जाद्याऽवरोधे भवन्तीति वाणः कादम्बर्यामप्याह—'कुब्जकिरातवामनवधिर-जडजनपुरःसरेण' ] आवर्जितं=न्युब्जीकृतम् यत् राजतं=रजतस्येदम् रौप्यमयमित्यर्थः राजहंसास्यम्=राजहंसा-कारस्य जलपात्रस्य मुखम् तस्मात् समुद्गीर्णेन=निःसृतेनेत्यर्थः, कमलपक्षे, कुब्जिकया=सुगन्धितपुष्पविशेषेण आवर्जितः=आकृष्टः इत्यर्थः राजतः=रौप्यमयः रौप्यवत् श्वेतवर्णः इत्यर्थः यः राजहंसः=श्रेष्ठहंसः तस्य आस्यात्=मुखात् उद्गीर्णेन=उद्वान्तेन, कमलमपि राजहंसमुखोद्गीर्णजलेन तरङ्गितमिव भवति, पयसा=जलेन तरङ्गितम्=सञ्जाततरङ्गम् इवेत्युत्प्रेक्षा सा च श्लिष्टोपमोत्थापिता, मुखं कमलमिवेत्युपमिततत्पु० प्रक्षाल्य=प्रमार्ज्य, कलमूकाः=वधिरमूकाः [ 'कलमूकोऽवाक्श्रुतिः' इति हलायुधः ] च ते लोकाः=जनाः तैः विधृते=गृहीते शुचिनि=शुद्धे वासःशकले=वस्त्रखण्डे पाणी=हस्तौ समुन्मृज्य=प्रोञ्छ्य सुतस्य=पुत्रस्य हर्षवर्धनस्य वदने=मुखे

टिप्पणी—मग्नांशुक०—यह पयसा का विशेषण है, जिससे रानी अपना मुँह धो रही है, इस समास का विग्रह इस तरह हो सकता है—'मग्नश्चासौ अंशुकपटान्ततनुताम्रलेखालांछितलावण्यश्चासौ कुञ्चिकावर्जितश्चासौ राजतश्चासौ राजहंसः तस्य आस्यात् समुद्गीर्णेन' शब्दार्थ यह होगा—राजहंस (के आकार के जलपात्र) के मुख से—जो चांदी का ( राजत ) था, चाभी से खोलकर नीचे झुकाया हुआ था, मग्न ( डुबा अर्थात् ढका हुआ ) था और ढकने के रेशमी वस्त्र के छोर से जिसका लावण्य चिह्नित था। यह अर्थ जंचता नहीं है। वासुदेव शरण अग्रवाल ने अपने 'हर्षचरित : एक सांस्कृतिक अध्ययन' में इस पंक्ति में वाण का श्लेष चमत्कार बताकर इसके चार अर्थ कर रखे हैं। हम उनकी शब्दों की तोड़-मरोड़ और दूरतक की खींचतानी के अर्थों में कोमलमति छात्रों को ले जाना नहीं चाहते। इस समास में 'लावण्य' तक एकविशेषण और 'कुञ्चिका' के स्थान में 'कुब्जिका' करके काश्मीरी पाठ को हम ठीक समझते हैं। रानी ने मुख पर चादर की किनारी जोर से दबा रखी थी जिससे मुख पर निशान पड़ गए, कमल पर भी लाल लाल धारियों के निशान रहते हैं। कमल भी कुब्जिका फूल की ओर आवर्जित ( आकृष्ट ) रहता है चांदी जैसा श्वेत होता है और राजहंस के मुख से फेंके पानी से तरंगित-सा रहता है। यहाँ उपमा, उत्प्रेक्षा और श्लेष का संकर है।

हिन्दी—राजहंसाकार चांदी के जलपात्र से निकले हुए जल से (अपना) कमल सा मुख धोकर, गूंगे बहिरे लोगों द्वारा (हाथ में) पकड़े शुद्ध तौलियों से हाथ पोंछकर, पुत्र के मुख की ओर निश्चल दृष्टिगाड़े देर तक खड़ी रहकर और फिर बार-बार गहरी आह खींच कर बोली—बेटा। यह बात नहीं है कि तू प्रिय नहीं, गुणरहित और छोड़ दिये जाने योग्य है। स्तनों के दूध के साथ ही तूने मेरा हृदय पी रखा है। इस समय पति के अश्रुप्रवाहों से व्यवहित हुई मेरी दृष्टि तुझे नहीं देख रही है। अपि च बेटा, दूसरे पुरुष को देखने की व्यसनी राज्य की वस्तु निष्करुण लक्ष्मी अथवा पृथिवी तो मैं हूं नहीं। नहीं मैं तो चरित्र-मात्र की धनी कुलवधू हूं, धर्म से निर्मल बने कुल में उत्पन्न हुई हूं। क्या तू भूल गया है कि मैं सैकड़ों संग्रामों में मदमत्त रहने वाले प्रकाण्ड-वीरपुरुष की पत्नी हूं जैसे सिंहनी सिंह की पत्नी हुआ करती है।

वीरजा वीरजाया वीरजननी च मादृशी पराक्रमक्रीता कथमन्यथा कुर्यात् । एवंविधेन पित्रा ते भरतभगीरथना-भागनिभेन नरेन्द्रवृन्दारकेण गृहीतः पाणिः । आसेवितः सेवासंभ्रान्तानेकसामन्तसीमन्तिनीसमावर्जितजाम्बूनदघटाभिषेकः शिरसा । लब्धो मनोरथदुर्लभो महादेवीपट्टबन्धसत्कारलाभो ललाटेन । आपीतौ युष्मद्विधैः पुत्रैरमित्रकलत्रबन्दीवृन्दविधूयमानचामरमरुच्चलचीनांशुकधरौ पयोधरौ । सपत्नीनां शिरःसु निहितं नमत्सिखिलकटककुटुम्बिनीकिरीटमाणिक्यमालार्चितं चरणयुगलकम् । एवं कृतार्थसर्वावयवा किमपरमपेक्षे क्षीणपुण्या । भर्तुमविधवैव

---

टीका–निहित = प्रेरितं दत्तमित्यर्थः निभृतयोः = निश्चलयोः नयनयोः = नेत्रयोः युगलं = द्वयं पयसा, आयतं = दीर्घं यथा स्यात्तथा निःश्वस्य = निःश्वासम् उत्सृज्य अवादीत् = अकथयत्—निर्गुणः = गुणरहितः परित्यागस्य = उत्सर्जनस्य अर्हः = योग्यः, स्तन्येन = स्तनेभवम् ( यत् ) दुग्धम् तेन सह पीतं = पानविषयीकृतम् मे हृदयम् अर्थात् त्वम् मम हृदयमसि । प्रभूताः = बहवः प्रभोः = भर्तुः प्रभाकरवर्धनस्येत्यर्थः ये प्रसादाः = अनुग्रहाः तैः अन्तरिता = व्यवहिता मे दृष्टिः त्वां न पश्यति, अयं भावः तव मम च मध्ये व्यवधानभूताः भर्तृकृताः प्रचुराः प्रसादाः सन्ति ये मां त्वां द्रष्टुं न ददति, भर्तृकृतप्रसादानां कृते अहमस्मिन् क्षणे तमेव पश्यामि—न तु त्वामिति भावः । अन्यपुरुषः इति पुरुषान्तरम् तस्य विलोकने = व्यसनम् = आसक्तिः यस्याः सा, राज्यस्य उपकरणम् = द्रव्यं साधनमिति यावत्, अकरुणा = निर्दया लक्ष्मीः = राजलक्ष्मीः वा क्षमा = पृथिवी न अस्मि, अर्थात् यथा राजलक्ष्मीः पृथिवी वा एकस्मिन् राज्ञि मृते अपरं राजानम् आश्रयति तथाहं नास्मि, एकपतिका एवास्मि । कुलस्य कलत्रं = कुलनारी अस्मि चरित्रम् एव चारित्रं ( स्वार्थे अण् ) चारित्रम् एव चारित्रमात्रं = सच्चरित्रमात्रं धनं यस्याः सा धर्मेण = सुकृताचरणेन धवले = निर्मले कुले = वंशे जाता । विस्मृतः असि = विस्मृतवानसि समराणां = युद्धानां यानि शतानि शतशः युद्धानीत्यर्थः तेषु शौण्डस्य = मदमत्तस्य पुरुषेषु प्रशस्तः इति पुरुषप्रकाण्डम् [ 'मतल्लिका-मचर्चिका-प्रकाण्डमुद्धतल्लजौ' । प्रशस्तवाचकान्यमूनि" इत्यमरः ] तस्य केशरिणः = सिंहस्य केशरिणीं = सिंहीम् इवेत्युपमायां गृहिणीं = पत्नीम् । वीरात् = वीरपितुः जाता इति वीरजा, वीरस्य जाया = पत्नी, वीरयोः = राज्यवर्धन-हर्षवर्धनाख्ययोः पुत्रयोः जननी = माता, मादृशी = अहमिव दृश्यते या इति मादृशी = मद्विधेत्यर्थः पराक्रमेण = शौर्येण क्रीता = गृहीतेत्यर्थः कथम् अन्यथा = प्रकारान्तरेण अर्थात् पत्युः मरणानन्तरं जीवनं धारयेद् । एवंविधेन = एतादृशेन भरतश्च = दुष्यन्तपुत्रश्च भगीरथः = सगरवंशजः प्रसिद्धः राजविशेषः यो गङ्गां पृथिव्याम् उदतारयत् यस्य कारणाच्च गङ्गा भागीरथीति नाम जग्राह, नाभागः = अम्बरीषपिता राजविशेषश्च नाभागाः तैः तुल्यः इति तन्निभः तेन नरेन्द्राणां = महीपानां वृन्दारकः = देवः अथवा नरेन्द्रेषु वृन्दारकः = श्रेष्ठः तेन मम पाणिः = करः गृहीतः मम पाणिग्रहणं कृतमित्यर्थः । सेवायां संभ्रान्ताः = व्यग्राः याः अनेकेषां = बहूनां सामन्तानाम् = अधीननृपाणां सीमन्तिन्यः = वध्वः ताभिः आवर्जिताः = निम्नमुखीकृताः ये जाम्बूनदस्य = सुवर्णस्य [ 'रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्' इत्यमरः 'जम्बूद्वीपे जम्बूफलरसोत्पन्नद्यां जातं जाम्बूनदम्' इति क्षीरस्वामी ] घटाः = कलशाः तैः अभिषेकः = स्नानम् आसेवितः = प्राप्तः इत्यर्थः शिरसा अभिषेकः = स्नानम् ताभिः शिरसि स्नापितेत्यर्थः । मनोरथैः = अभिलषितैः दुर्लभः = दुष्प्रापः महादेव्याः = पट्टराज्ञ्याः यः पट्टबन्धः = मुकुटबन्धनं तदेव सत्कारः = संमानः तस्य लाभः ललाटेन = भालेन लब्धः = प्राप्तः पट्टराज्ञीत्वपदेन संमानितास्मीतिभावः । यूयम् विधाः = प्रकाराः येषां तैः युष्मद्विधैः पुत्रैः = तनयैः अमित्राणां = शत्रूणां कलत्राणि = स्त्रियः एव बन्दीवृन्दं = कारागुप्तजनगणः तेन विधूयमानं = वीज्यमानं सञ्चाल्यमानमिति यावत् यत् चामरं तस्य मरुता = पवनेन चलं = चञ्चलं चीनांशुकम् = चीनकौशेयवसनं तस्य धरौ = धारकौ पयोधरौ = स्तनौ आपीतौ = आपानविषयीकृतौ,

हिन्दी–मैं वीर की पुत्री, वीर की पत्नी और वीरों की जननी हूँ । शौर्य से खरीदी मुझ-जैसी स्त्री अन्यथा कैसे कर सकती है ? भरत, भगीरथ और नाभाग सदृश नरेन्द्र-शिरोमणि ने मेरा पाणिग्रहण किया है । मेरे शिर ने सेवा में व्यस्त अनेक सामन्तों की वधुओं द्वारा उंडेले हुए स्वर्ण-कलशों से अभिषेक प्राप्त कर रखा है । भाल ने मनोरथों से भी दुर्लभ पटरानी का मुकुट बँध जाने का सम्मान ग्रहण किया है । बन्दी बनाई हुई शत्रुओं की महिलाओं द्वारा डुलाये जा रहे चामर की हवा से हिलने वाले रेशमी-वस्त्रधारी स्तनों को तुम–जैसे पुत्रों ने पी रखा है । सकल नगर की सिर झुकाये हुए गृहणियों के मुकुटों की मणि-पंक्तियों द्वारा पूजित दोनों चरण सपत्नियों के शिरों पर धर रखे हैं । इस तरह कृतार्थ हुए सभी अंगों वाली मुझ पापिन को और क्या चाहिए ? मैं अविधवा ही मरना चाहती हूँ । आर्यपुत्र से वियुक्त मैं रति

वाञ्छामि। न च शक्नोमि दग्धस्य भर्तुरार्यपुत्रविरहिता रतिरिव निरर्थकान्प्रलापान्कर्तुम्। पितुश्च ते पादधूलिरिव प्रथमं गगनगमनमावेदयन्ती बहुमता भविष्यामि शूरानुरागिणीनां सुराङ्गनानाम्। प्रत्यग्रदृष्टदारुणदुःखदग्धायाश्च मे किं धक्ष्यति धूमध्वजः। मरणाच्च मे जीवितमेवास्मिन्समये साहसम्। अतिशीतलः पतिशोकानलादक्षयस्नेहेन्धनादस्मादनलः। कैलासकल्पे प्रवसति जीवेश्वरे जरत्तृणकणिकालघीयसि जीविते लोभ इति च घटते। अपि च जीवन्तीमपि मां नरपतिमरणावधीरणमहापातकिनीं न स्प्रक्ष्यन्ति पुत्र पुत्रराज्यसुखानि। दुःखदग्धानां च भूतिरमङ्गला चाप्रशस्ता च निरुपयोगा च भवति। वत्स, विश्वस्तानां यशसा स्थातुमिच्छामि लोके न वपुषा। तदहमेव त्वां तावत्त्वत प्रसादयामि न पुनर्मनोरथप्रातिकूल्येन एवर्थनीयास्मि।' इत्युक्त्वा पादयोरपतत्।

---

टीका–समन्तात् पीतो इत्यर्थः। सपत्नीनां=पत्युः अन्यपत्नीनां शिरःसु=मूर्धसु नमन्त्यः=प्रणमन्त्यः याः निखिलस्य=सकलस्य कटकस्य=राजधान्याः [ 'राजधानी तु कटकम्' इति मेदिनी ] कुटुम्बिन्यः=गेहिन्यः तासां किरीटेषु=मुकुटेषु यानि माणिक्यानि=मणयः तेषां मालाभिः=स्रग्भिः अर्जितं=पूजितं चरणयोः युगलम् एव युगलकम् (स्वार्थे कः) =द्वयम् निहितम्=स्थापितम्। एवं कृतार्थाः=सिद्धमनोरथाः धन्याः इति यावत् सर्वे अवयवाः=अङ्गानि यस्याः तथाभूता क्षीण=नष्टभाग्यं यस्याः सा मन्दभागेत्यर्थः अहम् अपरम्=अन्यत् किम् अपेक्षे=आशासे अभिलषामीत्यर्थः। अविधवा=वैधव्यरहिता एव भर्तु वाञ्छामि=इच्छामि दग्धस्य=मरणानन्तरं कृतदाहसंस्कारस्य भर्तुः=पत्युः सम्बन्धे आर्यपुत्रेण भर्त्रा विरहिता=वियुक्ता अहं रतिः=कामपत्नी इव निरर्थकान्=व्यर्थान् प्रलापान्=अनर्थकवचनानि विलापानित्यर्थः कर्तुं न शक्नोमि=प्रभवामि, पत्युः महादेवकर्तृकदाहानन्तरं यथाहि कामपत्नी रतिः भर्तुः सम्बन्धे प्रलापान् करोति स्म तथाऽहं कर्तुं न शक्नोमि भावः रत्यपेक्षया आधिक्यनिरूपणात् व्यतिरेकालङ्कारः। ते पितुः=आर्यपुत्रस्येत्यर्थः पादयोः धूलिः=रजः इव अतितुच्छा अहं गगन-गमनं=आकाशगमनम् अथ च स्वर्गारोहणम् आवेदयन्ती=सूचयन्ती बहु=अधिकं यथा स्यात्तथा मता=संमानिता भविष्यामि शूरेषु=वीरपुरुषेषु अनुरागिणीनाम्=अनुरागवतीनां सुराङ्गनानाम्=देवाङ्गनानाम् अप्सरसामित्यर्थः। प्रत्यग्रम्=अभिनवं दृष्टम्=अनुभूतं दारुणं=कठोरम् यत् दुःखम् भर्तृजनितशोकः इति यावत् येन दग्धायाः=प्लुष्टायाः मे धूमध्वजः=अग्निः किं धक्ष्यति दाहविषयीकरिष्यति ? न किमपीति काकुः। मरणात्=मृत्योरपेक्षयेत्यर्थः अस्मिन् समये मे जीवितं=जीवनम् एव साहसं =साहसिकं कर्म अर्थात् अमृत्वा यातनामयं जीवनं यापयितुं मयि साहसं नास्ति। पतिशोकः=पतिवियोग-जनितदुःखम् एव अनलः=अग्निः तस्मात् अक्षयः=क्षयरहितः अविनाशीत्यर्थः यः स्नेहः=प्रेम एव इन्धनम्=एधः यस्य तस्मात् अस्मात्=अस्यापेक्षयेत्यर्थः अनलः=अग्निः अतिशयेन शीतलः=अनुष्णः स्नेहशब्दस्य अपरोऽर्थः तैलमपि भवति, अयं भावः पतिशोकरूपानलः अविनाशिस्नेह (प्रेम) रूपेन्धनेऽत्र ज्वलति, न कदापि च क्षयमेति

टिप्पणी—पादधूलिरिव—अपने को पति की पाद-धूलि के समान तुच्छ समझने के साथ-साथ यहाँ यह भी आशय है कि जो व्यक्ति जाता है उसके पैरों की धूलि गगन में जाती है। इस लिए रानी का भाव यह है कि धूलि की तरह वह पति से पूर्व स्वर्ग में जाती हुई सुरांगनाओं को सूचित कर देगी कि एक वीर पुरुष आ रहा है। वे स्वर्ग में आते हुए का स्वागत सत्कार किया करती हैं—ऐसा शास्त्र कहते हैं।

हिन्दी—की तरह भस्म हुए पति के सम्बन्ध में व्यर्थ प्रलाप नहीं कर सकती। चरणधूलि की तरह तेरे पिता के गगन-गमन [ (१) ऊपर उठना (२) स्वर्गारोहण ] की पूर्व सूचना देती हुई मैं वीरानुरागिणी सुरांगनाओं को बहुत अच्छी लगूँगी। ताजा-ताजा देखे हुए दारुण दुःख से जले हुए मेरा आग क्या जलाएगी ? इस समय मरने की अपेक्षा जीती रहना ही मेरे लिए एक साहस का काम होगा। अक्षय स्नेह ( प्रेम; तेल ) का इन्धन लिये हुए पतिशोक की अग्नि की अपेक्षा ( भौतिक ) अग्नि बड़ी ठंडी है। कैलास-तुल्य प्राणनाथ के ( परलोक ) प्रवास करते हुए, जीर्ण-तृणकण के समान तुच्छ प्राणों का मोह करना कहां संगत होता है ? पुत्र ! भूपति के मरण की अवहेलना का पाप लिए हुए जीते रहे भी मुझे पुत्र के राज्य-सुख स्पर्श नहीं करेंगे। दुःख से जले हुओं की भूति ( वैभव, भस्म ) अशुभ, गर्हित और बेकार हुआ करती हैं। बेटा ! मैं जगत् में विधवाओं के यश से रहना चाहती हूँ, शरीर से नहीं। सो इस समय मैं ही तुझ से प्रार्थना करती हूँ कि इच्छा के प्रतिकूल चलकर मेरी अवज्ञा न की जाय' इतना कहकर वह ( पुत्र के ) चरणों में पड़ गई।

स तु ससंभ्रममपनीय चरणयुगलमवनमिततनुरुभयकरविधृतवपुषमवनितलगतशिरसमुदनमयन्मातरम् । दुर्निवारतां च शुचः समवधार्य कुलयोषिदुचितां च तामेव श्रेयसीं मन्यमानः क्रियां कृतनिश्चयां च तां ज्ञात्वा तूष्णीमधोमुखोऽभवत् ।

अभिनन्दति हि स्नेहकातरापि कुलीनता देशकालानुरूपम् । देव्यपि यशोमती परिष्वज्य समाघ्राय च शिरसि निर्गत्य चरणाभ्यामेव चान्तःपुरात्पौराक्रन्द¹प्रतिशब्दनिर्भराभिरुपरुध्यमानेव दिग्भिः सरस्वतीतीरं ययौ ।

---

टीका—अपरः अनलस्तु विनाशिस्नेह–(तैलादि) रूपेन्धनेन ज्वलति इन्धनक्षये च शाम्यति । अत्र पतिशोकानले अन्यानलापेक्षया आधिक्यनिरूपणात् व्यतिरेकालङ्कार स च रूपकेण श्लेषेण च संकीर्यते । कैलास-कल्पे=कैलासात् ईषत् न्यूनः इति कैलासकल्पः तस्मिन् जीवेश्वरे=प्राणनाथे प्रवसति=प्रवासं कुर्वति लोकान्तरं गच्छति सतीत्यर्थः। जरत्=जीर्णं यत् तृणं तस्य कणिकावत्=कणवत् लघीयसि=अतिशयेन लघुनि=तुच्छे इति यावत् जीविते=जीवने लोभः=लिप्सा क्व=कुत्र घटते=उपपद्यते ? जीवन्तीं=धृतजीवनां नरपतेः=राज्ञः यत् मरणं=मृत्युः तस्य अवधीरणम्=अवहेलनम् एव महापातकम्=महापापम् अस्याः अस्तीति तयोक्तां मां हे पुत्र ! पुत्रस्य=तव राज्यस्य सुखानि=आमोदप्रमोदाः न स्प्रक्ष्यन्ति=प्राप्तानि भविष्यन्ति पापिनीं न कोऽपि स्पृशति अर्थात् पतिवियुक्ता अहं कथमपि ते राज्ये सुखिनी न भविष्यामि । दुःखेन दग्धानां=भस्मीभूतानां भूतिः=ऐश्वर्यं सुखाद्युपभोगो वा अथ च भस्म ['भूतिर्भस्मनि सम्पदि' इत्यमरः] अमङ्गला=अशुभा, अप्रशस्ता=विगर्हिता निरुपयोगा=व्यर्था च भवति, दुःखदग्धानां व्यक्तीनां कृते ऐश्वर्योपभोगः अकिञ्चित्करः निन्दितश्च यथा यज्ञीयातिरिक्तानामग्नीनां भस्म निन्दितमशुभञ्च भवति । अत्रोपमा व्यज्यते । अहं विश्वस्तानाम्=विधवानाम् ['विश्वस्त-विधवे समे' इत्यमरः] यशसा=कीर्त्या स्थातुम् इच्छामि=वाञ्छामि न वपुषा=शरीरेण, अर्थात् अहं रुधिरमांसात्मकशरीरेण जगति जीवितुं नेच्छामि अपि तु विधवानां यशोरूपेण शरीरेण जीवितुमिच्छामि, विधवानां यशोरूपं शरीरञ्चेदमेव यत् ताः पत्युः अनुमरणं कुर्वन्ति । तावत्=इदानीं प्रसादयामि प्रार्थये इत्यर्थः मनोरथस्य=मम अभिलाषस्य प्रातिकूल्येन=वैपरीत्येन अहं त्वया न दर्शनीया कुत्सितः अर्थः कदर्थः कदर्थं करोतीति [कु+अर्थ+णिच्+अनीय कोः कदादेशश्च'] कुत्सनीया=अवमाननीयेति यावत् इति उक्त्वा=कथयित्वा पुत्रस्य पादयोः अपतत्=पतितवती ।

सः हर्षवर्धनः तु संभ्रमेण=त्वरया सहितं यथा स्यात्तथा स्वकीयं चरणयोः युगलं=द्वयम् अपनीय=अपसार्य अवनमिता=निम्नीकृता तनुः=शरीरं येन सः उभयेन कराभ्याम् [ उभयशब्दस्य द्विवचनं नास्ति ] विधृतं=गृहीतं वपुः=शरीरं यस्याः ताम् अवनितले=भूतले गतं=पतितं शिरः यस्याः ताम् मातरम्=जननीम् उदनमयत्=उत्थापितवान् । शुचः=शोकस्य दुर्निवारताम्=दुःखेन निवारयितुं योग्यः दुर्निवारः तस्य भावः तत्ता ताम् दुर्निरोधतां दुःसहतामिति यावत् समवधार्य=विनिश्चित्य कुलयोषिद्भ्यः=कुलवधूभ्यः उचितां=योग्याम् ताम् एव क्रियाम्=मातुः सहमरणकर्म श्रेयसीं=प्रशस्ततरां मन्यमानः अवगच्छन् कृतः निश्चयः=मरणाध्यवसायः यया तां=मातरम् ज्ञात्वा=बुद्ध्वा तूष्णीम्=मौनमाकलय्य अधः=नीचैः मुखं यस्य तथाभूतः अभवत् हर्षवर्धनः इति शेषः ।

स्नेहेन=प्रेम्णा कातरा=विह्वला अपि कुलीनता=आभिजात्यम् उच्चकुलोत्पन्नतेत्यर्थः देशश्च कालश्च तयोः अनुरूपं=योग्यं कार्यमिति शेषः अभिनन्दति=अनुमोदते, मातृप्रेमविह्वलोऽपि कुलीनः हर्षवर्धनः मातुः कृते तदानीमु-

टिप्पणी—सरस्वती—सरस्वती नदी हिमाचल के सिरमोर जिले के पहाड़ से निकली थी । हर्ष की राजधानी थानेसर ( स्थाण्वीश्वर ) इसी नदी के किनारे स्थित है । बाद में यह रेगिस्तान की रेत में गायब हो गई । इस समय पेहुवा में थोड़ी सी प्रकट हुई दिखाई पड़ती है ।

हिन्दी—किन्तु शीघ्र ही दोनों पैर हटा कर शरीर नीचे झुकाए उसने भूतल पर सिर रखे हुए माता को (अपने) दोनों हाथों से शरीर को थामे ऊपर उठा लिया । और शोक की असह्यता को खूब समझ कर तथा उसी काम को स्त्रियोचित मानता हुआ और माता को निश्चय किये हुए जानकर चुपचाप नीचे मुँह किये रह गया ।

स्नेह से विह्वल होती हुई भी कुलीनता देश और काल के अनुरूप कार्य को अनुमोदन करती है। रानी यशोमती भी ( पुत्र को ) गले लगाकर सिर पर सूँघ कर और अन्तःपुर से बाहर निकल कर नगरवासियों के आर्तनाद की प्रतिध्वनियों से भरी हुई दिशाओं द्वारा रोकी जाती हुई पैदल ही सरस्वती के किनारे चली गई । और वहाँ स्त्री-स्वभाव

---

१. पौराक्रन्दनिर्भराभिः''

तत्र च स्त्रीस्वभावकातरैर्दृष्टिपातैः प्रविकसितरक्तपङ्कजपुञ्जैरिवार्चयित्वा भगवन्तं भानुमन्तमिव मूर्तिरैन्दवी चित्रभानुं प्राविशत् । इतरोऽपि मातृमरणविह्वलो बन्धुवर्गपरिवृतः पितुः पार्श्वं प्रायात् । अपश्यच्च स्वल्पावशेषप्राणवृत्तिं परिवर्त्यमानतारकं तारकराजमिवास्तमभिलषन्तं जनयितारम् । असह्यशोकोद्रेकाभिद्रुतश्च त्याजितः स्नेहेन धैर्यम् । आश्लिष्यास्य सकलदुर्मदमहीपालमौलिमालालालितौ पादपद्मावन्तस्तापान्मुखचन्द्रमिव द्रवीभवन्तं दशनज्योत्स्नाजालमिव जलतामापद्यमानं लोचनलावण्यमिव विलीयमानं मुखसुधारसमिव स्यन्दमानमच्छाच्छमश्रुस्रोतसां सन्तानं महामेघमयविलोचन इव वर्षंस्तिरबद्धिमुक्ताराविशिरं रुरोद ।

---

टीका—चितं पत्यनुमरणम् अनुमोदितवानिति भावः । पुत्रं परिष्वज्य = आश्लिष्य शिरसि मूर्ध्नि च समाघ्राय—घ्रात्वा चरणाभ्यां = पादाभ्याम् एव अन्तःपुरात् = अवरोधात् पौराणां = पुरवासिनाम् आक्रन्दानाम् = आर्तनादानां प्रतिशब्दैः = प्रतिध्वनिभिः निर्भराभिः = पूर्णाभिः दिग्भिः = दिशाभिः अवरुध्यमाना = निवार्यमाणा इवेत्युत्प्रेक्षायाम् सरस्वत्याः = एतदाख्यनद्याः तीरं ययौ = जगाम ; तत्र स्त्रीस्वभावात् = सतीस्वभावात् कातरैः = भीतैः दृष्टिपातैः = चक्षुःक्षेपैः प्रविकसितानि = पूर्णतया उत्फुल्लितानि यानि रक्तपङ्कजानि = रक्तकमलानि तेषां पुञ्जैः = समूहैः इवेत्युत्प्रेक्षायाम् रोदनकारणात् महिष्याः लोचने रक्ते आस्ताम् भगवन्तं = सूर्यम् ऐन्दवीं = इन्दोः = चन्द्रस्य इयं इति ऐन्दवी ( अण् ) मूर्तिः = तनुः इवेत्युपमायाम् भानुमन्तं = सूर्यम् अथ च दीप्तिमन्तं चित्रभानुम् = अग्निम् प्राविशत् = प्रविवेश । चन्द्रो हि अमावस्यायाम् सूर्यमनुप्रविशति यथा चोक्तम्—'चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति, सोऽन्तर्धीयते, ते न निर्जानन्ति, [ ऐतरेयब्राह्मणम् ] इतरः अन्यः हर्षवर्धनः इत्यर्थः मातुः मरणेन = मृत्युना विह्वलः = व्याकुलः बन्धुवर्गेण = बान्धवगणेन परिवृतः = परिगतः पितुः पार्श्वं = समीपे प्रायात् = प्रयातः । स्वल्पः = न्यूनः अवशेषः शेषभागः यस्याः तथाभूता प्राणवृत्तिः = प्राणनव्यापारः यस्य तम् परिवर्त्यमानाः = भ्राम्यमाणाः तारकाः = ताराः येन तम् अस्तम् = अस्तमयम् अभिलषन्तम् = इच्छन्तं तारकाणां = ताराणां राजा तारकराजः = चन्द्रः तम् इवेति श्लेषोपमायाम् परिवर्त्यमाना = भ्राम्यमाणा घूर्णन्तीत्यर्थः तारका = कनीनिका यस्य तम् अस्तम् = मरणम् अभिलषन्तम् मुमूर्षुमित्यर्थः जनयितारं = पितरम् अपश्यत् । असह्यः = सोढुमशक्यः यः शोकः तस्य उद्रेकेण = अतिशयेन अभिद्रुतः = आक्रान्तः स्नेहेन = पितृविषयकप्रेम्णा धैर्यं = धृतिं त्याजितः णिजन्तात् त्यज-धातोः प्रयोज्यकर्मणि क्तः [ मूलावस्थायाम् 'हर्षः धैर्यं त्याजयति' कर्मवाच्ये हर्षः स्नेहेन धैर्यं त्याजितः ] अस्य स्वपितुरित्यर्थः, सकलाः = सर्वे च ते दुर्मदाः = दुष्टमदोपेताः ये महीपालाः = भूपाः तेषां मौलीनां = किरीटानां मुकुटानामिति यावत् ( 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः ) मालाभिः = राजिभिः लालितैः = सेवितैः इत्यर्थः पाद-पद्मौ = चरणकमले, यद्यपि 'वा पुंसि पद्मं नलिनम्' इत्यमरेण पद्मशब्दस्य विकल्पेन पुंल्लिगत्वं प्रतिपादितमस्ति तथापि कविजगति पुंल्लिङ्गत्वेन अनादृतत्वात् अथ च साहित्यिकदृष्ट्या अप्रयुक्तत्वं दोषः, आश्लिष्य = आलिङ्ग्य अन्तस्तापात् मानस-सन्तापकारणात् द्रवीभवन्तं = द्रवन्तं मुखं चन्द्रम् इवेत्युपमिततत्पु० [ 'अश्रुस्रोतसां सन्तापम्' इत्यस्य विशेषणम् ] जलतानाम् = जलत्वम् आपद्यमानं = प्राप्नुवत जलरूपे परिणममानमित्यर्थः दशनानां = दन्तानां ज्योत्स्नायाः = चन्द्रिकायाः कान्त्या इत्यर्थः जालं = समूहम् इव, विलीयमानं = गलन् लोचनयोः = नेत्रयोः लावण्यं = सौन्दर्यम् इव स्यन्दमानं = स्रवन्तं [ मुखस्य चन्द्रत्वं गम्यम् ] अच्छाच्छम् = अतिशयेन स्वच्छम् अश्रुस्रोतसाम् = बाष्पप्रवाहाणां सन्तानं = समूहं महान् चासौ मेघः महामेघः एव महामेघ

हिन्दी—के कारण भयभीत दृष्टिपातों से विकसित रक्त-कमल-समूहों से जैसे—प्रदीप्त अग्नि भगवान् की पूजाकर उसमें इस तरह प्रवेश कर गई जैसे—चन्द्रमा की मूर्ति ( अमावास्या को ) सूर्य भगवान् में प्रवेश किया करती है । माता की मृत्यु से विह्वल हुआ बान्धव-गण से घिरा दूसरा ( हर्षवर्धन ) भी पिता के पास चला गया । और उसने थोड़े शेष रहे प्राणों वाले, ताराओं ( नक्षत्रों ) को घुमाते और अस्त होना चाह रहे चन्द्रमा की तरह ताराओं ( आँख की पुतलियों ) को घुमाए एवं अस्त ( मृत्यु ) चाहते हुए पिता को देखा । असह्य शोकातिशय से आक्रान्त हुए उस से स्नेह ने धैर्य छुड़वा दिया । समस्त दुर्मद राजाओं की मुकुटश्रेणि से सेवित उस (पिता) के चरणकमलों को गले लगाकर महामेघ-रूप नयनों वाला—जैसा बना हुआ वह भीतरी ताप से द्रवित होते हुए मुख-चन्द्र को—जैसे, जल-रूप में परिणत होते हुए दन्त—ज्योत्स्ना-समूह को—जैसे गलते हुए नयनलावण्य को—जैसे लिपते हुए मुख के अमृतरस को—जैसे स्वच्छ अश्रुप्रवाह-समूह को बहाता हुआ साधारण जन की तरह जोर-जोर से चिल्लाता हुआ देर तक रोता रहा ।

राजा तु तमुपरुध्यमानदृष्टिरविरतरुदितशब्दाश्रितश्रवणः प्रत्यभिज्ञाय शनैः शनैरवादीत्—'पुत्र, नार्हस्येवं भवितुम्। भवद्विधा न ह्यमहासत्त्वाः। महासत्त्वता हि प्रथममवलम्बनं लोकस्य पश्चाद्राजबीजिता। सत्त्ववतां चाग्रणीः सर्वातिशयाश्रितः क्व भवान्, क्व वैक्लव्यम्। 'कुलप्रदीपोऽसि' इति दिवसकरसदृशतेजसस्ते लघूकरणमिव। 'पुरुषसिंहोऽसि' इति शौर्यपटुप्रज्ञोपबृंहितपराक्रमस्य निन्देव। 'क्षितिरियं तव' इति लक्षणाख्यातचक्रवर्तिपदस्य पुनरुक्तमिव। 'गृह्यतां श्रीः' इति स्वयमेव श्रिया गृहीतस्य विपरीतमिव। 'अध्यास्यतामयं लोकः' इत्युभयलोकविजिगीषोरपुष्कलमिव। 'स्वीक्रियतां कोषः' इति शशिकरनिकरनिर्मलयशःसञ्चयैकाभिनिवेशिनो निरुपयोगमिव। 'आत्मीक्रियतां राजकम्' इति गुणगणात्मीकृतजगतो[1]

---

टीका—समुपरुध्यमाना=द्रष्टुम् अप्रभवन्ती दृष्टिः=नयनं यस्य सः अन्तिमक्षणे राज्ञः दृष्टिव्यापारः रुद्ध आसीत् अविरतं सततं यत् रुदितं=रोदनं ( भावे क्तः ) तस्य शब्देन आश्रितौ=गृहीतौ श्रवणौ=कर्णौ यस्य तथाभूतः राजा तं=हर्षवर्धनं प्रत्यभिज्ञाय=प्रतिसन्धाय, अयं पुत्रस्य रोदनशब्द इति स्मरणपूर्वकं ज्ञात्वेत्यर्थः अवादीत्=अकथयत्—पुत्र! एवं भवितुं न अर्हसि=न योग्योऽसि। हि=यतः भवान् इव विधा येषां ते भवद्विधाः भवत्सदृशाइत्यर्थः अमहासत्त्वाः= महत् सत्त्वं=मनोदार्ढ्यम् मनस्विता अनुभावः इति यावत् येषां ते महासत्त्वाः न महासत्त्वाः इत्यम०—अदृढचित्ताः इत्यर्थः। महासत्त्वता=मनस्विता लोकस्य=लोकानामित्यर्थः प्रथमम् अवलम्बनम्=आश्रयः, राजबीजिता=राज्ञः बीजम् अस्मिन् अस्तीति राजबीजी तस्य भावः तत्ता राजान्वयिता=राजकुलोत्पत्तेति यावत् पश्चात् अर्थात् प्रजाः कस्मिन्नपि राज्ञि प्रथमं मनस्वितामपेक्षते राजकुले जन्म पश्चात्। सत्त्ववताम्=मनस्विनाम् अग्रणीः=धुरीणः मुख्यः इत्यर्थः सर्वे च ते अतिशयाः=गुणप्रकर्षाः तान् आश्रितः=प्राप्तः वैक्लव्यं=व्याकुलत्वम् अर्थात् महासत्त्वत्व विक्लवत्वं च परस्पर विरुध्येते अत एवात्र विषमालङ्कारः। 'त्वं कुलस्य=वंशस्य प्रदीपः' इति कथनम् दिवसकरेण=सूर्येण सदृशं तेजः=प्रतापः यस्य तादृशस्य तव लघूकरणम्=लघुत्वापादनम् इव अर्थात् क्व दीपः क्व च सूर्यः, सूर्यस्य दीपीकरणं तस्यावमाननम् एव। 'पुरुषेषु सिंह' इति कथनमपि शौर्यं च पटवी=तीक्ष्णा प्रज्ञा=बुद्धिश्च ताभ्यां उपबृंहितः=वृद्धिं प्राप्तः पराक्रमः यस्य तथाभूतस्य ते निन्दा इव। सिंहे शारीरिकमेव बलं भवति न तु शौर्यं नापि पटु-प्रज्ञा। 'इयं क्षितिः= पृथिवी तव' इत्यपि लक्षणैः=चिह्नैः आख्यातं=प्रतिपादितं चक्रवर्तिनः एकच्छत्रशासकस्य पदं=स्थानम् यस्य पुनरुक्तम् आम्रेडितम् अपार्थकमिति यावत् इव। 'गृह्यताम्=स्वीक्रियताम् श्रीः=राजलक्ष्मीः' इति कथनम् स्वयमेव श्रिया गृहीतस्य=आश्रितस्य तव विपरीतम्=विरुद्धम् इव, अर्थात् लक्ष्मीगृहीतं प्रति लक्ष्मीं गृहाणेति कथनं विपरीता वार्ता। अयं लोकः=संसारः अध्यास्यताम्=प्रभुत्वेन अधिष्ठीयताम्, मर्त्यलोकस्य चक्रवर्तित्वं गृहाणेत्यर्थः इति तु उभयलोकौ =मर्त्यलोक—स्वर्गलोकौ विजेतुमिच्छुः तस्य [ वि + $\sqrt{}$जी + सन् + उः ] अपुष्कलम्=अपर्याप्तम् स्वल्पमित्यर्थः। कोषः=निधिः धनागारः इति यावत् स्वीक्रियताम्=अङ्गीक्रियताम् इति शशिनः=चन्द्रस्य कराणां=रश्मीनां यः निकरः=समूहः तद्वत् निर्मलं=धवलं यत् यशः=कीर्तिः यस्य सञ्चये=संग्रहणे एकः=केवलः अभिनिवेशः=आग्रहः यस्य तथाभूतस्य ते निरुपयोगम्=निष्प्रयोजनम् इव। राजकम्=राज्ञां समूहः आत्मीक्रियताम्=स्वायत्तीक्रियताम् इति गुणगणैः=निजशौर्यादिगुणसमूहैः आत्मीकृतं जगत् येन तस्य गतार्थम्=अर्थरहितम् अपार्थम् इवेत्यर्थः। राज्यभारः=

हिन्दी—उसे आँखों की दर्शन-शक्ति खोये हुए राजा ने निरन्तर रोने का शब्द कानों में पड़ने से पहिचान कर धीरे-धीरे कहा—'पुत्र, तुम्हें ऐसा अधीर नहीं होना चाहिए। वस्तुतः आप—जैसे (लोग) अधीर-मन नहीं हुआ करते हैं। क्योंकि प्रजा के लिए मनस्विता प्रथम अवलम्बन होती है राजकुल-जन्म पीछे की बात है। मनस्वियों के शिरोमणि और सभी गुणप्रकर्षों के आश्रय-भूत कहाँ आप और कहाँ अधीरता। 'तुम कुल के दीपक हो' यह (कहना) सूर्य-समान तेजस्वी तुम्हारा महत्त्व कम करने के समान है। 'तुम पुरुषों में सिंह हो' यों कहना शौर्य और तीक्ष्ण बुद्धि द्वारा बढ़े हुए पराक्रम वाले तुम्हारी निन्दा-जैसी है। 'यह पृथिवी तुम्हारी है' यह कहना लक्षणों से ही चक्रवर्ती का पद बताने वाले तुम्हारे विषय में पुनरुक्ति सी है। 'राजलक्ष्मी को ग्रहण करो' यह कहना स्वयं ही राजलक्ष्मी द्वारा ग्रहण किये हुए तुम्हारे लिये विपरीत-जैसी बात है। 'इस लोक का आधिपत्य संभालो' यह कहना दोनों लोकों को जीतना चाहने वाले तुम्हारे सम्बन्ध में अपर्याप्त सा है। 'कोष स्वीकार करो' यह कहना चन्द्रमा के किरण-समूह के समान निर्मल यश बटोरने की दृढ़ इच्छा रखने वाले तुम्हारे लिए निष्प्रयोजन-सा है। 'राजमंडल को अधीन बनाओ' यह कहना गुण-समूहों से

---

१. 'गणात्मीकृतं जगतो'

गतार्थमिव । 'उह्यतां राज्यभारः' इति भुवनत्रयभारोचितस्यानुचितनियोग इव । 'प्रजाः परिरक्ष्यन्ताम्' इति दीर्घदोर्दण्डार्गलितदिङ्मुखस्यानुवाद इव । 'परिजनः परिपाल्यताम्' इति लोकपालोपमस्यानुषङ्गिकमिव । 'शस्त्राभ्यासः कार्यः' इति धनुर्गुणकिणकलङ्ककालीकृतप्रकोष्ठस्य किमादिश्यते । 'निग्राह्यतां चापलम्' इति नूतनतरवयसि निगृहीतेन्द्रियस्य निरवकाशैव मे वाणी । 'निरवशेषतां शत्रवो नेयाः' इति सहजस्य तेजस एवेयं चिन्ता ।' इत्येवं वदन्नेवापुनरुन्मीलनाय निमिमील राजसिंहो लोचने[1] ।

अस्मिन्नेवान्तरे पूषाप्यायुषेव तेजसा व्ययुज्यत । ततश्च लज्जमान इव नरपतिजीवितापहरणजनितादात्मापराधादधोमुखः समभवत् । भूपालाभावशोकशिखिनेव चान्तस्ताप्यमानस्ताम्रतां प्रपेदे । मन्दं मन्दमप्रियप्रश्नार्थमिव स्थितिमनुवर्तमानो

टीका–उह्यताम्=ध्रियताम इति भुवनानां=जगतां त्रयस्य यः भारः=राज्यभरः तस्य उचितस्य=योग्यस्य ते अनुचितः =अयोग्यः नियोगः=आदेशः इव । प्रजाः=लोकाः परिरक्ष्यन्ताम्=परितः त्रायन्ताम् इति दीर्घौ=प्रलम्बौ यौ दोर्दण्डौ =बाहुदण्डौ ताभ्याम् अर्गलितानि=अर्गलाः सञ्जाताः एषामिति [ अर्गल + इतच् ] अर्गलायुक्तानि अर्गलाभ्याम् इव संरक्षितानीत्यर्थः दिङ्मुखानि=दिशाविभागाः येन तस्य अनुवादः=पुनरुक्तिः इव । परिजनः=भृत्यवर्गः परिपाल्यताम्= रक्ष्यताम् इति लोकपालैः=इन्द्रादिदिगीशैः उपमा=साम्यं यस्य तस्य आनुषङ्गिकम्=अनुषङ्गात् आगतम् इति (अनुषङ्ग +ठक्) प्रासङ्गिकम् प्रस्तावागतम् अर्थात् दिक्पालसमः हर्षः यदि निखिलं जगत् रक्षति तर्हि स परिजनं रक्षिष्यतीति तु प्रसङ्गादेव सिद्धमस्ति । शस्त्राणाम्=आयुधानाम् अभ्यासः पुनः पुनः प्रयोगः कार्यः=कर्तव्यः' इति धनुषः=चापस्य गुणस्य=प्रत्यञ्चायाः यः किणः=आघात चिह्नम् एव कलङ्कः तेन कालीकृतः=श्यामवर्णीकृतः प्रकोष्ठः=अग्रभुजः यस्य तस्य तव किम् आदिश्यते=आज्ञाप्यसे चापलं=चपलतां चाञ्चल्यमिति यावत् निग्राह्यताम्=[ निगृह्यताम् इति साधीयः ] नियम्यताम् त्यज्यतामिति यावत् इति नूतनतरं=नवतरं वयः=जीवनावस्था तस्मिन् निगृहीतानि=नियमितानि वशीकृतानीत्यर्थः इन्द्रियाणि येन तस्य मे वाणी=वचनम् निरवकाशां=निर्गतः अवकाशः=वचनावसरः यस्याः सा इवेति उपरि सर्वत्रोपमा । शत्रवः=अरयः निरवशेषतां=निश्शेषतां समाप्तिमित्यर्थः नेयाः=प्रापणीयाः निःशेषं विनाशनीयाः इति यावत् इति कथनम् इति सहजस्य=जन्मजातस्य तेजसः=प्रतापस्य एव इयं चिंता, आदेशस्य आवश्यकता नास्ति इति एवं वदन्=कथयन् एव अपुनरुन्मीलनाय=न पुनरुन्मीलयितुं सदातनकालायेत्यर्थः राजसिंहः=केसरी प्रभाकरवर्धनः लोचने निमिमील=मुद्रितवान् प्राणान् मुमोचेत्यर्थः ।

अस्मिन् एव अन्तरे=मध्ये पूषा=सूर्यः अपि आयुषा=प्राणैः इवेत्युपमायाम् तेजसा कान्त्या व्ययुज्यत=वियुक्तोऽभवत् अर्थात् यथा राजा प्राणैः वियुक्तः तथा सूर्योऽपि प्राणसमेन तेजसा वियुक्तो जातः । नरपति०—नरपतेः=राज्ञः प्रभाकरवर्धनस्य जीवितस्य=प्राणानाम् यत् अपहरणम्=अपनयनम् तेन जनितः=कृतः यः आत्मनः=स्वस्य स्वपुत्रस्य यमस्येति यावत्, 'आत्मा वै पुत्रनामासि' इत्यनुसारेण आत्मजकृतम् अपराधम् आत्मकृतमेव मन्यते सूर्यः अपराधः= आगः तस्मात् लज्जमानः=त्रपमाणः इवेत्युत्प्रेक्षायाम् अधोमुखः=विनमितमुखः समभवत् सूर्यः ।

हिन्दी–संसार को अपना बनाने वाले तुम्हारे लिए बेकार-सा है । 'राज्यभार संभालो' यह कहना तीनों लोकों का भार संभालने के सक्षम तुम्हारे लिए अनुचित आज्ञा-सी है । 'प्रजा की रक्षा करो, यह कहना दिग्विभागों पर (निज) दीर्घ भुजदण्डों का आगल लगाए हुए तुम्हारे लिए अनुवाद-सा है । 'भृत्य वर्ग का पालन करना' यह कहना दिक्पाल-सदृश तुम्हारे लिए गौण-सा है । 'शस्त्रों का अभ्यास करो' यह कहना धनुष की डोरी के आघात-चिह्न के धब्बे से काले बने प्रकोष्ठ वाले तुम्हें क्या आज्ञा देनी है । 'शत्रु निःशेष ( समाप्त ) कर देने चाहिए' यह तो तुम्हारे जन्मसिद्ध तेज की ही चिन्ता है, इस प्रकार कहते-कहते ही राजसिंह ( प्रभाकरवर्धन ) ने दोबारा कभी न खोलने के लिए आँखें मूंद ली [ प्राण त्याग दिए ] ।

इसी बीच सूर्य भी प्राणों के समान तेज से वियुक्त हो बैठा । तदनन्तर राजा के प्राण लेने के रूप में किये गए अपने [ अपने ही पुत्र यम के ] अपराध से लज्जित होते हुए—जैसे उसने मुँह नीचे कर लिया । राजा की मृत्यु के शोक की आग से जैसे भीतर ही तपाया जाता हुआ—जैसा लाल हो उठा । लोकमर्यादा का अनुसरण करता हुआ सूर्य अप्रिय

1. क्वचित् प्रत्यपद्यत च भूपात्मजः' इत्यधिकम्

लौकिकीमवातरद्दिवः। दित्सुरिव जनेशाय जलाञ्जलिमपरजलनिधिसमीपमुपससर्प। [1]सद्योदत्तनृपजलाञ्जलिवु खदहनदग्ध-मिव करसहस्रमालोहितमधत्त।

एवं च महानराधिपनिधननिधीयमानविपुलवैराग्य इव शान्तवपुषि विशति गिरिगुहागह्वरं गभस्तिमालिनि, समुपोह्यमान-महाजनाश्रुदुर्दिनार्द्रीकृत इव निर्वात्यातपे, रोदनताम्रसकललोचनरुचेव लोहितायति जगति, उष्णायमानानेकनरनिश्वास-सन्तापप्लुष्ट इव च नीलायमाने दिवसे, नृपानुगमनप्रचलितयेव लक्ष्म्या मुच्यमानासु कमलिनीषु, पतिशुचेव परिवृतच्छाया-

टीका - भूपाल०—भूपालस्य=राज्ञः प्रभाकरवर्धनस्य यः अभावः=मृत्युरित्यर्थः तस्य शोकः=दुःखम् एव शिखी=अग्निः [ शिखिनौ वह्नि-बर्हिणौ इत्यमरः ] तेन अन्तः=अभ्यन्तरे ताप्यमानः=प्रज्वाल्यमानः इवेत्युत्प्रेक्षायाम् ताम्रतां=रक्तवर्णतां प्रपेदे=प्राप्तवान्। मन्दं०—मन्दं मन्दम्=शनैः शनैः यथा स्यात्तथा अप्रियाय प्रश्नाय=मृतनृपस्य सम्बन्धे कथं मृतः केन रोगेण वा मृतः? इति प्रश्नं कर्तुं इवेत्युत्प्रेक्षायाम् लौकिकीं=लोकसम्बन्धिनीं स्थितिम्=मर्यादाम् अनुवर्तमानः=अनुसरन् यथा खलु लोकव्यवहारोऽस्ति यत् पुरुषस्य गृहे गत्वा तत्कुटुम्बिषु समवेदनां प्रकटय्य मृतसम्बन्धे प्रश्नाः क्रियन्ते तथैव कर्तुं सूर्योऽपि नीचैः अवातरत्। दिवः=आकाशात् दित्सु० जनेशाय राज्ञे मृतप्रभाकरवर्धनायेत्यर्थः जलाञ्जलिं=तर्पणजलाञ्जलिमित्यर्थः दित्सुः=दातुमिच्छुः (√दा + सन् + उः) अपर-जलनिधेः=पश्चिमसमुद्रस्य समीपम् उपससर्प=उपजगाम। सद्यो० – सद्यः=सपदि दत्तः नृपाय=राज्ञे जलाञ्जलिः येन सः दुःखम् एव दहनः=अग्निः तेन दग्धं=प्लुष्टमिवेत्युत्प्रेक्षायाम् आलोहितम्—ईषद् रक्तं कराः=किरणाः एव कराः=हस्ताः तेषां सहस्रम् अधत्त=धृतवान्। उपरि सूर्ये चेतनव्यवहारसमारोपात् समासोक्तिः उत्प्रेक्षया सङ्कीर्यते, करशब्दे च श्लिष्टरूपकमपि।

महा०—'महा० इत्यारभ्य ·····दृश्यमाने चन्द्रमसि' इत्यन्तं भाव-सप्तमी, मुख्यवाक्यञ्च 'नरेन्द्रः यशःशेषता-मानीयत' इत्यस्ति। महतो नराधिपस्य=महाराजस्य निधनेन=मरणेन निधीयमानम्=आरोप्यमाणम् उत्पाद्यमानमिति यावत् विपुलं=महत् वैराग्यं=विगतः=अपगतः रागः=रक्तवर्णः अथ च संसारविषयकासक्तिः यस्य इति विरागः तस्य भावः वैराग्यं यस्मिन् तस्मिन् इवेत्युत्प्रेक्षायाम् शान्तं=उष्णिम्ना वियुक्तम् अथ च शमयुक्तम् संयतमित्यर्थः वपुः=शरीरं यस्य तस्मिन् गभस्तीन्=रश्मीन् मलते=धारयतीति गभस्तिमाली=सूर्यः तस्मिन् गिरेः=अस्ताचलस्य गुहागह्वरं पश्चाद्भागमित्यर्थः अथ च गिरेः=कस्यापि पर्वतस्य गुहायाः गह्वरे=अभ्यन्तरे विशति=प्रवेशं कुर्वति सति; समुपो०—समुपोह्यमानम्=वर्धमानं महाजनानां=साधुजनानाम् अश्रु=बाष्पं एव दुर्दिनम्=वर्षादिनम् [ 'मेघच्छन्नेह्नि दुर्दिनम्' इत्यमरः ] तेन आर्द्रीकृते=क्लिन्नीकृते इवेत्युत्प्रेक्षायाम् आतपे=घर्मे निर्वाति=(निर् + √वा + सप्तमी) शाम्यति सति।

टिप्पणी—वैराग्ये—कवि सूर्य और संन्यासी की कल्पना कर रहा है। यहाँ वैराग्य, शान्त-वपुः और गिरगुहागह्वर शब्दों में श्लेष है जिसमें दो अर्थ होते हैं। ढलते सूर्य में वैराग्य—लालिमाराहित्य—हो गया है, घर में किसी की मृत्यु से मनुष्य में भी वैराग्य—संसार से विरक्ति भाव—हो जाता है। सूर्य का वपु शान्त—उष्णिमा छोड़े हुए है; विरक्त का वपु भी शान्त शमदमादियुक्त हो जाता है। सूर्य गिरि-अस्ताचल के गुहा के गह्वर—पृष्ठभाग में जा रहा है विरक्त भी घर छोड़कर गिरि की गुफा के भीतर तपस्यार्थ चला जाता है।

हिन्दी-(राजमृत्युसम्बन्धी) प्रश्न पूछने के लिए जैसे आकाश से नीचे उतर आया। (मृत) राजा को तर्पण की जलाञ्जलि देना चाहता हुआ—जैसा वह पश्चिमसागर के पास चला गया। अभी-अभी राजा को जलांजलि दिये हुए इसने दुःखाग्नि से जले हुए—जैसे हजारों कर ( किरण ) रूपी करों ( हाथों ) को धारण कर लिया।

इस प्रकार महा नरपति के निधन से उत्पन्न शोक से बड़े भारी वैराग्य (१—लालिमा-राहित्य २—विरक्ति) को प्राप्त हुए—जैसे शान्त ( १—ठंडा २—शमयुक्त ) शरीरवाले सूर्य के गिरि ( १—अस्ताचल, २—पर्वत ) गुहा के गह्वर में प्रवेश कर जाने पर, लोगों के बहुत अधिक बहते हुए अश्रुओं के वर्षा दिन से गीले किये हुए धूप के बुझ जाने पर रोने से लाल बनी हुई सभी लोगों की आँखों की कान्ति से- जैसे जगत् के लाल हो जाने पर (शोक से) गर्म हुए अनेक लोगों के निश्वासों के ताप से जले हुए—जैसे दिन के काले पड़ जाने पर राजा के अनुगमन के लिए प्रस्थित हुई—जैसी लक्ष्मी द्वारा कमल-वनों के छोड़ दिये जाने पर, छायाओं से घिरी हुई पृथिवी के पति-शोक

१. 'दत्तजलां०'

यायां श्यामायमानायां भुवि, कुलपुत्रेष्विव परित्यक्तकलत्रेषु कृतकरुणप्रलापेषु वनान्तानाश्रयत्सु दुःखितेषु चक्रवाकेषु, छत्रभङ्गभीतेष्विव निगूढकोशेषु कुशेशयेषु, स्फुटितदिग्वधूहृदयरुधिरप्लव इव गलिते रक्तातपे, क्रमेण च लोकान्तरमुपगतवत्यनुरागशेषे जाते तेजसामधीशे, गगनतलवितन्यमानबहलरागपाटलायां प्रेतपताकायामिव प्रवृत्तायां संध्यायाम्, शावशिबि-

टीका–रोदन०—रोदनेन = आक्रन्दनेन ताम्राणि = रक्तवर्णानि यानि सकलानां लोकानां = जनानां लोचनानि = नयनानि तेषां रुचा = कान्त्या इवेत्युत्प्रेक्षायाम् जगति = संसारे लोहितायति = लोहितवर्णे भवति सति [ अत्र लोहितशब्दात् क्यष् प्रत्यये 'वा क्यषः' ( पा० १।३।२० ) इत्यनेन विकल्पेन परस्मैपदम् ], जगति लोहितत्वं तु अस्तं गच्छतः सूर्यस्य कान्त्या जातम्, कविकल्पनानुसारं तत् लोकलोचनकान्त्यैव जातम्; उष्णा०—उष्णायमानाः = उष्णीभवन्तः अनेकेषां नराणां ये विश्वासाः = शोकनिश्वसितानि तेषां सन्तापेन उष्णिम्ना प्लुष्टे = दग्धे इवेत्युत्प्रेक्षायाम् दिवसे नीलायमाने = श्यामायमाने, नृपा०—नृपस्य = मृतस्य प्रभाकरवर्धनस्य यत् अनुगमनम् = अनुसरणं सहमरणमित्यर्थः तदर्थं प्रचलितया = प्रस्थितया इवेत्युत्प्रेक्षायाम् लक्ष्म्या = श्रिया कमलिनीषु = पद्मिनीषु मुच्यमानासु = परित्यज्यमानासु, सायं कमलानि म्लायन्ते तेषां श्रीः ( कान्तिः ) सुप्यति, कविरत्र कमललक्ष्म्या राज्यलक्ष्मीतो भिन्नत्वेऽपि तयोः अभेदं निरूपयति अत एवात्र उत्प्रेक्षा भेदे अभेदातिशयोक्त्या संकीर्यते। पति०—पत्युः शुचा = शोकेन इवेत्युत्प्रेक्षयाम् छायाभिः परिवृता = आच्छन्ना इति परिवृतच्छाया तस्याम् [ दन्तानां राजा इति राजदन्तः इति वत् परिवृतशब्दस्य पूर्वनिपातः ] अथ च परिवृता = प्रच्छन्ना लुप्तेति यावत् छाया = (मुखस्य) कान्तिः यस्याः तस्याम्, श्यामायमानायाम् = श्यामवर्णीभवन्तीम् अथ च श्यामा = सुन्दरी [शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते'] सा इव आचरतीति श्यामायमाना तस्याम् भुवि = पृथिव्याम्, कुल०—कुलपुत्रेषु = कुलीनयुवकेषु इवेत्युत्प्रेक्षायाम् परित्यक्तानि = शोककारणात् अन्यत्र विधिविधानात् वर्जितानि कलत्राणि = पत्न्यः यैः तेषु कृतः करुणः = करुणापूर्णः प्रलापः = विलापः इत्यर्थः यैः तेषु ( उभयत्र समानम् ) वनस्य = काननस्य अन्यत्र वनस्य = जलस्य ( 'वने सलिलकानने' इत्यमरः ) अन्तान् = प्रान्तान् अन्यत्र तटान् आश्रयत्सु = सेवमानेषु दुःखितेषु चक्रवाकेषु रथाङ्गनामसु, छत्र०—छत्रस्य = छत्राकारस्य निजविस्तारस्य यः भङ्गः = म्लानिकारणात् अपगमः लोपः इत्यर्थः तस्मात् भीतेषु = त्रस्तेषु इवेत्युत्प्रेक्षायाम्

टिप्पणी—श्यामाय०—यहाँ कवि भू की श्यामा-सुन्दरी से तुलना कर रहा है जिसके मुख की छाया ( कान्ति ) पतिशोक के कारण काली पड़ जाती है। पृथिवी पर सन्ध्याकाल की काली छायायें पड़ रही हैं उस पर कवि कल्पना यह है कि मानो वह पतिशोक से काली पड़ गई हो, पृथिवी को राजा की पत्नी कहा गया है, इसीलिए राजा भूपति होता है।

छत्रभंग—खिले कमल छत्र-जैसे होते हैं। इन्हें डर लगा कि मुरझने पर हमारी पंखुड़ियाँ झड़ जाएंगी और हमारा छत्र भंग हो जायगा इसलिए उन्होंने अपने कोश—पुट-चक्र बंद कर दिए। इस वाक्य से एक दूसरा अर्थ भी निकलता है कुशेशय कुश पर सोने वालों को भी कहते हैं। राजभक्त सेवक दुःख में विस्तरा छोड़ कर कुश-घास पर पड़े हुए हैं। राजा के छत्र भंग अर्थात् मृत्यु [ 'छत्रभंगोऽपि वैधव्ये स्वातन्त्र्यनृपनाशयोः' इति मेदिनी ] से वे डर गए कि कहीं कोई कोश ( खजाने ) को गोलमोल न कर दे, इसलिए उन्होंने इसे निगूढ़ = छिपाए रखा ताकि राजा के उत्तराधिकारी को वह सुरक्षित सौंपा जाय। इसी तरह 'तेजसामधीश' में भी दूसरा अर्थ है—तेजसाम् अधीश = तेजस्वी प्रभाकरवर्धन लोकान्तर ( परलोक ) चले जाने पर अपने पीछे अनुराग = प्रेम ही शेष छोड़ गया। वाच्यार्थ और व्यङ्ग्यार्थ का परस्पर सादृश्य-सम्बन्ध होने से यहाँ उपमालंकार व्यङ्ग्य है।

हिन्दी–से जैसे—इस तरह काली पड़ जाने पर जैसे श्यामा (सुन्दरी) पति-शोक से (मुख की) छाया (कान्ति) खोये हुए काली पड़ जाया करती है; पत्नियों को छोड़े, करुण प्रताप किए हुए दुःखित हो (वैराग्य में) वनान्तों। (जंगल की सीमाओं) का आश्रय लिये हुए कुलीन नवयुवकों की तरह स्त्रियों को छोड़े; करुण प्रलाप किये हुए दुःखित हो चक्रवाकों के वनान्तों (नदीजल-तटों) का आश्रय ले चुकने पर, (हमारे) छत्र कहीं भंग न हो जाय, इससे डरे हुए—जैसे कमलों के अपने कोश बन्द कर देने पर, दिग्वधुओं के विदीर्ण हृदयों के रुधिर-प्रवाह—जैसे लाल आतप के गिरने लगने पर धीरे-धीरे दूसरे लोक को गये हुए सूर्य के (पश्चिम दिशा) लाल प्रभा के रूप में ही शेष रह जाने पर, गगन-तल में फैलती हुई घनी (सान्ध्य) लालिमा—जैसी लाल प्रेत-ध्वजा की तरह गगन-तल में फैलती हुई घनी लालिमा वाली

•१ 'पटलायाम्'

कालङ्कारकृष्णचामरमालास्विव स्फुरन्तीषु दर्शनप्रतिकूलासु तिमिरलेखासु, असितागुरुकालकाष्ठायां केनापि चितायामिव रचितायां रजन्याम्, दन्तामलपत्रप्रसाधितकर्णिकासु केसरमालाकल्पितमुण्डमालिकासु अनुमर्तुमिवोद्यतासु प्रहसितमुखीषु कुमुदलक्ष्मीषु, अवतरत्त्रिदशविमानकिङ्किणीक्वणित इव श्रूयमाणे शाखिशिखरकुलायलीयमानशकुनिकुलकूजिते, नाकपथप्रस्थितपार्थिवप्रत्युद्गतपुरुहूतातपत्र इव पूर्वस्यां दिशि दृश्यमाने चन्द्रमसि, नरेन्द्रः स्वयं समर्पितस्कन्धैर्गृहीत्वा शवशिबिकां शिबिसमः सामन्तैः पौरैश्च पुरोहितपुरःसरैः सरितं सरस्वतीं नीत्वा नरपतिसमुचितायां चितायां हुताशसात्कृत्वा यशःशेषतामनीयत ।

---

टीका—कुशेशयेषु = कुशे = जले शेते इति कुशेशयम् कमलम् तेषु [ 'सहस्रपत्रं कमलं शतपत्रं कुशेशयम्' इत्यमरः ] निगूढः = मुद्रितः कोशः = कर्णिका गर्भः इत्यर्थः यैः तेषु अय भावः सूर्यास्ते कमलैः स्वकोशाः मुद्रिताः सूर्यसद्भावे एव तेषां विकासात् किन्तु कवि–कल्पना इयमस्ति यत् तेषु भयमासीत् तेषां दलानि म्लानानि भविष्यन्ति तेषां छत्राकारश्च समाप्स्यते इति । स्फुटित०—स्फुटितानि = विदीर्णानि यानि दिग्वधूनां = दिगङ्गनानां हृदयानि तेभ्यः ( स्रवन् ) यः रुधिरस्य = रक्तस्य प्लवः = प्रवाहः तस्मिन् इवेत्युत्प्रेक्षायाम् रक्तातपे = रक्तवर्ण–घर्मे गलति = वहति समाप्यमाने इत्यर्थः क्रमेण—क्रमेण = शनैः शनैः अन्यः लोकः इति लोकान्तरं तत् उपगतवति = उपयातवति अनुरागः = रक्तिमा रक्तालोकः इति यावत् शेषः = अवशिष्टभागः = रक्तिमा रक्तालोकः इति यावत् शेषः = अवशिष्टभागः पश्चिमदिशि इति शेषः यस्य तस्मिन् तेजसां = ज्योतिषाम् अधीशे = अधिपतौ सूर्ये इत्यर्थः, गगनं०—गगनतले = आकाशतले वितन्यमानः = विस्तीर्यमाणः यः बहलः = विपुलः रागः = रक्तिमा तद्वत् अन्यत्र तेन पाटलायाम् = रक्तवर्णायां प्रेतस्य = मृतस्य पताकायां = ध्वजे इवेत्युपमायाम् शवयात्रायां शोभार्थं रक्तपताकादीनि नीयन्ते सन्ध्यायां = सायंवेलायां प्रवृत्तायां = प्रारब्धायाम्, शव०—शवस्य = मृतकस्य या शिबिका = याप्ययानम् [ 'शिबिका याप्ययानं स्यात्' इत्यमरः ] तस्याः अलङ्काराः = भूषाभूतानि कृष्णानि = श्यामवर्णानि यानि चामराणि तेषां मालासु = राजिसु इवेत्युपमायाम् स्फुरन्तीषु = लसन्तीषु दर्शने = अवलोकने प्रतिकूलासु = अशुभासु अथ च दर्शनविघातिनीषु शवचामरपताकादिदर्शनम् अपशकुनं मन्यते, तिमिरस्य = तमसः लेखासु = राजिषु अ.सत०—असितस्य = कृष्णवर्णस्य अगुरोः = अगुरुवृक्षस्य कालानि = श्यामानि काष्ठानि = दारूणि यस्याम् केन अपि रचितायां = निर्मितायां चितायां = चित्याम् [ 'चिता चित्या चितिः स्त्रियाम्' इत्यमरः ] इवेत्युपमायाम् असितागुरुवत् कालाः काष्ठाः = दिशः यस्यां तस्यां रजन्यां = रात्र्यां केन अपि रचितायां = निर्मितायां सत्याम् दन्ता०—दन्तवत् = गजदन्तवत् अमलैः = उज्ज्वलैः = पत्रैः = दलैः प्रसाधिता = अलंकृता कर्णिका =

टिप्पणी— शिबि—भारत के इतिहास में राजा शिबि आत्मत्याग का एक उज्ज्वल आदर्श छोड़ गया है । उसकी परीक्षा के लिए इन्द्र श्येन बना और धर्म कबूतर । श्येन द्वारा पीछा किया जाता हुआ कबूतर आत्मरक्षार्थ शिबि की गोद पर जा बैठा । श्येन ने कबूतर के परिमाण का राजा का मांस माँगा । राजा ने तराजू के एक पलड़े पर कबूतर रखा और दूसरे पर काट काट कर अपना मांस रखता गया, किन्तु कबूतर भार में बढ़ता ही गया, तो राजा ने अपने शरीर का सारा ही मांस धर दिया । इतने में देवता प्रकट हो गये।

हिन्दी—सन्ध्या के हो जाने पर, देखने में अशुभ, शव की अर्थी पर शोभार्थ लगाए काले चामरों की मालाओं की तरह देखने में रुकावट डालने वाली अन्धकार-रेखाओं के स्फुरित होने लगने पर, काले अगरु-वृक्ष के काष्ठों (लकड़ियों) की चिता की तरह काले अगरु-वृक्षों—जैसी काष्ठाओं (दिशाओं) वाली रात किसी के द्वारा बना दी जाने पर हाथी दाँत की तरह उज्ज्वल पंखुड़ियों से (अपनी) कर्णिका (पुटकचक्र) को सँवारे, (अपने) मुंड (अग्रभाग) में केसर (किञ्जल्क) समूहों की माला बनाये, विकसित मुखों वाली कुमुद-श्रियों के हाथी-दाँत की उज्ज्वल पत्तियों की कर्णिका (कर्णालंकार) बनाये केसर (मौलसरी) के हारों को मुण्डमालाओं (शिरोमालाओं) के रूप में धारण किये, हँसते हुए मुखों वाली (सतियों के समान) राजा के साथ मरने के लिए जैसे सज्जित हो उठने पर, देवताओं के (नीचे) उतरते हुए विमानों की क्षुद्रघण्टियों की झंकार—जैसा वृक्षों के शिखरों पर ( बने ) घोसलों में बैठते हुए पक्षि-समूह का शब्द सुनाई देने पड़ने पर, स्वर्ग-पथ पर प्रस्थित हुए राजा (प्रभाकर वर्धन) के स्वागतार्थ उपस्थित हुए इन्द्र के छत्र—जैसे चन्द्रमा के पूर्व दिशा में दिखाई पड़ने पर, शिबि समान ( उदार ) नरेन्द्र ( प्रभाकरवर्धन ) को आगे-आगे पुरोहित और पीछे स्वयं कन्धा दिये हुए पुरवासियों और सामन्तों द्वारा अर्थी पकड़ कर सरस्वती नदी पर ले जाकर राजोचित चिता पर अग्नि सत्कार के साथ ( भस्म करके ) यशः शेष कर दिया गया ।

देवोऽपि हर्षः पुञ्जीभूतेन सकलेनेव जीवलोकेन लोकेन राजकुलसम्बद्धेनाशेषेण शोकमूकेन परिवृतोऽन्तर्वर्तिनापि शोकानलतप्तेन स्नेहद्रवेण बहिरिव सिच्यमानो निर्व्यवधानायां धरण्यामुपविष्ट एव तां निशीथिनीं भीमरथीभीमामखिलां सराजको जजागार। अजनि चास्य चेतसि। 'ताते दूरीभूते संप्रत्येतावान्खलु जीवलोकः, लोकस्य भग्नाः पन्थानः, मनोरथानां

टीका—कोशः पुटकमिति यावत् यासां तासु (कुमुदलक्ष्मीषु) अथ च दन्तस्य=गजदन्तस्य अमलैः पत्रैः=फलकैः पट्टिकामितियावत् प्रसाधिता=रचिता कर्णिका=कर्णालङ्कारः [ कर्ण + कन् + टाप् इत्वम् 'कर्ण-ललाटात् कनलङ्कारे' पा० ४।३।६५ ] यासां तासु सतीषु, केसराणां=किञ्जल्कानां मालाभिः=समूहैः कल्पिताः कृताः मुण्डे=उपरितने भागे मालिकाः=पङ्क्तयः यासाम् तासु (कुमुदल०) अथ च केसराणां=बकुलानाम् [ 'केसरं.... । सिंहसटायां पुन्नागे बकुले नागकेशरे' इति मेदिनी ] मालाभिः कल्पिताः मुण्डमालिकाः शिरोमालाः यासां तासु (सतीषु) अनुमतुं=पत्युः अनुमरणाय इवेत्युत्प्रेक्षायाम् उद्यतासु=सज्जीभूतासु प्रहसन्ति=विकसन्ति अन्यत्र स्मयमानानि मुखानि=अग्राणि अन्यत्र आननानि यासां तासु कुमुदानां=रात्रिकमलानां लक्ष्मीषु=श्रीषु शोभास्विति यावत्, अत्र कुमुदलक्ष्मीषु सतीव्यवहारसमारोपात् समासोक्तिः सा चोत्प्रेक्षया संकीर्यते, अवतर० —अवरन्ति=नीचैः आगच्छन्ति त्रिदशानां=देवतानां यानि विमानानि=वायु-यानानि तेषां किङ्किणीनां=क्षुद्रघण्टीनां क्वणिते=शिञ्जिते झण-झणशब्दे इति यावत् इवेत्युत्प्रेक्षायाम् श्रूयमाणे=आकर्ण्यमाने शाखिनां=तरूणां शिखरेषु=अग्रभागेषु ये कुलायाः=नीडाः [ 'कुलायो नीडमस्त्रियाम्' इत्यमरः ] तेषु लीयमानानि=तिष्ठन्ति यानि शकुनीनां=पक्षिणां कुलानि=समूहाः तेषां कूजिते=विरावे लोके एष विश्वासश्चलति यत् वीराणां महात्मनां च स्वर्गे आनयनाय देवाः विमानं प्रेषयन्ति; नाक० —नाकस्य=स्वर्गस्य पथि=मार्गे प्रस्थितं=प्रचलितं पार्थिवं=राजानं प्रभाकरवर्धनं प्रत्युद्गतं=स्वागतार्थमुपस्थितं यत् पुरुहूतस्य=इन्द्रस्य आतपत्रं=छत्रम् तस्मिन् इवेत्युत्प्रेक्षायाम्, दृश्यमाने=आलोक्यमाने चन्द्रमसि=चन्द्रे नरेन्द्रः=प्रभाकरवर्धनः (अनीयत) स्वयं समर्पितः=दत्तः स्कन्धः यैः तैः शवस्य=मृतकस्य शिबिकां=याप्ययानं गृहीत्वा शिबिना=अत्युदारेण एतन्नामकेन राजविशेषेण समः=तुल्यः प्रभाकरवर्धनः सामन्तैः=अधीननृपैः पौरैः=पुरवासिभिः पुरोहितः=पुरोधाः पुरःसरः=अग्रगामी येषां तथाभूतैः सरस्वतीं सरितं=नदीं नीत्वा नरपतेः=राज्ञः समुचितायां=योग्यायां चितायां=चित्यायां हुताशेन=हुताशन-द्वारा अग्निद्वारेत्यर्थः सत्क्रियया सत्कारेण यशः=कीर्तिः एव शेषः=अवशिष्टभागः यस्य तस्य भावः तत्ता ताम् अनीयत=प्राप्यत, दग्धो नृपः यशःशरीरमात्रेण स्थितः इति भावः।

पुञ्जीभूतेन=एकत्रीभूतेन सकलेन=समस्तेन जीवलोकेन=जगता इवेत्युत्प्रेक्षाम् राजकुलेन सम्बद्धेन=सम्बन्धवता शोकेन मूकेन=तूष्णीम्भूतेन पुञ्जीभूतेन अशेषेण=सर्वेण लोकेन=प्रजाभिरित्यर्थः परिवृतः=परिगतः अन्तः=हृदये वर्तिना=स्थितेन अपि शोकः एव अनलः=अग्निः तेन तप्तेन=प्राप्ततापेन स्नेहस्य पितरं प्रति प्रेम्णः द्रवेण=रसेन अश्रुणा बहिः=बाह्यशरीरे इवेत्युत्प्रेक्षायां सिच्यमानः=सेकं प्राप्यमाणः, अयं भावः स्नेहः खलु मनोगतो भावः, मनोगतशोकेन तप्तः सन् द्रवीभूय अश्रुरूपेण चक्षुर्भ्यां बहिर्निर्गतः हर्षवर्धनः सिञ्चतीव, निर्गतं व्यवधानम्=आस्तरणमित्यर्थः यस्याः तथाभूतायां नग्नायामिति यावत् धरण्यां=भूमौ उपविष्टः=स्थितः एव भीमरथीवत् भीमां=भयंकरीं ताम्=अखिलां निशीथिनीं=निशाम् (कालात्यन्तसंयोगे द्वि०) राजकेन=राजसमूहेन सह इति सराजकः जजागार=जागरित एव स्थितः इत्यर्थः। अस्य हर्षवर्धनस्य च चेतसि=मनसि अजनि=अभवत् विचारः आयातः इत्यर्थः—'ताते

**टिप्पणी—भीमरथी**—इस शब्द के अनेक ही अर्थ हैं पहला, यह एक नरक की नदी है—जो बड़ी भीषण होती है; दूसरा यह एक मानव आयु की रात्रि होती है जो सतहत्तरवें वर्ष और सातवें मास की सातवीं भयंकर रात होती है। इसे मनुष्य यदि पार कर ले तो वह शत वर्ष आयु भोगता है ('सप्तसप्ततिवर्षाणां सप्तमे मासि सप्तमी। रात्रिर्भीमरथी नाम नराणामतिदुस्तरा ॥'), तीसरा यह कालरात्रि होती है।

**हिन्दी**—इकट्ठे हुए सारे संसार से—जैसे राजकुल से सम्बन्ध रखने वाले, शोक में मौन सभी लोगों से घिरा हुआ देव हर्षवर्धन भी भीतर रहते हुए भी स्नेह के शोकानल से तपकर पिघले द्रव से—जैसे (अश्रुओं से) बाहर सींचा जाता हुआ नंगी जमीन पर बैठा-बैठा ही राजाओं सहित भीमरथी के समान भयंकर उस सारी रात को जागता ही रहा। और उसके मनमें विचार उठे—'पिताजी के चल बसने पर यह संसार अब बस इतना ही है, लोगों के (उन्नति)

**खिलीभूतानि भूतिस्थानानि, स्थगितान्यानन्दस्य द्वाराणि, सुप्ता सत्यवादिता, लुप्ता लोकयात्रा, विलीना बाहुशालिता, प्रलीना प्रियालापिता, प्रोषिताः पुरुषकारविहारविकाराः, समाप्ता समरशौण्डता, ध्वस्ता परगुणप्रीतिः विश्रान्ता विश्वास-भूमयः, अपदान्यवदानानि, निरुपयोगानि शास्त्राणि, निरवलम्बना विक्रमैकरसता, कथावशेषा विशेषज्ञता, ददातु जनो जलाञ्जलिमौर्जित्याय, प्रतिपद्यतां प्रव्रज्यां प्रजापालता, बध्नातु, वैधव्यवेणीं वरमनुष्यता, समाश्रयतु राजश्रीराश्रमपदम्, परिधत्तां धवले वाससी वसुमती, वहतु वल्कले विलासिता, तपस्यतु तपोवनेषु तेजस्विता, प्रावृणोतु चीवरे वीरता, स्व**

---

टीका- =पितरि दूरीभूते=परलोकं गते सम्प्रति=इदानीं जीवलोकः=संसारः खलु=निश्चयेन एतावान्=इयान् अर्थात् पितरि मृते संसारः एतस्मादधिकम् उन्नतो न भवितुं शक्नोति, लोकस्य=प्रजानाम् पन्थानः=मार्गाः भग्नाः=त्रुटिताः प्रजानामुन्नतिः प्रतिरुद्धेत्यर्थः, मनोरथानाम=अभिलषितानां भूतेः=समृद्धेः स्थानानि=विषयाः खिलीभूतानि=खिलम्=वन्ध्यं भूखण्डम् अकृष्टक्षेत्रं वा ('खिलाप्रहते समे' इत्यमरः) अखिलानि खिलानि भूतानि वन्ध्यीभूतानि विफलानि शून्यानि जातानीत्यर्थः, आनन्दस्य=आमोद-प्रमोदस्य द्वाराणि=मार्गाः स्थगितानि=रुद्धानि, सत्यं वदतीति सत्यवादी तस्य भावः तत्ता सुप्ता=निद्रिता, लोकयात्रा=संसारस्य व्यवहारः सुखपूर्वकं जीवनयापनमित्यर्थः लुप्ता=समाप्ता, बाहुभ्यां शालते=शोभते इति बाहुशाली तस्य भावः तत्ता भुजवीर्यमित्यर्थः विलीना=गता, प्रियालापिता=प्रियभाषिता प्रलीना=लुप्ता, पुरुषकारस्य=पौरुषस्य ये विहाराः=चेष्टितानि तेषां विकाराः=विविधरूपाणि प्रोषिताः=प्रवासं कृतवन्तः, दूरे गताः इत्यर्थः, समरेषु=रणेषु शौण्डता=मत्तता समाप्ता=अवसिता, परेषां गुणेषु प्रीतिः=प्रेम ध्वस्ता=नष्टा, विश्वासा=प्रत्ययस्य भूमयः=स्थानानि विश्रान्ताः=समाप्ताः, अपदानानि=अवदानानि वृत्तानि कर्माणीत्यर्थः ['अवदानं कर्म वृत्तम्' इत्यमरः] वृत्तिः प्रवर्तनं सा प्रशस्ता विद्यते यत्र तत्, यत्र कर्मणि वृत्तिः सर्वैः प्रशस्यते इत्यर्थः प्रशस्तकर्मणि इति यावत्, अपदानि=न पदं=स्थानं येषां तानि स्थानवञ्चितानीत्यर्थः शास्त्राणि=आगमग्रन्थाः निरुपयोगानि=निष्प्रयोजनानि शास्त्रनियमपालकमहाराजस्य अभावात्, विक्रमः=शौर्यं वीरत्वमिति यावत् एव एकः=एकमात्रम् रसः=भावो यस्य तस्य भावः तत्ता वीररसे एकनिष्ठावत्वमित्यर्थः निर्गतम् अवलम्बनम्=आश्रयः यस्याः आश्रयरहिता, विशेषं=कस्याः अपि विद्यायाः कलायाः वा अतिशयं जानातीति विशेषज्ञः तस्य भावः तत्ता, कथा एव अवशेषः यस्याः सा जनः=लोकाः और्जित्याय=ऊर्जः=बलम् स सञ्जातः अस्य इति (ऊर्ज+इतच्) ऊर्जितः अथवा√ऊर्ज (बलप्राणनयोः) क्तः तस्य भावः और्जित्यं तस्मै जलाञ्जलिम्=मृतस्य कृते दीयमानं जलतर्पणाञ्जलिम् ददातु=प्रयच्छतु राज्ञि मृते और्जित्यमपि मृतम् राजवत् तदर्थमपि तर्पणं जलं देयमिति भावः, 'भग्नाः पन्थानः' इत्यारभ्य 'जलाञ्जलिम् और्जित्याय' इत्येतत्पर्यन्तं राज्ञः मरणानन्तरमपि लोके उक्तविषयाणां सम्बन्धेऽपि असम्बन्धप्रतिपादनात् सम्बन्धेऽसम्बन्धातिशयोक्तिः अलङ्कारः, प्रजाः पालयतीति प्रजापालः तस्य भावः तत्ता प्रजारक्षणधर्मः, इत्यर्थः प्रव्रज्यां=संन्यासं प्रतिपद्यताम्=प्राप्नोतु, वरा=उत्कृष्टा मनुष्यता=मानवता वैधव्यस्य=विधवात्वस्य वेणीं=केशग्रन्थि बध्नातु, राज्ञि मृते वरमनुष्यता कमाश्रयेत्? इति भावः, राजश्रीः=राजलक्ष्मीः आश्रम-पदम्=तपोवनमित्यर्थः समाश्रयतु=गच्छतु, वसुमती=पृथिवी धवले=शुक्ले वाससी=वस्त्रद्वयम् परिधत्ताम्=विधत्तु, विधवानां कृते धवलवस्त्रद्वयधारणनियमात् विलासिता=भोगविलासित्वभावना वल्कले=तरुत्वचं वहतु=धारयतु, वल्कलधारणं हि वन्यजीवनप्रतीकं भवति, तेजस्विता=प्रतापिता तपोवनेषु तपस्यतु=तपस्यां करोतु वीरता=शूरता चीवरे=जीर्णवस्त्रद्वयम् अधोवस्त्रम् उत्तरीयञ्च प्रावृणोतु=परिधत्ताम्, कृतज्ञतया=कृतवेदित्वेन

हिन्दी—मार्ग टूट गए हैं, मनोरथों के समृद्धि-स्थान सूने पड़ गए, आनन्द के द्वार बन्द हो गए, सत्यवादिता सो बैठी, लोगों की (सुखपूर्वक) जीवन-यात्रा लुप्त हो गई, भुज-पराक्रम विलीन हो गया, मधुरभाषिता खो गई, पौरुष-कर्मों के विविध-रूप प्रवास कर गए, रण-मत्तता समाप्त हो गई, परगुणों के लिए प्रेम विनष्ट हो गया, विश्वास के स्थान नहीं रहे, प्रशस्त कार्य स्थान-वंचित हो गए, शास्त्र निष्प्रयोजन बन गए, वीररस के प्रति एकनिष्ठा निराश्रित हो गई, विशेषज्ञता कथाशेष रह गई, लोग उर्जस्विता को जलांजलि दें, प्रजापालन-धर्म संन्यास ले ले, उदात्त मानवता वैधव्य की एक वेणी बाँध ले, राजलक्ष्मी आश्रम-स्थान का आश्रय ले, पृथिवी दो श्वेत वस्त्र पहन ले, भोग-विलासिता वल्कल धारण कर ले, तेजस्विता तपोवनों में तप करे, वीरता दो जीर्ण वस्त्र ओढ़ ले, कृतज्ञता उसे (प्रभाकर वर्धन को)

गम्यतां पुनस्तस्य कृते कृतज्ञतया, क्व पुनः प्राप्स्यति तादृशान्महापुरुषनिर्माणपरमाणून्परमेष्ठी, शून्याः संवृत्ता दश दिशो गुणानाम्, जगज्जातमन्धकारं धर्मस्य, निष्फलमधुना जन्म शस्त्रोपजीविनाम्। तातेन विना कुतस्त्यास्तादृश्यो दिवसमसमसमर-रससमारब्धकलहकथाकण्टकितसुभटकपोलभित्तयो वीरगोष्ठ्यः। अपि नाम स्वप्नेऽपि दृश्येत दीर्घरक्तनयनं पुनस्तन्मुखसरोजम्, जन्मान्तरेऽपि पुनः परिष्वज्येत तल्लोहस्तम्भाभ्यधिकगरिमगर्भं भुजयुगलम्। लोकान्तरेऽपि 'पुत्र' त्यालपतः श्रूयेत सा सुधारसमुद्गिरन्ती मथ्यमानक्षीरसागरोद्गारगम्भीरा भारती' इति। एतानि चान्यानि च चिन्तयत एवास्य कथमपि सा क्षयमियाय यामिनी।

ततः शुचेव मुक्तकण्ठमारटत्सु कृकवाकुकुलेषु, गृहगिरितरुशिखरेभ्यः पातयत्स्वात्मानं मन्दिरमयूरेषु, परित्यक्तनिवासेषु च

---

टीका—तस्य = राज्ञः प्रभाकरवर्धनस्य कृते तमन्वेष्टुमित्यर्थः क्व गम्यताम् = व्रज्यताम्, परमेष्ठी = ब्रह्मा तादृशान् = तद्विधान् महापुरुषस्य निर्माणाय = सृष्टये परमाणून् क्षित्यादि महाभूतानां सूक्ष्मतत्त्वानि प्राप्स्यति = लप्स्यते, प्रभाकरवर्धन-सदृशमहापुरुषः ब्रह्मणा पुनर्निर्मातुं न शक्यते इति भावः, शून्याः = रहिताः सम्वृत्ताः = जाताः, धर्मस्य = सुकृतस्य कृते इति शेषः जगत् अन्धकारं = तिमिरं ['अन्धकारोऽस्त्रियाम्' इत्यमरः] जातम्, अन्धकारावृते जगति धर्मः कस्यापि पार्श्वे गन्तुं मार्गं न लभते इति भावः, शस्त्रैः = आयुधैः उपजीवन्तीति तथोक्तानां जन्म = जीवनम् अधुना निष्फलम् = निरर्थकम् तद्गुणग्राहकस्य राज्ञोऽभावात्, तातेन = पित्रा विना कुतः आगताः इति कुतस्त्याः (कुतस् + त्यप्) कुतः आगमिष्यन्तीति भावः तादृश्यः = ताः इव दृश्यन्ते लोकैः याः इति (तद् + √दृश् + कञ् + ङीप्) तत्प्रकाराः इत्यर्थः दिवसं = समग्रदिनपर्यन्तम् [कालात्यन्तसंयोगे द्वि०] असमः = अनुपमः यः समर-रसः = युद्धानुरागः तेन समारब्धाः = प्रक्रान्ताः कलहस्य = रणस्य कथाः = आख्यानानि ताभिः कण्टकिताः = सञ्जातकण्टकाः रोमाञ्चिताः इत्यर्थः सुभटानां = वीराणां कपोलयोः = गण्डयोः भित्तयः = फलकानि यासु ताः वीरगोष्ठ्यः = वीरपुरुष—सम्मेलनानि, अत्र सम-सम-समेति यमकस्य, र-र-स-से त्यनुप्रासस्य छटा द्रष्टव्या अपि नाम इत्यभीप्सायाम्, दीर्घे = आयते रक्ते = रक्तवर्णे च नयने = नेत्रे यस्मिन् तत् तस्य पितुः मुखं सरोजं = कमलमिवेत्युपमिततत्पु०, जन्मान्तरे = अन्यस्मिन् जन्मनि अपि परिष्वज्येत = आश्लिष्येत तस्य = पितुः लोहस्य स्तम्भात् = स्थूणात् अभ्यधिकः = अत्यधिकः गरिमा = गौरवं भारित्वमिति यावत् गर्भे = अभ्यन्तरे यस्य तत् भुजयोः युगलं = द्वयम्। 'पुत्र'! इति आलपतः = कथयतः श्रूयते = आकर्ण्यते सा सुधारसम् = अमृतरसम् उद्गिरन्ती = उद्वमन्ती मथ्यमानः = आलोड्यमानः यः क्षीरसागरः तस्य उद्गारवत् = शब्दवत् गम्भीरा = गभीरा भारती = वाणी। चिन्तयतः = विचारयतः एव अस्य = हर्षस्य सा यामिनी = रात्रिः क्षयं = समाप्तिम् इयाय = गता।

ततः शुचा = शोकेन इवेत्युत्प्रेक्षायाम् कृकवाकूनां = कुक्कुटानाम् [ 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः ] कुलेषु = समूहेषु मुक्तः कण्ठः यस्मिन् कर्मणि यथा स्यात्तथा उच्चैरित्यर्थः आरटत्सु = शब्दायमानेषु गृहाणि च गिरयः = पर्वताश्च तरवः = वृक्षाश्च तेषां शिखरेभ्यः = अग्रभागेभ्यः आत्मानं पातयत्सु = निक्षिपत्सु अवतरत्सु इति यावत् मन्दिरस्य = राजभवनस्य मयूरेषु = नीलकण्ठेषु, परित्यक्ताः = मुक्ताः निवासाः = निवासस्थानानि नीडानीत्यर्थः

हिन्दी—फिर ढूंढने कहाँ जाएगी? ब्रह्मा महापुरुष के निर्माण के लिये वैसे-जैसे परमाणु कहाँ पाएगा? गुणों के लिए दशों दिशायें सूनी पड़ गई हैं; धर्म के लिए जगत् अन्धकार-रूप हो गया है। शस्त्रजीवी लोगों का जन्म अब व्यर्थ पड़ गया है। पिता जी के विना अनुपम युद्धराग से आरम्भ हुई युद्ध-कथाओं से सुभटों के कपोल-स्थलों को रोमाञ्चित कर देने वाली दिन भर की वैसी वीर-गोष्ठियाँ कहाँ से आएँगी? काश! विशाल लाल लोचनों वाला उनका मुख-कमल स्वप्न में भी देखने को मिल जाता, अपने भीतर लोहे के खम्भे से भी कई अधिक गरिमा रखने वाले उनके दोनों भुजाओं को दूसरे जन्म में भी फिर गले लगा लेता, जमान्तर में भी—'पुत्र' इस प्रकार कहते हुए उनकी वह अमृत रस वर्षाने वाली, जोर से मथे क्षीर सागर के शब्द के समान गंभीर वाणी सुन पाता।' ऐसे और अन्य बातों को सोचते हुए ही उसकी वह रात किसी तरह कटी।

तदन्तर शोक से मानों गला फाड़-फाड़ कर मुर्गों के समूहों के चिल्लाने लगने पर, भवन मयूरों के अपने आप को गृहों (कृत्रिम) पर्वतों और वृक्षों के ऊपर से नीचे गिरा देने पर, निवास-स्थान छोड़े हुए पक्षियों के वन के लिए प्रस्थान

**वनाय प्रस्थितेषु पतत्ररथेषु, सद्यस्तनूभूते ताम्यति तमसि, मन्दीभूतात्मस्नेहेष्वभावमभिलषत्सु प्रदीपेषु, स्फुरदरुणकिरणवल्क-लावृततनुनि प्रव्रज्यामिव प्रतिपन्ने नभसि, प्रभातसमयेन समुत्तीर्यमाणासु पार्थिवास्थिशकलकन्धराविव धूसरासु तारकासु, भूभृद्धातुगर्भकुम्भधारिषु विविधसरःसरित्तीर्थाभिमुखेषु प्रस्थितेषु वनकरिकुलेषु, शवे शुचिसिक्थपटलपाण्डुरे पिण्ड इवापरपयोनिधिपुलिननिकटसरे पात्यमाने शशिनि, अनेन नृपचितानलधूमविसरधूसरीकृततेजसीव नरपतिशोकानलज्वाला-किणकलङ्ककालीकृतचेतसीव प्रोषितसमस्तान्तःपुरपुरन्ध्रिमुखचन्द्रवृन्दोद्वेगविद्राणवपुषीव प्रथमास्तमितरोहिणीरणरणकवि-**

---

टीका—यैः तेषु वनाय प्रस्थितेषु = कृतप्रस्थानेषु पत्ररथेषु = पत्राणि = पक्षाः रथः येषां तेषु पक्षिष्वित्यर्थः, सद्यः = सपदि तनूभूते = क्षीणीभूते ताम्यति = ग्लाम्यति दुःखायमाने (इवेति गम्योत्प्रेक्षा) तमसि = अन्धकारे, मन्दीभूतः = ह्रासंगतः आत्मनः = स्वस्य स्नेहः = तैलं येषु तेषु अभावम् = निर्वाणम् अभिलषत्सु = इच्छत्सु प्रदीपेषु = दीपकेषु, स्फुरत०— स्फुरन्तः = लसन्तः ये अरुणस्य = सूर्यसारथेः प्रातःकालीनारुणप्रभायाः इति यावत् ये किरणाः = रश्मयः एव वल्कलम् = तरुत्वक् तेन प्रावृतम् = आच्छादितं वपुः = शरीरं यस्य तस्मिन् प्रव्रज्याम् = संन्यासम् इवेत्युत्प्रेक्षा सा च रूपकेण संकीर्णा, प्रतिपन्ने = प्राप्ते नभसि = गगने, प्रभात०—प्रभात-समयेन = प्रातःकालेन समुत्तीर्यमाणासु = (अन्तर्भावित णिचि) समुत्तार्यमाणासु = अवतार्यमाणासु, पार्थिवस्य = राज्ञः प्रभाकरवर्धनस्य अस्थ्नां = कीकसानां यानि शकलानि = खण्डानि तेषां कन्धरावत् = ग्रीवावत् धूसरासु = धूसरवर्णासु तारकासु = ज्योतिष्पिण्डेषु, भूभृद्०—भूभृतः— राज्ञः प्रभाकरवर्धनस्य ये धातवः = अस्थीनि ते गर्भे = अभ्यन्तरे येषां तथाभूता ये कुम्भाः = घटाः इव (गम्योपमा) भूभृतां = गिरीणां ये धातवः = गैरिकादयः ते गर्भे = मध्ये येषां ते इति तद्गर्भाः ये कुम्भाः मूर्धांशाः [ कुम्भौ घटेभमूर्धांशौ' इत्यमरः ] तान् धारयन्तीति तथोक्तेषु वनस्य करिकुलेषु = गजयूथेषु विविधानि यानि सरांसि = सरोवराश्च सरितः =

टिप्पणी—मन्दीभूता०—शब्दशक्ति से यहाँ दूसरा अर्थ भी अभिव्यक्त होता है। स्नेह शब्द श्लिष्ट है। दूसरा अर्थ इसका प्रेम भी होता है। जब आत्मा का अपने आप के प्रति प्रेम मन्द पड़ जाता है, अर्थात् जब स्वजीवन सम्बन्धी आसक्ति समाप्त हो जाती है तो मनुष्य अभाव (मृत्यु) चाहने लगता है। पार्थिवास्थि—तारों का प्रभात द्वारा (सागर के पार) उतारे जाने के पीछे यह भाव है कि संस्कृत साहित्य में आकाश मंडल को अम्बुराशि के रूप में लिया जाता (नेदं नभोमण्डलमम्बुराशिः) है। प्रभात का समय तारों को पश्चिम तीर पर घर लाकर उतार देता है। प्रातः मन्द पड़े, चिड़िया के गले जैसे धूसर तारे राजा के अस्थि-खण्डों की तरह दिखाई पड़ते हैं, जिन्हें तीसरे-चौथे दिन प्रातःकालीन विधि-विधान से बटोर कर प्रवाह के लिये नदियों पर उतारा जाता है। किन्तु इस अर्थ में यहाँ एक विसंगति आ जाती है। वह यह कि अगले भूभृत्—वाले उपवाक्य में अस्थिशकलों को प्रवाह के लिए कुम्भों के भीतर धरने का उल्लेख है। इसके बाद ही तीर्थों पर उतारने का क्रम आता है। यहाँ पहले अस्थियों को उतारा जा रहा है, पीछे भरा जा रहा है। यह साहित्यिक दृष्टि से दुष्क्रमत्व दोष हो जाता है। सम्भवतः इसीलिए कॉवेल 'समुत्तीर्यमाणासु' के स्थान में कालिचरण के अनुसार 'समुच्चीयमानेषु' पाठ अपनाता है। इससे दोष नहीं आता क्योंकि तारों के समान अस्थियों का चयन पहले होता है, कुम्भों में धरने का काम पीछे होता है। हम भी इस पाठ से सहमत हैं।

हिन्दी—कर चुकने पर, दुःखी होते हुए (जैसे) अन्धकार के तत्काल क्षीण होने पर, कम हुए अपने स्नेह (तैल; प्रेम) वाले दीपकों का बुझना चाहने लगने पर, चमक रहे लाल लाल किरण-रूपी वल्कल से शरीर ढके हुए आकाश के संन्यास जैसे ले चुकने पर, राजा के अस्थि कणों के अंशों की तरह चिड़ियों की गर्दन-जैसे धूसर-वर्ण के तारागों के उतारे जाने लगने पर, भूभृत् (राजा) के धातुओं (अस्थियों) को अपने भीतर रखे कुम्भों (कलशों) के समान भूभृत् (पर्वत) के धातु (गेरू आदि) भीतर लगे हुए कुम्भों (गण्डस्थलों) वाले वन के गज-समूहों के सरोवरों, नदियों, तीर्थों (घाटों, पवित्र स्थानों) की ओर चल पड़ने पर, शुद्ध सिक्थ (भात) के ढेर से श्वेत बने मृतक को दिये जाने वाले पिण्ड की तरह श्वेत सिक्थ के ढेर जैसे श्वेत पीले चन्द्रमा के पश्चिम सागर के सैकततल के पास गिरा दिये जाने पर राजा की चितागिन के धूम के फैलने से मानों तेज में धूसर वर्ण बने, राजा के शोकानल द्वारा जलने के व्रण-चिह्न के कलंक से मानो चित्त में (भीतर) काले पड़े हुए (राजा के साथ) प्रवास करने वाली सभी अन्तःपुर की महिलाओं के मुख-चन्द्रों के समूह के दुःख से मानों शरीर रूप में भागते हुए और पहले अस्त हुई रोहिणी के प्रति उत्सुकता से

मनसीव चास्तमुपगते रजनिकरे, राजतीव देवे दिवमारुढे सवितरि, परिवृत्ते राज्य इव रजनीप्रबन्धे, प्रबुद्धराजहंसमण्डल-प्रबोध्यमानः पङ्कजाकर इव चचाल[1] चोपस्नानाय देवो हर्षः। ततश्च नूपुररवविराममूकमन्दमन्दिरहंसेषु शोकाकुलकतिपय-कञ्चुकिमात्रावशेषेषु शुद्धान्तेषु, पतितयूथप इव वनगजयूथे कक्ष्यान्तरवर्तिनि पितृपरिजने, विषादिन्युपरिरुदन्निषादिनि च स्तम्भनिषण्णे निष्पन्दमन्दे राजकुञ्जरे, मन्दुरापालकाक्रन्दकथिते वाजिरभाजि राजवाजिनि, विश्रान्तजयशब्दकलकले च

---

टीका—नद्यश्च तीर्थानि=पवित्रस्थानानि अन्यत्र जलावतरणस्थानानि घाटेति भाषायां प्रसिद्धानि च तेषाम् अभिमुखेषु=उन्मुखेषु, शाव०—शवस्यायं शावः—शवसम्बन्धीत्यर्थः अन्यत्र पाण्डुरे, शुचि=पवित्रं सिक्थस्य=भक्तस्य ओदनस्येति यावत् यत् पटलं=समूहः तेन पाण्डुरे=पाण्डुवर्णे पिण्डे=गोलके इवेत्युपमायाम् शुचि=श्वेतं यत् सिक्थस्य=मधूच्छिष्टस्य [ 'सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकम्' इति मेदिनी ] पटलं तद्वत् पाण्डुरे शशिनि=चन्द्रे अपरपयोनिधेः=पश्चिमसमुद्रस्य पुलिनस्य=सैकतस्य वालुकामयतीरप्रदेशस्येति यावत् परिसरं=पर्यन्तभुवि [ 'पर्यन्तभूः परिसरः' इत्यमरः ] शशिनि=चन्द्रे पात्यमाने=प्रक्षिप्यमाणे, मृतकेभ्यः पिण्डः पवित्रनदीनां समुद्रस्य च सैकतेषु दीयते, क्रमेण—नृपस्य=राज्ञः प्रभाकरवर्धनस्य यः चितानलः=चिताग्निः तस्य धूमस्य विसरे=विस्तारेण धूसरीकृतं=धूसरवर्णीकृतं तेजः=प्रकाशः यस्य तस्मिन् इवेत्युत्प्रेक्षायाम् [ 'एतदादीनि रजनिकरे' इत्यस्य विशेषणानि ] नरपति०—नरपतेः=राज्ञः शोकः एव पावकः=वह्निः तेन यः दाहः=प्लोषः तेन यः किणः=व्रणः तस्य कलङ्केन=चिह्नेन कालीकृतं=श्यामवर्णीकृतं चेतः=चित्तं यस्य तस्मिन्, इवेत्युत्प्रेक्षायाम् चन्द्रगतकलङ्कः राजशोकानलकृतदाहचिह्नत्वेन कल्प्यते, प्रोषित०—प्रोषितः=लोकान्तरे कृतप्रवासाः राज्ञा सह मृताः इत्यर्थः याः समस्ताः=समग्राः अन्तःपुरस्य पुरन्ध्रयः=गृहिण्यः महिष्यः इति यावत् तासां ये मुखान्येव चन्द्राः ( रूपकम् ) तेषां वृन्दस्य=समूहस्य उद्वेगेन दुःखेन विद्राणम्=( वि + $\sqrt{}$द्रा + क्त ) पलायितं वपुः=शरीरं यस्य तस्मिन् इवेत्युत्प्रेक्षायाम्, प्रथमा०—प्रथम=पूर्वम् अस्तमिता=अस्तङ्गता या रोहिणी=चन्द्रस्य प्रेयसी ( नक्षत्रविशेषः ) तया यः रणरणकः उत्सुकता तेन विमना=विगतं मनो यस्य आकुलमनाः इत्यर्थः तस्मिन् इवेत्युत्प्रेक्षायाम्, रजनिकरे=चन्द्रे अस्तम् उपगते=अस्तमिते सति, दिवम्=स्वर्गम् आरूढे गते देवे=महाराजे प्रभाकरवर्धने इवेत्युपमायाम् देवे=भगवति सवितरि=भास्करे दिवम्=आकाशम् आरूढे=अधिष्ठिते राजति=भ्राजमाने सति, अर्थात् स्वर्गमारूढः प्रभाकरवर्धनः यथा राजति तथा सूर्योपीति भावः, कावेल-महोदयः 'राजतीव' इत्यस्य स्थाने 'राजनीव' पाठं ददाति, स च समीचीनतरः प्रतिभाति अत्र दिवि आरोहणं सामानो धर्मः, राजधर्मस्तु स्वर्गते राजनि सूर्यवत् न दृश्यते, राज्ये इवेत्युपमायाम् रजन्याः=रात्र्याः प्रबन्धे=सातत्ये परिवृत्ते=भ्रान्ते विपर्यस्ते परिवर्तिते इति यावत् प्रबुद्धाः=जागरिताः ये राजहंसाः=हंसविशेषाः [ 'राजहंसास्तु ते चञ्चुचरणैः लोहितैः सिताः' इत्यमरः ] तेषां मण्डलेन=समूहेन प्रबोध्यमानः=उत्थाप्यमानः पङ्कजानां=कमलानाम् आकरः वनं समूहः इति यावत् इवेति श्लिष्टोपमायाम्, प्रबुद्धाः=प्रबोधशीलाः ज्ञानवन्तः इत्यर्थः ये राजानः हंसाः इवेत्युपमिततत्पु० श्रेष्ठभूपाः तेषां मण्डलेन प्रबोध्यमानः=प्रबोधं प्राप्यमाणः सान्त्व्यमानः इति यावत् देवः हर्षः, अवस्नानाय=कस्यापि बान्धवस्य मृत्यौ क्रियमाणं स्नानम् अपस्नानमुच्यते, तस्मै चचाल=चलितवान्। नूपुर० नूपुराणां=मञ्जीराणां रवस्य=क्षणत्कारस्य विरामेण सर्वासां महिषीणां सह मृतत्वात् अवसानेन मूकाः

हिन्दी—अनमने—जैसे हुए चन्द्रमा के धीरे-धीरे अस्त हो जाने पर, द्युलोक (स्वर्ग) में गए हुए देव प्रभाकरवर्धन की तरह द्युलोक (आकाश) में चढ़े हुए सूर्य के प्रकाशित होने लगने पर, प्रबुद्ध (पूर्व जगे हुए) राजहंसों (हंस विशेषों) के समूह द्वारा जगाए जा रहे कमलवन की तरह प्रबुद्ध (ज्ञानी) राजहंसों (श्रेष्ठ राजों) के समूह द्वारा समझाया जाता हुआ देव हर्षवर्धन अशौच स्नान के लिये चल पड़ा। तदन्तर अन्तःपुरों में नूपुरों की झंकार के अभाव में मौन मन्द पड़े हुए भवन-हंस एवं शोकाकुल कुछेक कञ्चुकी-मात्र शेष रह जाने पर, अपने खोये हुए यूथपति वाले वनगजों के यूथ के समान पिता के नौकर-चाकरों के ही कोठे के भीतर रह जाने पर (पीठ के) ऊपर बैठे रोते हुए महावत, वाले शोकाकुल राजगज के स्तम्भ के पास चुपचाप, ढीला-ढाला स्थित रहने पर, अश्वशाला-रक्षक के करुण क्रन्दनों से जाने जा रहे राजा के घोड़े जो आंगन में पड़े रह जाने पर (राजा के) विशाल सभामण्डप के जय-जयकार के

---

१. 'चचाल देवो हर्षः'

शून्ये च महास्थानमण्डपे दह्यमानदृष्टिर्निर्जगाम राजकुलात्। अगाच्च सरस्वतीतीरं तस्यां स्नात्वा पित्रे ददावुदकम्। अपस्नातश्चानिष्पीडितमौलिरेव परिधायोद्गमनीयदुकूलवाससी निश्वासपरो निरातपत्रो निरस्तसारणः समुपनीतेऽपि सप्तौ चरणाभ्यामेव नासाग्रासक्तेन रक्ततामरसताम्रेण चक्षुषा हृदयावशेषस्यापि पितुर्दाहशङ्कया शोकाग्निमिव उद्गिरन्-ताम्बूलस्यापि सुचिरप्रक्षालितस्य कल्पतरुकिसलयस्येव[1] स्वभावपाटलस्याधरपल्लवस्य प्रभया मांसरुधिरकवलानिव हृदयाभिघातादुष्णमन्युष्णनिश्वासमोक्षं भवनमाजगाम।

---

टीका—=तूष्णीभूताः मन्दाः शिथिलाश्च मन्दिरहंसा=भवनहंसाः येषु तेषु, शोकेन आकुलाः=विह्वलाः कतिपये=कतिचित् कञ्चुकिनः=सौविदल्लाः एव कुञ्चुकिमात्रम् [ 'मात्रं कात्स्न्यविधारणे' इत्यमरः ] अवशेषः=शेषः येषु शुद्धा=अन्तः-पुरेषु पतित०—पतितः विनष्टः इत्यर्थः यूथपः=यूथपतिः यस्य तस्मिन् वनगजानां=वनहस्तिनां यूथे=समूहे इवेत्युपमायाम् पितुः परिजने=भृत्यवर्गे कक्ष्यायाः=प्रकोष्ठस्य अन्तरे=अन्तः वर्तते इति वर्तीनि सति, विषादि०—विषादः अस्यास्तीति तथोक्ते उपरि=पृष्ठे रुदन्=क्रन्दन् निषादी=हस्तिपकः यस्य तस्मिन् [ 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः ] स्तम्भे=आलाने निषण्णे=स्थिते राजकुञ्जरे=राजगजे निष्पन्दः=निश्चेष्टश्चासौ मन्दः=विषण्णः शोकशिथिलः इत्यर्थः तस्मिन् मन्दुरा०—मन्दुरायाः=वाजिशालायाः ( 'वाजिशाला तु मन्दुरा' इत्यमरः ) पालकस्य=रक्षकस्य आक्रन्दैः=आर्तनादैः कथिते=बोधिते इत्यर्थः, क्वचित् 'व्यथिते' इत्यपि साधीयान् पाठः लभ्यते, प्राङ्गणं भजतीति तथोक्ते राजवाजिनि=राज्ञः अश्वे विश्रान्त०—विश्रान्तः='जय' शब्दस्य कलकलः=कोलाहलः यस्मिन् तस्मिन् शून्ये=जनरहिते च महान्=विशालश्चासौ आस्थान-मण्डपः=सभामण्डपः तस्मिन् दह्यमाना=शोकेन प्लुष्यमाणा दृष्टिः=नयनं यस्य सः राजकुलात्=राजगृहात् निर्जगाम=निरगच्छत्। अगात्=गतवान् सरस्वत्याः नद्याः तीरं उदकम्=जलाञ्जलिं ददौ=अर्पितवान्। अपस्नातः=मृतस्नातः [ 'अपस्नातो मृतस्नातः' इत्यमरः ] अर्थात् पितुः मरणानन्तरं कृतस्नानः, अनिष्पीडितः=न निष्पीडितः=प्रोञ्छितः मौलिः=केशसमूहः [ 'चूडाकिरीटं केशाश्च संयता मौलयस्त्रयः' इत्यमरः ] येन तथाभूतः एव उद्गमनीये=धौतवस्त्रयुगलरूपे [ 'तत् स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम्' इत्यमरः] दुकूलवाससी=अंशुक-वसने परिधाय=धृत्वा निश्वासः=निश्वसितं दीर्घश्वासोच्छ्वासा इत्यर्थः परं=प्रधानं यस्य स, दीर्घं निश्वसन्निति यावत्, निरातपत्रः=छत्ररहितः मित्रादि-मरणे छत्रादिधारणनिषेधात्, निर्गता उत्सारणा=राज्ञे मार्गदानाय राजभृत्यैः लोकानाम् अपसारणं यस्मात् सः सप्तौ अश्वे समुपनीते=समुपस्थापिते अपि चरणाभ्यां=पादाभ्यां एव नासायाः=नासिकायाः घ्राणस्येत्यर्थः अग्रे=अग्रभागे आसक्तेन=संलग्नेन रक्ते=रक्तवर्णे

टिप्पणी—हृदयावशेषस्यापि—शोक से हर्ष की आँखें लाल हो बैठी थीं। इस पर कवि की कल्पना यह है कि पिता के मर जाने के बाद अब वे उसके हृदय में ही निवास करते हैं, शोक भी हृदय में ही है। कहीं शोकाग्नि हृदयस्थ पिता को भी न जला बैठे इसलिए वह उसे मानों आंखों के मार्ग से बाहर निकाल रहा है।

हृदयाभिघातः—वह जब गरम आहें छोड़ रहा था तो आगे की पल्लव—समान रक्त आभा भी निकल रही थी इस पर कवि की कल्पना यह है कि मानो वह मुख से मांस-खण्ड और खून उगल रहा था, क्योंकि उसके हृदय में पिता की मृत्यु से आघात—गहरी चोट लग गई थी। जिसके हृदय पर आघात होता है वह खून की उल्टी करता है और उसमें मांस के टुकड़े भी निकलते हैं।

हिन्दी-कोलाहल से रहित एवं सुनसान पड़ जाने पर आँखों में दाह लिये हुए हर्षवर्धन राजकुल से निकल पड़ा और सरस्वती नदी के तीर पर चला गया। वहाँ स्नान करके उसने पिता को जल दिया। मृतशौच स्नान किये, बालों को बिना पोंछे श्वेत वस्त्र के रूप में दो रेशमी कपड़े पहनकर, आहें भरता हुआ बिना छत्र के और बिना भृत्यों द्वारा मार्ग से लोगों को हटवाये घोड़ा लाये जाने पर भी पैदल ही, नाक के अग्र-भाग पर टिकी हुई लाल कमल के समान लाल आँखों से हृदय-भाग में शेष रहे भी पिता के दाह की आशंका के कारण शोकाग्नि को जैसे बाहर निकालता हुआ, बिना पान खाये हुए भी बहुत समय पहले धोये, कल्पवृक्ष के किसलय से स्वभावतः लाल ओष्ठ-पल्लव की कान्ति से हृदय पर आघात होने के कारण छोड़े हुए गरम आहों से मांस और खून के ग्रासों को—जैसे उगलता हुआ हर्षवर्धन घर आ गया।

---

१. 'किसलयकोमलस्येव'

राजवल्लभास्तु भृत्याः सुहृदः सचिवाश्च तस्मिन्नेवाहनि निर्गत्य प्रियं पुत्रदारमुत्सृज्योद्बाष्पैर्बन्धुभिर्वार्यमाणा अपि बहुनृपगुणगणहृतहृदयाः केचिदात्मानं भृगुषु बबन्धुः, केचित्तत्रैव तीर्थेषु तस्थुः, केचिदनशनैरास्तीर्णतृणकुशा व्यथमानमानसाः शुचमसमामशमयन्, केचिच्छलभा इव वैश्वानरं शोकावेगविवशा विविशुः, केचिद्दारुणदुःखदहनदह्यमानहृदया गृहीतवाचस्तुषारशिखरिणं शरणमुपययुः, केचिद्विन्ध्योपत्यकासु वनकरिकुलकरशीकरासारसिच्यमानतनवः पल्लवशयनशायिनः सन्तापमशमयन्, केचित्संनिहितानपि विषयानुत्सृज्य सेवाभिमुखाः परिच्छिन्नैः पिण्डकैरटवीभुवः शून्या जगृहुः, केचित्पवनाशना धर्मघना धमद्धमनयो मुनयो बभूवुः, केचिद्गृहीतकाषायाः कापिलं मतमधिजगिरे गिरिषु, केचिदाचोटितचूडामणिषु शिरःसु

---

टीका—यत् तामरसं=कमलं तद्वत् ताम्रेण=रक्तेन चक्षुषा=नेत्रेण हृदये अवशेषः=अवशिष्टभागः यस्य तस्य पितुः दाहस्य=प्लोषस्य शङ्कया=भयेन शोकाग्निम् इवेत्युत्प्रेक्षायाम् उद्गिरन्=बहिः निस्सारयन् अताम्बूलस्य=ताम्बूलभक्षणरहितस्य अपि सुचिरं=बहुकालपूर्वं प्रक्षालितस्य=कृतप्रक्षालनस्य कल्पतरोः=कल्पवृक्षस्य किसलयस्य=पल्लवस्य इवेत्युपमायां स्वभावतः=निसर्गतः पाटलस्य=रक्तवर्णस्य अधरः=ओष्ठः पल्लवः इवेत्युपमिततत्पु० तस्य प्रभया=कान्त्या हृदयस्य अभिघातात्=आघातात् कारणात् मांसस्य रुधिरस्य=रक्तस्य च कवलान्=ग्रासान् इवेत्युत्प्रेक्षायाम् उद्वमन्=उद्गिरन् उष्णानां निश्वासानां मोक्षैः=मोचनैः निस्सारणैरित्यर्थः भवनम्=गृहम् आजगाम=आगच्छत् ।

राज्ञः प्रभाकरवर्धनस्य वल्लभाः=प्रियाः भृत्याः=सेवकाः, सुहृदः=मित्राणि, सचिवाः=अमात्याश्च तस्मिन् एव अहनि=दिने निर्गत्य=निःसृत्य पुत्राश्च दाराः पत्न्यश्च तेषां समाहारः तत् उत्सृज्य=त्यक्त्वा उद्गतम्=निर्गतं वाष्पं=अश्रु येषां तैः बन्धुभिः=बान्धवैः वार्यमाणाः=निरुध्यमानाः अपि बहवः ये नृपस्य=प्रभाकरवर्धनस्य गुणानां=वीरत्वादिधर्माणां गणाः तैः हृतम्=आकृष्टम् हृदयं तथाभूताः केचिद्, आत्मानं=स्वं भृगुषु=प्रपातेषु ['प्रपातस्त्वतलं भृगुः' इत्यमरः] ववन्धुः=बद्धवन्तः। आत्मनः भृगुभ्यः पातनाय हस्तपादबन्धनमकुर्वन्निति भावः, तीर्थेषु=पवित्रस्थानेषु तस्थुः=स्थितवन्तः, अनशनैः=भोजनत्यागैः आस्तीर्णानि=विततानि तृणानि=घासाश्च कुशाः=दर्भाश्च यैः ते व्यथमानं=पीड्यमानं मानसं=मनः येषां ते असमाम्=अतुलाम् शुचम्=शोकम् अशमयन्=शमम् अनयन् अर्थात् अनशनं कृत्वा शोकम् असमापयन् अम्रियन्तेति यावत् शलभाः=पतङ्गविशेषाः इवेत्युपमायां शोकस्य यः आवेगः=क्षोभः तस्य विवशाः=वशीभूताः सन्तः वैश्वानरम्=अग्निम् ['अग्निर्वैश्वानरो वह्निः' इत्यमरः] विविशुः=प्राविशन्, दारुणं=कठोरं यत् दुःखम् एव दहनः=अग्निः तेन दह्यमानं=प्लुष्यमाणं हृदय येषां ते गृहीता=निगृहीता संयमितेति यावत् वाक्=वाणी यैः ते मौनव्रतिनः इत्यर्थः तुषारस्य=हिमस्य शिखरिणं=पर्वतं हिमालयपर्वतमित्यर्थः शरणम्=आश्रयम् उपययुः उपागच्छन् विन्ध्यस्य=विन्ध्याचलस्य उपत्यकासु=आसन्नभूमिषु ['उपत्यकाऽद्रेरासन्ना भूः' इत्यमरः] वनस्य करिणां=गजानां कुलस्य=समूहस्य कराणां=शुण्डानां शीकराणां जलकणानां आसारैः=धाराभिः सिच्यमाना=सिक्तीक्रियमाणा तनुः=शरीरं येषां ते पल्लवानां=किसलयानां शयनेषु=शय्यासु शेरते इति० शायिनः सन्तापं=शोकजनितदाहम् अशमयन्=शान्तमकुर्वन्, सन्निहितान्=समीपस्थान् अपि विषयान्=उपभोगवस्तूनि उत्सृज्य=परित्यज्य सेवातः=राजसेवावृत्तितः विमुखाः=पराङ्मुखाः सन्तः परिछिन्नैः=सीमितैः पिण्डकैः=

हिन्दी—किन्तु राजा के प्रिय भृत्य, मित्र और सचिव उसी दिन (घर से) निकल कर प्रिय पुत्रों और पत्नियों को त्याग कर आँसू बहाते हुए बान्धवों द्वारा रोके जाते हुए भी राजा के बहुत से गुणगणों से हृदय में आकृष्ट हुए, कोई तो चट्टानों से गिराने के लिए अपने को बाँध बैठे, कोई वहीं तीर्थों में रह गए, कोई तृणकुशा बिछाये, हृदय में व्यथित होते हुए अनशन द्वारा अपने अतुल शोक को शान्त कर गए, कोई शोक के आवेश में विवश होकर पतंगों की तरह अग्नि में प्रविष्ट हो गए, कोई हृदय में दारुण दुःखाग्नि से जलते हुए, मौन-व्रत धारण किये हिमालय पर्वत की शरण में चले गए, किन्हीं ने विन्ध्याचल की तलहटी में वन के गज-समूह के सूँड़ों के जल कणों से शरीर पर सींचे जाते हुए और पत्तों की शय्या पर सोते हुए अपने सन्ताप को शान्त किया, किन्हीं ने समीप में स्थित हुए भी विषयों को लात मारकर नौकरी से मुँह फेरे, सीमित ग्रासों के साथ शून्य वन भूमियाँ अपना ली, कोई धर्म-धनी हवा ही खाते हुए (कृशता के कारण शरीर पर) उठी हुई धमनियों (नसों) वाले मुनि बन बैठे, कोई गेरुआ वस्त्र पहने पहाड़ों में कापिल-मत (सांख्य-सिद्धान्त) का अध्ययन करने लगे, कोई महादेव की शरण में गए, शिरों से चूड़ामणि उखाड़ जटाधारी

शरणीकृतधूर्जटयो जटा जघटिरे। अपरे परिपाटलप्रलम्बचीराम्बरसंवीताः स्वाम्यनुरागमुज्ज्वलं चक्रुः। अन्ये तपोवनहरिणजिह्वाञ्चलोल्लिह्यमानमूर्तयो जरां ययुः। अपरे पुनः पाणिपल्लवप्रमृष्टैराताम्ररागैर्नयनपुटैः कमण्डलुभिश्च वारि वहन्तो गृहीतव्रता मुण्डा विचेरुः।

देवमपि हर्षं तदवस्थं पितृशोकविह्वलीकृतम्, श्रियं शाप इति महीं महापातकमिति राज्यं रोग इति भोगान्भुजङ्गा इति निलयं निरय इति बन्धुं बन्धनमिति जीवितमयश इति देहं द्रोह इति कल्यतां कलङ्क इति आयुरपुण्यफलमिति आहारं विषमिति विषममृतमिति चन्दनं दहन इति कामं क्रकच इति हृदयस्फोटनमभ्युदय इति च मन्यमानम्, सर्वासु क्रियासु विमुखम्,

---

टीका—पांसैः शून्याः जनरहिताः अटव्याः=अरण्यस्य भुवः=भूमयः स्थानानीत्यर्थः जगृहुः=गृहीतवन्तः आश्रितवन्तः इति यावत्, पवनम्=वायुम् अश्नन्ति=भक्षयन्तीति तथोक्ताः वायुभक्षाः सन्तः इत्यर्थः धर्म एव धनं येषां ते, धमन्यः=उद्गच्छन्त्यः स्फायमानाः स्फुरन्त्यः इति यावत्, धमन्यः=नाड्यः येषां ते अर्थात् कृशतया तेषां शिराजालं सुस्पष्टं दृश्यते स्म, मुनयः बभूवुः=जाताः, गृहीतं=धृतं काषायं=काषायेण रक्तं वस्त्रं यैः ते कपिलस्य=सांख्यशास्त्रप्रवर्तकमुनिविशेषस्येदं कापिल (अण्) मतं=सिद्धान्तम् अधिजगिरे=(अधि + √इ + लिट्) अधीतवन्तः गिरिषु=पर्वतेषु, आचोटिता (आ + √चुट् (छोदने चु०) + क्त) उच्छिन्नाः उत्खाताः इत्यर्थः चूडामणयः=शिरोरत्नानि येभ्यः तेषु शिरःसु शरणीकृतः=आश्रितः धूर्जटिः=शिवः यैः ते जटाः जघटिरे=बबन्धुः। अपरे परिपाटलं=पक्वितः रक्तवर्णं प्रलम्बं=दीर्घञ्च यत् चीराम्बरं=जीर्णशीर्णवस्त्रं तेन संवीताः=आवृताः स्वामिनि=प्रभाकरवर्धने अनुरागं=भक्तिम् उज्ज्वलं=प्रदीप्तं भासुरमिति यावत् चक्रुः=कृतवन्तः। अन्ये तपोवनस्य ये हरिणाः=मृगाः तेषां जिह्वाञ्चलैः=जिह्वाग्रैः उल्लिह्यमाना=आस्वाद्यमाना मूर्तिः=शरीरं येषां तैः जरां=वार्धक्यं ययुः=प्राप्तवन्तः। अपरे पाणिः=करः पल्लवः=किसलयः इवेत्युपमिततत्पु० तेन प्रमृष्टैः=प्रोञ्छितैः, अथ च निघृष्टैः=मार्जितैरित्यर्थः आताम्रः ईषद्-रक्तः रागः=वर्णः येषां तैः नयनपुटैः=नेत्रपुटैः पुटाकारनेत्रैरित्यर्थः कमण्डलुभिः व्रतिनां जलपात्रविशेषैश्च वारि=अश्रु जल च जलं वहन्तः धारयन्तः गृहीतं=स्वीकृतं व्रतं=संन्यासनियमः यैः ते मुण्डाः=मुण्डितशिरसः विचेरुः=विचरणं कृतवन्तः। अत्र प्रस्तुतानां नयपुट-कमण्डलूनां पाणिपल्लवप्रमृष्टत्वादाम्ररागत्वरूपैकधर्माभिसम्बन्धात् तुल्ययोगितालङ्कारः।

'देवं हर्षमपि……मुनयः…… पौराणिकाः पर्यवारयन्' इत्यस्ति वाक्यम्। सा अवस्था=दशा यस्य तम् तदवस्थम्, पितुः शोकेन विह्वलीकृतं=व्याकुलीकृतम् श्रियं=राजलक्ष्मीं शापः=अभिशापः इति मन्यमानम्=अवगच्छन्तम्, एतद् पदम् अग्रेपि योज्यम्, अत्र प्रत्येक-शब्दयुगले श्रियं शापः 'महीं महा', 'राज्यं रोगः' इत्याद्यनुप्रास-च्छटा अवधेया, महीम्=पृथिवीं महापातकम् इति [ 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ] राज्यं रोगः दुःखदायकत्वात्, भोगान्=विषयसुखानि भुजङ्गाः=सर्पाः, सर्पाः खलु दर्शने रमणीयाः सन्तोऽपि प्राणघातकाः

टिप्पणी—पाणिपल्लव०—यहाँ कवि ने 'नयनपुटों' और 'कमण्डलुओं' का एक-जैसा चित्रण किया है। आँखों से आँसू बह रहे थे, जिन्हें वे हाथ से प्रमृष्ट कर रहे ( पोंछ रहे ) थे; कमण्डलुओं को भी वे हाथ से प्रमृष्ट कर रहे ( मजा रहे ) थे, आँखें रोते रहने से आताम्र-कुछ लाल-हो बैठी थीं, कमण्डलु भी आताम्र—कुछ लाल रंग के—थे, आँखों से वारि ( अश्रु जल ) वहन ( धारण ) कर रहे थे, कमण्डलुओं से भी वे वारि ( जल ) वहन कर रहे थे ( ले जा रहे थे )।

हिन्दी—बन गए। अन्य लाल रंग का लंबा जीर्णवसन ओढ़े स्वामि-भक्ति को उज्ज्वल बना गए। शरीर से तपोवन के मृगों के जिह्वाग्रों द्वारा चाटे जाते हुए दूसरे और (लोग) वृद्धावस्था प्राप्त कर बैठे। (कई) और पल्लव सदृश हाथ से मले (पोंछे; मजाए) हुए कुछ-कुछ लाल रंग के नयनपुटों और कमण्डलुओं से (अश्रु, पानी) धारण करते हुए, (संन्यास)—व्रत अपनाए मुंड-मुड़ाये विचरण करने लगे।

वैसी अवस्था में स्थित हर्षवर्धन को भी—जिसे पिता के शोक ने विह्वल बना दिया था, जो राजलक्ष्मी को अभिशाप, पृथिवी को महापाप, राज्य को रोग, घर को नरक, बन्धु को बन्धन, जीवन को अपयश, देह को द्रोह, स्वास्थ्य को कलंक, आयु को पापों का फल, भोजन को विष, विष को अमृत, चन्दन को आग, इच्छा को आरी, और हृदय फटने को अभ्युदय—जैसा मान रहा था एवं जो सभी कामों से विमुख हो बैठा था—पिता और पितामह द्वारा अपनाये

पितृपितामहपरिग्रहगताश्चिरन्तनाः कुलपुत्राः वंशक्रमाहितगौरवाश्च प्राह्यगिरो गुरवः श्रुतिस्मृतीतिहासविशारदाश्च जरद्द्विजातयः श्रुताभिजनशीलशालिनो मूर्धाभिषिक्ताश्चामात्या राजानो यथावदधिगतात्मतत्त्वाश्च संस्तुता मस्करिणः समदुःखसुखाश्च[1] समाश्रिताः सनाभयश्चित्तज्ञाश्च प्रधाना सचिवाः निष्कारणबान्धवाश्च मुनयः संसारासारत्वकथनकुशला ब्रह्मवादिनः शोकापनयननिपुणाश्च पौराणिकाः पर्यवारयन् ।

अस्वतन्त्रीकृतश्च तैर्मनसापि नालभत शोकानुप्रवणमाचरितुम् । अनुनीयमानश्च कथं कथमप्याहारादिकासु क्रियास्वाभिमुख्यमभजत । भ्रातुगतहृदयश्चाचिन्तयत्—अपि नाम तातस्य मरणं महाप्रलयसदृशमिवमुपश्रुत्य आर्यो बाष्पजलस्नातो

टीका–भवन्ति, एवं सांसारिक-भोगाः अपि, निलयं=गृहं निरयः=नरकः [ स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्' इत्यमरः ] गृहे हि हर्षेण दुःखान्यभूतानि, बन्धुं=बान्धवम् बन्धनं=बन्धनकारणम् भ्रातुः राज्यवर्धनस्य कारणादेव हर्षस्य गृहं त्यक्तुमशक्यत्वात्, जीवितं=जीवनम् अयशः=अकीर्तिः तादृशस्य पुरुषोत्तमस्य पितुः मरणानन्तरमपि तत्पुत्रः जीवतीति महती निन्देति भावः देहं=शरीरं द्रोह-अनिष्टचिन्तनहेतुत्वात्, कल्यस्य=निरामयस्य भावः कल्यता=स्वास्थ्यं ताम् [ 'कल्यौ सज्ज-निरामयौ' इत्यमरः ] कलङ्कः, आयुः=जीवितकालः अपुण्यानां=पापानां फलं=परिणामः, आहारं=भोजनं विषम् पितृशोकोद्बोधकत्वात्, विषं=गरलम् अमृतम् विषपानेन मृत्यौ मृतपितृसन्निधिरूपमहासुखहेतुत्वात् चन्दनं दहनः=अग्निः चन्दनलेपेपि पितृशोकदाहानिवारणात् कामं=राजभोगेच्छाम् क्रकचः=करपत्रम् पितुरभावे कामः क्रकचेन विदारणमिव प्रतीयते स्मेति भावः, हृदयस्य स्फोटनं=दलनम् अभ्युदयः=सौभाग्यसमृद्धिः पितृशोकानुभवसमापकत्वात् इति मन्यमानम्, अत्र 'मन्ये शङ्के ध्रुवं प्रायः' इति साहित्यदर्पणकारोक्त्यनुसारेण मन् धातोः उत्प्रेक्षावाचकत्वात् उत्प्रेक्षालङ्कारः, विमुखम्=पराङ्मुखम् पिता च पितामहश्च तयोः परिग्रहेण=आत्मीकरणेन आगताः, चिरन्तनाः=चिरंभावाः पुरातनाः इत्यर्थः कुलपुत्राः=उच्चकुलोत्पन्नाः पुरुषाः (हर्षं पर्यवारयन् इत्यनेनान्वयः) वंशक्रमेण=कुलपरम्परया आहितं=दत्तमित्यर्थः गौरवं=संमानः येषु ते, ग्राह्या स्वीकरणीया गीः=वचनं येषां ते, श्रुतिः=वेदः स्मृतिः=धर्मशास्त्रञ्च इतिहासः=ऐतिह्यं च तेषु विशारदाः=निपुणाः जरन्तः=वृद्धाः द्विजातयः ब्राह्मणाः, श्रुत=ज्ञानं च अभिजनः=उच्चकुलीनता च शीलम्=आचरणञ्च तैः शालन्ते=शोभन्ते इति तथोक्ताः मूर्धसु अभिषिक्ताः=कृताभिषेकाः राज्याभिषिक्ताः इति यावत् अमात्याः=मन्त्रिणः राजानः=नृपाश्च, श्रुता...शालिनः अमात्या मूर्धा० राजानः इति क्रमेण अन्वयः कार्यः अतएव यथासंख्यालङ्कारः, यथावत्=विधिवत् अधिगतं=ज्ञातम् आत्मतत्त्वं यैः ते, संस्तुताः=परिचिताः मस्करिणः=भिक्षवः [ 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी' इत्यमरः ] महाभाष्यानुसारेण—'मा कृत मा कृत कर्माणि शान्तिर्वः श्रेयसीति आहातो मस्करी परिव्राजकः' ], समे=समाने सुख-

टिप्पणी—अपि नाम – शंकर अत्र सर्वत्र नेत्याशंकायाम्' लिखकर 'अपिनामन ही सर्वत्र मानता है, किन्तु पुस्तक के मूलपाठ में 'उत्त' इत्यादि तीन उपवाक्यों में 'न' नहीं है जब कि 'न' होने से अर्थ में स्वारस्य रहता है और क्रम भी बना रहता है अतः इसमें शंकर का ही अनुसरण किया है । पुरुषोत्तम—शब्दशक्ति से यहाँ पुरुषोत्तम पद का दूसरा अर्थ विष्णु भी होता है । समुद्रमन्थन में सर्वप्रथम हलाहल विष निकला था, जिसे देखकर विष्णु भगवान् अपने को भूल बैठे कि अब क्या करना चाहिए ।

हिन्दी–हुये पुराने कुल-पुत्रों, कुल-परम्परा से (राजगृह में) प्रतिष्ठा प्राप्त किये हुये ऐसे गुरुओं जिनके वचन ग्राह्य होते हैं, वेद, धर्मशास्त्र तथा इतिहास में निपुण वृद्ध ब्राह्मणों, ज्ञान, कुल तथा शील वाले अमात्य और राज्याभिषिक्त राजाओं, विधिवत् आत्मतत्त्व का ज्ञान प्राप्त किये हुये परिचित संन्यासियों, सुख-दुःख में साथ देने वाले आश्रयवर्ती सगोत्रों, विचारों को भांप जाने वाले सचिवों, बिना कारण के बन्धुभूतमुनियों, संसार की असारता का प्रतिपादन करने में कुशल वेदान्तियों और शोक निवारण में निपुण पौराणिकों ने रोका ।

उनके द्वारा स्वतन्त्र बनाया हुआ हर्षवर्धन मन से भी शोक के अनुकूल कार्य नहीं कर पाया । और उनके द्वारा मनाया जाता हुआ वह किसी तरह भोजनादि कार्यों में प्रवृत्त हो गया । और भाई (राज्यवर्धन) की ओर हृदय लगाये सोचने लगा—'मुझे डर है कि महाप्रलय के समान पिता की इस मृत्यु को सुन कर आर्य अश्रुजल से स्नात

१. 'सुखाश्च मुनयः'

न गृह्णीयाद्वल्कले, नाश्रयेद्वा राजर्षिराश्रमपदम् न विशेद्वा पुरुषसिंहो गिरिगुहाम्, अश्रुसलिलनिर्भरभरितनयननलिनयुगलो वा पश्येदनाथां पृथिवीम्, प्रथमव्यसनविषमविषविह्वलः स्मरेद्वात्मानं वा पुरुषोत्तमः, अनित्यतया जनितवैराग्यो वा न निराकुर्यादुपसर्पन्तीं राज्यलक्ष्मीम्, दारुणदुःखदहनप्रज्वलितदेहो वा प्रतिपद्येताभिषेकम्, इहागतो वा राजभिरभिधीयमानो न पराधीनतामाचरेत्। अतिपितृपक्षपाती खल्वायः। सर्वथा तातश्लाघया मामभिधत्ते—'तात हर्ष, कस्यचिदभूद्भविष्यति वा पुनः काञ्चनतालतरुप्रांशु[2] कायप्रमाणमिदम्। ईदृक्च दिवसकरप्रीत्या दिवसमुन्मुखविकसितं मुखमहाकमलम् एतौ च

टीका—दुःखे येषां तथोक्ताः समाश्रिताः=राजाश्रये स्थिताः सनाभयः=सपिण्डाः सप्तपुरुषावधिज्ञातयः इत्यर्थः=['सपिण्डास्तु सनाभयः' इत्यमरः, अत्र समानी नाभिमूलमेषां सनाभयः इति क्षीरस्वामी] चित्तं=मनः विचारानित्यर्थः राज्ञः लोकानाञ्च चित्तं जानन्तीति चित्तज्ञाः प्रधानाः=मुख्याः सचिवाः अमात्याः निष्कारणं=विना प्रयोजनं स्वार्थराहित्येनेत्यर्थः बान्धवाः=बन्धुभूताः मुनयः, संसारस्य सारत्वस्य=तत्त्वस्य असारतत्त्वस्य च कथने=व्याख्याने कुशलाः=पटवः ब्रह्मवादिनः=वेदान्तिनः [ 'मीमांसको जैमिनीये वेदान्ती ब्रह्मवादिनि' इति क्षीरस्वामी ] शोकस्य अपनयने=अपाकरणे निपुणाः=दक्षाः पौराणिकाः=[ पुराणानि अधीते वेद वा इति पुराण+ठक् ] पर्यवारयन्=हर्षं निवारितवन्तः।

तैः=उपर्युक्तैः कुलपुत्रादिभिः अस्वतन्त्रीकृतः न स्वाधीनीकृतः हर्षः=शोकस्य अनुप्रवणम्=अनुकूलं यथा स्यात्तथा आचरितुं=कर्तुं मनसा अपि न अलभत=प्राप्तवान्, अर्थात् यदि स कुलपुत्रादिभिः अनिवारितः स्ववशे स्यात् तर्हि पितृशोके यत्किमपि आत्मघातादिकं कृतवान् स्यात्। तैः अनुनीयमानः=प्रार्थ्यमानः कथं कथमपि=केनाऽपिप्रकारेण आहारः=भोजनम् आदिर्यासां तासु क्रियासु=कार्येषु आभिमुख्यम्=प्रवणत्वम् उन्मुखीभावमिति यावत् अभजत=प्राप्तवान्। भ्रातरि=राज्यवर्धने गतं हृदयं यस्य सः अचिन्तयत्—तातस्य=पितुः महाप्रलयेन=महाविनाशेन सदृशम् इदं मरणम् उपश्रुत्य=श्रुत्वा आर्यः=पूज्यः भ्राता बाष्पाणाम्=अश्रूणां जलेन स्नातः=कृतस्नानः वल्कले=वृक्षत्वग्द्वयं अपिनेति आशंकायाम् गृह्णीयात्=परिधत्ताम्, पितृशोकार्दितः तापसवृत्तिं न आश्रयेदिति भावः, राजा चासौ ऋषिः ऋषितुल्यः मे भ्राता आश्रमस्य पदं=स्थानम् आश्रयेत्, पुरुषेषु सिंहः=गह्वरं न विशेत्=प्रविशेत्, अस्राणाम्=अश्रूणां सलिलेन=जलेन निर्भरं=पूर्णतया यथा स्यात्तथा भरितं=पूरितं नयनयोः नलिनयोः=कमलयोरिवेत्युपमित-तत्पु० युगलं=द्वयं सः पृथिवीम् अनाथाम्=स्वामिरहितां ( न ) पश्येत्, प्रथमं=पूर्वम् आद्यमित्यर्थः व्यसनं=दुःखं पितृमरणशोक इत्यर्थः एव विषमं=दारुणं विषं=गरलं तेन विह्वलः=व्याकुलः स पुरुषेषु उत्तमः=श्रेष्ठः मे भ्रातेति यावत् आत्मानम्=(न) स्मरेत्=विस्मृतात्मा स्यात् आत्मतत्त्वचिन्तने न व्याप्रियेत, अनित्यया=संसारस्य विनश्वरतया जनितम्=उत्पादितं वैराग्यं=विरक्तिः यस्मिन् स उपसर्पन्तीम् तस्य समीपे आगच्छन्तीं राज्यलक्ष्मीं=राज्यश्रियं न निराकुर्यात्=उत्सारयेत्, दारुणं=कठोरं दुःखम् एव दहनः=अग्निः तेन प्रज्वलितः=प्लुष्टः देहः=शरीरं यस्य सः अभिषेकं=राज्याभिषेकं न प्रतिपद्येत=स्वीकुर्यात्, इह=गृहे आगतः राजभिः=भूपैः अभिधीयमानः=कथ्यमानः राज्यग्रहणाय प्रेर्यमाणः इत्यर्थः पराधीनतां=प्रतिकूलतां न आचरेत्=कुर्यात् आर्यः=पूज्यः भ्राता अतिशयेन पितुः पक्षपाती=भक्तः इत्यर्थः अस्तीति शेषः, तातस्य=पितुः श्लाघया=स्तुत्या माम् अभिधत्ते=कथयति—कस्यचित् पुरुषस्य अभूत्=अभवत् भविष्यति

हिन्दी—हुये कहीं दो वल्कल न ग्रहण कर बैठें, अथवा वे राजर्षि कहीं आश्रम-स्थान न चले जायें, अथवा वे पुरुष सिंह कहीं पर्वत की गुफा में प्रविष्ट न हो जायें, अथवा अश्रुजल से अपने दोनों कमल नयनों को पूरी तरह भरे हुये कहीं पृथिवी को अनाथ न देख पाएँ, अथवा वे पुरुषोत्तम पहले-पहल प्राप्त हुये दुःख-रूपी विषम विष से विह्वल हुये कहीं अपना स्मरण न खो बैठें, अथवा ( संसार की ) अनित्यता के कारण विरक्त हुए कहीं आती हुई राजलक्ष्मी को ठुकरा न दें अथवा दारुण दुःखाग्नि से शरीर जलते रहने के कारण कहीं राज्याभिषेक स्वीकार न करें, अथवा यहाँ आए हुए वे राजाओं के कहने पर भी कहीं प्रतिकूल न हो बैठें। बड़े भाई पिता के सचमुच बड़े भक्त हैं—'प्रिय हर्ष, सुवर्ण ताल वृक्ष की तरह ऊँचा यह शरीर का कद क्या ( कहीं ) किसी का हुआ या होगा ? और सूर्य के प्रति प्रीति होने के कारण सारा दिन उसी की ओर लगा और विकसित हुआ ऐसा मुख-महाकमल ( क्या कहीं हुआ और होगा ? ) और

१. 'तातश्लाघायाम्' २. 'प्रांशु प्रमाण०'

वज्रस्तम्भभास्वरौ भुजकाण्डौ एते च हसितमदालसहलधरविभ्रमा विलासाः कोऽन्यो मानी विक्रान्तो वदान्यो वा' इति। एतानि चान्यानि च चिन्तयन्दर्शनोत्सुकहृदयो भ्रातुरागमनमुदीक्षमाणः कथं कथमप्यतिष्ठदिति।

इति श्रीबाणभट्टकृतौ हर्षचरिते महाराजमरणवर्णनं
नाम पञ्चम उच्छ्वासः।

---

टीका—वा काञ्चनस्य = सुवर्णस्य तालतरुवत् = तालवृक्षवत् प्रांशु = उन्नतम् इदं अस्माकं पितुः इव कायस्य = शरीरस्य प्रमाणम् = परिमाणम्। ईदृक् = ईदृशं च दिवसकरे = सूर्ये प्रीत्या = भक्त्या अथ च प्रेम्णा दिवसम् = दिवसपर्यन्तम् (कालात्यन्तसंयोगे द्वि०) उन्मुखं = सूर्यप्रणामार्थम् उद्यतम् च विकासितं = दृश्यमानं च अन्यत्र उन्मुखम् = सूर्यं प्रति प्रवणं, कमलं हि यस्यां दिशि सूर्यो भवति तत्रैव स्वमुखं करोतीति तस्य स्वभावः, विकसितं = प्रस्फुटितञ्च, मुखं = प्रभाकरवर्धनस्य आननं महाकमलम् इवेत्युपमिततत्पु०, उपमा च श्लिष्टा। एतौ वज्रस्य = हीरकस्य स्तम्भौ = स्थूणे इव भास्वरौ = भास्वन्तौ भुजौ = बाहू काण्डौ = दण्डौ इवेत्युपमिततत्पु०। [ 'काण्डोऽस्त्री दण्ड बाणार्ववर्गावसरवारिषु' इत्यमरः ] एते च हसितः = कृतहासः [ कर्तरि क्तः ] मदेन = मत्ततया अलसः = मन्थरः यः हलधरः = बलरामः तस्य विभ्रमः चेष्टा इव विभ्रमः येषां तथाभूताः विलासाः = विलसितानि [ लुप्तोपमा ]। अन्यः तत्तुल्यः मानी = आत्माभिमानी विक्रान्तः = विक्रमशीलः, वदान्यः = दानी कोऽस्ति ? न कोऽपीति काकुः। अन्यानि प्रासङ्गिकानि = विषयान्तराणि चिन्तयन् = मनसि कुर्वन् दर्शने = भ्रातुः अवलोकने उत्सुकं हृदयं यस्य स आगमनम् उदीक्षमाणः = प्रतीक्षमाणः कथं कथमपि = केनापि प्रकारेण अतिष्ठत् = स्थितः। इति = उच्छ्वास समाप्तौ।

इति श्रीमोहनदेवपन्त-विरचितायां हर्षचरितस्य 'छात्रतोषिण्यां' पंचम उच्छ्वासः

हिन्दी—वज्र के खम्भों की तरह चमकीले ऐसे दो भुजदण्ड [क्या कहीं हुए या होंगे?] और हँसते एवं नशे में अलसाये हुए बलराम की-सी चेष्टाओं वाले ये विलास [ कहीं हुए या होंगे ] दूसरा कौन ऐसा मानी, शूर और दानी है ?' इन तथा अन्य बातों को सोचता हुआ, हृदय में भाई को देखने के लिए उत्सुक हुआ भाई के आगमन की प्रतीक्षा करता हुआ हर्षवर्धन किसी तरह बैठा रहा।

॥ बाणभट्ट-कृत हर्षचरित का महाराजमरण-वर्णन नाम का पञ्चम उच्छ्वास समाप्त ॥

■

## षष्ट उच्छ्वासः ।

उच्चित्योच्चित्य भुवि प्रहितनिगूढात्मदूतनीतानाम् ।
विजिगीषुरिव कृतान्तः शूराणां संग्रहं कुरुते ॥ १ ॥

विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः ।
नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥ २ ॥

अथ प्रथमप्रेतपिण्डभुजि भुक्ते द्विजन्मनि, गतेषूद्वेजनीयेष्वशौचदिवसेषु, चक्षुर्दाहदायिनि दीयमाने द्विजेभ्यः शयनासन-चामरातपत्रामत्रपत्रशस्त्रादिके नृपनिकटोपकरणकलापे, नीतेषु तीर्थस्थानानि सह जनहृदयैः कीकसेषु, कल्पितशोकशल्ये

---

टीका—उच्चित्येति—अन्वयः—कृतान्तः विजिगीषुः (भूपः) इव भुवि उच्चित्य उच्चित्य प्रतिनिगूढात्मदूतनीतानाम् शूराणां संग्रहं कुरुते ।

कृतान्तः = यमः विजिगीषुः = विजेतुमिच्छुः (वि + √जि + सन् + उ) विजयार्थी भूपः इव भुवि = पृथिव्याम् उच्चित्य उच्चित्य = अन्विष्य अन्विष्य प्रहिताः प्रेषिताः निगूढा = प्रच्छन्नाः ये आत्मनः = स्वस्य दूता = भृत्याः तैः नीतानाम् = आनीतानामित्यर्थः शूराणां = वीराणां सग्रहं = सञ्चयं कुरुते = करोति । अत्र कृतान्तस्य विजिगीषुणा साम्यप्रतिपादनात् उपमालङ्कारः, आर्या च वृत्तम् ॥ १ ॥

विस्रब्धेति - अन्वयः—करिणः हरिनिद्रातस्करः नवतरुभङ्गध्वनिः इव खलस्य विस्रब्धघातदोषः वीरकोपकरः (सन्) स्ववधाय (भवति) ॥ २ ॥

करिणः = हस्तिनः हरेः = सिंहस्य निद्रायाः = स्वापस्य तस्करः = चोरः अर्थात् तन्निद्राभञ्जकः नवस्य = नूतनस्य तरोः = वृक्षस्य भङ्गस्य = त्रोटनस्य ध्वनिः = शब्दः इव खलस्य = दुष्टस्य विस्रब्धस्य = विश्वासे स्थितस्य पुरुषस्य घातस्य = मारणस्य दोषः = अपराधः वीराणां कोपं = क्रोधं करोति जनयतीति तयोक्तः सन् स्वस्य = आत्मनो वधाय = विनाशाय भवतीति शेषः, अर्थात् विश्वासघाती स्वकर्मणा स्वमेव हन्यते यथा गजाः सुप्तं सिंहं वृक्षत्रोटनशब्देन उद्बोध्य स्वनाशमामन्त्रयते । अत्राप्युपमालङ्कारः । आर्या वृत्तम्, तल्लक्षणञ्च—'यस्याः प्रथमे पादे द्वादशमात्रास्तथातृतीयेऽपि अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥

**टिप्पणी**—इन दोनों श्लोकों में यद्यपि ग्रन्थकार ने सामान्य बात ही कही है, तथापि व्यञ्जनावृत्ति से विशेष अर्थ अभिव्यक्त हो जाता है जो षष्ठ उच्छ्वास का प्रतिपाद्य है । विजिगीषु राजा यहाँ गौड नरेश शशांक है, जिसने अपने दूतों को भेजकर अपनी कन्या देने के प्रलोभन से शूरवीर राजाओं सहित राज्यवर्धन को अपने घर बुलाकर भोजन कराते समय धोखे से मार दिया । इस विश्वासघात से वीर हर्ष का क्रोध भड़क उठा और उसने गौड़ेन्द्र का वध करके बदला चुकाया । यहाँ अप्रस्तुतप्रशंसा है ।

**हिन्दी**—विजयार्थी राजा की तरह यमराज पृथिवी में चुन-चुन कर अपने भेजे हुए गुप्त दूतों द्वारा लाये हुए शूरों का संग्रह किया करता है ॥ १ ॥

सिंह की नींद हर लेने वाले, हाथी द्वारा नये वृक्ष के तोड़े जाने के शब्द की तरह दुर्जन द्वारा (किया हुआ) विश्वस्त व्यक्ति के वध का अपराध वीर पुरुष का क्रोध भड़काता हुआ अपने वध के लिये हुआ करता है ॥ २ ॥

इसके बाद प्रेत को दिये हुए प्रथम अन्न-पिण्ड का भोजन करनेवाले ब्राह्मण के खा चुकने पर, (चित्त) उद्विग्न कर देने वाले आशौच के दिन बीत जाने पर, ( पिता के ) पलंग, आसन, चामर, छत्र, पात्र और शस्त्र आदि उपकरणों का ढेर ब्राह्मणों को दिये जाने पर, लोगों के हृदयों के साथ-साथ अस्थियों के तीर्थ-स्थानों में पहुँचा दिये जाने पर, शोक

सुधानिचयचिते चिताचैत्यचिह्ने, वनाय विसर्जिते महाजिजिति राजगजेन्द्रे, क्रमेण च मन्दीभवत्स्वाक्रन्देषु, विरलीभवत्सु च विलापेषु विश्राम्यत्यश्रुणि, शिथिलीभवत्सु श्वसितेषु, अविस्पष्टाक्षरेषु हाकष्टाक्षरेषु, उत्सार्यमाणासु च व्यसनशय्यासु, उपदेशश्रवणक्षमेषु श्रोत्रेषु, अनुरोधावधानयोग्येषु हृदयेषु, गणनीयेषु नृपगुणेषु, प्रदेशवृत्तितामाश्रयति शोके, कृतेषु कविरुदितकेषु, जाते च स्वप्नावशेषदर्शने हृदयावशेषावस्थाने चित्रावशेषाकृतौ काव्यावशेषनाम्नि नरनाथे देवो हर्षः कदाचिदुत्सृष्टव्यापारः पुञ्जीभूतवृद्धबन्धुवर्गाग्रेसरेणावनतमूकमुखेन महाजनेन मौलेनाकाल आत्मानं वेष्ट्यमानमद्राक्षीत्। दृष्ट्वा चाकरोन्मनसि - 'किमन्य-

---

टीका—'अथ.... . देवो हर्षः.........महाजनेन...... अकाले आत्मानं वेष्टयमानमद्राक्षीत् इत्यस्ति वाक्यम्। प्रथमम्= आद्यं प्रेतपिण्डं = प्रेताय दीयमानं आन्त-पिण्डं भुङ्क्ते इति० भुक् तस्मिन् द्विजन्मनि = ब्राह्मणे महाब्राह्मणे इति यावत् भुक्ते = भुक्तम् भोजनम् (भावे क्तः) अस्यास्तीति [ भुक्त + अच् मत्वर्थीयः ] तस्मिन् कृतभोजने इत्यर्थः, उद्वेजनीयेषु= उद्वेजयन्तीति (कर्तरि कृत्यप्रत्ययः, 'कृत्य—ल्युटो बहुलम्' पा० ३।३।११३) उद्वेजकेषु अशौचस्य = अशुद्धतायाः दिवसेषु, अशौचस्य दशदिनानि भवन्ति यथोक्तम् —'दशाहं शावमशौचं सपिण्डेषु विधीयते' [ मनु ५।५९ ] गतेषु = व्यतीतेषु, चक्षुर्भ्यां=नयनाभ्यां दाहं = सन्तापं ददातीति तथोक्ते शयनं = शय्या च आसनं = पीठं च चामरे = व्यजने च आतपत्रं = छत्रञ्च अमत्राणि = पात्राणि च ('सर्वमावपनं भाण्डं पात्रामात्रं च भाजनम्' इत्यमरः) पत्राणि = रथाश्वादीनि वाहनानि ('पत्रं वाहन-पक्षयोः' इत्यमरः) शस्त्राणि = खड्गादीनि आयुधानि आदीनि तस्य तस्मिन् नृपस्य = प्रभाकरवर्धनस्य निकटानि=समीपवर्तीनि उपकरणानि = सामग्रीत्यर्थः तेषां कलापे = समूहे, जनानां = लोकानां हृदयैः सह कीकसेषु = अस्थिषु ('कीकसं कुल्यमस्थि च' इत्यमरः) तीर्थस्थानानि = हरिद्वारादीनि नीतेषु = प्रापितेषु, कल्पितं = कृतं शोकस्य शल्यं = बाणाग्रं येन तस्मिन् अर्थात् यत् शल्यमिव नित्यमेव दर्शकानां शोकमुद्बोधयतिस्म, चितायां = शवदाह-स्थाने यत् चैत्यं = समाधिप्रस्तरः अथवा स्मारकं तद्रूपं चिह्नं तस्मिन् सुधायाः = प्रस्तरचूर्णस्य निचयेन = समूहेन चिते = निर्मिते इत्यर्थः, महत्यः याः आजयः = युद्धानि ताः जयतीति तथोक्ते राज्ञः = प्रभाकरवर्धनस्य गजेन्द्रे = करीन्द्रे वनाय विसर्जिते = त्यक्ते बन्धनमुक्ते कृते सति, क्रमेण = शनैः शनैः आक्रन्देषु = आर्तनादेषु = मन्देषु शिथिलीभूतेषु सत्सु, विलापेषु = परिदेवनासु, विरलीभवत्सु = स्वल्पीभवत्सु अश्रुणि = वाष्पे विश्राम्यति = विरमति, श्वसितेषु = निश्वासेषु शिथिलीभवत्सु = शैथिल्यं गच्छत्सु हाकष्टाक्षरेषु = 'हा ! कष्टम्' एतदात्मकवाण्याम् अविस्पष्टेषु = स्पष्टं न श्रूयमाणेषु, व्यसनस्य = दुःखस्य शय्यासु = तृणकटेषु उत्सार्यमाणासु = उपनीयमानासु, मृतस्य बन्धु-बान्धवानां कृते अशौचसमये तृणकटेषु शयनं विधीयते तद् यथा—'तृणकटास्तीर्णभूमौ पृथक् शयीरन् न कम्बलाद्यास्तीर्णभूमौ' इति, श्रोत्रेषु = कर्णेषु उपदेशानां श्रवणस्य = आकर्णनस्य = प्रार्थनासु आग्रहेष्वित्यर्थः यत् अवधानं = ध्यानदानं तस्य योग्येषु सत्सु. नृपस्य = मृतस्य राज्ञः गुणेषु = वीरत्वादिषु गणनीयेषु = संख्येयेषु,शोके प्रदेशेषु = सीमितस्थानेषु वृत्तिः = स्थितिः यस्य तस्य भावः तत्ता ताम् आश्रयति = भजति अर्थात् व्यापकशोको निवृत्तः, मृतस्य राज्ञः तत्तदुपवेशनादिस्थानविशेषमालोक्य लोकानां शोक आविर्भवतिस्म, कवीनां रुदितकेषु = करुणगीतेष्वित्यर्थः कृतेषु = रचितेषु, स्वप्ने अवशेषो यस्य तथाभूतं दर्शनं यस्य तस्मिन् हृदयावशेषम् अवस्थानं = स्थितिः यस्य तस्मिन्, चित्रावशेषा = चित्रमात्रस्थिता इत्यर्थः आकृतिः = आकारो यस्य तस्मिन् काव्यावशेषं=काव्यमात्रस्थितं नाम यस्य तस्मिन् नरनाथे = नृपे प्रभाकरवर्धने सति हर्षः उत्सृष्टः = त्यक्तः व्यापारः = कार्यं येन स पुञ्जीभूताः = एकत्रिताः = वृद्धाः = प्रवयसः ये बन्धवः = बान्धवाः तेषां वर्गस्य =

हिन्दी—का शल्य बनी हुई, चिता पर स्मारकरूप समाधि के चूने के ढेर से चिन दिये जाने पर, बड़े-बड़े युद्धों को जीतने वाले राजा के (निजी) गजराज के वन में छोड़ दिये जाने पर, धीरे-धीरे रोने धोने के मंद पड़ जाने और विलापों के कम हो जाने पर, आँसुओं के बन्द हो जाने पर, आहों के ढीले पड़ जाने पर 'हाय राम ! हाय राम !' शब्दों के स्पष्ट न सुनायी देने पर, शोक-शय्याओं को हटा दिये जाने पर, कानों के उपदेश सुनने के लिए सक्षम हो जाने पर, हृदयों के अनुरोधों पर ध्यान देने योग्य हो जाने पर शोक के ( विशेष-विशेष ) स्थानों तक ही सीमित हो जाने पर, कवियों के ( कविताओं में ) रो चुकने पर, राजा के दर्शन स्वप्नों में, स्थिति हृदयों में, आकृति चित्रों में और नाम काव्यों में ही शेष रह जाने पर, काम-धन्धा छोड़े हुए देव हर्ष ने इकट्ठे हुए वृद्ध बन्धुगण के आगे-आगे चलने वाले, मुख नीचे और मौन किये, कुलपरंपरा से चले आ रहे बड़े-बड़े लोगों से एक बार अपने को घिरा हुआ देखा। देखकर उसके मन में

**दार्यमागतमावेदयत्ययं शोकपराभूतो लोकाकरः' इति। वेपमानहृदयश्च पप्रच्छ प्रविशन्तमधिकतरप्रचारमन्यतमं पुरुषम् 'अङ्ग, कथय किमार्यः प्राप्तः' इति। स मन्दमब्रवीत्—'देव, यथादिशसि द्वारि' इति श्रुत्वा च सोदर्यस्नेहनिहितनिरतिशयमन्युमृदूकृतमनाः कथमपि न ववाम बाष्पवारिप्रवाहोत्पीडेन सह जीवितम्।**

**अनन्तरं च द्वारपालमुक्तेन प्रथमप्रविष्टेन परिजनेनेवाक्रन्देन कथ्यमानम्, दूरद्रुतागमनमुषितबाहुल्येन विच्छिन्नपश्चाच्छत्रधारेण लम्बिताम्बरवाहिना भ्रष्टभृङ्गारग्राहिणा च्युताचमनधारिणा ताम्यत्ताम्बूलिकेन खञ्जत्खड्गग्राहिणा कतिपयप्रकाशदासेरकप्रायेण**

टीका—समूहस्य अग्रसरेण=अग्रगामिना अवनतम्=अधः कृतम् मूकं=मौनमाकलयत् मुखं यस्य तेन मौलेन=मूलात् आगतेन वंशपरम्पराप्राप्तेनेत्यर्थः महाजनेन=विशिष्टलोकैरित्यर्थः अकाले=असमये वेष्टयमानं=परिध्रियमाणम् अद्राक्षीत्=अपश्यत्। दृष्ट्वा च तान् मनसि अकरोत्=अचिन्तयत्—किम् अन्यत् भवितुमर्हतीति शेषः अयं लोकानां=जनानाम् आकरः=समूहः आगतम् आर्यं=मान्यभ्रातरं राज्यवर्धनम् आवेदयति=सूचयति'। वेपमान=कम्पमानं हृदयं यस्य सः पप्रच्छ=पृष्टवान् प्रविशन्तं=प्रवेशं कुर्वन्तम्, अधिकतरः=अतिशयेन अधिकः प्रचारः=गतिर्यस्य तम् अतित्वरितगतिरित्यर्थः अन्यतमम्=एकतमम् पुरुषम्—अङ्ग!=भोः! आर्यः=पूज्यभ्राता, प्राप्तः=आगतः? मन्दम्=मन्दस्वरेण अब्रवीत्=अकथयत्—यथा आदिशसि=आज्ञापयसि द्वारि=द्वारे प्राप्तः इति शेषः, श्रुत्वा=संयोजितः यः निरतिशयः=अत्यधिकः मन्युः=शोकः तेन मृदूकृतं=कोमलीकृतं मनः=हृदयं यस्य सः, स्नेह-शब्देन तैलमपि गृह्यते यच्च तैले निधीयते तद् मृदु जायते इति वयं पश्यामः, न ववाम=उद्गीर्णवान् भुक्तवानित्यर्थः बाष्पवारिणः=अश्रुजलस्य प्रवाहस्य=स्रोतसः उत्पीडेन=क्रोधेन सह जीवितम्=प्राणान्।

अनन्तरं च·····भ्रातरमपश्यत् इत्यस्ति वाक्यम्। द्वारपालेन=दौवारिकेण मुक्तेन=गन्तुमनुज्ञातेनेत्यर्थः प्रथमं प्रविष्टेन=कृतप्रवेशेन परिजनेन=भृत्येन इवेत्युपमायाम्. द्वारपालेन मुक्तेन=कण्ठात् निस्सारितेन जनितेनेत्यर्थः प्रथमप्रविष्टेन=पूर्वमागतेन आक्रन्दनेन=करुणरोदनध्वनिना कथ्यमानम्=सूच्यमानमित्यर्थः यथा द्वारपालानुमतेन प्रथमप्रविष्टेन परिजनेन, कस्यापि विशिष्टपुरुषस्य आगमने सूच्यते तथैव द्वारपालमुक्तेन प्रथमं प्रविष्टेन क्रन्दनेन राज्यवर्धनस्य आगमनं सूचितमिति भावः, एतत् अन्यानि च 'भ्रातरम्' इत्येतस्य विशेषणानि, दूर०—दूरं=दीर्घमित्यर्थः द्रुतं=त्वरितं च यत् आगमनम् तेन मुषितं=हृतं क्षीणमिति यावत् बाहुल्यं=बहुसंख्यकत्वं यस्य तेन अर्थात् दूरात् द्रुतगत्या च आगमनेन येषां संख्या स्वल्पीभूता आसीत्। एतदादीनि 'परिजनेन' इत्येतस्य विशेषणानि, विच्छिन्नः पृथग्भूतः पश्चान्मुक्तः इत्यर्थः छत्रधारः=आतपत्रधारकः यस्मात् तेन, लम्बितः=कृतविलम्बः पश्चान्मुक्तः इत्यर्थः अम्बराणि=वस्त्राणि वहतीति तथोक्तः वस्त्रवाहकः यस्मिन् तेन, भ्रष्टः=च्युतः विच्छिन्न इत्यर्थः भृङ्गारं=कनककलशं वहति=धारयतीति तथोक्तः यस्मिन् तेन [ 'भद्रकुम्भः=पूर्णकुम्भो भृङ्गारः कनकालुका' इत्यमरः ] च्युतः=भ्रष्टः आचमनं=पतद्ग्रहमिति शङ्करः निष्ठीवनपात्रमित्यर्थः धारयतीति तथोक्तः यस्मात् यस्मिन् वा तेन ताम्यन्=क्लाम्यन् ताम्बूलिकः=ताम्बूलवाहकः यस्मिन् तेन खञ्जन्=खञ्जायमानः खञ्जवच्चलन्निति यावत् खड्गग्राही=खड्गवाहकः यस्मिन् तेन,

**हिन्दी**—विचार हुआ कि और क्या हो सकता है; शोकाक्रान्त यह जन-समूह आये हुए भाई जी की सूचना दे रहा है। और हृदय से काँपता-काँपता वह अधिक द्रुतगति से प्रवेश करते हुए एक व्यक्ति को पूछ बैठा—'अरे, बोलो, क्या भाई जी पहुँच गए'? वह मन्द-स्वर में बोला—'देव जैसे आप आदेश करते हैं वे द्वार पर हैं'।

और यह सुनकर भाई के प्रति स्नेह के साथ अत्यधिक शोक का योग हो जाने से मृदु बने हुए मन वाले उसने किसी तरह ( अपने ) प्राण नहीं निकलने दिये।

तदनन्तर उसने अपने ज्येष्ठ भाई को देख लिया—जिसकी [ आने की ] सूचना द्वारपाल द्वारा मुक्त [ अनुज्ञात ], आगे-आगे प्रवेश करने वाले भृत्य की तरह द्वारपाल द्वारा मुक्त [ किया हुआ ] आगे-आगे आ रहा आर्तनाद दे रहा था, जो प्रायः अच्छी तरह जाने-पहचाने इने गिने कुछ ऐसे नौकर-चाकरों से घिरा हुआ था—जिनके शरीर बहुत दिनों से स्नान, भोजन और शयन न होने से काले एवं दुबले पड़ गए थे, जिनमें से बहुसंख्यक दूर और द्रुतगति से आने के कारण पीछे रह गए थे, छत्र-वाहक बिछुड़ गया था, वस्त्रधारक पिछड़ गया था, कनक-कलश ले जाने वाला छूट गया था, पीकदान वाला रह गया था, ताम्बूल-वाहक थक रहा था एवं खड्गवाला लंगड़ा रहा था—जो मार्ग की घनी धूल

बहुवासरान्तरितस्नानभोजनशयनश्यामक्षामवपुषा परिजनेन परिवृतम्, अविरलमार्गधूलिधूसरितशरीरतया शरणीकृतमिवाश-
रणया क्रमागतया वसुन्धरया, हूणनिर्जयसमरशरव्रणबद्धपट्टकैर्दीर्घधवलैः समासन्नराज्यलक्ष्मीकटाक्षपातैरिव शबलीकृतकायम्
अवनिपतिप्राणपरित्राणार्थमिव च शोकहुतभुजि हुतमांसैरतिकृशैरवयवैरावेद्यमानदुःखभारम्, अपगतचूडामणिनि मलिनाकुल-
कुन्तले शेखरशून्ये शिरसि शुचमारूढां मूर्तिमतीमिव दधानम्, आतपगलितस्वेदराजिना रुदतेव पितृपादपतनोत्कण्ठितेन
ललाटपट्टेन लक्ष्यमाणम्, प्रथीयसा बाष्पपयःप्रवाहेणाभिमतपतिमरणमूर्छितामिव महीमनवरतं सिञ्चन्तम्, अनवरतसन्तता-
श्रुप्रवाहनिपतननिम्नीकृताविव दुःखक्षामौ कपोलावुद्वहन्तम्, अत्युष्णमुखमारुतमार्गगतेन द्रवतेव गलितताम्बूलरागेणाधर-
बिम्बेनोपलक्षितम्, पवित्रिकामात्रावशेषेन्द्रनीलिकांशुश्यामयमानमचिरश्रुतपितृमरणमहाशोकाग्निदग्धमिव श्रवणप्रदेशमुद्वहन्तम्,

---

टीका—कतिपयेषां = कतीनाञ्चित् प्रकाशानां = सुजातानां दासेरकाणां = दासीपुत्राणां दासानामित्यर्थः [दासी + ढ्रक् + कन् 'क्षुद्राभ्यो वा' पा० ४।१।१३१, पक्षे ढक् = दासेयाः] [ 'दासेरकस्तु करभे दासीपुत्रे च धीवरे' इति मेदिनी ] प्रायः = बाहुल्यं यस्मिन् तेन, बहुभिः वासरैः = दिवसैः अन्तरितैः = व्यवहितैः स्थानं च भोजनञ्च शयनं = स्वापश्च तैः श्यामं = श्यामवर्णं क्षामं = कृशं च वपुः = शरीरं यस्य तेन परिजनेन = भृत्यवर्गेण परिवृतम् = परिगतम्, अविरल० — अविरला = घना या मार्गस्य धूलिः = रजः तया धूसरितं = मलिनितं शरीरं यस्य तस्य भावः तत्ता तया अशरणया = अनाश्रयया क्रमेण = कुलपरम्परया आगतया वसुन्धरया = पृथिव्या शरणीकृतम् = आश्रितम् इवेत्युत्प्रेक्षायाम् हूण० — हूणानाम् = एतदाख्यजातीयानां वैदेशिकानाम् आक्रामकाणाम् निर्जयाय समरे = रणे शरैः = बाणैः ये प्रहाराः = आघाताः तेषु बद्धानि यानि पट्टकानि = पट्टिकाः तैः दीर्घैः = लम्बैश्च धवलैः = शुक्लैश्च समासन्ना = सन्निहिता या राजलक्ष्मीः तस्याः कटाक्षपातैः = अपाङ्गदर्शनैः इवेत्युत्प्रेक्षायाम् शबलीकृतः चित्रीकृतः कायः = शरीरं यस्य तम्, पितुर्मरणानन्तरं तस्य राज्यारोहणं सन्निहितमेव व्रण-पट्टीषु राजलक्ष्म्याः कटाक्षाणां कल्पना क्रियते, यतः दृष्टयोऽपि पट्टिकावत् दीर्घाः श्वेताश्च भवन्ति, अवनि० — अवनिपतेः = राज्ञः प्रभाकरवर्धनस्य प्राणानां = जीवितस्य परित्राणार्थं = रक्षणार्थम् इवेत्युत्प्रेक्षायाम् शोकः एव हुतभुक् अग्निः तस्मिन्, रूपकालङ्कारः, हुतं = हवनविषयीकृतं मांसं येषां तैः अत एव अतिशयेन कृशैः = दुर्बलैः अवयवैः = अङ्गैः आवेद्यमानः = सूच्यमानः दुःखस्य भारः = अतिशयः यस्य तम् अपगत० — अपगतः = अपसृतः चूडामणिः = शिरोरत्नं यस्मात् तस्मिन् मलिनाः = धूसरिताः आकुलाः = विकीर्णाः स्रस्ताः इति यावत् कुन्तलाः = केशाः यस्मिन् तस्मिन् शेखरेण = शिरोमालया शून्ये = रहिते शिरसि = मूर्ध्नि आरूढां = स्थितामित्यर्थः मूर्तिमतीं = विग्रहवतीं साकारमिति यावत् इवेत्युत्प्रेक्षायां शुचं = शोकं दधानं = धारयन्तम्, आतप० — आतपेन = घर्मेण गलिता = पतिता स्वेदस्य = घर्मजलस्य राजिः = पंक्तिः यस्मात् तेन रुदता = रोदनं प्रकुर्वता, अश्रुमुञ्चता इवेत्युत्प्रेक्षायाम् पितुः = प्रभाकरवर्धनस्य पादयोः = चरणयोः पतने उत्कण्ठितेन = उत्सुकेन ललाटपट्टेन = भालफलकेन लक्ष्यमाणम् = दृश्यमानम्, अयं भावः तस्य शिरः पितुश्चरणयोः पतितुमिच्छतिस्म, परन्तु पितुः पूर्वमेव मरणात् तत् रोदत् अश्रूणि मुञ्चति स्मेव, प्रथीय० — प्रथीयसा = प्रचुरेण बाष्पाणाम् = अश्रूणां प्रवाहेण = स्रावेण अभिमतः = इष्टप्रियः इति यावत् यः पतिः =

हिन्दी-से शरीर मटियाला हो जाने के कारण ऐसा लग रहा था मानो अशरण, कुलपरंपरा प्राप्त वसुन्धरा ने उसकी शरण ले ली हो, जो हूणों के विजयार्थ (लड़े जा रहे) युद्ध में बाणों द्वारा हुए व्रणों पर बाँधी हुई लम्बी, श्वेतपट्टियों से ऐसा लग रहा था मानो उसका शरीर पास में खड़ी राजलक्ष्मी के कटाक्षपातों से—जैसे चिह्नित हो रखा हो, जो राजा के प्राणों के रक्षार्थ—जैसे शोकाग्नि में होम किये हुए मांस के कारण अतिकृश बने हुए अंगों से दुःखातिशय अभिव्यक्त कर रहा था, जो चूडामणि से शून्य, मलिन एवं बिखरे केश वाले, माला-रहित शिर पर चढ़े मानो साकार शोक को धारण कर रहा था, जिसका पिता के चरणों में गिरने के लिये उत्सुक हुआ भाल-पट्ट गर्मी के कारण बह रहे पसीना की रेखा से ऐसा दिखाई दे रहा था मानो ( चरणपतन-अवसर न मिलने से ) रो रहा हो, जो प्रिय पति के निधन से मूर्छित हुई पड़ी—जैसी पृथिवी को अत्यधिक अश्रु-प्रवाह से निरन्तर सींच रहा था, जो लगातार गिरते हुए अत्यधिक अश्रु-प्रवाह से ( घिसकर ) नीचे बैठे हुए—जैसे दुःख—क्षीण कपोलों को धारण कर रहा था, जो मुख के गर्म-गर्म निश्वासों को मार्ग में आई और पिघली हुई—जैसी बही हुई पान की लाली वाले अधर-बिम्ब से युक्त था, जो यज्ञोपवीतमात्र में बच रही इन्द्रनीलमणि की अंगूठी की किरणों से काले बने हुए, अभी-अभी सुने हुए पिता के निधन ( समाचार ) के महा-

**अस्फुटाभिव्यक्तव्यञ्जनेनाप्यधोमुखस्तिमितनयननीलतारकामयूखमालाखचितेन शोकप्ररूढश्मश्रुश्यामलेनेव मुखशशिना लक्ष्यमाणम्, केशरिणमिव महाभूभृद्विनिपातविह्वलं निरवलम्बनम्, दिवसमिव तेजःपतिपतनपरिम्लानश्रियं श्यामीभूतम्, नन्दनमिव भग्नकल्पपादपं विच्छायम्, दिग्भागमिव प्रोषितदिक्कुञ्जरं शून्यम्, गिरिमिव गुरुवज्रपातदारितं कम्पमानम्, क्रीतमिव कृशिम्ना, किङ्करीकृतमिव कारुण्येन, दासीकृतमिव दौर्मनस्येन, शिष्यीकृतमिव शोचित्वेन, ¹आत्मीकृतमिवाधिना,**

टीका-भर्ता तस्य मरणेन=निधनेन मूर्छितां=मोहमुपगताम् इवेत्युत्प्रेक्षायाम् महीं-पृथिवीम् अनवरतं=सततं यथा स्यात्तथा सिञ्चन्तम्=अभ्युक्षन्तम्, अनन्त०—अनन्तः=विपुलः इत्यर्थः सततः=अविरतश्च यः अश्रुप्रवाहः=वाष्पप्रवाहः तस्य निपतनेन=निर्गमनेन निम्नीकृतौ=खातौ पुटाकारीकृतौ इत्यर्थः इवेत्युत्प्रेक्षायाम् दुःखेन=पितृशोकेन क्षामौ=क्षीणौ कपोलौ=गण्डौ उद्वहन्तम्=धारयन्तम्, तस्य पीनौ कपोलौ दुःखेन क्षीणौ जातौ किन्तु कविः कल्पयति सततवाष्पपतनेन धृष्टौ तौ निम्नीभूतौ, अत्युष्ण०—अत्युष्णस्य=भृशम् उत्तप्तस्य मुखमारुतस्य=निश्वसितस्य मार्गे=पथिगतेन=स्थितेन द्रवता=द्रुततां गच्छता इवेत्युत्प्रेक्षायां गलितः=स्यन्दितः ताम्बूलस्य रागः=लालिमा यस्मात् तेन अधरः=ओष्ठः बिम्बं=एतदाख्य फलविशेषः इवेत्युपमिततत्पु० तेन उपलक्षितम्=युक्तम्, तेन शोके ताम्बूलं न भक्षितम्, किन्तु कविकल्पनानुसारेण ताम्बूल-रागः अत्युष्णनिश्वासैः द्रवीभवन् गलितः, **पवित्र०** - पवित्रकम् एव पवित्रिका [ टाप् अत इत्वम् ] शणसूत्र—जालम् क्षत्रियस्य यज्ञोपवीतम् इति यावत् यथाऽऽह मनुः–'कार्पासमुपवीतं स्याद् विप्रस्योर्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम्'। पवित्रिकायाम् एवेति पवित्रिकामात्रे अवशेषः तस्याः तथाभूता या इन्द्रनीलिका=इन्द्रनीलमणिः अङ्गुरीयकं तस्याः अंशुभिः=रश्मिभिः श्यामायमानम्=श्यामवर्णीभवन्तम् अचिरं=प्रत्यग्रं यथा स्यात्तथा श्रुतम्=आकर्णितं यत् पितुः मरणं तस्य महाशोक एव अग्निः तेन दग्धम्=प्लुष्टम् इवेति रूपकोत्थापितोत्प्रेक्षा श्रवणस्य=कर्णस्य प्रदेशं=प्रान्तम् उद्वहन्तम्=बिभ्राणम्, **स्फुटा०**—अस्फुटम्=अस्पष्टं यथा स्यात्तथा अभिव्यक्तं=प्रकटीभूतं यत् व्यञ्जनं=श्मश्रु मुखलोमेति यावत् [ 'व्यञ्जनं लाञ्छनश्मश्रुनिष्ठानावयवेष्वपि' इत्यमरः ] यस्मिन् तेन अपि अधोमुखयोः=नीचैः कृतयोरित्यर्थः स्तिमितयोः=स्तब्धयोः निश्चेष्टयोरित्यर्थः च नयनयोः तारकयोः=कनीनिकयोः मयूखमालया=किरणावल्या खचितेन=व्याप्तेन अत एव शोकेन प्ररूढं=वृद्धिं प्राप्तं यत् श्मश्रु=मुखलोमकूर्चं तेन श्यामलेन=श्यामवर्णेन इवेत्युत्प्रेक्षायां मुख शशी=चन्द्र इवेत्युपमिततत्पु० तेन लक्ष्यमाणम्=दृश्यमानम्, केशरि०—महान् यः भूभृत्=पर्वतः तस्य विनिपातेन=पतनेन विह्वलं दुःखाकुलं निर्गतम् अवलम्बनम्=आश्रयः यस्य तम् केशरिणं=सिंहम् इव महाभूभृतः=महाराजस्य प्रभाकरवर्धनस्य विनिपातेन=निधनेन विह्वलं निरवलम्बनं=निराश्रयम्,

**टिप्पणी—** अस्फुटा०—उसके मुख पर दाढ़ी के थोड़े ही बाल उगे हुए थे, किन्तु नीचे किये हुए आँखों की पुतलियों की काली छटा पड़ने से दाढ़ी और भी अधिक काली और बढ़ी हुई मालुम पड़ रही थी। मरणाशौच में दाढ़ी बनाना निषिद्ध है।

**हिन्दी**-शोक की आग से जले हुए—जैसे कर्ण-प्रदेश को धारण कर रहा था, जिसका-चाँद सा मुख थोड़ी-थोड़ी उगी हुई दाढ़ी वाला होता हुआ भी नीचे मुँह किये, निश्चल नयनों की पुतलियों की ( काली ) किरणावली से व्याप्त हुआ ऐसा दिखाई दे रहा था मानो शोक के कारण खूब बढ़ी हुई दाढ़ी से काला हो पड़ा हो, जो महा भूभृत् ( पर्वत ) के पतन ( गिर जाने ) से विह्वल और आश्रय-रहित सिंह की तरह महान् भूभृत् ( राजा ) के पतन ( निधन ) से विह्वल और निराश्रय हो गया था, जो तेजःपति ( सूर्य ) के पतन [ अस्त हो जाने ] से कान्ति में क्षीण और रात्रिरूप में परिणत हुए दिन की तरह तेजःपति ( प्रतापी राजा ) के पतन ( मरण ) से ( शरीर की ) कान्ति से क्षीण और काला हो गया था, जो कल्पवृक्ष के भंग हो ( टूट ) जाने से छाया से रहित हुए नन्दन वन की तरह कल्पवृक्ष—जैसे पिता के भंग ( मृत ) हो जाने से छाया ( शरीर की कान्ति ) से रहित हो गया था; जो दिग्गज के चले जाने से शून्य ( खाली ) पड़े हुए दिग्विभाग की तरह दिग्गज-जैसे पिता के चल बसने से शून्य ( अनमना ) हो बैठा था, जो गुरु ( महान् ) वज्रपात से विदीर्ण किये और हिलते हुए पर्वत की तरह गुरु ( पिता ) पर पड़े वज्रपात ( मृत्यु ) से विदीर्ण हुआ काँप रहा था, जिसे कृशता ने खरीद—जैसे लिया था, दुःख ने भृत्य—जैसे बना लिया था, विषाद ने दास—जैसे रख लिया था, शोक ने शिष्य—जैसे मूँड लिया था, मनोव्यथा ने अपना -जैसे लिया था, मौन ने गूँगा—जैसे कर

१. 'अन्धीकृत०'

मूकीकृतमिव मौनेन, पिष्टमिव पीडया, स्विन्नमिव सन्तापेन, उच्चितमिव चिन्तया, लुप्तमिव विलापेन, धृतमिव वैराग्येण, प्रत्याख्यातमिव प्रतिसंख्यानेन, अवज्ञातमिव प्रज्ञया, दूरीकृतमिव दुरभिभवत्वेन, अबोध्येन वृद्धबुद्धीनाम्, असाध्येन साधुभाषितानाम्, अगम्येन गुरुगिराम्, अशक्येन शास्त्रशक्तीनाम्, अपथेन प्रज्ञाप्रयत्नानाम्, अगोचरेण सुहृदनुरोधानाम्, अविषयेण विषयोपभोगानाम्, अभूमिभूतेन कालक्रमोपचयानां शोकेन कवलीकृतं ज्येष्ठं भ्रातरमपश्यत् । आवेगोद्धतकृत्स्न-स्नेहोत्कलिकाकलापोत्क्षिप्यमाणकाय इव च परवशः समुदगात् ।

---

**टीका**–तेजसां=ज्योतिषां पतिः=सूर्यः तस्य पतनेन=पश्चिम-समुद्रे निमज्जनेनेत्यर्थः परिम्लाना=क्षीणा श्रीः=कान्तिः यस्य तम् अत एव श्यामीभूतम्=[श्यामा=रात्रिः] [श्यामा स्याच्छारिवा निशा' इत्यमरः] रात्रीभूतम् रात्रिरूपेण परिणत-मित्यर्थः दिवसम्=दिनम् इव तेजसः=प्रतापस्य पतिः=स्वामी प्रभाकरवर्धनः इत्यर्थः तस्य पतनेन=निधनेन परिम्लाना=मलिना श्रीः = देहकान्तिः यस्य तम् अतएव श्यामीभूतम्=शोकेन श्यामवर्णत्वं प्राप्तम्, भग्नः=त्रुटितः कल्पपादपः=कल्पवृक्षः यस्य तत् अतएव विगता छाया=अनातपः यस्य तत् नन्दनं=स्वर्गोद्यानम् इव भग्नः=मृतः इत्यर्थः कल्पपादपः=अर्थिनां कृते कल्पवृक्ष-रूपः यस्य तम् अत एव विगता छाया=कान्तिः [ छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः ] यस्य तम्, प्रोषितः=कृतप्रवासः दिक्कुञ्जरः=दिग्गजः [ 'ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजा' इत्यमरः ] अन्यत्र दिग्गज-तुल्यः पिता यस्मात् अन्यत्र यस्य तम्, अत एव शून्यं रिक्तम् अन्यत्र शून्यमनस्कम् दिग्भागम्=दिशाविभागम् इव गुरुः=महान् यः वज्रपातः=अशनिपातः, अन्यत्र गुरौ=पितरि यः वज्रपातः=मृत्युरित्यर्थः तेन दारितम्=(इन्द्रेण) पाटितम्, अन्यत्र दुःखाभिभूतम् अत एव कल्पमानम् गिरिं=पर्वतम् इव, उपरि सर्वत्र श्लिष्टोपमा सा च मालारूपा, क्रशिम्ना=कृशतया क्रीतं=मूल्यं दत्त्वा गृहीतम् इव, कारुण्येन=दुःखेन किङ्करीकृतम्=दासीकृतम् दुःखाधीनमित्यर्थः इव, दुर्मनसः भावः दौर्मनस्यम्=विषादः मनोव्यथेति यावत् तेन दासीकृतम् इव शोचितव्येन=( भावे तव्यत् ) शोकेन शिष्यीकृतम्=शिष्यतां नीतम् इव आधिना=मनोवेदनया आत्मीकृतम्=स्वायत्तीकृतम् इव, मौनेन तूष्णीम्भावेन मूकीकृतम्=मूकतां प्रापितम् इव पीडया =वेदनया पिष्टम्=चूर्णितम् इव, सन्तापेन=दुःखेन एव सन्तापेन=उष्मणा स्विन्नम्=स्वेदमवाप्तम् इव चिन्तया उच्चितम्=संगृहीतम् इव सततं चिन्तापरमित्यर्थः विलापेन=परिवेदनया लुप्तम्=मुषितम् इव, वैराग्येण=विरक्तिभावेन धृतम्=धारितम् इव, प्रतिसंख्यानेन = विवेकेन प्रत्याख्यातम्=निराकृतम् इव, प्रज्ञया=बुद्धया अवज्ञातम्=तिरस्कृतम इव, दुरभिभवत्वेन=दुःखेन अभिभवितुं योग्यः दुरभिभवः तस्य भावः तत्त्वं तेन=दुर्जयत्वेन धीरत्वेनेत्यर्थः दूरीकृतम्= अपास्तम् इवेति सर्वत्र उत्प्रेक्षालङ्कारः, वृद्धानां=प्रवयसां बुद्धीनां=मतीनां अबोध्येन=अज्ञेयेन ['शोकेन' इत्यस्य विशेषणानि] साधूनां=सज्जनानां भाषितानां=( भावे क्तः ) वचनानाम् असाध्येन=अनिराकरणीयेनेत्यर्थः, गुरूणां=

**टिप्पणी—आवेग**—यहाँ कवि ने स्नेह को सागर रूप में चित्रित किया है। भाई को देखते ही स्नेह-सागर उमड़ पड़ा। उसमें मनोविकार के रूप में क्षोभ हो उठा जिससे उत्कलिका ( उत्कण्ठा ) रूपी उत्कलिकायें ( तरंगें ) उत्पन्न कर दी और उन से मानो वह उठाया गया। समुद्र में तैरता हुआ व्यक्ति तरंगों द्वारा आगे ले जाया जाता है।

**हिन्दी**–दिया था एवं पीडा ने पीस-जैसे डाला था, जो सन्ताप की गर्मी से पसीज-जैसे रहा था, चिन्ता से बटोरा-जैसे जा रहा था, विलाप से लूटा—जैसे जा रहा था, वैराग्य से पकड़ा—जैसे जा रहा था, विवेक से ठुकराया—जैसे जा रहा था, बुद्धिमत्ता से दुत्कारा—जैसे जा रहा था, धीरता से दूर खदेड़ा—जैसे जा रहा था, और जो ऐसे शोक का ग्रास बना गया था जो वृद्धों की बुद्धि के लिए अबोध्य था, सज्जनों के वचनों के लिए असाध्य था, श्रेष्ठ पुरुषों की वाणियों के लिए अगम्य था, शास्त्र की शक्तियों के सामर्थ्य से बाहर था, समझाने के प्रयत्नों के मार्ग से परे था, मित्रों के अनुरोधों का अविषय था, विषयोपभोगों का अगोचर था, और जो कालक्रम से होनेवाले वृद्धियों के क्षेत्र का नहीं था ( अपितु एक साथ आ पड़ा था )। और आवेग ( मनोवेग ) रूपी आवेग ( क्षोभ ) से उत्पन्न हुई समग्र स्नेह ( रूपी सागर ) की उत्कलिका ( उत्कण्ठा ) रूपी उत्कलिकाओं ( तरंगों ) के समूह द्वारा शरीर से उठाया जाता हुआ—जैसे वह परवश हो आगे बढ़ आया।

**अथ तं दूरादेव दृष्ट्वा देवो राज्यवर्धनश्चिरकालकलितं बाष्पवेगं मुमुक्षुः सुदूरप्रसारितेन 'सङ्कलयन्निव सर्वदुःखानि दीर्घेण दोर्दण्डद्वयेन गृहीत्वा कण्ठे मुक्तकण्ठं पुनः पतितक्षौमे क्षामे वक्षसि पुनः कण्ठे पुनः स्कन्धभागे पुनः कपोलोदरे निधाय तथा रुरोद यथा सबन्धनानीवोदपाटयन्त हृदयानि। अश्रुस्रोतः शिरा इव अमुच्यत लोचनेषु लोकेन[2]। स्मृतनृपतिना राजवल्लभेनापि प्रतिशब्दनिभेन निर्भरमिवारुद्यत। सुचिराच्च कथं कथमपि निर्वृष्टनयनजल पर्जन्य इव शरदि स्वयमेवोपशशाम। उपविष्टश्च परिजनोपनीतेन तोयेन 'तत्करनखमयूखपुञ्जतया महाजलप्लवजायमानफेनलेखमिव पुनः**

टीका-श्रेष्ठपुरुषाणाम् गिरा = वाणीनाम् अगम्येन = अप्राप्येण, शास्त्राणाम् = आगमानां शक्तीनां = बलानां अशक्येन = दुष्प्राप्येण, प्रज्ञायाः = बुद्धयाः प्रयत्नानाम् = उद्यमानाम् अपथेन = अमार्गेण अविषयेणेत्यर्थः अर्थात् बुद्धिमतां सर्वेऽपि प्रयत्नाः तच्छोकमपनेतुं न प्राभवन्, सुहृदां = मित्राणाम् अनुरोधानाम् अनुनय-विनयानाम् अगोचरेण = अविषयेण, विषयाणां = सुखसाधनसामग्रीणाम् उपभोगानाम् अविषयेण = अक्षेत्रेण, कालक्रमेण = समयक्रमेण उपचयानां = वृद्धीनाम् अभिभूतेन = अस्थानभूतेन अर्थात् शोकः कालक्रमेण शनैः-शनैः उपचयं गतो नासीत्, अपितु एकदैव समुत्थितः, कॅवल-महोदयस्तु 'उपचयं-'पदस्य स्थाने अपचय-पाठमुपयुक्तं मन्यते ततश्च स शोकः कालक्रमेण अपचयस्य = ह्रासस्य भूमिः नासीदित्यर्थं करोति शोकेन कवलीकृतं = ग्रासीकृतं भक्षितमिति यावत् ज्येष्ठं भ्रातरं राज्यवर्धनम् अपश्यत्। आवेगः = अन्तर्वेगः मनोवेग इत्यर्थः एव आवेगः = क्षोभः तेन उद्गताः = उत्थिताः कृत्स्नस्य = समग्रस्य स्नेहस्य = प्रेम्णः (स्नेह-रूपसमुद्रस्येत्यर्थः) या उत्कलिकाः = उत्कण्ठाः एव उत्कलिकाः = वीचयः तासां कलापेन = समूहेन उत्क्षिप्यमाणः = उत्थाप्यमानः कायः = शरीरं यस्य स इव परवशः = परायत्तः हर्षवर्धनः समुदगात् = समुदगच्छत्. अत्रोत्प्रेक्षा सा च श्लिष्टसाङ्गरूपकेण संकीर्णा।

तं हर्षवर्धनं चिरकालात् = चिरात् कलितं = रुद्धं बाष्पवेगम् = अश्रुवेगं मुमुक्षुः = मोक्तुमिच्छुः सन् सुदूरात् प्रसारितेन = विस्तारितेन दीर्घेण = लम्बेन दोर्दण्डयोः = दण्डसदृशभुजयोः द्वयेन = युगलेन सर्वदुःखानि संकलयन् = संगृह्णन् इवेत्युत्प्रेक्षायाम् भ्रातुः संमुखे राज्यवर्धनस्य सर्वाण्येव दुःखानि पुञ्जीभूतानीति भावः हर्षं गृहीत्वा कण्ठे 'मुक्तकण्ठम्' इत्यस्य तथा तथा, रुरोदेत्यनेन सम्बन्धः, पुनः पतितं = गलितं क्षौमं = सूक्ष्मवसनं यस्मात् तस्मिन् क्षामे = कृशे वक्षसि = हृदये पुनः कण्ठे पुनः स्कन्धभागे = स्कन्धप्रदेशे पुनः कपोलयोः = गण्डयोः उदरे = मध्ये च निधाय = हर्ष-वर्धनमितिशेषः मुक्तः कण्ठः यस्मिन् कर्मणि यथा स्यात्तथा उच्चस्वरेणेत्यर्थः रुरोद = रुदितवान् बन्धनैः सह सबन्धनानि = समूलानि हृदयानि उदपाटयन्त = समूलम् उत्पाटितानि अभवन्नित्यर्थः इवेत्युत्प्रेक्षायाम्। लोकेन = जनैः लोचनेषु शिरा = धमनी इवेत्युत्प्रेक्षायाम् अश्रूणां स्रोतः = प्रवाहः अमुच्यत = निस्सारितः। स्मृतः = स्मृतिविषयतां नीतः नृपतिः = नृपः प्रभाकरवर्धनः येन तेन राज्ञः = प्रभाकरवर्धनस्य वल्लभेन = प्रियेण स्नेहपात्रेणेत्यर्थः अत्र जातौ एकवचनम् राज-वल्लभैरित्यर्थः अपि प्रतिशब्दनिभेन = प्रतिध्वनिसदृशेन निर्भरम् = पूर्णतया यथा स्यात्तथा अरुद्यत = रोदनम् अकृयत। सुचिरात् = चिरकालानन्तरम् निर्वृष्टं = प्रवाहितं नयनजलम् = अश्रुजलं येन तथाभूतः राज्यवर्धनपर्जन्यः = घनदम्बुदः

**टिप्पणी**—**अश्रुस्रोतः**—भावार्थ यह है कि लोगों की आँखों से इस तरह आँसू बह गए जैसे धमनी से रुधिर बहता है। इससे पहले के वाक्य में हृदयों के जड़-मूल से उखाड़ दिये जाने का उल्लेख है। हृदयों के उखड़ जाने पर धमनियों से रुधिर बहेगा ही। अश्रु-प्रवाह पर धमनियों से रुधिर प्रवाह की कल्पना की गई है। **तत्करनखमयूख**—जब राज्यवर्धन अपना मुँह धो रहा था तो उसने अपना हाथ उठाया जिसकी नख-किरणावली फेन-रेखा-जैसी लग रही थी और उसकी आँख फेन से ढकी जैसी प्रतीत हो रही थी। राजा ने प्रचुर अश्रुजल बहाया था। बहुत जल बहने से फेन उत्पन्न हो ही जाया करता है।

**हिन्दी**—इसके बाद देव राज्यवर्धन दूर से ही उसे देखकर चिरकाल से रोके पड़े अश्रुवेग को छोड़ना चाहता हुआ, दूर तक पसारे विशाल भुजदण्डों से सभी दुःखों को समेटता हुआ—जैसा (भाई को) पकड़कर कंठ पर, फिर खिसके हुए वस्त्र वाली कृश छाती पर, फिर कंठ पर, फिर स्कन्ध-भाग पर और फिर कपोलों के मध्य लगाकर ऐसा फूट-फूट कर रोया—जैसे जड़-मूल-सहित हृदय उखड़ पड़े हों। लोगों की आँखों में अश्रुप्रवाह धमनी से—जैसे (रुधिर-प्रवाह) छूट पड़ा। राजा की याद किये हुए राजा के प्रिय मित्र भी प्रतिध्वनि की तरह खूब रो उठे। बहुत देर बाद (जल बरसा कर) शरद में मेघ की तरह अश्रुजल बरसाये राज्यवर्धन किसी तरह स्वयमेव शान्त हो गया। और बैठे हुए उसने नौकर द्वारा लाये हुए जल से किसी तरह अपनी आँख धोयी जो उसके हाथ की नखकिरणावली पड़ने के कारण

१. 'सङ्कलयन्निव' २. क्वचित् एतद् वाक्यं नास्ति ३. 'तरत्कर०'

पुनः प्रमृष्टमपि पक्ष्माग्रसङ्कलद्बिन्दुवृन्दमन्दोन्मेषमुषितदर्शनं कथं कथमपि चक्षुरक्षालयत्। ताम्बूलिकोपस्थापितेन च वाससा चन्द्रातपशकलेनेवोष्णोष्णबाष्पदग्धं वदनमुन्ममार्ज। तूष्णीमेव च चिरं स्थित्वोत्थाय स्नानभूमिमगात्। तस्यां च स्थित्वा विभूषं विस्त्रस्तव्यस्तकुन्तलं मौलिमनादरान्निष्पीड्य सावशेषमन्युस्फुरितेन जिजीविषतेव जलधौतसुभगमात्मानमपि चुचुम्बिषतेवाधरेण क्षालितस्य चक्षुषः श्वेतिम्ना च शारदशशिकरविकसितविशदकुमुदवनदलावलिबलिविक्षेपैरिव दिग्देवतार्चनकर्म कुर्वाणश्चतुःशालवितर्दिकायां[1] नीचापाश्रयविनिहितेंकोपबर्हायां पर्यङ्किकायां निपत्य जोषमस्थात्।

टीका-'पर्जन्यौ रसदब्देन्द्रौ' इत्यमरः ] इवेत्युपमायां शरदि=शरदृतौ स्वयमेव उपशशाम=शान्तोऽभवत्। परिजनेन=भृत्येन उपनीतेन=आनीतेन तोयेन=जलेन ( चक्षुरक्षालयदित्यन्वयः ) तस्य=राज्यवर्धनस्य करस्य=हस्तस्य नखमयूखानां=नखकिरणानां पुञ्जः=राजिः यस्मिन् तस्य भावः तत्ता तया महान्=प्रचुरः यः जलप्लवः=अश्रुजलप्रवाहः तेन जायमाना=उत्पद्यमाना फेनस्य लेखा=रेखा यस्मिन् तत् इवेत्युत्प्रेक्षायाम् प्रमृष्टम्=प्रोञ्छितम् अपि पक्ष्मणाम्=नेत्रलोम्नाम् अग्रेभ्यः=प्रान्तेभ्यः सङ्कलन्तः=स्रवन्तः ये बिन्दवः अश्रुबिन्दवः तेषां वृन्देन=समूहेन मन्दः=रुद्धः इत्यर्थः यः उन्मेषः=उन्मीलनं तेन मुषितं=हृतम् दर्शनं=विलोकनं यस्य तथाभूतं चक्षुः=नयनम् अक्षालयत्=क्षालितवान्। ताम्बूलिकेन=ताम्बूलवाहकेन च उपस्थापितेन=उपनीतेन वाससा=वस्त्रेण चन्द्रातपस्य=चन्द्रिकायाः शकलेन=खण्डेन इवेत्युत्प्रेक्षायाम् उष्णोष्णेन=अत्युष्णेन बाष्पेण=अश्रुणा दग्धं=प्लुष्टं वदनं मुखम् उन्ममार्ज=प्रोञ्छितवान्। तूष्णीम्=मौनमाकलय्य एव स्नानभूमिं=स्नानस्थानम् अगात्=अगच्छत्। विभूषं=विगता भूषा=भूषणं यस्मात् तम् विस्त्रस्ताः ऊर्ध्वं क्षिप्ताः=इति शङ्करः व्यस्ताः=विक्षिप्ताश्च कुन्तलाः=केशाः ('चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः' इत्यमरः ] यस्मिन् तम् मौलिं=शिरः अनादरात्=अनवधानात् निष्पीड्य=विमृद्य सावशेषः=अवशेषेण सहितः अवशिष्टः इत्यर्थः यः मन्युः=शोकः तेन स्फुरितं तेन=स्फुरणं कुर्वता जीवितुमिच्छतीति (√चुम्ब + सन् + शतृ + तृ०) इवेत्युत्प्रेक्षायाम् अधरेण=ओष्ठेन क्षालितस्य=धौतस्य चक्षुषः=नयनस्य श्वेतिम्ना=श्वैत्येन, शारदैः=शरदि भवः [ अण् ] यः शशी=चन्द्रः तस्य करैः=किरणैः विकसितानि=उत्फुल्लानि विशदानि=भासमानानि यानि कुमुदानां वनानि=आकराः तेषां दलानां=पत्राणां आवलिः=राजिः एव बलिः पूजोपहारः तस्य विक्षेपैः=प्रक्षेपैः प्रदानैरित्यर्थः इवेत्युत्प्रेक्षायाम् दिग्देवतानां=दिशानां देवतानाम् अर्चनस्य=पूजनस्य कर्म=क्रियां कुर्वाणः=कुर्वन् अधरो रक्तपुष्पस्य दृष्टिक्षेपाश्च कुमुद-पत्राणां कार्यं कुर्वन्तिस्मेति भावः चतुःशालस्य=चतसृणां शालानां=गृहाणां समाहारः इति चतुःशालम् (समाहार द्व०) चतुर्भिः भवनैः परिवृतः चतुर्मुजप्रदेशः तस्य वितर्दिकायां=वेद्याम् ['स्याद्वितर्दिस्तु वेदिका इत्यमरः] नीचे=निम्ने अपाश्रयं=अपाश्रियते=आच्छाद्यतेऽनेनेति [अप+आ+√श्रि+अच्

**टिप्पणी—सावशेष०**—आशय यह है कि नहाते समय राज्यवर्धन ने ओंठ और आँखें धोयी। क्योंकि शोक अभी शेष या पूरा नष्ट नहीं हुआ था, इसलिए उसका ओंठ फुरफुराया और जो जीवित रहता है वह चेष्टा करता ही है। इसलिए स्फुरण करता हुआ ओंठ बता रहा है कि शोक के होते हुए भी वह जीना चाहता है चुम्बन में भी ओष्ठ का स्फुरण होता है। कवि कल्पनानुसार ओंठ इसलिए स्फुरित हो रहा है कि वह स्नान के कारण सुन्दर बने हुए स्वयं को चूमना चाहता है।

**हिन्दी**-ऐसी लग रही थी मानो (अश्रु) जल प्रवाह से वहाँ फेन-लेखा उत्पन्न हो गई हो और जो बार-बार पोंछी हुई भी बरौनियों के अग्रभाग से गिर रहे अश्रु-समूह से रुद्ध हुई देख नहीं पा रही थी। उसने तमोली द्वारा लाए हुए चाँदनी के टुकड़े-जैसे (श्वेत) तौलिये से (अपना) गर्म-गर्म अश्रुओं से जला हुआ मुख पोंछा। देर तक चुप बैठकर (फिर) उठकर वह स्नान-भूमि को चला गया। वहाँ ठहरकर, भूषणों से शून्य बने, ऊपर उठे बिखरे बालों वाले सिर को लापरवाही से निचोड़ कर, बचे-खुचे शोक से फड़कते जीना चाहते हुए—जैसे, जल से धुल जाने पर सुन्दर बने स्वयं को भी चूमना चाहते हुए—जैसे अधर से एवं धोये हुए आँख की श्वेतिमा से शरद के चन्द्रमा द्वारा विकसित, उज्ज्वल कुमुद-समूहों की ढेरों पंखुड़ियों की भेंट चढ़ाने से—जैसे दिशाओं के देवताओं की अर्चन-क्रिया करता हुआ वह कोठे की वेदी पर छोटे से चँदोवे के नीचे रखे एक तकिया वाले तख्त पर पड़कर मौन स्थित रहा।

१. 'वितर्दिकाविनिवेशितायामप्रतिपादकायां चापाश्रय०'

देवोऽपि हर्षस्तथैव स्नात्वा धरणितलनिहितकुथाप्रसारितमूर्तिरदूर एवास्य तूष्णीमेव समवातिष्ठत। दृष्ट्वा दृष्ट्वा दूयमानमानसमग्रजन्मानं समस्फुटदिवास्य सहस्रधा हृदयम्। औरसदर्शनं हि यौवनं शोकस्य। लोकस्य तु नरपतिमरणदिवसादपि दारुणः स बभूव दिवसः। सर्वस्मिन्नेव नगरे न केनचिदपाचि न केनचिदस्नायि नाभोजि सर्वत्र सर्वेणारोदि केवलमनेन क्रमेणातिचक्राम दिवसः। स च प्रत्यग्रत्वष्टृटङ्कतष्टतनुरिव बहलरुधिररसमांसच्छविरपरपारावारपयसि ममज्ज मञ्जिष्ठारुणोऽरुणसारथिः। मुकुलायमानकमलिनीकोषविकलं चकाण चञ्चरीककुलं कमलसरसि। सविधविरहव्याधिविधुरवधूवाध्यमानं बबन्ध

---

टीका करणे] तस्मिन् चन्द्रातपे विताने इति यावत् विनिहितः=स्थापितः एक उपबर्हः=उपधानम् ['उपधानं तूपबर्हः' इत्यमरः] यस्यां तस्यां पर्यङ्किकायाम् लघुपर्यंके निपत्य=पतित्वा जोषं=तूष्णीं यथा स्यात्तथा अस्थात्=स्थितवान्।

धरणितले=भूतले निहिता=स्थापिता कुथा=आस्तरणं वर्णकम्बलः इति यावत् तस्यां प्रसारिता=वितता मूर्तिः=शरीरं येन सः अदूरे=सन्निधौ एव अस्य=राज्यवर्धनस्य तूष्णीम्=जोषम् यथा स्यात्तथा एव समवातिष्ठत=स्थितवान्। दूयमानं=विषीदत् मानसं=हृदयं यस्य तम् अग्रजन्मानम्=ज्येष्ठभ्रातरं दृष्ट्वा दृष्ट्वा अस्य=हर्षवर्धनस्य हृदयं सहस्रधा=सहस्रप्रकारैः समस्फुटत्=विदीर्णमभवत् इवेत्युत्प्रेक्षायाम्। औरसस्य=उरसा निर्मितः इति ['उरसोऽण च' पा० ४।४।९४] औरसः तस्य=भ्रातुः यद्यपि मुख्यतया औरस-शब्दः पुत्रे एव प्रयुज्यते तथापि पुत्रादतिरिक्ते रुधिर-सम्बन्धिनि भ्रात्रादिष्वपि अस्य प्रयोगो भवति; अत्र औरसशब्देन सहोदरः गृह्यते, दर्शनं=साक्षात्कारः शोकस्य यौवनं=तारुण्यं भवतीति शेषः निकट-सम्बधिनं दृष्ट्वा शोकः शतधा स्फुटतीति भावः। लोकस्य लोकानां कृते स दिवसः=द्वयोः भ्रात्रोर्मिलन-दिनम् नरपतेः=राज्ञः प्रभाकरवर्धनस्य मरण-दिवसात्=मृत्युदिनात् अपि दारुणः=भयङ्करः बभूव=जातः। न केनचित् पुरुषेण अपाचि=[√पच् कर्मणि लुङ्] भोजनं पक्वमित्यर्थः, अस्नायि=स्नानं कृतम्, अभोजि=भुक्तम्, अरोदि=रोदितम्। अतिचक्राम=व्यतीतः दिवसः। स च [तच्छब्दोऽत्र प्रसिद्धार्थकः] प्रसिद्धः मञ्जिष्ठा=रक्तवर्णवल्लीविशेषः तद्वत् अरुणः=रक्तारुणः=एतन्नामा सारथिः यस्य स सूर्य इत्यर्थः प्रत्यग्रं=सद्यः यथा स्यात्तथा त्वष्ट्रा=देव-शिल्पिना ['देवशिल्पिन्यपि त्वष्टा' इत्यमरः] टङ्केन=पाषाणदारणोपकरणेन ['टङ्कः पाषाणदारणः' इत्यमरः] तष्टा=तक्षणविषयीकृता तनूकृतेति यावत् तनुः=शरीरं यस्य स इवेत्युत्प्रेक्षायां वहन्=स्रवन् बहलः=प्रभूतः रुधिररसः=रक्तरसः यस्मिन् तथाभूतं यत् मांसं तस्य छविः=कान्तिः यस्य तथाभूतः, अत्र अन्यस्य छविम् अन्यःकथं गृह्णात्विति तस्य छविरिव छविरिति बिम्बप्रतिबिम्बभावेन निदर्शना सा चोत्प्रेक्षया संसृज्यते, अपरस्य=पश्चिमस्य पारावारस्य=समुद्रस्य पयसि=जले ममज्ज=मग्नोऽभवत्। कमलानां सरसि=सरोवरे मुकुलायमानाः=मुकुलावस्थां प्राप्नुवन्तः म्लायन्तः इत्यर्थः कमलिनीनां=पद्मिनीनां ये कोषाः=कर्णिकाः तेन विकलं=व्याकुलम् कमल-

**टिप्पणी—प्रत्यग्रत्वष्टृ०**—त्वष्टा देवताओं का शिल्पी—इञ्जीनियर हैं। उसने अपनी कन्या संज्ञा का सूर्य से विवाह कर दिया तो वह उसका तेज सहन न कर सकी। त्वष्टा ने सूर्य का तेज कुछ कम करने के लिए उसे साण पर चढाया और उसके कुछ हिस्से काट दिये। कटे हुए हिस्सों से ही त्वष्टा ने पीछे विष्णु का सुदर्शन चक्र, रुद्र का त्रिशूल एवं अन्य देवताओं के अन्य शस्त्र बनाए।

**हिन्दी**—देव हर्षवर्धन भी उसी तरह स्नान करके भूतल पर पड़े एक कंबल पर अपना शरीर पसारे भाई के पास ही चुपचाप बैठा रहा। मन में दुःखी होते हुए बड़े भाई को देख-देखकर उसका हृदय मानों सहस्र प्रकारों से विदीर्ण हो उठा। कारण यह है कि भाई का दर्शन शोक का यौवन हुआ करता है। लोगों के लिए वह दिवस राजा के मरण-दिवस से भी अधिक भीषण सिद्ध हुआ। सारे ही नगर में न किसी ने पकाया, न किसी ने स्नान किया, न भोजन किया सर्वत्र सब रोते ही रहे। केवल इसी क्रम से दिन बीता। और मजीठ की तरह लाल सूर्य भी अभी-अभी त्वष्टा की छेनी द्वारा शरीर से छिला हुआ-जैसा, वह रहे बहुत सारे रुधिर रसवाले मांस की छवि धारण करता हुआ पश्चिम समुद्र के पानी में डूब गया। कमल-सरोवर में बन्द हो रही कमलिनियों के कोषों में विकल हुआ भ्रमरगण दुःख में झनझना उठा। निकट भविष्य में होने वाले वियोग की वेदना से विह्वल हुई पत्नियों के कारण दुःखी हुआ चक्रवाक-समूह बन्धु-सदृश ही विकसित बन्धूक-पुष्प की-सी कान्ति वाले सूर्य की ओर अश्रु-पूर्ण

बन्धाविव विबुद्धबन्धूकभासि भास्वति सास्रां दृशं चक्रवाकचक्रवालम्। सञ्चरन्त्याः समधुकररवं कैरवाकरं कलहंसरमणीरमणीयं माणिक्यकाञ्चीकिङ्किणीजालमिवाण[1] श्रियः। प्रकटकलङ्कमुदयमानं विशङ्कटविषाणोत्कीर्णपङ्कसङ्करशङ्करशकुरशक्कु[2]रकपुदकूटसङ्काशमकाशताकाशे शशाङ्कमण्डलम्।

अस्यां च वेलायामनतिक्रमणवचनैरुपसृत्य प्रधानसामन्तैर्विज्ञाप्यमानः कथं कथमप्यभुक्त। प्राभातायां च शर्वर्यां सर्वेषु प्रविष्टेषु राजसु समीपस्थितं हर्षदेवमुवाच—'तात, भूमिरसि गुरुनियोगानाम्। शैशव एवाग्राहि गुणवत्पताकेव भवता तातस्य

---

टीका—मठग्रवद्धत्वेन बहिर्गन्तुमशक्यत्वात् चञ्चरीकाणां=भ्रमराणां कुलं=समूहः चकाण=[√कण्+लिट्] करुण शब्दयाञ्चक्रे। सविधः=सन्निकटः यः विरहस्य=वियोगस्य व्याधिः=पीडा तेन विधुरा=आकुला या वधूः=चक्रवाकीत्यर्थः तया बाध्यमानम्=दुःखमवाप्यमानम् चक्रवाकानाम्=एतदाख्य पक्षिविशेषाणाम् चक्रवालं=समूहः बन्धौ=बान्धवे इवेत्युपमायाम् विबुद्धं=विकसितं यत् बन्धूकं=रक्तपुष्पविशेषः तद्वद् भाः=कान्तिः यस्य तस्मिन् भास्वति=सूर्ये सास्राम्=अस्रेण=अश्रुणा सहिताम् अश्रुपूर्णामित्यर्थः दृशम्=दृष्टिम् बबन्ध=बद्धवान्। मधुकराणां=भ्रमराणां रवेण=झङ्कारेण सहितम् तथा कलहंसानां=कादम्बानाम् [ 'कादम्बः कलहंसः स्यात्' इत्यमरः ] या रमण्यः =कलहंस्यः इत्यर्थः ताभिः रमणीयं=मनोज्ञं कैरवाकरम्=कैरववनम् (कर्म) सञ्चरन्त्याः=भ्रमन्त्याः तत्र विचरणं कुर्वन्त्याः इत्यर्थः श्रियः=राजलक्ष्म्या माणिक्य-काञ्ची=मणिमयमेखला तस्याः किङ्किणीनां= क्षुद्रघण्टीनां जालं=समूहः इवेत्युत्प्रेक्षायाम् आण=[√अण्=शब्दे+लिट्] शब्दं चकार। प्रकटः= स्फुटः कलङ्कः=लाञ्छनं यस्मिन् तत्, उदयमानम्=उदयं गच्छत् विशङ्कटः=पृथुः [ 'विशङ्कटं पृथु बृहत्' इत्यमरः ] यः विषाणः=शृङ्गं तेन उत्कीर्णं=उत्खातः यः पङ्कः=कर्दमः तस्य सङ्करः=सम्पर्कः संसर्गः इति यावत् यस्य तथाभूतः शङ्करस्य=महादेवस्य शकुरः=दान्तः यः शक्कुरः=वृषभः तस्य ककुदस्य=पृष्ठे उत्थितस्य अङ्गविशेषस्य [वृषाङ्गे ककुदोऽस्त्रियाम्' इत्यमरः] कूटस्य=आभोगस्य सङ्काशं=सदृशं शशाङ्कस्य=चन्द्रस्य मण्डलं=बिम्बम् आकाशे अकाशत=प्रकाशत।

वेलायां=समये नास्ति अतिक्रमणम्=उल्लङ्घनं यस्य तथाभूतं वचनं येषां तैः प्रधान-सामन्तैः=मुख्याधीनराजैः विज्ञाप्यमानः=प्रार्थ्यमानः अभुक्त=भोजनं कृतवान् राज्यवर्धनः इति शेषः। शर्वर्यां=रात्र्यां प्राभातायां=भातुं प्रवृत्तायां समाप्तायामित्यर्थः हर्षदेवम् उवाच राज्यवर्धनः इति शेषः—तात,=प्रिय, गुरूणां=श्रेष्ठपुरुषाणां नियोगानाम्= आदेशानां त्वं भूमिः=स्थानं पात्रमित्यर्थः असि, अर्थात् श्रेष्ठाः त्वां किमपि कर्तुं आदिशन्ति यतः ते जानन्ति त्वम् आदेशभङ्गं न करिष्यसीति, अथवा गुरुशब्देन अत्र पिता गृह्यते ततश्चार्थः एषः—पिता त्वामादिशति स्म, यतः आदेशपालनस्य त्वमेव योग्यतमः आसीः इति। शैशवे=बाल्ये एव भवता तातस्य=पितुः गुणवतां=गुणशालिनां लोकानां

**टिप्पणी—श्रियं**—प्रभाकरवर्धन स्वर्ग सिधार गए थे और दूसरा राजा अभी कोई नहीं बना था, अतः राजलक्ष्मी कैरव वन में इधर-उधर विचरण कर रही थी। यहाँ वनलक्ष्मी से अभिप्राय शोभा से है जो कैरवों में बिखरी हुई थी। वहाँ भ्रमर गूँज रहे थे और कलहंसियाँ भी वन को और भी रमणीय बनाये हुए थीं। कवि कल्पना कर रहा है कि संचरण करती हुई श्री की मणिमय मेखला के घुँघरू—जैसे बज रहे हों। वनशोभा बनी लक्ष्मी मंडलाकार कलहंसियां बनी मेखला और गूँजते हुए भ्रमर बने घुँघरू। ध्यान रहे कि राजलक्ष्मी और कैरव वन लक्ष्मी के भिन्न होते हुए भी यहाँ उनका अभेदाध्यवसाय है।

**हिन्दी**-दृष्टि बाँध बैठा। भ्रमर-झंकार से पूर्ण तथा कलहंसियों से रमणीय बने कैरवों के वनमें विचरण करती हुई राजलक्ष्मी की मणिमय करधनी के घुँघरुओं का समूह—जैसा बज उठा। स्पष्ट कलंक रखे, उदय होता हुआ, विशाल सींग से खोदे हुए पंक से युक्त सधे शिव-वृषभ के कूबड़ के उभाड़ के समान चन्द्रमण्डल आकाश में चमकने लगा।

इस समय प्रधान सामन्तों द्वारा-जिनका कहना टाला नहीं जा सकता था—प्रार्थित किये जाते हुए राज्यवर्धन ने किसी तरह भोजन किया। और रात खुलते सभी राजाओं के प्रविष्ट हो जाने पर राज्यवर्धन समीप में बैठे हर्षदेव को बोल पड़ा—'प्रिय, तुम गुरु-जन की आज्ञाओं के उचित स्थान हो। शैशवावस्था में ही आपने गुणवानों की पताका—

---

१. 'जालमिवाचकाण' २. 'वकुंरशक्कर'

चित्तवृत्तिः। यतो भवन्तमेवंविधं विधेयं विधिविधानोपनतनैर्घृण्यमिदं किमपि विभणिषति मे हृदयम्। नावलम्बनीया बालभावसुलभा प्रेमविलोमा वामता। वैधेय इव मा कृथाः प्रत्यूहमीहितेऽस्मिन्। शृणु। न खलु न जानासि लोकवृत्तम्। लोकत्रयत्रातरि मान्धातरि मृते किं कृतं पुरुकुत्सेन भ्रूलतादिष्टाष्टादशद्वीपे दिलीपे वा रघुणा महासुरसमरमध्यासितत्रिदशरथे दशरथे वा रामेण गोष्पदीकृतचतुरुदन्वदन्ते दुष्यन्ते वा भरतेन। तिष्ठन्तु तावदेते तातेनैव शतसमधिकाध्वरधूसरितवासव-वयसि सुगृहीतनाम्नि तत्रभवति परासुतां गते पितरि किं नाकारि राज्यम्। यं च किल शोकः समभिभवति तं कापुरुषमा-

---

टीका—पताका=वैजयन्ती इवेत्युपमायाम् चित्तवृत्तिः=मनोवृत्तिः अग्राहि=गृहीता अर्थात् पिता पताकेव गुणवतामग्रग आसीत्, तन्मनोनुवर्तनञ्च भवता कृतम्। विधेयं=विनयग्राहिणम् ['विधेयो विनयग्राही' इत्यमरः] विधेः=भाग्यस्य यत् विधानं=चेष्टितं तेन उपनतं=आगतं नैर्घृण्यं=निर्घृणस्य भावः निर्दयत्वं विरक्तत्वमिति यावत् यस्य तथाभूतं हृदयं विभणिषति=भणितुमिच्छति [ √भण् + सन् + लट् ]। बालस्य भावे=बाल्ये सुलभा=सुप्राप्या प्रेम्णः=भ्रातृस्नेहस्येत्यर्थः विलोमा=विरुद्धा वामता प्रतिकूलता न अवलम्बनीया=आश्रयणीया। वैधेयः=मूर्खः [ 'मूर्ख-वैधेयबालिशाः' इत्यमरः ] इवेत्युपमायाम् अस्मिन् ईहिते=मम अभीप्सिते इत्यर्थः प्रत्यूहं=विघ्नं मा कृथाः=न कुरु। लोकवृत्तं=संसारव्यवहारम् न जानासि इति न, अपि तु जानासि। लोकानां त्रयं तस्य त्रातरि=रक्षितरि मान्धातरि=एतन्नामक-राजविशेषे मृते=स्वर्गते पुरुकुत्सेन=एतदाख्यतत्पुत्रेण किं कृतम्? राज्यमेव कृतम् इति सर्वत्र योज्यम्, भ्रूलतया=भ्रूभङ्गमात्रेणेत्यर्थः आदिष्टानि=आज्ञप्तानि अष्टादश द्वीपानि येन तस्मिन् दिलीपे=एतन्नामकराजविशेषे ( मृते ) रघुणा=तत्पुत्रेण ( किं कृतम्? ) महत्=विशालं च तत् असुराणां=राक्षसानां समरं=युद्धं तस्य मध्ये अध्यासितः=अधिरूढः त्रिदशानां=देवानां रथः येन तस्मिन् दशरथे मृते रामेण किं कृतम्? गोः पदं=पादप्रक्षेपप्रमाणं, गोष्पदमात्रं क्षेत्रमिति [ गो + पद सकारागमश्च 'गोष्पदं सेवितासेवितप्रमाणेषु' पा० ६।१।१४५ ] गोष्पदीकृताः चतुर्णाम् उदन्वतां=समुद्राणाम् अन्ताः=प्रान्ताः येन तस्मिन् दुष्यन्ते मृते तत्पुत्रेण भरतेन किं कृतम्? एते राजानः तिष्ठन्तु तावत्=दूरे सन्तु अतिप्राचीनत्वात्, तातेन=पित्रा एव शतात्=शतसंख्यातः समधिकाः=अधिकाः ये अध्वराः=यज्ञाः तेषां धूमस्य विसरेण=समूहेन धूसरितं=धूसरवर्णीकृतं वासवस्य=इन्द्रस्य वयः=यौवनं येन तस्मिन्, सुगृहीत=सादरं स्मृतमित्यर्थः नाम यस्य तस्मिन् एष शब्दप्रयोगः प्रायः श्रद्धा-संमानपूर्वकं स्वर्गतस्यादरणीयपुरुषस्य उल्लेखे जायते, तत्रभवति=आदरणीये परा=परागताः असवः=प्राणाः यस्य स परासुः मृत इत्यर्थः तस्य भावः तत्ता

**टिप्पणी—दशरथ**—राजा दशरथ ने देवरथ पर चढ़ कर देवासुर संग्राम में देवताओं की सहायता की। इसका उल्लेख कालिदास ने भी किया है—'स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः' [ रघु० ९।१९ ] इसी युद्ध में शम्बरासुर के साथ लड़ते हुए दशरथ की सहायता कैकयी ने की थी जिसके फलस्वरूप राजा ने उसे दो वर दिये थे। **शतसमधिकाध्वर**—ऐसा मानते हैं कि जो सौ अश्वमेध कर ले, वह इन्द्र का स्थान ले लेता है। इसलिए इन्द्र यज्ञों में विघ्न डाला करता है। जब इन्द्र को पता लगा कि प्रभाकरवर्धन सौ से अधिक यज्ञ कर रहा है तो उसका तारुण्य धूसर हो गया चिंता और ईर्ष्या से वह बूढ़ा हो गया।

**हिन्दी** जैसी पिता की चित्तवृत्ति पकड़ ली थी। तभी तो ऐसे आज्ञाकारी आपको भाग्य के विधान के कारण कठोर बना हुआ मेरा हृदय कुछ कहना चाह रहा है। बालकपन में सुलभ प्रेम-विरोधी प्रतिकूलता आपको नहीं अपनानी। मेरी इस इच्छा में मूर्ख की तरह विघ्न न डालना, सुनो, तुम संसार के व्यवहार को नहीं जानते—ऐसी बात तो सचमुच है नहीं। तीनों लोकों के पालक मान्धाता के स्वर्ग सिधारने पर (उसके पुत्र) पुरुकुत्स ने क्या किया (राज्य ही तो किया) अथवा भ्रूलता (भ्रूभंग) से ही अट्ठारह द्वीपों को आदेश देनेवाले दिलीप के स्वर्ग सिधारने पर (उसके पुत्र) रघु ने क्या किया? अथवा असुरों के महायुद्ध के मध्य देवताओं के रथ पर बैठने वाले दशरथ के मरने पर राम ने क्या किया? अथवा चारों समुद्रों के प्रान्तों को गौ के खुर के परिमाण जितना छोटा सा जल भरा गड्ढा बना देने वाले दुष्यन्त की मृत्यु के बाद भरत ने क्या किया? अथवा, इस समय इन राजाओं को छोड़ो, सौ से अधिक यज्ञों की धूमराशि से इन्द्र की तरुणाई को मलिन कर देने वाले सुगृहीतनामधेय आदरणीय पिता के स्वर्गवास पर क्या हमारे पिताजी ने राज्य नहीं किया? जिसे शोक दबा बैठता है उसे शास्त्रविज्ञाता लोग कायर कहते हैं, क्योंकि शोक-पाश तो स्त्रियों

चक्षते शास्त्रविदः । स्त्रियो हि विषयः शुचाम् । तथापि किं करोमि । स्वभावस्य सेयं कापुरुषता वा स्त्रैणं वा यदेवमास्पदं[1] पितृशोकहुतभुजो जातोऽस्मि । मम हि भूभृति पर्यस्ते निरवशेषतः प्रस्रवणानीव स्रुतान्यश्रूण्यस्तमिते महति तेजस्यन्धकारीभूतदशाशस्य प्रणष्टः प्रज्ञालोकः[2] प्रज्वलितं हृदयम् आत्मदाहभीत इव स्वप्नेऽपि नोपसर्पति विवेकः, बलीयसा संतापेन जातुषमिव विलीनमखिलं धैर्यम्, पदे पदे दिग्धरोपाहतेव हरिणी मुह्यति मतिः, पुरुषद्वेषिणीव [3]दूरेण भ्रमति परिहरन्ती स्मृतिः, अम्बेव तातेनैव सह गता धृतिः, वार्द्धुषिकप्रयुक्तानीव वित्तानि प्रतिदिवसं वर्धन्ते दुःखानि, शोकानलधूमसम्भार-

---

टीका–तां गते मृते इत यावत् । पितरि किं राज्यं न अकारि=कृतम् ? समभिभवति=पराभवति आकुलीकरोतीति यावत् शास्त्रविदः=शास्त्रज्ञातारः कुत्सितः पुरुषः कापुरुषः तम् आचक्षते=कथयन्ति । शुचां= शोकानां विषयः=स्थानम् । स्त्रैणं=स्त्रियाः इदमिति (स्त्री+नञ्) स्त्रीस्वभावः स्त्रीत्वमिति यावत् पितुः शोक एव हुतभुक्=अग्निः तस्य आस्पदं=स्थानं पात्रमित्यर्थः जातः अस्मि । भूभृति=पर्वते अन्यत्र राज्ञि (प्रभाकरवर्धने) पर्यस्ते=ध्वस्ते निरवशेषतः=निश्शेषतः कार्त्स्न्येनेति यावत् प्रस्रवणानि=निर्झराः इवेत्युपमायाम् अश्रूणि=वाष्पाणि स्रुतानि=स्यन्दितानि, महति=प्रभूते तेजसि=ज्योतिषि सूर्ये इत्यर्थः अथ च तेजस्विनि प्रतापशीले राज्ञि प्रभाकरवर्धने अस्तमिते=अस्तं गते=मृते च अन्धकारीभूताः=अन्धकारपूर्णाः जाताः दश आशाः=दिशः यस्य तथाभूतस्य मे प्रज्ञालोकः=मतिप्रकाशः प्रणष्टः=नाशं गतः अर्थात् यथा सूर्ये अस्तमिते सर्वासु दिक्षु अन्धकारः प्रसरति तथैव प्रतापशीले पितरि स्वर्गते मम बुद्धिरपि अन्धकारीभवति, जगच्चान्धकारपूर्णमिव पश्यति, अत्रोपमा व्यङ्ग्या, आत्मनः=स्वस्य दाहः=प्लोषः तस्माद् भीतः=त्रस्तः इवेत्युत्प्रेक्षायाम् विवेकः= सदसद्-ज्ञानं (शोकेन) प्रज्वलितं मे हृदयं न उपसर्पति=उपगच्छति अर्थात् शोकाग्निज्वलित-हृदये ममापि माभूद् दाहः— इति विवेको न तत्र प्रविशति, बलीयसा=अतिशयेन बलवता सन्तापेन=शोकेन एव सन्तापेन=उष्णिम्ना (श्लिष्टरूपकम्) जतुनः=लाक्षायाः विकारः इति [जतु+अण् षुगागमश्च 'त्रपु-जतुनोः षुक्' पा० ४।३।१३०] जतुनिर्मित-वस्तु इवेत्युपमायाम् अखिलं=समग्रं धैर्यं=धृतिः विलीनं द्रुतम् गलितमितियावत्, पदे पदे=प्रतिपदं दिग्धः=विषाक्तः ['विषाक्ते दिग्धलिप्तकौ' इत्यमरः] यः रोपः=वाणः ['पत्री रोप इषुर्द्वयोः' इत्यमरः] तेन आहता= प्रहृता हरिणी=मृगी इवेत्युपमायां मे मतिः=बुद्धिः मुह्यति=मोहं प्राप्नोति, पुरुषे द्वेषः=घृणा अस्या अस्तीति तथोक्ता नारी इवेत्युपमायां स्मृतिः=स्मरणशक्तिः मां परिहरन्ती=परिवर्जयन्ती दूरेण=दूरतः भ्रमति=भ्रमणं करोति, अम्बा=माता इवेत्युत्प्रेक्षायां धृतिः=धैर्यं तातेन=पित्रा सह गता, वार्द्धुषिकः=वृद्ध्यर्थं द्रव्यं वृद्धिः तां गर्ह्यां प्रयच्छतीति (वृद्धि+ठक् 'वृधुषि आदेशश्च' वृद्धेर्वृधुषिभावो वक्तव्यः वा० ['प्रयच्छति गर्ह्यम्' पा० ४।४।३९] वृद्ध्याजीवः [ कु-सीदको वार्द्धुषिको वृद्ध्याजीवश्च वार्द्धुषिः' इत्यमरः ] शोकः एव अनलः=अग्निः तस्य धूमस्य यः सम्भारः=निचयः तस्मात् सम्भूतः=जातः यः अम्भोधरः=मेघः तेन भरितम्=पूरितम् इवेत्युत्प्रेक्षायाम् शरीरं नयनयोः वारिधारायाः=अश्रुजलधारायाः विसरं=संतानं वर्षति । सर्वः=पञ्चजनः [अत्र जातौ एकवचनम्] पुरुषाः लोकाः इति यावत् (स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषाः नरः' इत्यमरः) निरुक्तकारयास्कानुसारेण 'ब्राह्मणादयश्चत्वारो वर्णाः पञ्चमो निषादश्चेति पञ्चजनाः' उपरतः=मृतः पञ्चत्वं पृथिव्यप्तेजोवाय्वाकाशरूपपञ्चभूतत्वं प्रयाति=

हिन्दी–हुआ करती हैं। तो भी क्या करूँ ! यह स्वभाव की कायरता है अथवा स्त्रीपन है जो मैं पिता की शोकाग्नि का पात्र बन बैठा हूँ । भूभृत् (पर्वत) के ध्वस्त हो जाने पर निःशेष-रूप से बह जाने वाले झरनों की तरह भूभृत् (राजा प्रभाकर-वर्धन) के ध्वस्त (स्वर्गवास) हो जाने पर आँसू निःशेष रूप से बह गए हैं, महान् तेज (सूर्य) के अस्त हो जाने पर अन्धकारावृत हुई दशों दिशाओं के समान मेरी बुद्धि का प्रकाश अन्धकारावृत हो गया है, अपने जल जाने से डरा हुआ– जैसा विवेक मेरे प्रज्वलित हृदय में स्वप्न में भी प्रवेश नहीं कर रहा है, प्रबल संताप द्वारा लाख से बनी वस्तु की तरह मेरा सारा धैर्य गल गया है, पद-पद (पग-पग) पर मूर्छा खाती हुई विषाक्त बाण द्वारा आहत मृगी की तरह पद-पद (शब्द-शब्द) पर मेरी मति मूर्छा खा रही है । पुरुष-द्वेषी नारी की तरह स्मृति मुझ से बचती हुई दूर ही दूर भ्रमण कर रही है । माताजी के समान मेरी धृति पिताजी के साथ चली गई । सूदखोर के (सूद-पर) लगाए हुए द्रव्यों की तरह मेरे दुःख बढ़ते जा रहे हैं । शोकाग्नि के धूम-समूह से उत्पन्न मेघ से भरा हुआ–जैसा मेरा शरीर अश्रुजल-

---

१. 'यदेवमस्मादपि' २. 'प्रज्ञानलोकः' ३. 'दूरत एव भ्रमन्ती परिहरति'

सम्भूताम्भोधरभरितमिव वर्षति नयनवारिधाराविरतं शरीरम्। सर्वः पञ्चजनः पञ्चत्वमुपरतः प्रयाति वितथमेतद्वदति बालो लोकः। तातो हुताशनतामेव केवलामापन्नो येनैवं दहति माम्। इदमसाम्परायिकमिव हृदयमवष्टभ्य व्युत्थितः शोको दुर्निवारः वाडव इव वारिराशिम्, पविरिव पर्वतम्, क्षय इव क्षपाकरम्, राहुरिव रविम्, दहति दारयति तनूकरोति कवलयति च माम्। न शक्नोति मे हृदयं तादृशस्य सुमेरुकल्पस्य कल्पमहापुरुषस्य विनिपातमश्रुभिरेव केवलैरतिवाहयितुम्। राज्ये विष इव चकोरस्य मे विरक्तं चक्षुः। बहुमृतपटावगुण्ठनां रञ्जितरङ्गां जनङ्गमानामिव वंशबाह्यामनार्यां श्रियं त्यक्तुम-

टीका-प्राप्नोति, अर्थात् मरणानन्तरम् अस्माकं पञ्चभूतात्मकं शरीरं तत्तत्पृथिव्यादिपञ्चभूतेषु लीयते इति बालः लोकः=मूर्खाः जनाः वदन्ति। तातः=पिता केवलम्=एकमात्रम् हुताशनताम्=अग्नित्वम् तेजस्त्वमिति यावत् आपन्नः प्राप्तः। अत्रानुमानालङ्कारः। असाम्परायिकं=सम्परायः=युद्धं तस्मै प्रभवतीति (सम्पराय + ठक्) युद्धसमर्थमित्यर्थः न साम्प० इति असाम्प०= अयुद्धसमर्थम् इवेत्युत्प्रेक्षायां हृदयम् अवष्टभ्य=आक्रम्य परिभूयेति यावत् व्युत्थितः=विशेषेण उत्थितः दुर्निवार= दुःखेन निवारयितुं योग्यः वाडवः=वाडवाग्निः समुद्रजलान्तर्वर्ती अग्निरिति यावत् (प्रत्यये) वारि-राशि=जलसमूहम् समुद्रमित्यर्थः इव मां दहति=प्लोषति, पविः=वज्रं पर्वतम् इव मां दारयति=विदीर्णं करोति, क्षयः=राजयक्ष्मा रोगः क्षपाकर=चन्द्रं इव मां तनूकरोति=कृशीकरोति राहुः रविं=सूर्यम् इव मां कवलयति=ग्रसति अत्र इत्यादि-क्रियाणां यथासंख्यं वाडवादिभिः सम्बन्धात् यथासंख्यालङ्कारः स च मालोपमया दीपकेन च सङ्कीर्यते। सुमेरु-कल्पस्य सुमेरुपर्वतसदृशस्य, कल्पस्य=सहस्रमहायुग-मितस्य समयस्य ब्रह्मण एकदिवसस्येत्यर्थः यथोक्तं गीतायाम्-(सहस्रयुगपर्यन्तम-हर्यद् ब्रह्मणो विदुः। रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः—गी० ८।१७) तस्य शङ्करानुसारेण 'कल्पतेऽस्माद-भीष्टार्थः तस्य' महापुरुषस्य विनिपातं=मरणमित्यर्थः केवलैः अश्रुभिः एव अतिवाहयितुम्=अतियापयितुं न शक्नोति=प्रभवति। विषे=गरले विरक्तं=विशेषेण रक्तवर्णं चकोरस्य=पक्षिविशेषस्य चक्षुः=नेत्रम् इवेत्युपमायां राज्ये=राज्यविषये मे चक्षुः विरक्तम्=विगतरागम् वैराग्यपूर्णमित्यर्थः अस्तीति शेषः। बहवः मृतानां=शवानां पटा= आवरणवस्त्राणि एव अवगुण्ठनं=मुखावरण-वस्त्रं यस्याः ताम्, रञ्जितः=विनोदितः रङ्गः=जनसमाजः यया ताम् अन्यत्र रञ्जित=रुधिरप्रवाहैः अरुणीकृतः रङ्गः=रणक्षेत्रं यया ताम् [ 'कार्मणेऽपि च रङ्गो ना रागे नृत्ये रणक्षितौ' इति मेदिनी ] वशात्=उच्चकुलाद् बाह्यां=बहिर्भूताम्, अकुलीनामिति यावत्, अन्यत्र वंशेषु=वेणुदण्डेषु बाह्यां=

**टिप्पणी—विषे इव**—ऐसा कहा जाता है कि विष देखते ही चकोर की आँखें लाल हो जाया करती हैं। कौटिल्य ने भी अपने अर्थशास्त्र में कह रखा है—'क्रौञ्चो विषाभ्याशे माद्यति ···· चकोरस्याक्षिणी विरज्येते'। कामन्दकनीतिसार में भी लिखा हुआ है—'चकोरस्य विरज्येते नयने विषदर्शनात्'। **अनार्यां श्रियम्**—राजश्री की तुलना चण्डालों की श्री से की गई है किन्तु यहाँ कुछ संगति नहीं बैठ रही है। कॉवल का सुझाव है कि यहाँ 'जनङ्गमाङ्गनानाम्' पाठ होना चाहिए। हम भी उससे सहमत हैं क्योंकि चण्डाल मुर्दे के विविध रंग के कपड़े लाते हैं। उनकी स्त्रियाँ उन कपड़ों से मुँह ढकती हैं और रंगबिरंगे कपड़ों को देख कर लोगों का मनोरञ्जन भी होता है। चण्डाल अपना सब कुछ बाँस के डंडों पर ही ले जाते हैं।

**हिन्दी**—समूह की वर्षा कर रहा है। सभी मनुष्य मरकर ( पृथिवी आदि ) पांच तत्त्वों में लीन हो जाया करते हैं— ऐसा भोले भाले लोग झूठ ही कहते हैं। मेरे पिता जी तो अग्नि-रूप को ही प्राप्त हुए हैं, तभी तो युद्ध के लिए असमर्थ-जैसे बने हुए हृदय को दबाकर उठा हुआ दुर्निवार शोक मुझे इस तरह जला रहा है—जैसे वाडवाग्नि समुद्र को जलाया करती है, इस तरह मुझे काट रहा जैसे वज्र पर्वत को काटा करता है, इस तरह मुझे क्षीण कर रहा है जैसे क्षयरोग चन्द्रमा को क्षीण किया करता है और इस तरह मुझे अपना ग्रास बना रहा है जैसे राहु सूर्य को अपना ग्रास बनाया करता है। मेरा हृदय उस प्रकार के कल्पवृक्ष-सदृश, कल्प के महापुरुष का निधन केवल अश्रुओं से ही नहीं टाल सकता। मेरी चक्षु राज्य की ओर ऐसी विरक्त (राग-रहित) हो उठी है जैसे चकोर की चक्षु विष (देखने) से विरक्त (लाल-लाल) हो जाती है। मेरा मन मरे हुओं के बहुत-से कपड़ों का अवगुण्ठन (घूँघट) बनाने वाली (दर्शकों को) मनोरंजन करने वाली बांसों द्वारा ले जाये जाने वाली अनार्य जाति की चण्डालों की श्री (१ अबला) की तरह मरे हुओं (राजाओं) के बहुत से वस्त्रों का अवगुण्ठन बनाये, रण-भूमि को रुधिर से

१. क्वचित् 'उपरतः' इति नास्ति २. 'आपन्नोऽपि नैवं मां दहति'

भिलषति मे मनः। क्षणमपि दग्धगृहे शकुलिरिव न पारयामि स्थातुम्। सोऽहमिच्छामि मनसि वाससीव सुलग्नं स्नेहमलमिदममलैः शिखरिशिखरप्रस्रवणस्वच्छस्रोतोऽम्बुभिः क्षालयितुमाश्रमपदे। यतस्त्वमन्तरितयौवनसुखामनभिमतामपि जरामिव पूरुराज्ञया गुरोर्गृहाण मे राज्यचिन्ताम्। त्यक्तसकलबालक्रीडेन हरिणेव वीयतामुरो लक्ष्म्यै। परित्यक्तं मया शस्त्रम्।' इत्येवमभिधाय खड्गग्राहिणो हस्तादादाय निजं निस्त्रिंशमुत्ससर्ज धरण्याम्।

---

टीका—वहनयोग्याम्, श्लेषादिषु बवयोरभेदात् यथोक्तं वाग्भटालंकारे–'यमक-श्लेषचित्रेषु ववयोर्डलयोर्न भिद्' इति (१/२०) अनार्यां=नीचाम् अन्यत्र न आर्यजात्युत्पन्नां जनङ्गमानां=चण्डालानाम् [ 'चण्डाल-प्लव-मातङ्ग-दिवाकीर्ति-जनङ्गमाः' इत्यमरः ] श्रियम् इवेत्युपमायाम् राजश्रियं त्यक्तुम्=विहातुं मे मनः अभिलषति। दग्धे=भस्मीभूते गृहे=भवने शकुलिः=शकुनिः पक्षीति यावत् इवेत्युपमायाम् अहं दग्धगृहे=पितुः मरणात् शोकाग्निदग्धे, अभिशप्ते भवने स्थातुं न पारयामि=शक्नोमि। वाससि=वस्त्रे सुलग्नं सुसंसक्तं स्नेहस्य=तैलादिकस्य मलं=पङ्कं कलङ्कः मालिन्यमिति यावत् इवेत्युपमायां मनसि सुलग्नं स्नेहं=अनुरागं गृहविषयकासक्तिमित्यर्थः एव मलं=दोषम् अमलैः=स्वच्छैः शिखरिणां=पर्वतानां शिखरेषु=शृङ्गेषु यानि प्रस्रवणानि=निर्झराः तेषां स्वच्छानां=निर्मलानां स्रोतसां=प्रवाहाणाम् अम्बुभिः=जलैः क्षालयितुं=निर्णेक्तुम् इच्छति आश्रमपदे=आश्रमस्थाने तपोवने इत्यर्थः। अन्तरितानि=व्यवहितानि दूरीभूतानीत्यर्थः यौवनस्य सुखानि विषयोपभोगाः इति यावत् यस्याम् ताम् जराम् राज्यचिंतामित्युभयत्र समानम् एकत्र क्षीणशक्तिकतया उपभोगाक्षमत्वात् अन्यत्र प्रजापालनव्यग्रत्वात्, अनभिमताम्=अनभिलषिताम् अपि गुरोः=पितुः ययातेः आज्ञया=आदेशेन पूरुः=एतन्नामकः ययातेः पुत्रः जरां=वृद्धावस्थाम् इवेत्युपमायाम् गुरोः=ज्यायसः भ्रातुः मे=मम आज्ञया राज्यस्य चिन्ताम्=रक्षणभारमित्यर्थः गृहाण=स्वीकुरु। त्यक्ताः=उज्झिताः सकलाः=समग्राः बालक्रीडाः=बाल्यावस्था-लीलाः येन तेन हरिणा=विष्णुना विष्ण्वतारधारिणा कृष्णेनेत्यर्थः लक्ष्म्यै=लक्ष्मीरूपधारिण्यै रुक्मिण्यै अन्यत्र राजलक्ष्म्यै उरः=वक्षः दीयतां=समर्प्यताम्। परित्यक्तं=मुक्तं इति एवम् अभिधाय=कथयित्वा खड्ग-ग्राहिणः=खड्गधारिणः सेवकस्य हस्तात् निजं=स्वकीयं निस्त्रिंशम्=निर्गतः त्रिंशतोऽविम्यः इति [ निस्+त्रिंशत्+डच् ] त्रिंशदङ्गुलिप्रमाणतोऽपि दीर्घः खड्गः [ 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' इत्यमरः ] तम् धरण्याम्=पृथिव्याम् उत्ससर्ज=परित्यक्तवान्।

**टिप्पणी—पुरु**—राजा ययाति ने दैत्य-गुरु शुक्राचार्य की कन्या देवयानी से विवाह किया। दैत्यराज वृषपर्वा की पुत्री शर्मिष्ठा उसकी दासी थी। ययाति शर्मिष्ठा पर मोहित हो बैठा और गुप्त रूप से उसके साथ विवाह कर लिया। देवयानी को पता चला तो आग-बबूली हो पिता के पास शिकायत करने चली गई। शुक्र ने ययाति को शाप दे दिया कि तू बूढ़ा हो जा। ययाति ने शुक्र को मनाया और उसकी अनुमति से अपने छोटे पुत्र पुरु की जवानी के साथ अपना बुढ़ापा बदल लिया।

**बालक्रीड़ा**—भगवान् कृष्ण वृन्दावन में गोपी-गोपों के साथ बाललीला छोड़कर मथुरा में कंस को मारने चले आए। कंस को मारकर वहीं रुक्मिणी के साथ रम गए। रुक्मिणी लक्ष्मी का ही अवतार थी [ 'राघवत्वेऽभत् सीता रुक्मिणी कृष्णजन्मनि' विष्णुपु० ]।

**हिन्दी**—रंग देनेवाली, अकुलीन नीच राजलक्ष्मी को त्यागना चाह रहा है। पक्षी की तरह मैं इस जले हुए घर में नहीं रह सकता। सो मैं वस्त्र में लगे स्नेह (तेल) के मैल की तरह मन में लगे स्नेह (अनुराग) के मैल को तपोवन में पर्वतों के शिखरों के झरनों के स्वच्छ प्रवाहों के निर्मल जलों से धो देना चाह रहा हूँ। अतः यौवन सुखों को विघ्नित कर देने वाली और न चाही जाती हुई भी मेरी राज्य चिन्ता को गुरु (ज्येष्ठ भाई) की आज्ञा से इस प्रकार तुम ग्रहण कर लो जैसे गुरु (पिता) की आज्ञा से पुरु ने यौवन सुख-रहित एवं अवाञ्छनीय होती हुई भी वृद्धावस्था ग्रहण कर ली थी। सभी बाल-क्रीडाओं को छोड़े हुए तुम इस प्रकार लक्ष्मी (राजलक्ष्मी) को छाती से लगाओ जैसे सभी बाल-लीलाओं को छोड़े हुए विष्णु (कृष्ण) ने लक्ष्मी (रुक्मिणी) को छाती से लगाया था। मैंने शस्त्र त्याग दिया है ऐसा कहकर राज्यवर्धन ने खड्गवाहक के हाथ से अपना खड्ग लेकर भूमि पर फेंक दिया।

अथ तच्छ्रुत्वा निशितशिखेन शूलेनेवाहत प्रविदीर्णहृदयो देवो हर्षः समचिन्तयत्—किं नु खलु मामन्तरेणार्यः केनचिदसहिष्णुना किंचिद्ग्राहित कुपितः स्यात्। उतानया दिशा परीक्षितुकामो माम्। उत शोकजन्माचेतसः समाक्षेपोऽयमस्य। अहोस्विदार्य एवायं न भवति। किं वार्येणान्यदेवाभिहितमन्यदेवाश्रावि मया शोकशून्येन श्रवणेन्द्रियेण। आर्यस्य वान्यदेव विवक्षितमन्यदेवापतितं मुखेन। अथवा सकलवंशविनाशाय निपातनोपायोऽयं विधेः, मम वा निखिलपुण्यपरिक्षयोपक्षेपः कर्मणामननुकूलसमग्रग्रहचक्रवालविलसितं वा, अथवा तातविनाशनिःशङ्ककलिकालक्रीडितं येनायं य कश्चिदिव यत्किंचनकारिणं मामपुष्पभूतिवंशसम्भूतमिव, अताततनयमिव, अनात्मानुजमिव, अभक्तमिव, [1]अहृष्टदोषमपि श्रोत्रियमिव सुरापाने सद्भृत्यमिव स्वामिद्रोहे सज्जनमिव नीचोपसर्पणे सुकलत्रमिव व्यभिचारे, अतिदुष्करे कर्मणि समादिष्टवान्। तदेतत्तावदनुरूपं

टीका—तत् श्रुत्वा=आकर्ण्य निशिता=तीक्ष्णा शिखा=अग्रं यस्य तेन शूलेन=आयुधविशेषेण आहतः=अपहृतः प्रविदीर्णं=प्रकर्षेण विदीर्णं स्फुटितमिति यावत् हृदयं यस्य तथाभूतः हर्षः समचिन्तयत्=चिन्तितवान् माम् अन्तरेण=ममविषये अथवा मां विना ममानुपस्थितौ इति यावत् असहिष्णुना=आवयोः=भ्रात्रोः घनिष्ठं प्रेम न सहमानेनेत्यर्थः केनापि पुरुषेण किञ्चित् ग्राहित=बोधितः कुपितः=कोपयुक्तः। उत=अथवा अनया दिशा-प्रकारेणेत्यर्थः परीक्षितुं कामो यस्य सः [ तुम्-काम मनसोरपि इति मकारस्य लोपः ] मम परीक्षां कर्तुमिच्छुः अस्तीति शेषः। अथवा शोकात् जन्म यस्य स शोकजनितः इत्यर्थः अस्य=मम भ्रातुः चेतसः=मनसः समाक्षेपः=व्यामोहः विकृतिर्व्याप्ततेति यावत्। आहोस्वित् अथवा अयं आर्यः=मम ज्येष्ठभ्राता एव न भवति, अभ्रातृसदृशं वदन् एष मे मनसि संशयं जनयति अपि अयं मम स एव भ्रातेति भावः। अथवा आर्येण अन्यत् एव अभिहितम्=कथितम् मया च शोकेन शून्येन=श्रवणशक्तिरहितेन श्रवणेन्द्रियेण=कर्णेन अन्यत् एव अश्रावि=श्रुतम्। अन्यत् एव विवक्षितम्=वक्तुमिष्टम्, मुखेन च अन्यत् एव आपतितम्=आगतम्। सकलस्य वंशस्य=कुलस्य विनाशाय=ध्वंसाय विधेः=भाग्यस्य निपातनस्य=क्षयस्य उपायः, अथवा मम कर्मणां निखिलं=समग्रं पुण्यम्=अतिशय० विशेषः तस्य परिक्षयस्य=विनाशस्य उपक्षेपः=निर्देशः, अथवा अननुकूलाः ये समग्राः=निखिलाः ग्रहाः=सूर्य-चन्द्रादयः तेषां चक्रवालस्य=समूहस्य विलसितं=चेष्टितम् अथवा तातस्य=पितुः विनाशेन=निधनेन निःशङ्क=निर्भयः यः कलि-कालः=कलियुगं तस्य क्रीडितं=विलसितं येन अयं=मे भ्राता यः कश्चित्=साधारणजनः इवेत्युपमायां यत्किञ्चित् करोतीति तथोक्तं मां न पुष्पभूतेः=एतन्नामकस्य वंशप्रवर्तकस्य मूलभूतस्य वंशात् सम्भूतम्=उत्पन्नम् इव, न तातस्य=प्रभाकरवर्धनस्य तनयम्=पुत्रमिव, न आत्मनः स्वस्य अनुजं=कनीयांसं भ्रातरम् इव अभक्तम्=अननुरक्तम् इवेति सर्वत्रोत्प्रेक्षा, न दृष्टः दोषः यस्य तथाभूतमपि माम् श्रोत्रियं=वेदपाठिनम् इव सुरापाने=मद्यपाने सद्भृत्यम्=स्वामिभक्तम् इव स्वामिनः=भर्तुः द्रोहे=विरोधे अनिष्टानुष्ठाने इत्यर्थः, सज्जनं=साधुपुरुषम् इव नीचस्य=अधमस्य उपसर्पणे=सेवायामित्यर्थः, सुकलत्रं=सतीं नारीं इव व्यभिचारे=परपुरुषसङ्गमे अत्र सर्वत्रोपमा, अतिशयेन दुष्करे=कर्तुं कठिने कर्मणि=राज्यग्रहणकार्ये समादिष्टवान्=आदिशत्, अर्थात् मां प्रति भ्रातुः राज्यकरणादेशः श्रोत्रियादीन् प्रति सुरापानादिकरणादेशवत् अस्ति। तत् एतत्=भ्रातुः कर्म

**हिन्दी**—तदनन्तर यह सुनकर तेज नोक के शूल से आहत जैसा विदीर्ण हुए हृदय वाला देव हर्ष सोचने लगा—क्या यह बात तो नहीं कि मेरी अनुपस्थिति में किसी असहनशील व्यक्ति ने आर्य को कुछ समझा दिया है और वे कुपित हो गए हैं? अथवा वे इस ढंग से मेरी परीक्षा लेना चाहते हैं? अथवा यह शोक से उत्पन्न उनके चित्त की विकृति है? या ये मेरे भाई ही नहीं हैं? अथवा क्या यह तो नहीं कि आर्य ने कुछ और ही कहा और शोक से सूने पड़े हुए मेरे कानों ने कुछ और ही सुन लिया? अथवा आर्य ने कुछ और ही कहना चाहा और मुख से कुछ और ही निकल गया? अथवा यह सकल कुल के विनाश के लिए भाग्य का रचा हुआ उन्मूलनोपाय है? अथवा यह मेरे कर्मों के (संचित) सकल पुण्यों के क्षय का संकेत है? अथवा यह सभी प्रतिकूल ग्रहगणों का विलास है? अथवा पिताजी के निधन से निःशंक हुए कलियुग का यह खेल है? जिससे ये (आर्य) किसी साधारण पुरुष की तरह जो कुछ कर देनेवाले के समान मुझे अत्यन्त दुष्कर कार्य के लिए आज्ञा दे बैठे हैं जैसे मैंने पुष्पभूति के वंश में जन्म न लिया हो, जैसे मैं पिता का पुत्र न हूं; मुझमें दोष न देखते हुए भी ऐसे कार्य के लिए मुझे आज्ञा देना ऐसा ही है जैसे किसी वैदिक विद्वान् को मदिरापान के लिए, स्वामिभक्त सेवक को स्वामी के विरुद्ध विद्रोह के लिए, सज्जन को नीच की सेवा के लिए और सती नारी

१. 'दृष्टिदोषमिव'

यच्छौर्योन्मादमदिरोन्मत्तसमस्तसामन्तमण्डलसमुद्रमथनमन्दरे[1] तादृशि पितरि मृते तपोवनं वा गम्यते वल्कलानि वा गृह्यन्ते तपांसि वा सेव्यन्ते ? या तु मयि राज्याज्ञा सा दग्धेऽपि दाहकारिणी मय्यवग्रहग्लपिते धन्वनीवाङ्गारवृष्टिः । तदसदृशमिदमार्यस्य । यद्यपि च विभुरनभिमानः, द्विजातिरनेषणः मुनिररोषणः, कपिरचपलः, कविरमत्सरः, वणिगतस्करः, प्रियजानिरकुहनः, साधुरदरिद्रः, द्रविणवानखलः, कीनाशोऽनक्षिगतः, मृगयुरहिंस्रः, पाराशरी ब्राह्मण्यः, सेवकः सुखी, कितवः कृतज्ञः[2] गोप्यः प्रियवाक्, अमात्यः सत्यवादी, राजसूनुरदुर्विनीतश्च जगति दुर्लभः, तथापि ममार्य एवाचार्यः । को हि नाम तद्विधे निपतिते राजगन्धकुञ्जरे जनयितरि ईदृशे च विफलीकृतविशालशिलास्तम्भोरुभुजे भूपजिति भ्रातरि त्यक्तराज्ये ज्यायसि नववयस्यपि तपोवनं गच्छति सकललोकलोचनजलपातापवित्रं मृद्गोलकं वसुधाभिधानं धनमदखेलनिखिलखलमुखविकारलक्षणख्यायमाननीचाचरणां श्रीसंज्ञिकां सुभटकुटुम्बकर्मकुम्भदासीं चण्डालोऽपि कामयेत । कथमिव सम्भा-

टीका—अनुरूपं = समुचितम् शौर्यस्य = वीरतायाः उन्मादः उन्मत्तता अभिमान इत्यर्थः एव मदिरा = सुरा तया मत्तं = मदान्वितं समस्तं = सकलं सामन्तानाम् = नृपाणां मण्डलं = समूह एव समुद्रः तस्य मथने = आलोडने मन्दरः = मन्दराचलः तस्मिन् अर्थात् सर्वेषां राज्ञां दमनकारिणि, अत्र परम्परितरूपकम्, तादृशि तथाविधे पितरि मृते = स्वर्गते, गृह्यन्ते = परिधीयन्ते, सेव्यन्ते = आश्रियन्ते भ्रात्रा इति शेषः । मयि = मां प्रति भ्रातुः राज्यस्य = राज्यग्रहणस्य आज्ञा सा दग्धे = शोकाग्नि-प्लुष्टे अपि दाहकारिणी मयि अवग्रहेण = वृष्टेर्विघातेन अवृष्टयेत्यर्थः [ 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः ] ग्लपिते = शोषिते धन्वनि = मरुस्थले ['समानौ मरु-धन्वानौ' इत्यमरः] अङ्गाराणां = प्रज्वलदङ्गारकाष्ठानां वृष्टिः = वर्षणम्, अत्र रूपकालङ्कारः स चोपमया संसृष्टः । तत् इदम् = मां प्रति राज्यादेशः आर्यस्य = भ्रातुः असदृशम् अनुचितम् । विभुः = प्रभुः = अधिकारे स्थितः इत्यर्थः अनभिमानः = अभिमान-रहितः, द्विजातिः = ब्राह्मणः अविद्यमाना एषणा = अभिलाषः यस्य सः, निरभिलाषः इत्यर्थः, मुनिः = ऋषिः रुष्यति = क्रुध्यतीति [ √रुष + युच् ] तथोक्तः क्रोधीत्यर्थः न रोषणः इत्य०, कपिः = वानरः अचपलः = अचञ्चलः कविः काव्यकारः अमत्सरः मत्सरः = ईर्ष्या तद्रहितः, वणिक् = व्यापारी अतस्करः = अचौरः, प्रियजानिः = प्रिया जाया = भार्या यस्य सः [ 'जायाया निङ्' पा० ५।४।१३४ इत्यनुसारेण बहुव्रीहौ पर-निपाते जायाशब्दः 'जानिः' भवति: ] अकुहनः = न कुहनः = ईर्ष्यालुः इत्य० [ 'कुहना दम्भ चर्यायाम् ईर्ष्यालौ कुहनं त्रिपु' इति मेदिनी ], साधुः = सज्जनः अदरिद्रः = धनीत्यर्थः, द्रविणं = धनम् अस्यास्तीति द्रविणवान् धनी अखलः = अदुष्टः, कीनाशः = क्षुद्रः [ 'कीनाशः क्षुद्रकर्षकयोस्त्रिषु' इत्यमरः ] अनक्षिगतः = न अक्षिगतः द्वेष्यः [ 'द्वेष्येत्वक्षिगतः' इत्यमरः ] मृगयुः = मृगान् यातीति ( मृग + √कुः ( औण० ) व्याधः अहिंस्रः = अहिंसकः पराशरी = पराशर्येण प्रोक्तं भिक्षुसूत्रम् अधीते इति [ पाराशर्य + णिनिः ] पाराशर्यमतानुयायी भिक्षुकः

हिन्दी—को व्यभिचार के लिए आज्ञा देना । उनका इस समय क्या यह कार्य ठीक है कि शौर्य के अभिमान की मदिरा में चूर हुए सकल सामन्त-मण्डलरूपी समुद्र का मंथन कर देने वाले मन्दराचल-रूप वैसे-जैसे पिता के स्वर्गवास होते (ही) तपोवन में जाया जा रहा है अथवा वल्कल पहने जा रहे हैं अथवा तप किये जा रहे हैं ? [ शोकाग्नि से पहले ही ] जले हुए मुझे ( और ) जला देने वाली जो राज्य ( करने ) की आज्ञा है वह ऐसी है—जैसी अवर्षण से ( पहले ही ) सूखी पड़ी हुई मरुभूमि पर जलते अंगारों की वृष्टि । यह आर्य के लिये अनुचित है । यद्यपि सत्ता पाये हुए का अभिमानी न होना, ब्राह्मण का इच्छा वाला न होना, मुनि का क्रोधी न होना, वानर का चपल न होना, कवि का ईर्ष्यालु न होना, बनिये का चोर न होना, पत्नीभक्त का डाह न करना, साधुपुरुष का गरीब न होना, धनी का दुष्ट न होना, क्षुद्र व्यक्ति का आँखों में न खटकना, शिकारी का हिंसक न होना, भिक्षुक का ब्रह्मज्ञानी होना, सेवक का सुखी होना, धूर्त का कृतज्ञ होना, दासीपुत्र का प्रियभाषी होना, मन्त्री का सत्यवादी होना और राजपुत्र का दुर्विनीत न होना संसार में दुर्लभ है, तथापि मेरे गुरु ( तो ) मेरे भाई ही हैं । कौन सा ऐसा चाण्डाल भी होगा जो उस प्रकार के राजाओं में गन्धगजरूप पिता के चल बसने पर एवं इस प्रकार के, विशाल शिला के खम्भों के समान बड़ी-बड़ी भुजाओं वाले, राजाओं के विजेता ज्येष्ठ भ्राता के राज्य छोड़ तपोवन के लिए प्रस्थान करने लगने पर सभी लोगों के अश्रुजल गिरने से अपवित्र बने पृथिवी-नामक मिट्टी के ढेले को एवं वीर पुरुषों के घर में पानी भरने वाली लक्ष्मी नाम की उस दासी को चाहे, जिसके नीचाचरण का बखान धन मद में खेलने वाले सकल खलों के मुख-विकारों के चिह्न कर देते हैं । आर्य क्यों इस अत्यन्त

१. 'मन्दिरे' २. 'कृतज्ञः, परिव्राडबुभुक्षुः, नृशंसः प्रियवाक्'

वितमत्यन्तमनुचितमिवमार्येण। किमुपलक्षितमनवदातमिवं मयि। किं वास्य चेतसश्च्युतः सौमित्रिर्विस्मृता वा वृकोदरप्रभृतय। अनपेक्षितभक्तजना स्वार्थैकनिष्पादननिष्ठुरा नासीदियमार्यस्येदृशी प्रभविष्णुता। अपि चार्ये तपोवनं गते जिजीविषुः को हि नाम महीं मनसापि ध्यायेत्। कुलिशशिखरखरनखरप्रचयप्रचण्डचपेटापाटितमत्तमातङ्गोत्तमाङ्गमदच्छटाच्छुरितचारुकेसरभारभास्वरमुखे केसरिणि वनविहाराय विनिर्गते निवासं गिरिगुहां कः पाति पृष्ठतः। प्रतापसहाया हि सत्त्ववन्तः।

---

टीका—सन्यासी ब्राह्मण्यः (ब्राह्मण + ष्यञ्) ब्राह्मणोचितकर्मरतः अथवा ब्राह्मविषयकज्ञानपरः, सेवकः = भृत्यः सुखी कितवः = धूर्तः [ 'धूर्तोऽक्षदेवी कितवः' इत्यमरः ] कृतज्ञः = कृतवेदी उपकारज्ञ इति यावत् गोप्यः = गोप्यते=रक्ष्यते असौ इति [ गुप् + ण्यत् ] दासीपुत्रः प्रियवाक् = प्रियभाषी, अमात्यः = सचिवः सत्यवादी = सत्यवक्ता, राजसूनुः = राजपुत्रः अदुर्विनीतः=सुशिक्षितः इत्यर्थः जगति=लोके दुर्लभः=दुष्प्रापः, आर्यः=भ्राता आचार्यः=गुरुः शिक्षकः इत्यर्थः हर्षस्यायम् अभिप्रायः यत साधारणाः राजपुत्राः कुशिक्षिता भवन्ति, अतः साधारणराजपुत्रः तथावश्यं कुर्यात् यथा राज्यवर्धन आदिशति परन्तु स तु भ्रातुः पार्श्वे सुशिक्षां गृहीतवानस्ति, तस्मात् न कदापि तथा करिष्यति।

तद्विधे=तत्सदृशे राजसु=भूपेषु गन्धकुञ्जरे = गन्धद्विपे अर्थात् यस्मात् अन्ये राजानः तथा बिभ्यतिस्म यथा गन्धद्विपात् अन्ये द्विपाः बिभ्यति [ 'यस्य गन्धं समाघ्राय न तिष्ठति प्रतिद्विपाः। स वै गन्धगजो नाम नृपतेर्विजयावहः' ] अत्र रूपकम्, जनयितरि = जन्मदातरि पितरीत्यर्थः निपतिते=स्वर्गते, ईदृशे=एवंविधे विफलितौ=व्यर्थतां नीतौ अनुपयुक्तौ इति यावत् विशालौ विपुलौ शिलास्तम्भवत्=प्रस्तर-स्थूणावत् उरू=आयतौ = बाहू येन तस्मिन्, भूपजिति=राज्ञां विजेतरि ज्यायसि=अग्रजे भ्रातरि त्यक्तं राज्यं येन तस्मिन् नववयसि=युवावस्थायां तपोवनम् आश्रमपदं गच्छति=प्रयाति सति को नाम चण्डालः=नीचपुरुषोऽपि सकललोकानां=सर्वप्रजानां लोचनजलस्य=अश्रुजलस्य पातेन पतितेन अपवित्रम् अर्थात् राज्यवर्धनः वनं गच्छतीति श्रृण्वन्तः लोका रुदित्वा रुदित्वा अश्रुमोचनेन पृथिवीम् अपवित्रीकरिष्यन्ति, वसुधा=पृथिवी अभिधानं=नाम यस्य तथाभूतं मृदः=मृत्तिकायाः गोलकं=गोलपिण्डम्, पृथिवी हि गोलाकारास्ति धनस्य मदेन=अभिमानेन खेलाः=खेलन्तीति [ $\sqrt{}$खेल् + अच् कर्तरि ] खेलनपराः इत्यर्थः ये निखिलाः=सर्वे खलाः दुष्टपुरुषाः तेषां मुखविकाराणां=विकृतमुखाकृतीनां लक्षणैः=चिह्नैः आख्यायमानं=निर्दिश्यमानं नीचाचरणं=नीचव्यवहारः यस्याः तथाभूतां श्रीः=लक्ष्मीः संज्ञा=अभिधानं यस्याः ताम् अर्थात् लक्ष्मीः प्रायः खलान् आश्रयति ते च धनमत्ता भूत्वा मुख-नेत्रयोः विविधभङ्गिभिः स्वामिना तं प्रकटयन्ति अतः लक्ष्मीः एव खला ताम् अभिमानस्य कारणीभूता, सुभटानां=वीरपुरुषाणां कुटुम्बस्य=परिवारस्य यत् कर्म=सेवाकर्म जातं तस्मिन् कुम्भदासीम् 'कुम्भस्य=वेश्यापतेः दासीं कुट्टनीं इति शब्दरत्नावली। तां किङ्करीमित्यर्थः, कामयेत्=अभिलषेत् न कोऽपीति काकुः वक्रोक्तिः चाण्डालोऽपीति अर्थापत्तिश्च। सम्भावितम् = मनसि कल्पितम्। उपलक्षितम्=दृष्टम् अनवदातम्=अविमलम्। अस्य भ्रातुः चेतसः=मनसः सौमित्रिः=सुमित्रायाः अपत्यं पुमान् लक्ष्मण इत्यर्थः च्युतः=भ्रष्टः स्मृतौ नागतः इत्यर्थः अथवा वृकोदरः=भीमसेनः तत्प्रभृतयः तदादयः भ्रातृभक्ता भ्रातरः विस्मृताः=विस्मृतिं नीताः। अनपेक्षितः=न अपेक्षितः उपेक्षित इति यावत् भक्तजनः=अनुरक्त-व्यक्तयः यया सा स्वार्थस्य एव एकस्य निष्पादनेन=साधनेन निष्ठुरा कठोरा न आसीत् इयम् आर्यस्य प्रभविष्णुता=प्रभवतीति ( प्र + $\sqrt{}$भू + इष्णुच् ) प्रभविष्णुः तस्य भावः तत्ता प्रभुत्वेत्यर्थः अर्थात् आर्यः पूर्वं न कदापि स्वानुरक्तेषु एवं विधाम् उपेक्षाबुद्धिं प्रादर्शयत्। जिजीविषुः=जीवितुमिच्छुः महीम्=पृथिवीम् मनसा अपि ध्यायेत् = चिन्तयेत्। कुलिशस्य=वज्रस्य शिखरम्=अग्रं तद्वत् खरः=तीक्ष्णः यः नखराणां=नखानां प्रचयः=समूहः तेन या प्रचण्डा=प्रबला चपेटा=चपेटप्रहारः करतलघातः इत्यर्थः तया पाटितं=विदारितं

हिन्दी—अनुचित बात की कल्पना कर बैठे? उन्होंने मुझमें कौन सी बुरी बात देखी? क्या उनके चित्त से लक्ष्मण गिर गया? अथवा क्या वे भीम इत्यादि को भूल गए? आर्य की ऐसी यह प्रभुता तो नहीं थी कि जो वे भक्त जन की ओर ध्यान न दें और केवल स्वार्थ-साधन करते हुए निष्ठुर हो जायें। आर्य के तपोवन चले जाने पर पृथिवी की ओर मन से भी किसका ध्यान जाएगा? वज्र की नोक—जैसे तेज नख समूह की भीषण चपत से फाड़े गए मतवाले हाथी के मस्तक के मद-जल की कान्ति से रंगे सुन्दर केसर-समूह से चमकते हुए मुँह वाले सिंह के वन-विचरण के लिये निकल पड़ने पर पीछे से कौन ( उसकी ) रहने की पर्वत-कन्दरा की रक्षा करता है? प्रताप ही तेजस्वी लोगों का सहायक हुआ करता

कश्चपलां लक्ष्मीं प्रत्यनुरोधोऽयमार्यस्य यदीयमपि न चीवरान्तरितकुचा कुशकुसुमसमित्पलाशपूलिकां वहन्ती तत्रैव तपोवने वनमृगीव नीयते जराजालिनी । किं वा ममानेन वृथा बहुधा विकल्पितेन । तूष्णीमेवार्यमनुगमिष्यामि । गुरुवचनातिक्रमकृतं च किल्बिषमेतत्तपोवने तप एवापास्यति । इत्यवधार्य मनसा प्रथमतरं गतस्तपोवनमधोमुखस्तूष्णीमवातिष्ठत ।

अत्रान्तरे पूर्वादिष्टेनैव रुदता वस्त्रकर्मान्तिकेन समुपस्थापितेषु वल्कलेषु निर्दयकरतलताडनभियेव क्वापि गते हृदये रटति राजस्त्रैणे तारमब्रह्मण्यमूर्ध्वदोष्णि विरुवति विप्रजने, पादप्रणतिपरे फूत्कुर्वति पौरवृन्दे, विद्राति विद्रुतचेतसि चिरन्तने परि-

टीका —मत्तस्य = मदान्वितस्य मातङ्गस्य = हस्तिनः यत् उत्तमाङ्गं = शिरः तस्य मदच्छदया = मदजलकान्त्या छुरितः = रञ्जितः यः चारुः = सुन्दरः केसराणां = सटानां भारः समूहः तेन भास्वरं = दीप्यमानं मुखं यस्य तथाभूते केसरिणि = सिंहे वने विहाराय = विचरणाय विनिर्गतो = प्रचलितो निवासं = निवासस्थानभूतां गिरि-गुहाम् = पर्वत-कन्दराम् पृष्ठतः = पश्चात् कः पाति = रक्षति ? अत्र अप्रस्तुतेन सिंह-प्रसंगेन प्रस्तुतस्य राज्यवर्धनक्रियमाण-तपोवनगमनस्य तत्पश्चाच्च राज्यपालनस्य प्रसंगो व्यज्यते इत्यप्रस्तुतप्रशंसा अन्योक्तिः वा अलंकारः । सत्त्ववन्तः = महानुभावाः प्रतापः तेजः सहायः = सहायकः येषां ते, सत्त्ववान् मे भ्राता गृहे स्थितः किञ्चिदपि कुर्वन् स्वप्रतापेन एव राज्यरक्षां कर्तुं प्रभवतीति भावः । चपलां = चञ्चलां लक्ष्मीं = राज्यश्रियं प्रति आर्यस्य = भ्रातुः अयम् अनुरोधः = आग्रहः यदि इयं = लक्ष्मीः अपि चीवरेण = जीर्णवस्त्रेण अन्तरितौ = व्यवहितौ आवृतौ इत्यर्थः कुचौ = स्तनौ यस्याः सा, कुशाः = दर्भाश्च कुसुमानि = पुष्पाणि च समिधः = काष्ठानि च पलाशाः = पात्राणि च तेषां पुलिका = पूलं समूहमित्यर्थः वहन्ती = बिभ्रती जरा = वार्धक्यं तद्वत् जालं = पाशः वागुरेति यावत् अस्या अस्तीति तथोक्ता जालपतितामित्यर्थः वनस्य मृगी = हरिणी इव जरायाः = वृद्धावस्थायाः जालं माया अस्यास्तीति जराया रूपं दर्शयन्तीत्यर्थः ( लक्ष्मीः ) नीयते = स्वेन सह प्राप्यते । अत्र श्लिष्टोपमा । मम अनेन विकल्पितेन = ( भावे क्तः ) विकल्पेन = चिन्तनेन तर्कवितर्कैरित्यर्थः । तूष्णीम् = जोषम् यथा स्यात्तथा अनुगमिष्यामि = अनुसरिष्यामि गुरोः = ज्येष्ठभ्रातुरित्यर्थः वचनस्य = आदेशस्य यः अतिक्रमः = उल्लंघनं तेन कृतं = जनितम् एव किल्बिषं = पापं [ 'पापं किल्बिषः कल्मषम्' इत्यमरः ] तपः = तपश्चरणम् एव अपास्यति = निराकरिष्यति । इति अवधार्य = निश्चित्य मनसा = मानसिक-रूपेण प्रथमतरम् = भ्रातुरपेक्षया पूर्वतरं गतः = प्राप्तः अधोमुखः = निम्नाननः तूष्णीं = जोषम् यथा स्यात्तथा अवातिष्ठत = स्थितवान् ।

अत्रान्तरे = एतत्समयमध्यं पूर्वम् आदिष्टेन = आज्ञप्तेन वस्त्रकर्मान्तिकेन वस्त्रस्य कर्मणि वस्त्रस्यादानधारणादिकर्मणि अन्तिकः अथवा कर्मान्ते नियुक्तः वस्त्रवाहकसेवकः इत्यर्थः समुपस्थापितेषु = समुपानीतेषु वल्कलेषु = वृक्षत्वक्षु ······

**टिप्पणी — लक्ष्मीः ······जराजालिनी** — हर्ष का आशय यह है कि ज्येष्ठ भ्राता वन जाते हैं, तो वे अधिकार प्राप्त अपनी राजलक्ष्मी को भी क्यों साथ नही ले जाते ? वह भी उनके साथ तपस्विनी बन कर रहेगी, मेरे लिए यह आग्रह क्योंकि मैं ही उसे स्वीकार करूँ ? वनमृगी—जैसे कुशाग्र को मुँह में अथवा सींग में ले जाती रहती है वैसे ही लक्ष्मी भी तपस्योचित इस सामान को रखेगी । वनमृगी जैसे जराजालिनी—जरा—जैसे जाल ( वागुरा ) में फँस जाती है वैसे लक्ष्मी भी जरा का जाल-छद्म अपना लेगी । जब आर्य वृद्ध हो जायेंगे तब मैं राजलक्ष्मी ग्रहण कर लूंगा, क्योंकि भारतीय संस्कृति के अनुसार राजा के वृद्ध हो जाने पर पुत्र भाई आदि को राज्य सौंपा ही जाता है ।

हिन्दी—है । अग्रज का लक्ष्मी के प्रति यह अनुरोध (लिहाज) है कि यदि वे कुशा, कुसुम, समिधा और पत्तों को वृद्धावस्था—जैसे जाल में फँस जाने वाली वनमृगी की तरह चीवर से कुचों को ढके, कुशा, कुसुम, समिधा और पत्तों को ढोती हुई वृद्धावस्था का रूप बनाये हुए उसे वहीं तपोवन में नहीं ले जाते ? अथवा मुझे इस तरह के व्यर्थ तर्क-वितर्कों से क्या मतलब ? चुपचाप भाई के पीछे चल पड़ूंगा । और बड़ों के वचन को उल्लंघन करने से होने वाले पाप को तपोवन में तपस्या दूर करेगी' । यह निश्चय करके मन द्वारा भाई से पहले ही तपोवन गया हुआ वह नीचे मुंह किए चुपचाप बैठ गया ।

इसी बीच पहले ही आज्ञा प्राप्त किये, रोते हुए वस्त्रवाहक सेवक द्वारा वल्कल ले आने पर, जोर-जोर से करतल द्वारा पीटे जाने के भय से—जैसे हृदय के कहीं भाग जाने के कारण अन्तःपुरवर्ती स्त्रियों के चिल्ला उठने पर, भुजायें उठाये ब्राह्मणों के 'बचाओ, बचाओ' की ऊँची ध्वनि के साथ रो पड़ने पर, ( राज्यवर्धन के ) पैरों में पड़ते हुए पुरवासी-गणों के चीत्कार छोड़ने लगने पर, हृदय में पिछले पुराने नौकर-चाकरों के भाग निकलने पर, भृत्या द्वारा

जने, परिजनाव[1]लम्बिते वेपमानवपुषि पर्याकुलवाससि शोकगद्गदवचसि गलितनयनपयसि निवारणोद्यतम[2]नसि वर्षीयसि विशति बन्धुवर्गे, निराशेषु नखलिखितमणिकुट्टिमेष्ववाङ्मुखेषु निश्वसत्सु सामन्तेषु, सबालवृद्धासु तपोवनाय प्रस्थितासु सर्वासु प्रजासु सहसैव प्रविश्य शोकविक्लवः प्रक्षरितनयनसलिलो राज्यश्रियः परिचारकः संवादको नाम प्रज्ञाततमो विमुक्ताक्रन्दः सदस्यात्मानमपातयत् ।

अथ संभ्रान्तो भ्रात्रा सह स्वयं देवो राज्यवर्धनस्तं पर्यपृच्छत् —'भद्र, भण भण किमस्मद्व्यसनव्य[3]वसायवर्धनबद्धधृतिः, अवनिपतिमरणमुदितमतिः, अधृतिकरमपरमधिकतरमितः[4] दुःखातिशयं समुपनयति विधिः' इति । स कथं कथमप्यकथयत्—

टीका-संवादको नाम सदसि आत्मानमपातयत् इत्यन्वयः; निर्दयं=दयारहितं बलवदित्यर्थः करतलाभ्यां ताडनम् = आघातः तस्मात् भिया = भयेन इवेत्युत्प्रेक्षायां हृदये क्वापि गते = पलायिते इत्यर्थः राज्ञः स्त्रैणे = स्त्रीणां समूहे अन्तःपुरिकास्विति यावत् रटिते = उच्चैः आक्रन्दिते सति, ऊर्ध्वौ दोषौ = भुजौ यस्य तस्मिन् [ 'भुजबाहू प्रवेष्टो दोः' इत्यमरः ] विप्रजने = ब्राह्मणेषु तारम् = उच्चैः यथा स्यात्तथा अब्रह्मण्यम् = ( अव्य० ) "त्राहि-त्राहि" [ 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः ] विरुदति = आक्रन्दति [ सर्वत्र भावसप्तमी ], पादयोः = राज्यवर्धनस्य चरणयोः प्रणतिः = प्रणमनं परं = प्रधानं यस्य तस्मिन् पौराणां = पुरवासिनां जनानां वृन्दे = समूहे फूत्कुर्वति = दुःखे 'फूत्' इति शब्दं कुर्वति, विद्रुतं = द्रवीभूतं क्षुब्धं वा चेतः = चित्तं यस्य तस्मिन् चिरन्तने = चिरात् कुलपरंपरातः आगते परिजने = भृत्यवर्गे विद्राति = पलायमाने, परिजनेन = भृत्यैः अवलम्बिते = दत्तहस्तालम्बे वेपमानं = कम्पमानं वपुः = शरीरं यस्य तस्मिन् पर्याकुलं = अव्यवस्थितम् अस्तव्यस्तं वासः = वस्त्रं यस्य तस्मिन् शोकेन गद्गदं त्रुटिताक्षरं वचः = वचनं यस्य तस्मिन् गलितं = पतितम् नयन-पयः = अश्रुजलं यस्य तस्मिन् निवारणे तपोवनगमनाद् रोधने उद्यतम् = उद्युक्तम् मनः यस्य तस्मिन् वर्षीयसि = अतिशयेन वृद्धे [ वृद्ध + ईयसुन् वर्षादेशश्च ] बन्धूनां = बान्धवानां वर्गे = समूहे निराशेषु = आशारहितेषु नखैः = कररुहैः लिखितः = रेखाभिः अङ्कितः, मणिकुट्टिमः = मणिमय-बद्धभूमिः यैः तेषु अवाङ् = नीचैः मुखं येषां तेषु सामन्तेषु = अधीनभूपेषु निश्वसत्सु = दीर्घनिश्वासं मुञ्चत्सु, बालाश्च वृद्धाश्च तैः सहितासु प्रस्थितासु = प्रचलितासु प्रजासु शोकेन विक्लवः = विह्वलः प्रक्षरितं = प्रस्रुतं नयनयोः सलिलं = अश्रुजलं यस्य सः राज्यश्रियः = राज्यवर्धनभगिन्याः परिचारकः = सेवकः अतिशयेन प्रज्ञातः = सुविदित इत्यर्थः विमुक्तः = त्यक्तः आक्रन्दः = रोदनध्वनिः येन तथाभूतः सदसि = सभायाम् आत्मानम् अपातयत् = पातितवान् शोकविह्वलः भूमौ अपतदित्यर्थः ।

संभ्रान्तः = आकुलः भ्रात्रा = हर्षवर्धनेन सह पर्यपृच्छत् पृष्टवान्—'अस्माकं व्यसनं = विपत्तिः तस्मिन् व्यवसायः =

**टिप्पणी—क्वापि गते हृदये**—अन्तःपुर की महिलाओं ने राज्यवर्धन के वन जाने की बात पर दुःख में छातियाँ पीटीं और वे रोयीं, किन्तु कविकल्पनानुसार वे इसलिए रोयीं कि वे अपना हृदय खो बैठीं । जब किसी की कोई वस्तु खो जाती है तो होहल्ला मचाते हैं और उसे खोज पाने के लिये चिल्लाती हैं । हृदय इसलिए भाग कर गायब हो गया कि उसे डर हो गया कि वे अब उसे पीटेंगी । **अब्रह्मण्यम्**—किसी घोर विपत्ति के आपड़ने पर 'अब्रह्मण्यम्' 'अब्रह्मण्यम्' मुँह से निकलता है जिसका अर्थ 'बचाओ-बचाओ' होता है । इसकी व्युत्पत्ति इस तरह है—'ब्रह्मणि = ब्राह्मणे साधु ब्रह्मण्यम्, न ब्रह्मण्यम् अब्रह्मण्यम्' ब्राह्मण के लिए हित न हो, यह मूलार्थ पीछे व्यापक बन गया ।

**हिन्दी**—सहारा दिये हुए शरीर से काँपते, कपड़ों में अस्त-व्यस्त, शोक के कारण गद्गद-वाक् हुए, आँखों से आँसू बहाए, मन में (राज्यवर्धन को) रोकने के लिये उद्यत हुए बैठे, बहुत वृद्ध बन्धु-वर्ग के प्रविष्ट होने लगने पर, निराश हुए पड़े नीचे मुँह किये, नखों से मणिमय फर्श पर रेखा खींचते हुए सामन्तों के आहें भरने लगने पर, आबालवृद्ध सारी प्रजा के तपोवन के लिए प्रस्थित होने लगने पर सहसा ही प्रवेश करके शोक से विह्वल, आँखों से आँसू बहाए, राज्यश्री का सुपरिचित संवादक नाम का परिचारक चीख छोड़े सभा में अपने को ( धड़ाम से ) गिरा बैठा ।

इसके बाद भाई सहित घबराए हुए देव राज्यवर्धन ने स्वयं उससे पूछा—'हमारी विपत्ति के लिए ( अपने ) प्रयत्नों की वृद्धि में दृढ़ और महाराज के निधन से प्रसन्न मन हुआ दैव अधीर बना देने वाला इससे भी और अधिक दूसरा

१. 'लम्बिते गते वर्षीयसि' २. 'मनसि विशति' ३. '० व्यसनमव्यवसाय' ४. 'इतः समुपनयति'

'देव, पिशाचानामिव नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति। यतो यस्मिन्नहन्यवनिपतिरुपरत इत्यभूद्वार्ता तस्मिन्नेव देवो ग्रहवर्मा दुरात्मना मालवराजेन जीवलोकमात्मनः सुकृतेन सह त्याजितः। भर्तृदारिकापि राज्यश्रीः कालायसनिगडयुगलचुम्बितचरणा चौराङ्गनेव संयता कान्यकुब्जे कारायां निक्षिप्ता। किंवदन्ती च यथा किलानायकं साधनं मत्वा जिघृक्षुः सुदुर्मतिरेतामपि भुवमाजिगमिषतीति विज्ञापिते प्रभुः प्रभवति' इति।

ततश्च तादृशमनुपेक्षणीयमसम्भावितमाकस्मिकमपरं व्यतिकरमाकर्ण्याश्रुतपूर्वत्वात्परिभवस्य, परपरिभवासहिष्णुतया च स्वभावस्य, दर्पबहुलतया च नवयौवनस्य, वीरक्षेत्रसम्भवत्वाच्च जन्मनः कृपाभूमिभूतायाश्च स्वसुः स्नेहात्तु तादृशोऽपि बद्ध-

---

टीका–उद्योगः तस्य यत् वर्धनं=वृद्धौ प्रापणं तस्मिन् बद्धा धृतिः=धैर्यं येन स दृढः इत्यर्थः, अवनिपतेः=राज्ञः प्रभाकरवर्धनस्य मरणेन=निधनेन मुदिता=प्रसन्ना मतिः=मनः यस्य सः विधिः=भाग्यम् इतः=पितुः मरणात् अधिकतरम् अतिशयेन अधिकम् अपरम्=अन्यत् अधृतिम्=अधैर्यं करोतीति तथोक्तं दुःखस्य अतिशयम्=अतिरेकम् समुपनयति=समुपस्थापयति'। पिशाचानाम्=नीचयोनिविशेषाणाम् इवेत्युपमायां नीचात्मनां=दुरात्मनां चरितानि कार्याणि छिद्रेषु=विपत्तिषु प्रहर्तुं शीलम् एषामिति तथोक्तानां प्रायशः=प्रायः भवन्ति। यस्मिन् अहनि=दिने अवनिपतिः=महाराजः प्रभाकरवर्धनः उपरतः=स्वर्गतः इति वार्ता=समाचारः अभूत्=जातः ग्रहवर्मा=राज्यश्रियः पतिः जीवलोकं=संसारं आत्मनः स्वस्य सुकृतेन=पुण्येन सह त्याजितः=त्यक्तुं प्रेरितः मारितः इत्यर्थं, तन्मारणेन सहैव तेन स्वपुण्यान्यपि मारितानि, अर्थात् तस्य पुण्ये नष्टे तं मृत्योः रक्षितुं कस्यापि सामर्थ्यं नास्तीति भावः। अत्र सहोक्तिः अलंकारः। भर्तृदारिका=राजकुमारी कालायसस्य=लौहस्य निगडयाः=शृंखलयोः युगलेन=द्वयेन चुम्बितौ=स्पृष्टौ बद्धौ इति यावत् चरणौ यस्याः सा चौराणां=स्तेनानां अङ्गना=स्त्री इवेत्युपमायां संयता=बद्धा कान्यकुब्जे=एतन्नामके ग्रहवर्मणः पुरे कारायां=वन्दिशालायां निक्षिप्ता=निवेशिता। किम्वदन्ती=जनश्रुतिः साधनं=सैन्यं स्थाण्वीश्वर-जनपदस्येति शेषः [ 'साधनं मृतसंस्कारे सैन्ये सिद्धौषधे गतौ' इति मेदिनी ] अविद्यमानः नायकः=नेता यस्य तत् दुर्मतिः=नीचमनाः मालवराजः जिघृक्षुः=ग्रहीतुमिच्छुः [ ग्रह् + सन् + उः ] एताम् अपि भुवं=भूमिं स्थाण्वीश्वरदेशमित्यर्थः अपि आजिगमिषति=आगन्तुमिच्छति [ √गम् + सन् + लट् ] इति विज्ञापिते=निवेदिते प्रभुः प्रभवति=देवः प्रमाणमित्यर्थः।

तादृशं=तथाविधम् अनुपेक्षणीयं = न उपेक्षितुं योग्यम्, असम्भावितम् = मनसा अकल्पितम् आकस्मिकम् =अकस्मात् जातम् अपरम्=अन्यम् व्यतिकरं=व्यसनं विपत्तिमित्यर्थः [ 'अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः' इत्यमरः ] आकर्ण्य=श्रुत्वा परिभवस्य=अपमानस्य, भगिनीं=राज्यश्रियं प्रति कृतस्य अपमानपूर्ण-व्यवहारस्येति यावत्, न पूर्वं श्रुतः इत्यश्रुतपूर्वः तस्य भावः तत्त्वं तस्मात् परः=शत्रुः अथवा अन्यः तस्मात् ( आगतः ) यः परिभवः

**टिप्पणी – मालवराजेन**—मालवराज से अभिप्रेत यहाँ मध्यभारतस्थित मालव देशाधिपति नहीं हैं। मालव के दो राजकुमार कुमारगुप्त और माधवगुप्त तो – जैसा हम चतुर्थ उच्छ्वास में देख आए हैं—हर्षवर्धन के बचपन के साथी और घनिष्ठ मित्र थे। किन्तु ग्रहवर्मा का वध करने वाला मालवराज तो दूसरा ही था, थानेसर के पास हरियाणा में भी एक मालव देश है। उसका राजा ही यहाँ अभिप्रेत है। बुहलर के मतानुसार उसका नाम देवगुप्त था।

**हिन्दी**—कौन सा बड़ा भारी दुःख ला रहा है? वह किसी तरह बोला "देव पिशाचों के समान दुरात्मा लोगों के काम प्रायः विपत्तियों में ही प्रहार किया करते हैं क्योंकि जिस दिन महाराज के निधन का समाचार फैला, उसी दिन दुरात्मा मालवराज ने अपने पुण्यों के साथ-साथ देव ग्रहवर्मा से इहलोक छुड़वा दिया [ अर्थात् उन्हें मार दिया ] राजकुमारी को भी चोर स्त्री की तरह पैरों में लोहे की बेड़ियाँ बाँध कर कान्यकुब्ज के कारागार में डाल दिया। जनश्रुति इस तरह है कि इस भूमि को भी लेने का इच्छुक वह दुर्मति ( इधर ) आना चाह रहा है। यह निवेदन करने पर ( अब ) प्रभु समर्थ हैं"।

तदनन्तर उपेक्षा के अयोग्य, असंभावित आकस्मिक उस तरह की दूसरी विपत्ति को सुनकर, अपमान के पहले कभी न होने के कारण, स्वभाव से शत्रु द्वारा हुआ अपमान न सह सकने के कारण, नवयौवन में दर्प अधिक होने के कारण, जन्म वीर-कुल में होने के कारण और दया-पात्र बनी बहन के प्रति स्नेह होने के कारण उसका वैसा दृढ़

मूलोऽप्यत्यन्तगुरुरेकपद एवास्य ननाश शोकावेगः। विवेश च सहसा केसरीव गिरिगुहागृहं गम्भीरं हृदयं भयङ्करः कोपावेगः। केशिनिषूदनशङ्काकुलकालियकुलभङ्गुरभ्रूभङ्गतरङ्गिणी श्यामायमाना यमस्वसेव प्रथीयति ललाटपट्टे भीषणा भ्रुकुटिरुदभिद्यत। दर्पात्परामृशन्नखकिरणसलिलनिर्झरैः समरभारसम्भावनाभिषेकमिव चकार दिङ्नागकुम्भकूटविकटविकटस्य बाहुशिखरकोषस्य वामः पाणिपल्लवः। सङ्कलत्स्वेदसलिलपूरितोदरो निर्मूलं मालवोन्मूलनाय गृहीतकेश इव दुर्मदश्रीकचग्रहोत्कण्ठयेव च कम्पमानः पुनरपि समुत्ससर्प भीषणं कृपाणं पाणिरपरः। शस्त्रग्रहणमुदितराजलक्ष्मीक्रियमाणदिष्टवृद्धिवि-

---

टीका—=अपमानः तस्य असहिष्णुतया=न सहनशीलतया स्वभावस्य=प्रकृतेः, नवयौवनस्य=अभिनवतारुण्यस्य दर्पः=अभिमानः बहुलः=बहुः यस्मिन् तस्य भावः तत्ता तया, जन्मनः=उत्पत्तेः वीराणां क्षेत्रे=भूमौ कुले इत्यर्थः संभवः यस्य तस्य भावः तत्त्वं तेन कृपायाः=दयायाः भूमिभूतायाः=पात्रभूतायाः स्वसुः=भगिन्याः स्नेहात् =स्नेहकारणात् स तादृशः बद्धं मूलं येन स, दृढस्थितः इत्यर्थः अत्यन्तः=अत्यधिकः गुरुः=महांश्च शोकस्य आवेगः=क्षोभः अस्य राज्यवर्धनस्य एकपदे एव=तत्क्षणमेव ननाश=नष्टः। सहसा च भयङ्करः=भीषणः केसरी=सिंहः गम्भीरं गहनं गिरेः=पर्वतस्य गुहा=कन्दरा तद्रूपं गृहं=निवासस्थानम् इवेत्युपमायां भयङ्करः कोपावेगः=क्रोधकृतक्षोभः गम्भीरं=गभीरं हृदयं विवेश=प्रविष्टवान् शोकस्य स्थानं क्रोधेन गृहीतमितिभावः। केशि०—केशिनः=एतन्नामकराक्षसविशेषस्य निषूदनः=निषूदयति=हन्तीति तथोक्तः वधकर्ता कृष्ण इत्यर्थः तस्मात् या शङ्का=भयं तया आकुलं=विकलं यत् कालियस्य=यमुनावासि-नागविशेषस्य कुलं=वंशं कुटुम्बमितियावत् तस्य भङ्गुरा=कुटिला भ्रूः=दृग्म्याम् ऊर्ध्वभागः तस्याः भङ्गः=सङ्कोचनैः, अन्यत्र भ्रूभङ्गः इव भुभुजः तरङ्गिणी=तरङ्गयुक्ता, श्यामायमाना=श्यामीभवन्ती यमस्वसा=यमुना [ 'यमुना शमनस्वसा' इत्यमरः ] इवेत्युपमायां भीषणा=भयंकरी भ्रूकुटिः=भ्रूभागः ललाटपट्टे=भालफलके अभिद्यत=भङ्गमवाप। दर्पात्—दर्पात्=अभिमानात् परामृशन्=स्पृशन् आस्फालयन्निति यावत् वामः=दक्षिणेतरः पाणिः=हस्तः पल्लवः=इवेत्युपमिततत्पु० दिङ्नागस्य=दिग्गजस्य यः कुम्भस्य=मूर्धांशस्य [ 'कुम्भौ घटेभमूर्धांशौ' इत्यमरः ] कूटः=शृङ्गः तद्वत् विकटस्य=भीषणस्य बाहोः=भुजस्य शिखरम्=उपरितनो भागः स्कन्धप्रदेश इत्यर्थः कोषः=कमलमुकुलमिवेत्युपमिततत्पु० तस्य नखकिरणाः=नखरश्मयः एवेति रूपकम्, सलिलस्य=जलस्य निर्झराः=प्रपाताः तैः समरस्य=युद्धस्य यः भारः=भरः धूः इति यावत् तस्य सम्भावनं ग्रहणमित्यर्थः तस्मिन् अभिषेकं=स्नानम् इवेत्युत्प्रेक्षायां चकार=कृतवान्। सङ्कलत्० - सङ्कलत्=पतत् यत् स्वेदसलिलं स्वेदवारिः [ स्वेदः क्रोधस्य सात्त्विकभावः ] तेन पूरितं=भरितम् उदरं=मध्यभागः यस्य सः निर्मूलं=निर्गतं मूलं यस्मिन् कर्मणि यथा स्यात्तथा समूलमित्यर्थः मालवस्य=मालवराजस्य उन्मूलनाय=उत्पाटनाय गृहीताः केशाः

**टिप्पणी—कालिय**—कालिय नाम का एक नाग यमुना में रहता था और उसके सारे जल को विषाक्त किये हुए था। कदम्ब को छोड़कर कोई भी वृक्ष यमुना के किनारे नहीं उगता था। एक दिन खेल ही खेल में भगवान् कृष्ण ने कदम्ब वृक्ष से यमुना में उछाल मार दी और कालिय के फणाओं को कुचल दिया। कालिय और उसकी पत्नियों ने भगवान से प्रार्थना की कि वे उन पर दया करें। कृष्ण ने कहा—"नात्र स्थेयं त्वया सर्प, कदाचिद्यमुनाजले। सभृत्यपरिवारस्त्वं समुद्र-सलिलं व्रज" उसने ऐसा ही किया।

**हिन्दी**—जमा हुआ भी बड़ा भारी शोक का आवेग तत्क्षण ही नष्ट हो गया और सहसा उसके गम्भीर हृदय से भयङ्कर क्रोध का आवेग यों प्रवेश कर गया जैसे पर्वत की गम्भीर गुफा में सिंह प्रवेश किया करता है। श्रीकृष्ण के भय से घबराये कालिय नाग के परिवार के कुटिल भ्रूभंगों से तरंगवाली कृष्णवर्ण की यमुना की तरह श्रीकृष्ण के भय से घबराये कालिय नाग के परिवार के भ्रूभंगों-जैसे भ्रूभंगों से तरंगित हुई काली उसकी भीषण भ्रुकुटि टेढ़ी हो बैठी।

दर्प से उसका बायाँ कर-किसलय दिग्गज के कुम्भस्थल के सिरे जैसे विकट स्कन्ध देश के कोष [ कमल कुल जैसा उठा हुआ प्रदेश ] पर ताल ठोकता हुआ नख किरण रूपी जल झरनों से युद्ध का दायित्व ग्रहण करने पर अभिषेक-जैसा कर बैठा। चूरहे पसीने से भरी हथेली वाला दूसरा हाथ मालव को जड़-मूल से उखाड़ फेंकने के लिए ( उसके ) बालों को पकड़े हुए—जैसे, मदोद्धत राजलक्ष्मी के केशग्रहण की उत्कण्ठा से—जैसे काँपता-काँपता भीषण कृपाण की ओर लपक गया। शस्त्रग्रहण से प्रसन्न हुई राजलक्ष्मी द्वारा किये जा रहे वर्धापन में बिखेरी सिन्दूर-रज-

घुतसिन्दूरधूलिरिव कपिल: कपोलयोरदृश्यत रोषराग:। समासन्नसकलमहीपालचूडामणिचक्राक्रमणजाताहङ्कार इव च समारुरोह वाममूरुदण्डमुत्तानितश्चरणो दक्षिण:। निष्ठुराङ्गुष्ठकषणनिष्ठ्यूतधूमलेखो निर्वीरोर्वीकरणाय विमुक्तशिख इव लिलेख मणिकुट्टिममितर: पादपद्म:। दर्पस्फुटितसरसव्रणोच्छलितरुधिरच्छटावसेकै: शोकविषप्रसुप्तं प्रबोधयन्निव पराक्रममनुजमवादीत्—'आयुष्मन्, इदं राजकुलम्, अमी बान्धवा:, परिजनोऽयम्, इयं भूमि: भूपतिभुजपरिघपालिताश्चैता: प्रजा: गतोऽहमद्यैव मालवराजकुलप्रलयाय। इदमेव तावद्वल्कलग्रहणमिदमेव तप: शोकापगमोपायश्चायमेव यदत्यन्ताविनीतारिनिग्रह:। सोऽयं कुरङ्गकै: कचग्रह: केशरिण:, भेकै: करपात: कालसर्पस्य, वत्सकैर्बन्दिग्रहो व्याघ्रस्य, अलगर्दैर्गलग्रहो गरुडस्य, दारुभिर्दाहादेशो दहनस्य, तिमिरैस्तिरस्कारो रवे:, [1]यो मौखराणां मालवै: परिभव: पुष्पभूतिवंशस्य च। अन्तरितस्तापो मे

---

टीका—मालवराजस्येति शेष: येन स इवेत्युत्प्रेक्षायां खड्गग्रहणं कुर्वन्-स एवं प्रतीयते स्म यथा मालवराजस्य केशान् गृह्णाति केशा: खड्गश्चोभयं श्यामवर्णं भवतीति ध्येयम्। दुर्मदा=दुष्टमदोपेता मदोद्धतेति यावत् या श्री: = मालवराजस्य राजलक्ष्मी: तस्या: कचानां=केशानां ग्रहे=ग्रहणे उत्कण्ठया=औत्सुक्येन च इवेत्युत्प्रेक्षायां कम्पमान: [ कम्पोऽपि सात्विकभाव: ] अपर:=दक्षिण: पाणि:=कर: भीषणं कृपाणं=खड्गं समुत्ससर्प= समुद्गतवान् = ग्रहणायेति शेष:। शस्त्र०—शस्त्रस्य=खड्गस्य [ यत् पूर्वं त्यक्तमासीत् ] ग्रहणेन=धारणेन मुदिता=प्रसन्ना या राजलक्ष्मी: तया क्रियमाणा या दिष्टवृद्धि: दिष्टया वर्धनं सभाजनमिति यावत् तस्या विधुता=प्रक्षिप्ता विकीर्णेति यावत् सिन्दूरस्य धूलि:=रज: इवेत्युत्प्रेक्षायाम् कपोलयो:=गण्डयो: कपिल:=रक्तवर्ण: रोषस्य=क्रोधस्य राग:=लालिमा अदृश्यत= दृष्टिपथमगात्, विवाहादिमङ्गलकार्येषु अद्यापि लोकानामुपरि रक्तवर्णं चूर्णं प्रक्षिप्यते। समासन्न०—समासन्ना:=प्रत्यासन्ना: समीपस्थिता: इत्यर्थ: ये सकला:=समग्रा: महीपाला:=राजान: तेषां चूड़ामणीनां= शरोभूषणानां यत् चक्रं=समूह: तस्मिन् आक्रमणेन=प्रतिबिम्बरूपेण अभियानेन जात:=उत्पन्न: अहङ्कार:=अभिमान: यस्य स इवेत्युत्प्रेक्षायाम् उत्तानित:=ऊर्ध्वमुखीकृत: दक्षिण: चरण:=पाद: वामम् ऊरु-दण्डं=सक्थिदण्डं तमारुरोह=समारूढवान्। निष्ठुरा० निष्ठुरं=बलवत् इत्यर्थ: यत् अङ्गुष्ठेन=पादाङ्गुष्ठेन कषणं=भूमे: घर्षणं तेन निष्ठ्यूता=विमुक्ता धूमस्य लेखा= रेखा येन स: निर्गता:=समाप्ता: वीरा:=शूरा: यस्या: तथाभूता उर्वी=पृथिवी इति निर्वीरोर्वी तस्या: करणाय अर्थात् पृथिवीं निर्वीरां कर्तुम्, वस्तुत: निर्वीरत्वं विधेयमासीत्, तस्य समासे गुणीभूतत्वात् अत्र विधेयाविमर्शो दोष: विमुक्ता=अबद्धा शिखा येन स इवेत्युत्प्रेक्षायाम् इतर:=अन्य: वाम: इत्यर्थ: पाद: पद्म:=कमलमिवेत्युपमिततत्पु०, कोषानुसारेण पद्मशब्दस्य विकल्पेन पुंलिङ्गत्वेपि कवि-जगति पुंल्लिङ्गत्वेन अनादृतत्वात् अत्र अप्रयुक्तत्वं दोष:, मणि कुट्टिमम्=मणिमयबद्धभूमिं लिलेख=लिखितवान् रेखाभि: अङ्कितवानित्यर्थ: दर्प०—दर्पेण=अभिमानेन क्रोधजनितो- त्सेकेनेत्यर्थ: स्फुटिता:=विदीर्णा: सरसा:=आर्द्रा: ये व्रणा:=आघाता: तेभ्य: उच्छलितं=निस्सृतमित्यर्थ: यत्

टिप्पणी—विमुक्तशिख:—राज्यवर्धन ने मणिमय फर्श पर अपने पैर का अंगूठा जोर से रगड़ा जिससे धूमरेखा निकल पड़ी। रेखा काली थी, अत: कवि कल्पना करता है कि मानो वह शिखा हो। क्रोधी मनुष्य चाणक्य की तरह प्रतिज्ञा कर लेता है कि जब तक वह शत्रु को जड़-मूल से नहीं उखाड़ फेंकता, तब तक वह शिखा खुली ही रखेगा, बाँधेगा नहीं, देखिये चाणक्य की उक्ति—'पूर्णप्रतिज्ञेन मया केवलं बध्यते शिखा' ( मुद्रा० ७।१७ )।

हिन्दी—जैसी कपिलवर्ण की रोष की लाली कपोलों में दिखलाई पड़ी। समीप में बैठे हुए सभी राजाओं के चूड़ामणि-समूह पर ( प्रतिबिम्ब द्वारा ) आक्रमण कर देने के कारण अहंकार में अकड़ता हुआ—जैसा उतान दायां पैर बायें ऊरु-दण्ड पर जा चढ़ा। जोर से अंगूठा रगड़ने से धूम-रेखा को छोड़ता हुआ दूसरा चरण-कमल पृथिवी को वीररहित करने के लिए अपनी शिखा खोले हुए—जैसे मणियम फर्श को कुरेदने लगा। दर्प के कारण फूट पड़े कच्चे व्रणों में से उछली रुधिर-धारा के सेकों से शोक-रूपी विष ( के प्रभाव ) से सोये पड़े शौर्य को जागता हुआ—जैसा वह छोटे भाई को बोला—'आयुष्मन्' यह राजगृह है, ये बान्धव हैं, ये नौकर-चाकर हैं, यह भूमि है, महाराज की आगल में मालवराज के कुल के विध्वंस के लिए आज ही चला। मैं अत्यन्त धृष्ट शत्रु को कुचल डालूँ—इस समय यही ( मेरा ) वल्कल-ग्रहण है, यही तप है और यही शोक मिटाने का उपाय है। मालवों द्वारा मौखरों तथा पुष्पभूति के वंश का जो अपमान है, सो वह मृगों द्वारा सिंह के केश पकड़ना है, मेढकों द्वारा नाग पर चपत है, छोटे-छोटे बछड़ों द्वारा व्याघ्र को बन्दी बनाना है, जलसर्पों द्वारा गरुड़ का गला पकड़ना है, लकड़ियों द्वारा आग को जलने की आज्ञा देना है, और

---

१. 'यो मालवै;'

महीयसा मन्युना। तिष्ठन्तु सर्व एव राजानः करिणश्च त्वयैव सार्धम्। अयमेको भण्डिरयुतमात्रेण तुरङ्गमाणामनुयातु माम्। इत्यभिधाय चानन्तरमेव प्रयाणपटहमादिदेश।

तं च तथा समादिशन्तमाकर्ण्य जामिजामातृवृत्तान्तविज्ञानप्रकोपाधानदूयमाने मनसि निवर्तनापदेशेन दूरप्ररूढप्रणयपीड इव प्रोवाच देवो हर्षः—'कमिव दोषं पश्यत्यार्यो ममानुगमनेन। यदि बाल इति नितरां तर्हि न परित्याज्योऽस्मि, रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम्, अशक्त इति क्व परीक्षितोऽस्मि, संवर्धनीय इति वियोगस्तनूकरोति, अक्लेशसह इति स्त्रीपक्षे निक्षिप्तोऽविषह्यतरः, कलत्रं रक्षत्विति श्रीरते निस्त्रिंशेऽधिवसति, पृष्ठतस्तिष्ठत्विति तिष्ठत्येव ते प्रतापः,

---

टीका–रुधिरं=रक्तम् तस्य या च्छटा=कान्तिः धारा इत्यर्थः तया अवसेकैः=प्रोक्षणैः शोकः=पितृमरणदुःखम् एवं विषम् तेन न प्रसुप्तं=निद्रितं पराक्रमं=शौर्यं प्रबोधयन्=जागरयन् इवेत्युत्प्रेक्षायाम्, आर्द्रव्रणाः क्रोधावेगे स्फुटित्वा रुधिरम् उदवमन्, तत्सेकश्च शोकाभिभूतं शौर्यं प्रबोधयन्निव, विषवेगप्रसुप्तं जनं जलसेकैः प्रबोधयन्तीति लोके दृश्यते। अनुजं= हर्षवर्धनम् अवादीत्=अवदत्—परिजनः=सेवकवर्गः इयं भूमिः=देशः राज्यमिति यावत् भूपतेः=राज्ञः (प्रभाकर-वर्धनस्य) भुजौ=बाहू परिघौ=अर्गलौ इवेत्युपमिततत्पु० ताभ्यां पालिताः=रक्षिताः प्रजाः, मालवराजस्य कुलस्य= वंशस्य प्रलयाय=उच्छेदाय वल्कलानां=वृक्षत्वचां ग्रहणं=धारणं, शोकस्य अपगमस्य=निवारणस्य उपायः अत्यन्तं भृशं यथा स्यात्तथा अविनीतस्य=धूर्तस्य अरेः=शत्रोः मालवराजस्येत्यर्थः निग्रहः=दमनम् विनाशः इति यावत्। यः मौखराणां=मौखरिवंशीयानां पुष्पभूतेः=राज्यवर्धन-हर्षवर्धनयोः राजवंशप्रवर्तकमूलनृपविशेषस्य वंशस्य च मालवैः= मालवदेशीयैः परिभवः=अपमानः सः अयम् कुरङ्गकैः=मृगैः केशरिणः=सिंहस्य कचग्रहः=केशग्रहणम्, भेकैः= मण्डूकैः कालसर्पस्य=नागस्य करपातः=कराघातः चपेटः इत्यर्थः वत्सकैः=गवां लघुवत्सैः=व्याघ्रस्य=शार्दूलस्य बन्दिग्रहः=कारागारे बन्धनमित्यर्थः, अलगर्दैः=जल-सर्पैः ['अलगर्दो जलव्यालः' इत्यमरः] गरुडस्य=पक्षिराजस्य गलस्य=ग्रीवायाः ग्रहः=ग्रहणम्, दारुभिः=काष्ठैः दहनस्य=अग्नेः, दाहादेशः=दाहाज्ञा, तिमिरैः=तमोभिः रवेः= सूर्यस्य तिरस्कारः=अवमाननम्। अत्र यत्तच्छब्दनिर्दिष्टवाक्ययोः अभेदेनान्वयोऽनुपपद्यमानः बिम्बप्रतिबिम्बभावे पर्यवस्यति अतः निदर्शनालङ्कारः स च मालारूपः। महीयसा=अतिशयेन महता मन्युना=क्रोधेन मे तापः= पितृमरणशोकः इत्यर्थः अन्तरितः=व्यवहितः। करिणः=हस्तिनः त्वया एव सार्धं=सह। एकः=केवलः भण्डिः= एतन्नामा राज्यवर्धनस्य मातुलपुत्रः तुरङ्गमाणाम्=अश्वानाम् अयुतमात्रेण=दशसहस्रसंख्यामात्रेण माम् अनुयातु= अनुगच्छतु, इति अभिधाय=कथयित्वा अनन्तरम् एव=तत्कालमेव प्रयाणाय=शत्रोर्विरुद्धम् अभियानाय पटहं= दुन्दुभिम् तद्वादमित्यर्थः आदिदेश=आदिष्टवान्।

तं=राज्यवर्धनम् तथा समादिशन्तम्=आज्ञापयन्तम् आकर्ण्य श्रुत्वा जामिः=भगिनी ['जामिः स्वसृकुलस्त्रियोः' इत्यमरः] च जामाता च तयोः वृत्तान्तस्य=समाचारस्य विज्ञानेन यत् (मनसि) कोपस्य=क्रोधस्य आधानम्=

**टिप्पणी**—कलत्रं रक्षतु—अभिप्राय यह है कि यदि आप मुझे इस लिए घर छोड़ रहे हैं कि मैं आपके अन्तःपुरवर्ती स्त्रीजन की देख-भाल करता रहूँ, सो यह भी ठीक नहीं क्योंकि आपकी असली पत्नी राजलक्ष्मी है वह तो आपके खड्ग में रह रही है, घर में मैंने किसकी रक्षा करनी है?

हिन्दी–अन्धकार द्वारा सूर्य का तिरस्कार करना है। बड़े भारी क्रोध ने मेरा ताप ढक दिया है। सभी राजे और हाथी तेरे ही साथ रहें। यह केवल भण्डि दस हजार मात्र घोड़ों (घुड़सवार सैनिकों) के साथ मेरे पीछे-पीछे आए। यह कहकर उसने अविलम्ब अभियान का पटह बजाने की आज्ञा दे दी।

उसे उस प्रकार आज्ञा देते हुए भाई को सुनकर बहिन और बहनोई का वृत्तान्त सुनने से भड़के हुए क्रोध से मन के तड़फने लगने पर, (भाई द्वारा दिए गए) वापस होने के आदेश से अत्यधिक बढ़ी हुई (भ्रातृ-) प्रेम वेदना वाला— जैसा हर्षवर्धन बोल उठा—'मेरे (आप के) पीछे-पीछे आने में आप कौन-सी बुराई देखते हैं? यदि तू बच्चा है, यह विचार है तो मैं कतई परित्याग योग्य नहीं हूँ। यदि 'रक्षा योग्य है' यह कहो तो रक्षा स्थान आपका भुज-पंजर है; यदि 'तू अशक्त है' ऐसा मानते हों तो आपने कहाँ मेरी परीक्षा ली है? यदि 'तू पोषणीय है' समझें तो आपका वियोग (मुझे) अपुष्ट (कृश) कर देता है। यदि 'तू क्लेश सहन करने योग्य नहीं है यह सोचते हों ऐसा है तो आपने मुझे

---

१. 'निवर्तनादेशेन' २. 'पृष्ठतः शून्य'

राजकमनधिष्ठितमिति तत्सुबद्धमार्यगुणैः न बाह्यः सहायो महत इति व्यतिरिक्तमेव मां गणयसि, प्रलघुपरिकरः प्रयामीति पादरजसि कोऽतिभारः, द्वयोर्गमनमसांप्रतमिति मामनुगृहाण गमनाज्ञया, कातरो भ्रातृस्नेह इति सदृशो दोषः । का चेयमात्मम्भरिता भुजस्य ते यदेकाकी क्षीरोदफेनपटलपाण्डुरमृतमिव यशः पिपासति । अवञ्चितपूर्वोऽस्मि प्रसादेषु[1]। तत्प्रसीदत्वार्यो नयतु मामपि' इत्यभिधाय क्षितितलविनिहितमौलिः पादयोरपतत् ।

---

टीका–उत्पत्तिः तेन दूयमाने=विषीदति मनसि निवर्तनस्य=परावर्तनस्य अपदेशेन=निर्देशेन, अत्र 'निवर्तनादेशेन' इति पाठः साधीयान् । दूरम् यथा स्यात्तथा प्ररूढा=जातेत्यर्थः प्रणयस्य=राज्यवर्धनं प्रति प्रेम्णः पीडा=वेदना यस्य सः हर्षः प्रोवाच=अकथयत्-कम इवेति वाक्यालङ्कारे मम अनुगमनेन=युद्धे भवतः अनुसरणेन । यदि बाल. अर्थात् बालकोऽस्मि यः सह नेतुं न शक्यते तर्हि नितराम्=भृशं न परित्याज्यः=एकाकी गृहे त्यक्तुं न योग्यः पालकाभावात् इत्यर्थः । रक्षणीयः=रक्षायोग्यः युद्धे प्राणानां भयात्, भवतः भुजौ=बाहू एव पञ्जरं=रक्षास्थानं=सुरक्षितप्रदेशः, अशक्तः शत्रुभिः योद्धुमसमर्थः, क्व=कुत्र परीक्षितः न क्वापीति काकुः, सम्वर्धनीयः=पोषणीयः शरीरपुष्टिः कर्तव्येत्यर्थः इति तर्हि भवतः वियोगः पुष्टेः स्थाने मां तनूकरोति=कृशीकरोति, वियोगदुःखे कुतः पुष्टिरित्यर्थः, न क्लेशं=दुःख सहते इति॰ सहः, तर्हि स्त्रीणां पक्षे=स्थाने कोटयामित्यर्थः निक्षिप्तः=स्थापितः स्त्रीणामेव क्लेशासहत्वात् गृहे ( स्थितः ) सुखम् अनुभवतु=प्राप्नोतु, तर्हि तत्=सुखं त्वया सह प्रयाति=गच्छति भवन्तं विना गृहे सुखस्याभावात् अध्वनः=मार्गस्य महान् क्लेशः=दुःखम् इति तर्हि विरहः=भवद्वियोगः मार्गक्लेशापेक्षया अतिशयेन अविषह्यः=विषोढुं न शक्यः, कलत्रं=स्त्रीजनम् अवरोधमित्यर्थः रक्षतु भवानिति शेषः इति तर्हि श्रीः=राजलक्ष्मीः ते निस्त्रिंशे=खड्गे अधिवसति=तिष्ठति गृहे तदभावात् अत्र 'निस्त्रिंशम् अधिवसति' इत्येव सुवचम् अधिपूर्वकवसधातोः सकर्मकत्वात्, पृष्ठतः=पश्चात् तिष्ठतु पृष्ठशत्रुभ्यो राज्यरक्षार्थमित्यर्थः, तर्हि ते प्रतापः=तेजः पृष्ठे तिष्ठत्येव, राजकम्=राजसमूहः अनधिष्ठितम् अधिष्ठानात् रहितम् इति तर्हि आर्यस्य=भवतः गुणैः वीरत्वादिभिः एव गुणैः=रज्जुभिः तत्=राजकम् सुबद्धं=सुसंयतं सुव्यवस्थितमित्यर्थः, अत्र श्लिष्टरूपकम्, महतः=महापुरुषस्य भवत्सदृशस्य बाह्यः=बहिरङ्गः सहायः=सहायकः न भवतीति शेषः तर्हि व्यतिरिक्तं=भिन्नं मां गणयसि=अवगच्छसि, अहं तु भवति आत्मनि च न कमपि भेदं

**टिप्पणी—सदृशो दोषः**—हर्षवर्धन ने अपने नागानन्द नाटक में लिखा है—'स्नेहः पापाशङ्की' अर्थात् जिसके साथ जिसका स्नेह-प्रेम होता है, वह उसके सम्बन्ध में पाप की, अनिष्ट की शंका किया करता है कि पता नहीं कहीं उस पर कोई विपत्ति आ पड़ जाय या आ पड़ी हुई हो, वह बराबर उसके सम्बन्ध में शंकित रहता है। मुझे इसलिए आप नहीं ले जा रहे हैं कि कहीं युद्ध में मेरे छोटे भाई पर कोई मुसीबत न आ पड़ जाय, किन्तु भाई साहब, आपके युद्ध के लिए चले जाने पर मुझे भी तो शंका रहेगी कि कहीं आप पर कोई मुसीबत न आ पड़े, इसलिए यह दोष तो दोनों ओर बराबर है एक सा है, उसका जो परिहार आप करेंगे, मेरा भी वही परिहार समझिए ।

**हिन्दी**–स्त्रीकोटि में डाल दिया है, यदि 'तू सुख भोग' यह बात है तो वह आपके ही साथ जा रहा है, यदि 'मार्ग में बड़ा क्लेश होता है' यह मानते हों तो आपका विरह और भी असह्य है, यदि 'स्त्री की रक्षा कर' यह बात है, तो लक्ष्मी आपके खड्ग में निवास कर रही है, यदि 'पीछे से रह' यह बात है, तो आपका प्रताप पीछे रह ही रहा है, यदि 'राज-मण्डल नायक रहित है' यह विचार है, तो आपके गुणों, ( शौर्यादि, रस्सियों ) द्वारा वह अच्छी तरह बाँधा हुआ है ही, यदि 'महापुरुष को बाहरी सहायक नहीं होता' यह सोचते हो, तो आप मुझे अपने से भिन्न ही समझने लगे हैं, यदि 'थोड़े से ही सेवकों को लेकर ही मैं जा रहा हूँ' यह बात है तो अपने चरणों की धूल ( मेरा ) कौन-सा अधिक भार हो जायगा ? यदि 'दोनों का जाना अनुचित है' यह बात है तो मुझे ही जाने की आज्ञा से अनुगृहीत करें, यदि 'भ्रातृ-स्नेह भीरु होता है' यह विचार है तो यह दोष ( दोनों ओर ) बराबर है। और आपकी भुजा की यह कौन-सी स्वार्थपरता है कि जो वह अकेली ही क्षीर सागर के फेन-समूह के समान श्वेत अमृत—जैसा यश पीना चाह रही है ? ( अपनी ) कृपाओं से आपने पहले मुझे कभी वञ्चित नहीं रखा। इसलिए आप प्रसन्न होइए और मुझे भी ले जाइये'। इस तरह कहकर सिर भूतल पर टेके हुए हर्षवर्धन पैरों में पड़ गया।

---

१. विप्रप्रसादेषु

तमुत्थाप्य पुनरग्रजो जगाद—'तात किमेवमतिमहारम्भपरिग्रहणेन गरिमाणमारोप्यते बलादतिलघीयानप्यहितः। हरिणार्थमतिह्रेपणः सिंहसम्भारः तृणानामुपरि कति कवचयन्त्याशुशुक्षणय। अपि च तवाष्टादशद्वीपाष्टमङ्गलकमालिनी मेदिन्यस्त्येव विक्रमस्य विषयः। नहि कुलशैलनिवहवाहिनो वायवः संनह्यन्त्यतितरले तूलराशौ। सुमेरुवप्रप्रणयप्रगल्भा वा दिक्करिणः परिणमन्त्यणीयसि वल्मीकेन संग्रहीष्यसि सकलपृथ्वीपतिप्रलयोत्पातमहाधूमकेतुं मान्धातेव चारुचामीकरपत्रलतालङ्कारालङ्कृतकायं कार्मुकं ककुभां विजये। मम तु दुर्निवारायामस्यां विपक्षक्षपणक्षुधि क्षुभितायां क्षमयतामयमेकाकिनः कोपकवल एकः। तिष्ठतु भवान्।' इत्यभिधाय च तस्मिन्नेव वासरे निर्जगामाभ्यमित्रम्।

---

टीका-पश्यामि, भवांस्तु माम् आत्मतो भिन्नीकरोतीति भावः, प्रकर्षेण लघुः=अल्पः परिकरः=परिजनः यस्य तथाभूतोऽहं प्रयामि=प्रगच्छामि इति तर्हि पादयोः=भवतः चरणयोः रजसि=धूलिभूते मयि सह गच्छति भवतः अतिशयितः भारः कः? न कोऽपीति काकुः द्वयोः भ्रात्रोः गमनं असाम्प्रतम्=अनुचितम् इति तर्हि त्वमेव गृहे तिष्ठ मां च गमनस्य आज्ञया अनुगृहाण=अनुकम्पस्व, भ्रातृस्नेहः कातरः=भीरुः अधीर इत्यर्थः तर्हि अयं दोषः सदृशः=उभयत्र तुल्यः, आत्मानं बिभर्तीति [ आत्मन्+√भृ+इन् मुमागमश्च 'फलेग्रहिरात्मम्भरिश्च' पा० ३।२।२६ ] आत्मम्भरिः=स्वार्थी तस्य भावः तत्ता ते भुजस्य=बाहोः, एकाकी=एकलः क्षीरोदस्य=क्षीरसागरस्य फेनस्य पटलवत्=समूहवत् पाण्डुरं=श्वेतं अमृतं=सुधाम् इवेत्युपमायां यशः=कीर्तिम् पिपासति=पातुमिच्छति ( सन्नन्त. ), प्रसादेषु=अनुग्रहेषु न पूर्वं वञ्चितः=रहितीकृत इति अवञ्चितपूर्वः अर्थात् पूर्वं भवत्सकाशात् यः कोऽपि अनुग्रहः मया प्रार्थितः स स भवता सदैव प्रदत्तः, न कदापि तस्मादवञ्चितः। तत्=तस्मात् कारणात् आर्यः प्रसीदतु=प्रसन्नो भवतु, इति अभिधाय=कथयित्वा क्षितितले=भूतले विनिहितः स्थापितः मौलिः=शिरः येन सह पादयोः=चरणयोः अपतत्=पतितवान्।

तम्=हर्षवर्धनम् उत्थाप्य=उत्तोल्य अग्रजः=ज्येष्ठः भ्राता जगाद=अवदत्—'अतिशयितः यः महान् आरम्भः=संविधानं योजनेत्यर्थः तस्य परिग्रहणेन=आश्रयणेन=अनुष्ठानेनेति यावत् अतिशयेन लघीयान्=लघुतरः अपि अहितः=शत्रुः बलात्=बलपूर्वकम् गरिमाणम् [ गुरु+इमनिच् ] महत्त्वम् आरोप्यते=अर्थात् तादृशे तुच्छशत्रवे एतावदधिकं महत्त्वं न दीयताम्। हरिणार्थं=मृगस्य कृते तद्वधार्थः सिंहानां सम्भारः=समूहः अतिशयेन ह्रेपयति=लज्जां प्रापयतीति (√ह्री+णिच्+ल्युट्) अतिह्रेपणः=लज्जाकर इत्यर्थः। तृणानां=घासानाम् उपरि आक्रमणार्थमिति शेषः कति=कियन्तः आशुशुक्षणः=अग्नयः [ 'अग्निर्वैश्वानरो वह्निः शिखावानाशुशुक्षणिः' इत्यमरः ] कवचयन्ति=आत्मानं कवचयुक्तं कुर्वन्ति [ कवच+णिच्, सुखादयो वृत्तिविषये तद्वति वर्तन्ते ] बद्धकवचाः भवन्तीत्यर्थः न कस्यपीति काकुः स्फुलिंगमात्रेणैव तृणानां दाहसम्भवात्। अष्टादशद्वीपाः एव अष्टमङ्गलानां=कंकणानां माला अस्याः अस्तीति तथोक्ता मेदिनी=पृथिवी तव विक्रमस्य=शौर्यस्य विषयः=गोचरः स्थानमित्यर्थः अस्ति एव। नहि=न खलु कुल-शैलानां=कुलपर्वतानां निवहं=समूहं वाहयन्तीति तथोक्ताः वायवः पवनाः अतिशयेन तरले=चंचले लघौ इत्यर्थः तूलस्य=कार्पासस्य राशौ=समूहे संनह्यन्ति=सनद्धाः पिनद्धकवचा भवन्तीत्यर्थः। सुमेरोः=एतदाख्य-पर्वत विशेषस्य यः वप्रः=तटः तस्मिन् प्रणयेन=अनुरागेण प्रगल्भाः=धृष्टाः दिक्करिणः=दिग्गजाः अतिशयेन अणीयसि=अणुतरे=लघुतरे इत्यर्थः वल्मीके=वामलूरे श्वेतपिपीलिकोत्थापितमृत्कूटे इति यावत् न परिणमन्ति=तिर्यग् दन्तप्रहारैः न क्रीडन्ति। वृषभाः

हिन्दी–उसे उठाकर ज्येष्ठ भाई फिर बोला—"प्यारे भैया! बड़ी भारी तय्यारी द्वारा अतितुच्छ शत्रु को इस तरह बलात् क्यों महत्त्व दिया जा रहा है? मृग वध के लिए सिंहों का दल बड़ा लज्जाजनक है। तृणों के ऊपर आक्रमण के लिए कितनी अग्नियाँ कवच बाँधती हैं? और तेरे शौर्य के लिए अट्ठारह द्वीप-रूपी चूड़ियों की पंक्ति पहने पृथिवी स्थान है ही। कुल पर्वतों का समूह उड़ा देने वाले मारुत बड़े हलके रुई के ढेर के लिए कमर नहीं कसा करते, अथवा सुमेरु पर्वत की ढलानों से अनुराग रखकर ढीठ बने दिग्गज छोटी-सी बाम्बी से दन्त-प्रहार की क्रीडा नहीं किया करते। मान्धाता राजा की तरह दिग्विजयार्थ समस्त राजाओं के विध्वंस के लिए उत्पात-रूप महान् धूमकेतु एवं सुवर्ण की सुन्दर पत्र-लता-रूप अलंकारों से अंकित कायवाला धनुष तुम पकड़ोगे ही। शत्रुओं को चट कर जाने की दुर्निवार भूख के प्रदीप्त हो उठने पर तुम अकेले मेरे ही कोप का ग्रास इसे बनने देने के लिए मुझे क्षमा करो। तुम रहो।' यह कह कर उसी दिन शत्रु के विरुद्ध निकल पड़ा।

अथ तथागते भ्रातरि, उपरते च पितरि, प्रोषितजीविते च जामातरि, मृतायां च मातरि, संयतायां च स्वसरि, स्वयूथभ्रष्ट इव वन्यः करी देवो हर्षः कथं कथमप्येकाकी कालं तमनैषीत् । अतिक्रान्तेषु बहुषु वासरेषु कदाचित्तथैव भ्रातृगमनदुःखासिकया दत्तप्रजागरस्त्रिभागशेषायां त्रियामायां यामिकेन गीयमानामिमामार्यां शुश्राव —

'द्वीपोपगीतगुणमपि समुपार्जितरत्नराशिसारमपि ।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥ ३ ॥'

---

टीका-स्वभृङ्गैः हस्तिनश्च स्वदन्तैः पर्वतवप्रेषु प्रहारं कृत्वा खेलन्तीति तेषां स्वभावः । मान्धाता = प्राचीनः एतदाख्यः प्रसिद्धः राजविशेष इवेत्युपमायां सकलाः = सर्वे च ते पृथिवीपतयः = भूपाः तेषां प्रलयस्य = विनाशस्य उत्पात-रूपः = उपद्रव-रूपः य महांश्चासौ धूमकेतुः – उल्का तम् ( रूपकम् ) चारुः = मनोज्ञा चामीकरस्य = सुवर्णस्य [ चामीकरे = आकरे भवम् इति चामीकरम् । 'चामीकरं जातरूपं महारजत-काञ्चने' इत्यमरः] पत्राणां लताः = लतापत्रभंगा एव अलङ्कारः स एव अङ्कः चिह्नं यस्य तथाभूतः कायः = शरीरं यस्य तम् कार्मुकं = धनुः ककुभां = दिशां विजये = पराजये त्वं ग्रहीष्यसि = धारयिष्यसि । दुर्निवारायाम् = दुःखेन निवारयितुं योग्यायाम् अस्यां विपक्षाणां = शत्रूणां क्षपणं = विनाशः एव क्षुध् = क्षुधा तस्याम् क्षुभितायां = प्रदीप्तायाम् एकाकिनः = केवलस्य मम एकः कोपस्य कवलः = ग्रासः मालवराजरूपः क्षम्यताम् = सह्यताम् । इति अभिधाय = कथयित्वा वासरे = दिवसे अमित्रं = शत्रुम् अभि = प्रति इत्यभिमन्त्रितम् ( अव्ययी० ) निर्जगाम = निरगच्छत् ।

उपरते = मृते पितरि = प्रभाकरवर्धने, जामातरि = भगिनीपतौ ग्रहवर्मणि प्रोषितं = कृतप्रवासं गतमित्यर्थः जीवितं ( भावे क्तः ) = जीवनं यस्य तस्मिन् मृते इति यावत्, स्वसरि = भगिन्यां राज्यश्रियां संयतायां = (कारागारे ) बद्धायाम्, स्वस्य यूथात् = दलात् भ्रष्टः = च्युतः वन्यः = वने भवः जाङ्गलिकः इत्यर्थः करी = हस्ती इवेत्युपमायां तं कालं = समयम् अनैषीत् = अतियापितवान् । वासरेषु = दिवसेषु अतिक्रान्तेषु = व्यतीतेषु तथा एव भ्रातुः = राज्यवर्धनस्य गमनेन = युद्धार्थं प्रयाणेन दुःखम् असिः = खड्ग इव तेन मार्मिक-पीडयेत्यर्थः दत्तः = जनितः इत्यर्थः प्रजागरः = जागरणं यस्मै तथाभूतः हर्षवर्धनः त्रिभागः = त्रितीयः भागः ( त्रिशब्दोऽत्र पूरणार्थको बोध्यः ) शेषः = अवशिष्टः यस्याः तस्यां त्रियामायां = रात्र्यां यामे यामे नियुक्तः इति ( याम + ठक् ) यामिकः = प्रहरी तेन गीयमानां = गानविषयीक्रियमाणाम् आर्याम् = छन्दोविशेषम् शुश्राव = श्रुतवान् —

द्वीपेति०—अन्वयः—पवनः द्वीपोपगीतगुणम् अपि समुपार्जिररत्नराशिसारम् अपि पोतम् इव विधिः द्वीपोपगीतगुणम् अपि समुपार्जितरत्नराशिसारम् अपि पुरुषम् आकाण्डे निपातयति ।

पवनः = वायुः भीषणझञ्झेत्यर्थः द्वीपेषु = सप्तसु अथवा अष्टादशसु द्वीपेषु द्वीपात्मकक्षितौ इत्यर्थः उपगीताः = गानविषयीकृताः स्तुताः इत्यर्थः गुणाः = उत्कृष्टत्वादिधर्माः यस्य तम् अपि समुपार्जितः = एकत्रीकृत्य आत्मनि धृतः इत्यर्थः

हिन्दी इसके बाद भाई के उस तरह चले जाने पर, पिता के स्वर्ग सिधारने पर, दामाद की जीवन-लीला समाप्त हो जाने पर, माता के मर जाने पर और बहिन के बन्धन में पड़ जाने पर अपने दल से बिछुड़े हुए हाथी की तरह देव हर्षवर्धन ने अकेले वह समय बड़ी कठिनाई से काटा । बहुत दिन बीत जाने पर कभी तीसरा भाग शेष रहे रात्रि में वह प्रहरी द्वारा गाई जाती हुई इस आर्या को सुन बैठा : —

किसी जहाज के गुण जग कितना ही क्यों नहिं गाता हो,
उत्तम-रत्न राशि बड़ी वह क्यों नहिं भीतर लादे हो ।
किन्तु जब अन्धड़ अपनी लपेट में उसको ले लेता,
क्षणभर के भीतर सहसा सागर में है डुबो देता ॥

यही हाल पुरुष का भी है दुनिया में है देखा जाता ।

किसी पुरुष के गुण जग कितना ही क्यों नहिं गाता हो,
उत्तमराशि भारी वह अर्जित क्यों न किये हो ।
किन्तु कुटिल नियति का क्रूर हाथ चुपके से है आता,
चपत मार धराशायी उसको सहसा है कर जाता ।

तां च श्रुत्वा सुतरामनित्यताभावनया दूयमानहृदयः प्रक्षीणभूयिष्ठायां क्षपायां क्षणमिव निद्रामलभत स्वप्ने चाभ्रंलिहं लोहस्तम्भं भज्यमानमपश्यत् । उत्कम्पमानहृदयश्च पुनः प्रत्यबुध्यत । अचिन्तयच्च -'किं नु खलु मामेवममी सततमनुबध्नन्ति दुःस्वप्नाः । स्फुरति च दिवानिशमकल्याणाख्यानविचक्षणमदक्षिणमक्षि । सुदारुणाश्चाक्षुद्रक्षितिपक्षयमाचक्षाणाः क्षणमपि न शाम्यन्ति पुनरुत्पाताः । प्रत्यहं राहुरविकलकायबन्ध इव कबन्धवति ब्रध्नबिम्बे घटमानो विभाव्यते । तपःकरणकालकवलितानिव धूसरितसमग्रग्रहानुद्गिरन्ति धूमोद्गारान्सप्तर्षयः । दिने दिने

टीका-रत्नानां राशेः = समूहस्य सारः = उत्कृष्टांशः उत्कृष्टजातीयः – रत्नसमूह इत्यर्थः येन तथाभूतम् अपि पोतं = जलयानम् इव विधिः = नियतिः द्वीपेषु उपगीताः गुणाः शौर्यादयः यस्य तम् अपि समुपार्जितः = लब्धः शत्रून् विजित्य तत्सकाशात् प्राप्तः इत्यर्थः रत्नराशिसारः येन तं पुरुषम् अकाण्डे = असमये सहसेति यावत् निपातयति = समुद्रे निमज्जयति अन्यत्र प्राणैः वियोजयति । अत्र पोत-पुरुषयोः साम्यप्रदर्शनात् उपमा सा च श्लिष्टा अर्थापत्त्या च संसृष्टा । आर्या वृत्तम् तल्लक्षणञ्चाधस्ताद्दत्तमेव ॥ ३ ॥

ताम् = आर्याम् सुतराम् = अत्यधिकं यथा स्यात्तथा अनित्यस्य भावः अनित्यता = विनश्वरता तस्याः भावनया = बुद्ध्या दूयमानं = विषीदत् हृदयं यस्य स प्रक्षीणं = समाप्तम् भूयिष्ठम् = अधिकतमो भागः यस्याः तस्यां क्षपायां = निशायां क्षणमिव = क्षणपर्यन्तम् इवेति वाक्यालङ्कारे अलभत = प्राप्तवान् अभ्रं = गगनं लेढि = आस्वादयतीति [ अभ्र + √ लिह् + खश् मुमागमश्च ] गगनचुम्बिनमिति यावत् लोहस्य स्तम्भं = स्थूणाम् भज्यमानं = खण्ड्यमानं त्रुटयन्तमित्यर्थः । उत्कम्पमान = वेपमानं हृदयं यस्य स प्रत्यबुध्यत = जागरितोऽभवत् । माम् अमी = एते दुःस्वप्नाः सततं = निरन्तरम् अनुबध्नन्ति = अनुगच्छन्ति । दिवानिशं = रात्रिदिवम् अकल्याणस्य = अमङ्गलस्य आख्याने = कथने विचक्षणं = निपुणम् अदक्षिणं = वामम् अक्षि = नेत्रं स्फुरति = स्पन्दते । सुदारुणाः = अति भीषणाः च अक्षुद्रस्य = न क्षुद्रस्य महतः इत्यर्थः क्षितिपस्य = राज्ञः क्षयं = विनाशम् आचक्षाणाः = कथयन्तः पुनः उत्पाताः प्राकृतिकोपद्रवाः, न शाम्यन्ति = शान्ताः भवन्ति । प्रत्यहम् = अहनि अहनि नित्यमित्यर्थः अविकलः = न विकलः = अङ्गहीनः सम्पूर्णः इत्यर्थः कायबन्धः = शरीरसंस्थानं यस्य स इवेत्युत्प्रेक्षायां राहुः कबन्धः = अपमूर्धकलेवरम् अस्मिन् अस्तीति तथोक्त ब्रध्नस्य = सूर्यस्य [ 'भास्कराहस्करब्रध्नप्रभाकरविभाकराः' इत्यमरः ] बिम्बे = मण्डले घटमानः = संयुज्यमानः विभाव्यते = दृश्यते । सूर्यबिम्बे कबन्धसदृशदण्डदर्शने बृहत्संहिता प्राह – 'दण्डे नरेन्द्रमृत्युर्व्याधिभयं स्यात्कबन्धसंस्थाने' इति । तपसः = तपोरूपायाः करणस्य = अनुष्ठानस्य काले = समये कवलितान् = ग्रासीकृतान् इवेत्युत्प्रेक्षायां धूसरिताः = धूसरवर्णीकृताः समग्राः =

**टिप्पणी**—आख्यायिका—काव्य के सम्बन्ध में हम पीछे कह आये हैं कि उसमें आरम्भ या मध्य में वक्त्र, अपरवक्त्र आर्या आदि छन्दों का प्रयोग करके भावी अर्थ पर झीना-सा प्रकाश डाल दिया जाता है। प्रकृत आर्या में पुरुष के सम्बन्ध में जहाज की तुलना देकर कहा जा रहा है कि वह कितना ही गुणी और लक्ष्मीवान् क्यों न हो, भाग्य के आगे उसकी कुछ नहीं चलती, काल सहसा ही उसे एक ही चपत से धराशायी कर देता है। यहाँ बात तो सामान्य ही कही गई है, किन्तु यहाँ पर विशेषपरक है अर्थात् राज्यवर्धन अकाल काल का ग्रास बन जाता है। यह व्यङ्ग्य है। सामान्य से विशेष व्यङ्ग्य होने को साहित्यिक भाषा में अप्रस्तुत-प्रशंसा कहते हैं।

**अविकलकायबन्धः**—समुद्रमन्थन के समय देवताओं को छल कर जब राहु अमृत-पान कर रहा था तो विष्णु ने उसका शिरच्छेद कर दिया था। शिर राहु कहलाया और कबन्ध केतु। शिर रूप में सूर्य पर आक्रमण करता हुआ राहु ऐसा लग रहा था मानो वह अविकल शरीरधारी हो। सूर्य मण्डल में कबन्ध भी दिखाई दे रहा था, दोनों मिलकर राहु पूर्णरूप में दिखाई देने लगा। इन उत्पातों का विवरण हमने प्रभाकरवर्धन की मृत्यु के प्रकरण में पीछे पाँचवें उच्छ्वास में दे रखा है। वहाँ देखिए।

**हिन्दी**–उसे सुनकर हृदय में (संसार की) भारी विनश्वरता से दुःखी होता हुआ वह अधिक रात बीते क्षणभर के लिए जैसे निद्रा-लाभ कर पाया और स्वप्न में गगनचुम्बी लोह-स्तम्भ को टूटता हुआ देख बैठा। हृदय में काँपता हुआ वह फिर जाग पड़ा और सोचने लगा—'क्यों ये दुःस्वप्न लगातार मेरा पीछा कर रहे हैं? अमंगल की सूचना देने में निपुण मेरी बायीं आँख दिन रात फड़क रही है। किसी बड़े भूपति का विनाश कह रहे अति भीषण उत्पात क्षण भर भी फिर शान्त नहीं हो रहे हैं। प्रतिदिन कबन्ध वाले सूर्यमण्डल में लगता हुआ राहु ऐसा दिखाई पड़ता है मानो उसका शरीर पूरा जुड़ा हुआ हो। सप्तर्षि सभी ग्रहों को धूसर बना देने वाले, तपस्या करते समय पिये हुए—जैसे धूम को निकाल

दारुणा दिशां दाहा दृश्यन्ते। दिग्दाहभस्मकणनिकर इव निपतति नभस्तलात्तारागणः। तारापातशुचेव निष्प्रभः शशी। निशि निशि इतस्ततः प्रज्वलिताभिरुल्काभिरुग्रं ग्रहयुद्धमिव वियति विलोकयन्ति विलोलतारकाः ककुभः राज्यसञ्चारसूचकः सञ्चारयतीव क्ष्मां क्वापि वहद्बहलरजःपटलकलिलशर्कराशकलसूत्कारी मारुतः। न कुशलमिव पश्यामि लग्नस्य। अस्मिन्नस्मद्वंशे करिण इव करीरं कोमलमपि कलयतः कृतान्तस्य कः परिपन्थी। सर्वथा स्वस्ति भवत्वार्याय।' इति चिन्तयित्वा च अन्तर्भिन्नं भ्रातृस्नेहकातरं द्रवदिव हृदयं कथं कथमपि संस्तभ्योत्थाय यथाक्रियमाणं क्रियाकलापमकरोत्।

टीका—सकलाः ग्रहाः यैः तान् धूमस्य उद्गारान् = समूहानित्यर्थः उद्गिरन्ति = उद्वमन्ति। धूमपानमपि एकं तपस्यायाः रूपमस्ति। ताराणां धूमोद्गारोऽपि उत्पातेषु गण्यते दिग्दाहस्यापि उत्पातत्वे शास्त्रमाह—'दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः' इति। दिशां दाहे ये भस्मनः कणाः = सूक्ष्मांशाः तेषां निकरः = समूहः इवेत्युत्प्रेक्षायां नभस्तलात् = गगनतलात् तारागणः = तारासमूहः निपतति आकाशात् ताराणां पतने बृहत्संहिता प्राह—'अम्बरमध्याद्बहवो निपतन्त्यो राजराष्ट्रनाशाय' इति ताराणां पातस्य = पतनस्य शुचा = शोकेन इव शशी = चन्द्रः निष्प्रभः = कान्तिरहितो भवतीति शेषः। शशी खलु तारानाथः, ताराणां पतनस्य दुःखात् तन्नाथस्य निष्प्रभत्वं स्वाभाविकमेव। अत्र चन्द्रे नायकत्वव्यवहार-समारोपात् समासोक्तिः तदुत्थापिता चोत्प्रेक्षा। निशि-निशि = प्रतिरात्रि ज्वलिताभिः = प्रदीप्ताभिः उल्काभिः आकाशात् पतद्भिः ज्वलत्तेजःपिण्डैः उत्पातविशेषैरित्यर्थः उग्रं = भीषणं ग्रहाणां = ज्योतिष्पिण्डविशेषाणां युद्धम् इव वियति = आकाशे विलोलाः = तरलाः तारकाः = नक्षत्राणि एव तारकाः = कनीनिकाः यासां तथाभूताः ककुभः = दिशाः विलोकयन्ति = पश्यन्ति इति भावः। पतन्त्यः उल्काः युद्धे प्रक्षेपास्त्राणीव प्रतीयन्ते स्मेति भावः। अत्रापि ककुप्सु नायिकाव्यवहारसमारोपात् समासोक्तिः तस्याश्च तारकाशब्दे श्लिष्टरूपकेण उत्प्रेक्षया चाङ्गाङ्गिभावसंकरः। राज्यस्य यः सञ्चारः = संक्रमणं, हस्तान्तरे गमनं विलयः इति यावत् तस्य सूचकः पिशुनः वहत् = उड्डीयमानमित्यर्थः यत् वहलं = रजःपटलं = धूलिसमूहः तेन कलिलः = गहनः पूर्णः इत्यर्थः ['कलिलं गहनं समे' इत्यमरः] चासौ शर्कराणां प्रस्तरकणानां शकलैः = खण्डैः सूत्कारी = 'सूत्' इति शब्दं करोतीति तथोक्तः मारुतः = वायुः इमां क्ष्मां = पृथिवीं क्व अपि = कुत्रापि सञ्चारयति चालयति नयति इवेत्युत्प्रेक्षायाम्। कुशलं = कल्याणं लग्नस्य = समयस्य इत्यर्थः ['राशीनामुदयो लग्नं ते च मेषवृषादयः' इत्यमरः]। अस्मिन् अस्माकं वंशे = कुले अथ च वेणौ कोमलम् = मृदुम् अपि करीरं = वंशाङ्कुरम् ['वंशाङ्कुरे करीरोऽस्त्री' इत्यमरः] कलयतः = गृह्णतः भञ्जतः = इत्यर्थः करिणः = हस्तिनः इवेत्युपमायां, कोमलमपि वंशाङ्कुरं = कुलप्ररोहं कुलबीजमितियावत् कलयतः = नाशयतः इत्यर्थः = कृतान्तस्य = यमस्य अथवा दैवस्य [कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इत्यमरः] कः परिपन्थी = शत्रुः रोधक इत्यर्थः न कोऽपीति काकुः स्वस्ति = कल्याणम् भवतु आर्याय = भ्रात्रे इति अन्तः = अभ्यन्तरे भिन्नं = स्फुटितं भ्रातुः स्नेहेन कातरं भीतं द्रवत् = स्पन्दमानम् अथवा धावत् इवेत्युत्प्रेक्षायां हृदयं कथं कथमपि = केनापि प्रकारेण संस्तभ्य = निरुध्य उत्थाय = शयनात् उत्थितो भूत्वा क्रियमाणम् अनतिक्रम्य इति यथा० अर्थात् यथा नित्यं क्रियते क्रियाकलापं स्नान-संध्यादिकर्मजातम् अकरोत् = कृतवान्।

हिन्दी—रहे हैं। प्रतिदिन भीषण दिग्दाह दिखाई पड़ रहे हैं। गगनतल से तारे (टूटकर) इस तरह गिर रहे हैं मानो दिग्दाह के भस्म का कण-समूह हो। ताराओं के गिरने के शोक से जैसे तारापति (चन्द्र) की (मुख) कान्ति उड़ गई है। चंचल ताराओं (नक्षत्रों) रूपी ताराओं (आंख की पुतलियों, वाली दिशायें रात-रात को आकाश में इधर-उधर जलती (गिरती) उल्काओं से ग्रह-युद्ध-जैसा देख रही हैं। राज्य चले जाने की सूचना देने वाला, उड़ते हुए घने धूलि समूह भरा और पत्थरों की छोटी-छोटी कंकड़ियों के साथ-साथ सांय-सांय करता हुआ मारुत मानो पृथिवी को कहीं ले जा रहा है। समय कल्याण का-सा नहीं दीख रहा। वंश (बांस) में मृदु होते हुए भी वंशांकुर को तोड़ देने वाले हाथी की तरह हमारे इस वंश (कुल) में सुकुमार होते हुए भी वंशांकुर (कुलबीजांकुर) को विनष्ट कर देने वाले दैव को कौन रोकने वाला है? भाई साहब का सर्वथा कल्याण हो।' यह सोचकर, भीतर से विदीर्ण भ्रातृस्नेह से भयभीत और दौड़-भागते हुए जैसे हृदय को रोककर तथा (शय्या से) उठकर हर्षवर्धन ने सारे काम किए जैसे कि नित्य किए जाते थे'।

आस्थानगतश्च सहसैव प्रविशन्तम्, अनुप्रविशता विषण्णवदनेन लोकेनानुगम्यमानम्, असह्यदुःखोष्णनिश्वासधूमरक्ततन्तुनेव मलिनेन पटेन प्रावृतवपुषम्, जीवितधारणलज्जयेवावनतमुखम्, नासावंशस्याग्रे ग्रथितदृष्टिम्, दुःखदूरप्ररूढरोम्णा मूकेनापि मुखेन स्वामिव्यसनमविच्छिन्नैरश्रुबिन्दुभिर्विज्ञापयन्तं कुन्तलं नाम बृहदश्ववारम्, राज्यवर्धनस्य प्रसादभूमिमभिजात[1]तमं ददर्श। दृष्ट्वा च जाताशङ्कश्चक्षुषि सलिलेन, मुखशशिनि श्वसितेन, हृदये हुताशनेन, उत्सङ्गे भुवा, दारुणाप्रियश्रवणसमये सममिव सर्वाङ्गेष्वगृह्यत लोकपालैः। तस्माच्च हेलानिर्जितमालवानीकमपि गौडाधिपेन मिथ्योपचितविश्वासं मुक्तशस्त्रमेकाकिनं विश्रब्धं स्वभवन एव भ्रातरं व्यापादितमश्रौषीत्।

---

टीका-आस्थाने=सभामण्डपे आगतश्च सहसा=अकस्मात् एव प्रविशन्तम्=प्रवेश कुर्वन्तम् अभिजाततमं ददर्श इत्यन्वयः, कथंभूतं तम् अनुप्रविशता=तमनुप्रवेशं कुर्वता विषण्णं=शोकाकुलं वदनं=मुखं यस्य तेन लोकेन-लोकैः जनैरित्यर्थः अनुगम्यमानम्, अनुस्रियमाणम् असह्यं=सोढुमशक्यं यद् दुःखं तेन उष्णाः=तप्ताः ये निश्वासाः=निःश्वसितानि तेषां धूमेन रक्ताः=रञ्जिताः तन्तवः=सूत्राणि यस्य तेन इवेत्युत्प्रेक्षायां मलिनेन=धूम्रेण पटेन वस्त्रेण प्रावृतम्=आच्छादितं वपुः=शरीरं यस्य तम् जीवितस्य=जीवनस्य प्राणानामिति यावत् धारणेन रक्षणेन या लज्जा=त्रपा तया इवेत्युत्प्रेक्षायाम् अवनतः=नीचैः प्रणतं मुखं यस्य तम्, नासावंशस्य=नासादण्डस्य नासिकास्थ्नः इति यावत् अग्रे=अग्रभागे ग्रथिता=बद्धेत्यर्थः दृष्टिः=नयनं यस्य तम् दुःखेन=दुःखकारणात् दूरम्=अत्यर्थं यथास्यात्तथा प्ररूढानि=जातानि रोमाणि यस्मिन् तेन, शोके तेन क्षौरं न कृतमासीत्, मूकेन=तूष्णींभूतेन मुखेन अविच्छिन्नैः=अविरतैः अश्रूणां बिन्दुभिः स्वामिनः=भर्तुः राज्यवर्धनस्येत्यर्थः व्यसनं=विनाशं विज्ञापयन्तं=सूचयन्तं बृहन्तं=महान्तं अश्ववारम्=अश्वारोहिणं अश्वसैन्याधिकारिविशेषमित्यर्थः प्रसादानाम्=अनुग्रहाणां भूमिम्=स्थानं पात्रमिति यावत् अतिशयेन अभिजातः=कुलीनः तम् ददर्श=दृष्टवान्। दृष्ट्वा=अवलोक्य च जाता शङ्का=भयं यस्य स चक्षुषि नयने सलिलेन अश्रुजलेनेत्यर्थः मुखं शशी इवेत्युपमिततत्पु० तस्मिन् श्वसितेन=निश्वासेन वायुनेत्यर्थः हृदये हुताशनेन=अग्निना संतापेनेत्यर्थः उत्सङ्गे=क्रोडे देहे इति यावत् भुवा=पृथिव्या, पृथिवी तस्योत्सङ्गे आगता अर्थात् शोके स भूतले पतितवान्, दारुणं=कठोरं यत् अप्रियम्=भ्रातुः मरणरूपम् अप्रियसमाचारमित्यर्थः तस्य श्रवणस्य=आकर्णनस्य समये समम् एव=युगपत् एव सर्वेषु अङ्गेषु=अवयवेषु लोकपालैः=अग्न्यादिभिः दिक्पालैः अगृह्यत=गृहीतोऽभवत्। 'सोमाग्न्यर्कानिलेन्द्राणां वित्ताप्पत्योर्यमस्य च। अष्टानां लोकपालानां वपुर्धारयते नृपः' इत्युक्ताष्टदिक्पालेषु वरुणः वायुः अग्निश्चान्तर्भवन्ति। श्रुत्वैव स चक्षुर्भ्याम् अश्रूणि मुखेन च दीर्घनिश्वासान् मुमोच, हृदि समतप्यत भूतले च न्यपतत् इति भावः। तस्मात्=कुन्तलात् अश्ववारात् हेलया=लीलया अनायासेनैवेत्यर्थः, निर्जितं=पराजितं मालवस्य=मालवराजस्य अनीकं=सैन्यं येन तथाभूतमपि गौडाधिपेन=गौडदेशाधिपतिना मिथ्या=कृत्रिमाः ये उपचाराः=शिष्टाचाराः तैः उपचितः=प्रवृद्धः विश्वासः=प्रत्ययः यस्मिन् तम् मुक्तम्=उत्सृष्टं शस्त्रम्=आयुधं येन तम्, एकाकिनम्=एकलं विस्रब्धं=निःशङ्कं भ्रातरं=राज्यवर्धनम् व्यापादित=हतम् अश्रौषीत्=श्रुतवान्।

हिन्दी-और बैठक में आया हुआ वह अकस्मात् ही प्रवेश करते हुए राज्यवर्धन के कृपापात्र उच्च कुलीन कुन्तलनामक बड़े अश्वारोही (अधिकारी) को देख बैठा—जिसके पीछे-पीछे प्रवेश करते हुए लोग खिन्न मुख हुए आ रहे थे, जो असह्य दुःख के कारण गर्म-गर्म आहों के धुएँ से रंगे हुए तन्तुओं वाले-जैसे मलिन वस्त्र से अपना शरीर ढके हुए था, जो जीवन धारण की लज्जा से-जैसे मुंह नीचे किये हुए था जो नाक की हड्डी के नोक पर आंखें गाड़े हुए था और जो शोक के कारण खूब उगे हुए बालों वाले चुप रहते हुए भी मुख से स्वामी के विनाश की लगातार (बहते हुए) अश्रुबिन्दुओं द्वारा सूचना दे रहा था। देखकर शंकित हुए हर्षवर्धन को दारुण अप्रिय समाचार सुनने के समय आँख में सलिल (जल देवता वरुण) ने मुखचन्द्र में निश्वास (वायु देवता) ने, हृदय में ताप (अग्नि देवता) ने और गोद में पृथिवी देवता ने—एक साथ ही जैसे सभी लोकपालों ने संभाल लिया। उस (कुन्तल) से खेल ही खेल में मालव को पराजित किये हुए, गौड़ नरेश द्वारा नकली आदर सत्कार से अपने विश्वास में लिये हुए, शस्त्र रहित अकेले निशंक हुए भाई को अपने ही घर में मार दिया गया हुआ सुन बैठा।

---

1. 'अभिज्ञात'

श्रुत्वा च महातेजस्वी प्रचण्डकोपपावकप्रसरपरिचीयमानशोकावेगः सहसैव प्रजज्वाल। ततश्चामर्षविधुतशिरःशीर्यमाणशिखामणिशकलाङ्गारकितमिव[1] रोषाग्निमुद्वमन्, अनवरतस्फुरितेन पिबन्निव सर्वतेजस्विनामायूंषि रोषनिर्भुग्नेन दशनच्छदेन, लोहितायमानलोचनालोकविक्षेपैर्दिग्दाहानिव दर्शयन्, रोषानलेनाप्यसह्यसहजशौर्योष्मदहनदह्यमानेनेव वितन्यमानस्वेदसलिलशीकरासारदुर्दिनः, स्वावयवैरप्यदृष्टपूर्वप्रकोपभीतैरिव कम्पमानैरुपेतः, हर इव कृतभैरवाकारः, हरिरिव प्रकटितनरसिंहरूपः, सूर्यकान्तशैल इवापरतेजःप्रसरदर्शनप्रज्वलितः, क्षयदिवस इवोदितद्वादशदिनकरदुर्निरीक्ष्यमूर्तिः, महोत्पात-

टीका—महान् तेजस्वी हर्षः प्रचण्ड०—प्रचण्डः = भीषणः कोपः एव पावकः = अग्निः (रूपकम्) तस्य प्रसरेण = विस्तारेण परिचीयमानः = वर्धमानः शोकस्य = दुःखस्य आवेगः = क्षोभः यस्य स प्रजज्वाल = उद्दीप्तोऽभवत्। ततश्च.................परां भीषणताम् आयासीत् इत्यस्तिवाक्यम्। अमर्ष०—अमर्षेण = क्रोधेन विधुतं = कम्पितं यत् शिरः तस्मात् शीर्यमाणानि = इतस्ततः विकीर्यमाणानि यानि शिखामणीनां = चूडारत्नानां शकलानि = खण्डानि तैः अङ्गारकितम् = अङ्गाराः संजाताः अस्येति (अङ्गार + इतच्) इवेत्युत्प्रेक्षायाम् रोषः = क्रोधः एव अग्निः तम् उद्वमन् = उद्गिरन् अत्र रूपकोत्थापितोत्प्रेक्षा, अनवरत०—अनवरतं = निरन्तरं यथा स्यात्तथा स्फुरितेन = स्पन्दितेन रोषेण = क्रोधेन निर्भुग्नेन = वक्रीकृतेन दशनच्छदेन = ओष्ठेन सर्वे च ते तेजस्विनः = प्रतापिनः तेषाम् आयूंषि = जीवितकालान् पिबन् = पानविषयीकुर्वन् इवेत्युत्प्रेक्षायाम्, किमपि पिबन् मानवः स्वोष्ठं स्पन्दयति किमपि वक्रयति चेति दृश्यते। लोहिता०—लोहितायमाने = रक्तवर्णीभवती ये लोचने = नयने तयोः आलोकस्य = कान्त्याः विक्षेपैः = प्रसारणैः दिग्दाहान् = दिग्दाहरूपोत्पातान् इवेत्युत्प्रेक्षया दर्शयन् = प्रकटयन्, रोषा०—असह्यः = सोढुमशक्यः सहजः = स्वाभाविकः यः शौर्यस्य = वीरत्वस्य उष्मा = तापः अभिमान इति यावत् एव दहनः = अग्निः तेन दह्यमानेन प्लुष्यमाणेन इवेत्युत्प्रेक्षा सा च रूपकोत्थापिता रोषः एव अनलः = अग्निः तेनाऽपि रूपकार्थापत्योः संसृष्टिः वितन्यमानं = विस्तार्यमाणं स्वेदसलिलस्य = घर्मजलस्य शीकराणां = बिन्दूनाम् आसरः = धाराप्रवाहः एव दुर्दिनं = मेघच्छन्नं दिनम् [ 'मेघच्छन्नेह्नि दुर्दिनम्' इत्यमरः ] यस्मिन् सः अत्र रूपकम्, स्वस्य अवयवैः = अङ्गैः अपि न पूर्वं दृष्टः इत्यदृष्टपूर्वं यः प्रकोपः = प्रकृष्टः क्रोधः तेन भीतैः = आतङ्कितैः इवेत्युत्प्रेक्षायां कम्पमानैः = वेपमानैः उपेतः = युक्तः हरः = शिवः इव कृतः = धृतः भैरवस्य एतन्नामकस्य शिवस्य भीषणरूपविशेषस्य आकारः = स्वरूपं येन सः, अन्यत्र भैरवः = भीषणः = भयकरः आकारः मुखाकृतिः येन सः, हरिः = विष्णुः इव प्रकटितः =

टिप्पणी—रोषानले – क्रोध के कारण वह पसीज रहा था। पसीने के बूंद उसके शरीर पर वर्षा के बूंदों की तरह स्थित थे। जब कोई व्यक्ति गर्मी से तप जाता है तो वह शरीर पर पानी की बूंदें डालता है। कवि की कल्पना यह है कि पसीना उसकी क्रोधाग्नि द्वारा अपने शरीर पर डाला हुआ पानी था क्योंकि वह उसके और भी गर्म और असह्य शौर्याग्नि से भयभीत हुई बैठी थी।

हिन्दी—और सुन कर प्रचण्ड क्रोधाग्नि भड़क जाने से बढ़े हुए शोकावेग वाला वह महान् तेजस्वी (हर्षवर्धन) एकदम जल-भुन गया। तदनन्तर क्रोध में हिलाये हुए सिर से बिखर रहे चूड़ामणियों के टुकड़ों के रूप में अंगारों वाली—जैसी बनी हुई क्रोधाग्नि को उगलता हुआ, निरन्तर फड़कते एवं टेढ़े बने ओठ से सभी तेजस्वियों की आयुओं को पीता हुआ—जैसा, लाल-लाल बनती जा रही आंखों की कान्ति के प्रक्षेपों से दिग्दाहों को, जैसे प्रकट करता हुआ, असह्य स्वाभाविक शौर्यमद की अग्नि से जलाये जाते हुए जैसे क्रोधाग्नि द्वारा भी किये जा रहे स्वेदजल-बिन्दुप्रवाह-रूपी वर्षा-दिन से युक्त, पहले कभी न देखे हुए क्रोध से भयभीत-जैसे अपने भी कांपते हुए अंगों वाला, 'भैरव' (का) रूप बनाने वाले महादेव की तरह भैरव (भीषण) रूप बनाए, नरसिंह अवतार रूप प्रकट करने वाले विष्णु की तरह नरसिंह (वीर पुरुष) का रूप प्रकट किये, अपर सूर्य का तेज फैलते देख जल उठने वाले सूर्यकान्त मणिपर्वत की तरह अपर (शत्रु = गौडाधिप) के तेज (शौर्य) को फैलते देख जला हुआ, उदय हुए बारह आदित्यों से न देखे जा सकने वाले प्रलय दिवस के रूप की तरह उदय हुए बारह आदित्यों के समान न देखे जा सकने वाले रूप वाला, सकल भूभृतों (पर्वतों) को कँपा देने वाले महान् उत्पात-रूप मारुत की

१. 'शकलाङ्गारकिताङ्गमिव'

**मारुत इव सकलभूभृत्कम्पकारी, विन्ध्य इव विवर्धमानविग्रहोत्सेधः, महाशीविष इव दुर्नरेन्द्राभिभवरोषितः, पारीक्षित इव सर्वभोगिवहनोद्यतः, वृकोदर इव रिपुरुधिरतृषितः, सुरगज इव प्रतिपक्षवारणप्रधावितः, पूर्वागम इव पौरुषस्य, उन्माद इव मदस्य, आवेग इवावलेपस्य, तारुण्यावतार इव तेजसः, सर्वोद्योग इव दर्पस्य, युगागम इव यौवनोष्मणः, राज्याभिषेक इव रणरसस्य, नीराजनदिवस इवासहिष्णुतायाः, परां भीषणतामयासीत् ।**

---

टीका-प्रदर्शितः नरसिंहस्य=अर्धनरस्य अर्धसिंहस्य च अवतार-विशेषस्य रूपं=स्वरूपं येन सः, अन्यत्र नरेषु सिंहस्येव श्रेष्ठनरस्येत्यर्थः [ 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः' इत्यमरः ] रूपं येन सः अर्थात् येन वीरपुरुषस्याकारः प्रकटितः, सूर्यकान्तानां=सूर्यकान्तमणीनां शैलः=पर्वतः इव अपरस्य=शत्रुभूतस्य गौडेन्द्रस्येत्यर्थः तेजसः=शौर्यस्य प्रसरः=विस्तारः तस्य दर्शनेन=अवलोकनेन प्रज्वलितः=उद्दीप्तः सूर्यकान्तमणिर्हि सूर्यप्रकाशस्याग्रे प्रज्वलतीति प्रसिद्धिः क्षयस्य-कल्पान्तस्य प्रलयस्येति यावत् [ 'क्षयः कल्पान्त इत्यपि' इत्यमरः ] दिवसः=दिनम् इव उदिताः=उदयं गताः ये द्वादशदिनकराः=द्वादशसंख्यकाः सूर्याः तैः अन्यत्र तद्वत् दुर्निरीक्ष्या=दुःखेन निरीक्षितुं योग्या मूर्तिः=आकारो यस्य सः, कल्पान्ते हि युगपदेव द्वादशादित्या उदयन्ते इति शास्त्रेषु प्रतिपाद्यते, महान् उत्पातः=उपद्रवः तद्रूपो मारुतः=वायुः इव सकलाः=सर्वे च ते भूभृतः=पर्वताः अन्यत्र राजानः तेषां कम्पं करोतीति तथोक्तः, विन्ध्यः=एतदाख्यपर्वतविशेषः विवर्धमानेन=वृद्धिं गच्छता विग्रहेण=शरीरेण उत्सेधः=औन्नत्यम् अन्यत्र विवर्धमानः विग्रहस्य=युद्धस्य उत्सेधः=उन्मादः इत्यर्थः यस्य सः, महान् आशीविषः=सर्पः इव दुर्नरेन्द्रस्य=दुष्टस्य अनभिज्ञस्येति यावत् नरेन्द्रस्य=विषवैद्यस्य ['नरेन्द्रस्तु महीपाले विषवैद्ये च पुंस्ययम्' इति मेदिनी] अन्यत्र दुर्नरेन्द्रस्य=दुष्टभूपस्य गौडाधिपतेरित्यर्थः अत्र कर्तरि षष्ठी तत्कर्तृक इति यावत् यः अभिभवः=पराभवः अपमानः इत्यर्थः तेन रोषितः=कोपं प्रापितः, पारीक्षितः=परीक्षितस्य अपत्यं पुमान् अर्थात् जनमेजयः इव सर्वे च ते भोगिनः=सर्पाः अन्यत्र नृपाः [ 'भोगी भुजंगमेऽपि स्याद्ग्रासपात्रे नृपे पुमान्' इति मेदिनी ] तेषां दहने=भस्मीकरणे

**टिप्पणी—विन्ध्य**—रामायण और महाभारत में कथा आती है कि विन्ध्याचल ने चाहा कि सूर्य मेरु की तरह उनके इर्द-गिर्द घूमा करे। सूर्य ने स्वीकार नहीं किया। इस पर क्रुद्ध हुआ वह सूर्य का मार्ग रोक देने के लिए बढ़ता-बढ़ता गया। देवता लोग घबरा गए। उन्होंने अगस्त्य से प्रार्थना की कि वे उनकी सहायता करें। अगस्त्य विन्ध्य के पास गए। शिष्य होने के कारण विन्ध्य ने झुककर उन्हें प्रणाम किया। अगस्त्य बोले—मुझे दक्षिण को जाना है, मुझे रास्ता दो और जब तक मैं वापस नहीं आ जाता, तब तक झुके ही रहो। न अगस्त्य आये और न विन्ध्य ने सिर ऊपर किया।

**पारीक्षित**—अर्जुन के पौत्र राजा परीक्षित को साँप काट गया था उसके पुत्र जनमेजय ने प्रतिज्ञा की कि वह सारी सर्प जाति का नाश किये बिना चैन नहीं लेगा। उसने सर्पसत्र प्रारम्भ कर दिया जिसमें सभी सर्प भस्म हो गए। केवल तक्षक ही रह गया था जिसकी रक्षा मुनि आस्तीक ने की। आस्तीक की प्रार्थना पर यज्ञ समाप्त कर दिया गया। **वृकोदर**—कौरवों की भरी सभा में दुःशासन जब द्रौपदी को केशों से खींच कर लाया तभी भीम ने यह प्रतिज्ञा कर दी थी कि वह उसका रुधिर-पान करेगा उसके रुधिर से ही द्रौपदी के केश सँवारेगा। उसने ऐसा ही किया।

**हिन्दी**—तरह सकल भूभृतों ( राजाओं ) को कँपा देने वाला, बढ़ते जा रहे विग्रह ( शरीर ) के उत्सेध ( ऊँचाई ) वाले विन्ध्याचल की तरह बढ़ता जा रहा विग्रह ( युद्ध ) का उत्सेध उन्माद वाला, दुर्नरेन्द्र ( कच्चे विषवैद्य ) द्वारा किये गए अपमान से क्रुद्ध हुए सांप की तरह दुर्नरेन्द्र ( दुष्ट राजा=गौडाधिप ) द्वारा किये अपमान से आग-बबूला हुआ, सभी भोगियों ( सर्पों ) को जला देने के लिए उद्यत हुए जनमेजय की तरह सभी भोगियों (राजाओं) को जला देने को उद्यत शत्रु ( दुःशासन ) के रुधिर के प्यासे भीमसेन की तरह शत्रु ( गौडाधिप ) के रुधिर का प्यासा, प्रतिद्वन्द्वी वारण ( हाथी ) के विरुद्ध आक्रमण किए हुए ऐरावत की तरह प्रतिद्वन्द्वी ( गौडाधिप ) के वारण ( मार भगाने ) के लिए प्रस्थित, पराक्रम का प्रथम अवतार-जैसा, तेज का यौवनावतार-जैसा, दर्प का सकल प्रयत्न-जैसा यौवन की गर्मी का युगारम्भ-जैसा, युद्धानुराग का राज्याभिषेक-जैसा और असहिष्णुता का नीराजना-दिवस-जैसा हर्षवर्धन बड़ा भयंकर हो उठा।

अवादीच्च। 'गौडाधिपाधममपहाय करताहशं महापुरुषं तत्क्षण एव निर्व्याजभुजवीर्यनिर्जितसमस्तराजकं मुक्तशस्त्रं कलशयोनिमिव कृष्णवर्त्मप्रसूतिरीदृशेन सर्ववीरलोकविगर्हितेन मृत्युना शमयेदार्यम्। अन्यायं च तं मुक्त्वा भागीरथीफेन-पटलपाण्डुराः केषां मनःसु सरःसु राजहंसा इव परशुरामपराक्रमस्मृतिकृतो न कुर्युरार्यशौर्यगुणाः पक्षपातम्। कथमिवात्मप्र-

टीका—अन्यत्र विनाशने उद्यतः=सन्नद्धः, वृकोदरः=भीमसेनः इव रिपोः शत्रोः दुःशासनस्य अन्यत्र गौडाधिदतेः रुधिराय= रुधिरपानाय अन्यत्र वधाय तृषितः=पिपासितः अन्यत्र कृताभिलाषः सुरगजः=ऐरावतः इव प्रतिपक्षश्चासौ वारणः= प्रतिद्वन्द्वी हस्ती तस्मिन् प्रधावितः=प्रद्रुतः कृताक्रमणः इत्यर्थः अन्यत्र प्रतिपक्षस्य=शत्रोः गौडेन्द्रस्य वारणाय=निरस-नाय प्रतिघातायेति यावत् प्रधावितः=प्रचलितः, उपरि सर्वत्र श्लिष्टोपमा सा च मालारूपा, पौरुषस्य=शौर्यस्येत्यर्थः पूर्वः=प्रथमः आगमः=आगमनम् प्रथमागतः साकारः=पराक्रमः; इवेति भावः मदस्य उत्सेकस्य दर्पस्येति यावत् उन्मादः=उन्मत्तता इव, अवलेपस्य=गर्वस्य आवेगः=क्षोभः इव तेजसः=प्रतापस्य तारुण्यस्य=यौवनस्य अवतारः आविर्भावः इव, दर्पस्य=अभिमानस्य सर्वोद्योगः सर्वप्रयत्नः इव, यौवनस्य ऊष्मणः=उष्णत्वस्य युगस्य आगमः= आगमनम् युगावतार इवेत्यर्थः रणरसस्य=युद्धानुरागस्य राज्याभिषेकः=राजपदे आरोपणमित्यर्थः असहिष्णुतायाः= असहनशीलतायाः, नीराजनस्य=आरात्रिकस्य दिवसः इव नीराजन—दिने हि राजा अभिमानं करोति, अर्थात् असहिष्णुतायाः सः अभिमानदिवसः आसीत्, असहिष्णुता तस्माद् दिवसात् तस्य हृदये जजागारेति यावत्, पराम्= अत्यधिकां भीषणतां=प्रचण्डताम् अयासीत्=प्राप्तोऽभवत्।

अवादीत्=अवदत्—अधमं=नीचं गौडाधिपम् अपहाय=वर्जयित्वा निर्व्याजं=व्याजरहितं निष्कपटमिति यावत् यद् भुजयोः वीर्यं=शौर्यं तेन निर्जितम्=पराजितं समस्तं=सकलं राजकं=राजमण्डलं येन तम् मुक्तं=त्यक्तं शस्त्रं

**टिप्पणी—कलशयोनिम्**—द्रोणाचार्य की उत्पत्ति के सम्बन्ध में महाभारत में आया हुआ है कि—'भारद्वाजस्य चस्कन्नं द्रोण्यां शुक्रमवर्धत। महर्षेरुग्रतपसस्तस्माद् द्रोणो व्यजायत'। द्रोणी जलकलश को बोलते हैं। घृताची अप्सरा को देखकर भरद्वाज का शुक्र स्खलित हो गया था जिसे उसने एक द्रोणी में सुरक्षित रख लिया था। उसी से द्रोण हुए। महाभारत युद्ध में भीष्म के बाद द्रोण सेनापत्य सँभालते हैं। पाण्डवों की सेना में प्रलय ढाने लगे तो पाण्डवों ने एक षडयन्त्र रचा। एक अश्वत्थामा नामक गज को मारकर हल्ला मचा बैठे कि 'अश्वत्थामा मारा गया'। अश्वत्थामा द्रोणाचार्य का पुत्र भी था। द्रोणाचार्य को विश्वास नहीं हुआ उसने सत्यवादी युधिष्ठिर को पूछा तो वह भी बोल पड़े 'अश्वत्थामा हतो ब्रह्मन्। नरो वा कुञ्जरोऽथवा' 'कुञ्जरोऽथवा' युधिष्ठिर दबी आवाज में बोला जिसे द्रोणाचार्य न सुन सके। पुत्र-वध के दुःख से उन्हें मूर्छा आ गई हाथ का शस्त्र भी उन्होंने फेंक दिया था। इस बीच धृष्टद्युम्न ने उनका सिर काट दिया।

**परशुराम**—परशुराम शिव से धनुर्विद्या सीख रहे थे, तो एक दिन शिवपुत्र स्कन्द ने अपनी शक्ति (प्रक्षेपास्त्र) से क्रौञ्च पर्वत में छेदकर डाला। उनसे परशुराम खार खा बैठे और उन्होंने भी अपने बाण से उसी पर्वत को छेद दिया। कहते हैं कि इसी छेद से राजहंस मानसरोवर आया-जाया करते हैं। कालिदास ने भी उल्लेख किया है—'प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान् हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम् (मेघ०)। इस छेद से राजहंसों को परशुराम के पराक्रम की याद आ जाया करती है। राज्यवर्धन का पराक्रम भी परशुराम के पराक्रम से कम नहीं था। वह हमें झट अपने समकक्ष परशुराम के पराक्रम की याद दिला देता है। हम उसकी तरफ आकर्षित हो जाते थे। यह पूर्णोपमा है।

**हिन्दी**–और बोला—निष्कपट भुज-वीर्य से सकल राजसमूह को परास्त कर देने वाले, शस्त्र छोड़े हुए द्रोणाचार्य को मार देने वाले कृष्णवर्त्मप्रसूति—पाप-मार्ग के स्रोत—धृष्टद्युम्न की तरह नीच गौडाधिप को छोड़कर कौन निष्कपट भुजवीर्य से सकल राजसमूह को परास्त कर देने वाले शस्त्र त्यागे वैसे—जैसे महापुरुष आर्य को तत्क्षण ही वीरपुरुषों द्वारा निन्दित मृत्यु (प्रकार) से शान्त करे? उस नीच को छोड़कर किनके मनों में आर्य के भागीरथी के फेन-समूह-जैसे श्वेत, और परशुराम के पराक्रम की याद दिला देने वाले शौर्यगुण पक्षपात (अनुराग) उत्पन्न न करें जैसे भागीरथी के फेन-समूह-जैसे श्वेत और परशुराम के पराक्रम की याद करने वाले राजहंस मनः सरोवरों (मानसरोवरों) में पक्षपात

स्यास्यार्यजीवितहरणे निदाघरवेरिव कमलाकरसलिलशोषणेऽनपेक्षितप्रीतयः प्रसृताः कराः । कां नु गतिं गमिष्यति, कां वा योनिं प्रवेक्ष्यति, कस्मिन्वा नरके निपतिष्यति । श्वपाकोऽपि क इवमाचरेत् । नामापि गृह्णतोऽस्य पापकारिणः पापमलेन लिप्यत इव मे जिह्वा । किं वाऽङ्गीकृत्य कार्यमार्यं तेन क्षुद्रेणानुप्रविश्य विगतघृणेन घुणेनेव सकलभुवनाह्लादनचतुरश्चन्दनस्तम्भः क्षयमुपनीतः । नूनं नानेन मूढेन मधुरसास्वादलुब्धेन मध्विवार्यजीवितमाकर्षता भावी दृष्टः[1] कष्टशिलीमुखसम्पातोपद्रवः । निजगृहदूषणं जालमार्गप्रदीपकेन कज्जलमिवातिमलिनं केवलमयशः सञ्चितं[2] गौडाधमेन । न त्वाश्चेवारतमुपगत-

टीका–येन तम्, शस्त्ररहितमित्यर्थः कृष्णवर्त्मा=अग्निः ['अग्निर्वैश्वानरो... । वह्निः शुष्मा कृष्णवर्त्मा' इत्यमरः ] तस्मात् प्रसूतिः=जन्म यस्य स धृष्टद्युम्नः इत्यर्थः यथोक्तं महाभारते 'यं दृष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे । लब्धो द्रोणविनाशाय समिद्धाद् हव्यवाहनात्' ॥ [ द्रोणप० ११९।२ ] अपि च कृष्णवर्त्मनः=पापमार्गस्य प्रसूतिः स्रोतः इत्यर्थः एषोऽयं धृष्टद्युम्नः गौडाधिपश्चेत्युभयस्मिन् युज्यते छद्मना एव द्वाभ्यां द्रोणाचार्यस्य राज्यवर्धनस्य च मारितत्वात् ईदृशेन=सर्वश्चासौ वीरलोकः=वीरपुरुषः तैः विगर्हितेन=निन्दितेन मृत्युना=छद्ममृत्युप्रकारेणेत्यर्थः आर्यम्=अग्रजं शमयेत्=शान्तं कुर्यात् समापयेदित्यर्थः न कोऽपीति काकुः अनार्यं=नीचं च तं=गौडाधिपं मुक्त्वा=वर्जयित्वा... केषां मनःसु आर्यशौर्यगुणाः पक्षपातं न कुर्युः इत्यस्ति वाक्यम्, भागीरथ्याः गङ्गायाः फेन-पटलवत्=फेनसमूहवत् पाण्डुराः=श्वेताः राजहंसानां गुणानाञ्च समानं विशेषणं, कविजगति गुणानां श्वेतत्वेन वर्णनात्, परशुरामस्य स्मरन्तीत्यर्थः ( हंसपक्षे ) कुर्वन्ति=कारयन्तीत्यर्थः [ अन्तर्भावितणिः गुणपक्षे ] तयोक्ताः मनःसु सरःसु=मानस-सरोवरेषु राजहंसाः [ 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः ] इवेत्युपमायाम् केषां=जनानां मनःसु=हृदयेषु आर्यस्य=अग्रजस्य पतत्त्राणां पातम्=पा नं सञ्चालनमिति यावत् ( हंसपक्षे ) पक्षपातम्=अनुरागम् आकर्षणमिति यावत् ( गुणपक्षे ) न कुर्युः=विदधीरन् ? अपि तु सर्वेषामेव कुर्युरिति काकुः । उग्रस्य=दारुणस्य अन्यत्र तीव्रस्य अस्य=गौडाधिपस्य आर्यस्य=अग्रजस्य जीवितस्य=प्र णानां हरणे=अपहरणे मारणे इत्यर्थः निदाघस्य=ग्रीष्मर्तोः रवेः=सूर्यस्य इव कमलाकरस्य=कमलसरोवरस्य सलिलस्य=जलस्य शोषणे=शुष्कीकरणे न अपेक्षिता=गणिता आदृता इत्यर्थः प्रीतिः=स्नेहः मैत्रीति यावत् अन्यत्र प्रीतिः=प्रसन्नता विकासः इति यावत् यैः तथाभूताः कराः=हस्ताः अन्यत्र किरणाः प्रसृताः=प्रवृत्ताः । अत्र श्लेषोपमा, राज्यवर्धनस्य कमलाकरेण जीवितस्य च सलिलेन तुलना कृतास्ति । गतिं=मृत्योः अनन्तरम् दशाम्, गमिष्यति=प्राप्स्यति ? योनिं=मरणानन्तरं पापपुण्यफलरूपेण प्राप्तव्यं पशुपक्षि-कीटमनुष्यादिरूपं प्रवेक्ष्यति=प्रविष्टो भविष्यति ? नरके=रौरवादौ, श्वपाकः=शुनां पाकः कार्यत्वेन यस्य चण्डालः इत्यर्थः अपि इदं विश्वासघातपूर्वकवधम् आचरेत्=कुर्यात् ? पापकारिणः=पापकर्मकर्तुः पापम् एव मलं तेन लिप्यते लिप्तो भवति । किं वा कार्यं=प्रयोजनम् अङ्गीकृत्य=स्वीकृत्य किमुद्दिश्येत्यर्थः निर्दयेनेत्यर्थः घुणेन=सूक्ष्मकीटविशेषेण इवेत्युपमायां तेन क्षुद्रेण=नीचेन गौडाधिपेनेत्यर्थः अनुप्रविश्य=काष्ठस्याभ्यन्तरे गत्वा अन्यत्र छद्मसत्कारादिना हृदये प्रवेशं लब्ध्वा विश्वासेति यावत् सकलानि यानि भुवनानि जगन्ति तेषां आह्लादने=प्रसन्नीकरणे चतुरः = निपुणः चन्दनस्य

हिन्दी–(पंखों की फड़फड़ाहट) किया करते हैं ? प्रीति (कमलों की प्रसन्नता अर्थात् विकास) की ओर न ध्यान दिये हुए, कमल सरोवरों का जल सुखाने में प्रवृत्त हुए ग्रीष्म ऋतु के प्रचण्ड सूर्य के करों (किरणों) की तरह किस तरह प्रीति (मैत्री) की ओर ध्यान न दिये हुए उस दारुण (गौडाधिप) के कर (हाथ) आर्य के प्राण हरने में प्रवृत्त हुए ? वह किस गति को प्राप्त होगा ? अथवा किस योनि में प्रवेश करेगा ? अथवा किस नरक में पड़ेगा ? कौन चाण्डाल भी यह करे ? इस पापी का नाम लेने भी पाप के मल से मेरी जिह्वा लिप्त-जैसी हो जाती है । अथवा क्या उद्देश्य रखकर उस क्षुद्र ने निर्दय हो क्षुद्र घुन की तरह भीतर प्रवेश करके सकल भुवनों को आनन्द देने में निपुण आर्य-रूपी चन्दन-स्तम्भ को विनाश किया । निश्चय है कि इस मूर्ख शहद के रस के लोभी ने शहद की तरह आर्य के प्राणों को निकालते हुए यह नहीं देखा कि भविष्य में किस तरह कष्टदायक शिलीमुखों (भ्रमरों, बाणों) के आ पड़ने की विपत्ति आएगी । अपने घर का दूषण (बिगाड़ देने वाला), बहुत काला कज्जल इकट्ठा करने वाले जाल-मार्ग (खिड़की के मार्ग पर) के प्रदीपक (दिये) की तरह जालमार्ग [कपट-प्रकार] के प्रदीपक [प्रकाशक] अधम गौड ने निज गृह (कुल) का दूषण (कलंक)

१. 'दृष्टः शिली०' २. सञ्चितं नत्वाश्चेवास्त'

वत्यपि त्रिभुवनचूडामणौ सवितरि वेधसादिष्टः सत्पथशत्रोरन्धकारस्य निग्रहाय ग्रहपण्डविहारैकहरिणाधिपः शशी। विनयविधायिनि भग्नेऽपि चाङ्कुशे विद्यत एव व्यालवारणस्य विनयाय सकलमत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुरः खरतरः केसरिनखरः। तादृशाः कुवैकटिका इव तेजस्विरत्नविनाशकाः कस्य न वध्याः। क्वेदानीं यास्यति दुर्बुद्धिः।'

टीका—स्तम्भः = स्थूणा क्षयं = नाशम् उपनीतः प्रापितः। अत्र राज्यवर्धने चन्दनस्तम्भारोपात् रूपकम् तच्च घुणेनेवेत्युपमया संसृष्टम्। नूनं = निश्चयेन मधुनः = क्षौद्रस्य यः रसः मधुररस इत्यर्थः तस्य आस्वादे = आस्वादने लुब्धेन = लोलुपेन अनेन मूढेन = मूर्खेण गौडाधिपेन मधु = क्षौद्रम् इवेत्युपमायाम् आर्यस्य = अग्रजस्य जीवितं = प्राणान् आकर्षता गृह्णतेत्यर्थः भावी = भविष्यन् आपतिष्यन्निति यावत् कष्टाः = कष्टकराः ये शिलीमुखाः = भ्रमराः अन्यत्र बाणाः [ 'अलिबाणौ शिलीमुखौ' इत्यमरः ] तेषां सम्पातः = उपरि पतनम् एव उपद्रवः = विपत्तिः न दृष्टः = अवलोकितः विचारितः इत्यर्थः। निजस्य गृहस्य = भवनस्य अन्यत्र कुलस्य दूषणं = मलिनीकारकम् अन्यत्र कलङ्कम् अतिमलिनं कज्जलम् = दीपस्य मलः मसीति यावत् इव जालस्य = गवाक्षस्य मार्गे = पथि स्थाने इत्यर्थः जालं = कपटं तस्य मार्गस्य प्रदीपयति = प्रकाशयतीति तथोक्तः तेन कूटमार्गप्रदर्शकेनेत्यर्थः = गौडाधमेन = गौडेषु अधमेन नीचगौडाधिपेनेत्यर्थः केवलम् अतिमलिनम् अयशः = अकीर्तिः सञ्चितं सङ्गृहीतम्, अत्र श्लिष्टोपमा। न तु आशु = शीघ्रं एव त्रिभुवनस्य = लोकत्रयस्य चूडामणौ = शिरोरत्ने सवितरि = सूर्ये अस्तम् उपगतवति = अस्तमिते अपि सत्पथस्य = सन् विद्यमानः यः पन्थाः = मार्गः तस्य शत्रोः वैरिणः दर्शनरोधकस्येत्यर्थः अन्धकारस्य = तमसः निग्रहाय = दमनाय निराकरणायेति यावत् ग्रहाणां = मङ्गलादिज्योतिष्पिण्डानां षण्डे = समूहे [ 'अब्जादि कदम्बे षण्डमस्त्रियाम्' इत्यमरः ] यः विहारः = विहरणं सञ्चरणमिति यावत तस्मिन् एकः = केवलः हरिणानां = मृगाणाम् अधिपः = अधिपतिः सिंहः इत्यर्थः शशी = चन्द्रः वेधसा विधिना आदिष्टः = आज्ञप्तः किम् ? अपि तु आदिष्टः इति काकुः। विनयं = नम्रतां अनुशासनमित्यर्थः विदधाति = जनयति शिक्षयतीत्यर्थः तथोक्तः तस्मिन् अङ्कुशे = सृणौ भग्ने = त्रुटिते अपि व्यालः = शठः [ 'भेद्यलिङ्गः शठे व्यालः' इत्यमरः ] अविनीतः उद्दण्डः इति यावत् यः वारणः = हस्ती तस्य विनयाय = दमनाय अनुशासनायेत्यर्थः सकलाः = समग्राश्च ते मत्ताः = मदमत्ताः उद्दण्डाः ये मातङ्गाः = गजाः तेषां कुम्भस्थलानि = गण्डस्थलानि स्थिराः = दृढाः कठिनाः इति यावत् शिरोभागश्च तेषां भिदुरः = भिनत्ति = विदारयतीति (√भिद् + कुरच कर्तरि) भेदकः अतिशयेन खरः = तीक्ष्णः इति खरतरः निशिततरः इत्यर्थः केसरिणः = सिंहस्य नखरः = नखः विद्यते = अस्ति एव। अत्र 'सवितरि' 'अङ्कुशे' इत्येताभ्यां राज्यवर्धनस्य 'शशी' 'केसरिनखरः'

**टिप्पणी—वेधसादिष्टः शशी**—कवि यहाँ अन्योक्ति का प्रयोग कर रहा है। शब्दों में कहीं श्लेष रखकर कहीं बिना श्लेष के प्रस्तुत राज्यवर्धन और हर्षवर्धन की ओर संकेत कर रहा है। सूर्य के अस्त होने का अर्थ व्यंजना से सूर्य सदृश तेजस्वी राज्यवर्धन का दिवंगत होना, सत्पथ का दूसरा अर्थ सदाचार का मार्ग है जिसके विरुद्ध चलने वाला अन्धकार गौडाधिप है, शशी यहाँ हर्षवर्धन है जो अन्धकार को मिटाएगा, वह सिंह है जो ग्रहगणों के मध्य विचरण करने वाले शशी की तरह वनों में विचरा करता है, शशी भी हरिणाधिप है क्योंकि उसके भीतर कलंक के रूप में हरिण रहता है, शशी रूप हर्षवर्धन भी ग्रह-दमन के योग्य पंडों-सांडों ( गौडों ) के बीच निःशंक हो युद्ध में सिंह की तरह विचरण करने वाला एवं उन्हें समाप्त कर देने वाला है।

**हिन्दी**—अति मलिन अयश ही बटोरा है। किन्तु तीनों लोकों के चूड़ामणि सूर्य ( राज्यवर्धन ), के अस्त हो जाने पर भी सन्मार्ग के शत्रुभूत अन्धकार (गौडाधिप) के दमन के लिए क्या शीघ्र ही ब्रह्मा ग्रहगणों के मध्य विचरण करने वाले सिंह चन्द्रमा (हर्षवर्धन) को आज्ञा नहीं देता ? विनय की सीख देने वाले अंकुश (राज्यवर्धन) के टूट जाने पर भी उद्दण्ड गज (गौडाधिप) को सीख देने के लिए सकल मदमत्त गजों के कुम्भस्थलों और दृढ़ मस्तक भागों को फाड़ देने वाला सिंह का खून से पैना पंजा ( हर्षवर्धन ) तो है ही। तेजस्वी ( दीप्तिशीर्ष ) रत्नों का नाश कर देनेवाले अधम जौहरियों की तरह तेजस्वी ( प्रतापी ) नरश्रेष्ठ को विनाश कर देने वाले वैसे जैसे ( गौड़ाधिप-जैसे ) किसके मध्य नहीं हैं ? वह दुर्बुद्धि अब कहां जाएगा ? इस प्रकार हर्षवर्धन के कहते ही पास में ही बैठा हुआ,

१. 'वेधसादिसृष्टः'

इत्येतदभिदधत एवास्य पितुरपि मित्रं सेनापतिः समग्रविग्रहप्राग्रहरो हरितालशैलावदातदेहः, परिणतप्रगुणसालप्रकाण्डप्रकाशः, प्रांशुरतिशौर्योष्मणेव परिपाकमागतो गतभूयिष्ठे वयसि वर्तमानः, बहुशरशयनसुप्तोत्थितोऽपि हसन्निव शान्तनवमतिदीर्घेणायुषा, दुरभिभवशरीरतया जरयापि भीतभीतयेव प्रकटितप्रकम्पया परामृष्टः कथमपि सारमयेषु शिरोरुहेषु, शशिकरनिकरसितसरल-शिरोरुहसटालः[1] सैंहीमिव निष्कपटपराक्रमरसरचितां संक्रान्तो जीवन्नेव जातिम्, अपरस्वामिमुखदर्शनमहापातकपरिजिहीर्षयेव

टीका–इत्येताभ्यां च हर्षवर्धनस्य व्यज्यमानत्वात् अप्रस्तुतात् प्रस्तुतस्य व्यञ्जनारूपः अप्रस्तुतप्रशंसालङ्कारः। तादृशाः गौडाधिपसदृशाः कुत्सिताः वैकटिकाः=मणिकाराः [मणिकारो वैकटिकः' इति क्षीरस्वामी] मूर्खरत्नबन्धकाः इत्यर्थः तेजस्वीनि=दीप्तिमन्ति यानि रत्नानि=मणयः अन्यत्र स्वजातिश्रेष्ठपुरुषाः ['रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः] तेषां विनाशकाः= विध्वंसकाः कस्य न वध्याः = मारणीयाः अपितु सर्वेषां वध्या इति काकुः सा च श्लिष्टोपमया संसृष्टा। दुष्टा बुद्धिः=मतिः यस्य तथाभूतः क्व=कुत्र इदानीं यास्यति=गमिष्यति? इति एतत् अभिदधतः कथयतः एव अस्य (हर्षवर्धनस्य) पितुरपि मित्रं सेनापतिः······सिंहनादनामा विज्ञापितवान् इत्यस्ति वाक्यम्। समग्र०—समग्राः=समस्ताः ये विग्रहाः=संगमाः तेषां प्राग्रम्=प्रकृष्टम् अग्रभागं हरतीति तथोक्तम् अग्रसरमित्यर्थः, हरि०—हरितालम्=पीतनम्=पीतवर्णखनिजविशेषः तस्य शैलवत्=पर्वतवत् अवदातः=दीप्यमानः देहः शरीरं यस्य सः, परिणत०—परिणतः=पूर्णप्रवृद्धः प्रगुणः=अनरालः ऋजुरितियावत् यः सालः=एतदाख्य वृक्षविशेषः तस्य यत् प्रकाण्डं=स्कन्धः तद्वत् प्रकाशते राजते इति तथोक्तः प्रांशु०—प्रांशुः=उन्नतकायः अतिशयित=अत्यधिकः यः शौर्यस्य=पराक्रमस्य ऊष्मा=उष्णता तेन इवेत्युत्प्रेक्षायां परिपाकं=परिपक्वावस्थाम् आगतः=प्राप्तः ऊष्मा हि कमपि पदार्थं परिपाकं नयतीति दृश्यते, गतं=व्यतीतं भूयिष्ठं=अधिकतमो भागो यस्य तस्मिन् वयसि=जीवनकाले वर्तमानः=स्थितः, बहु०—बहवः=अनेके शराः=युद्धे शत्रुभिः प्रहिताः बाणाः तैः तेषां प्रहारैरित्यर्थः शयनम्=भूमौपतनम् ते आदौ सुप्तः=मूर्छितः पश्चाच्च उत्थितः=विगतमूर्छः सन् पुनः युद्धार्थं समुत्थितः अपि अति दीर्घेण आयुषा शान्तनवम्=शन्तनोः अपत्यं पुमान् शान्तनवः भीष्मः इत्यर्थः तं हसन्=उपहासास्पदीकुर्वन् इव भीष्मोऽपि महाभारत युद्धे 'बहुशरशयने' सुप्तः किन्त्वसौ सिंहनादसेनापतिवत् पश्चात् नोत्थितः अतस्तदपेक्षया सेनापतौ आधिक्य-प्रतिपादनात् व्यतिरेकालङ्कारः तदुत्थापिता चोत्प्रेक्षा, दुरभि०—दुरभिभवं=दुःखेन अभिभवितुं योग्यं शरीरं यस्य तस्य भावः तत्ता तया जरया=वृद्धावस्थया अपि अतिशयेन भीता इति भीतभीता तया इवेत्युत्प्रेक्षायां प्रकटितः=तस्मिन् प्रादुर्भावितः प्रकम्पः=वेपनं यया अथ च प्रकटितः=प्रादुर्भूतः प्रकम्पो यस्यां तथाभूतया कथमपि=कृच्छ्रात्

**टिप्पणी**—भीष्म शन्तनु और गंगा के पुत्र और पाण्डवों के दादा थे। वे आजीवन ब्रह्मचारी ही रहे। महाभारत युद्ध प्रारम्भ में उन्हीं के सेनापतित्व में हुआ। अर्जुन ने उनपर ऐसी बाण-वर्षा की कि वे बाणों पर ही लेट गए। छः महीने तक वे शरशय्या पर पड़े रहे और उत्तररायण होने पर ही उन्होंने प्राण छोड़े।

**प्रकटितप्रकम्पया**—वृद्धावस्था के कारण उसके अंग काँप रहे थे, परन्तु कवि कल्पना यह है कि वह नहीं काँप रहा था प्रत्युत उसका शरीर छूने से डरी हुई मानो वृद्धावस्था ही काँप रही थी [प्रकटित प्रकम्पः यस्याम्] क्योंकि जो डरता है, वही काँपता है।

**हिन्दी**-उसके पिता का भी मित्र सिंहनाद नामक सेनापति जो सभी युद्धों में आगे-आगे रहने वाला था, जिसकी देह हरताल के पर्वत की तरह चमकीली थी, जो पूरे बढ़े हुए सीधे गए साल वृक्ष के तने के समान चमक रहा था, जो कद का ऊँचा अत्यधिक शौर्य की गर्मी से—जैसे परिपक्व हुआ, अधिक बीती हुई वयोवस्था का था, जो (युद्ध में) बहुत से बाणों (के प्रहारों) से गिर कर सोया (मूर्छित) हुआ भी फिर (लड़ने के लिए) उठा हुआ अपनी अतिदीर्घ आयु से मानों भीष्मपितामह का उपहास कर रहा था, जिसे शरीर दुर्जेय होने के कारण डरी-डरी हुई-सी, प्रकम्प प्रकट किये हुए वृद्धावस्था भी कठिनाई के साथ दृढ़ बालों में छुए हुए थी जो चन्द्रमा के किरण-समूह के समान श्वेत और दृढ़ बालों से सटायुक्त हुआ ऐसा लग रहा था मानों जीते ही यथार्थ शौर्यानुराग से निर्मित सिंह की योनि में परिणत हो गया हो। जो दूसरे स्वामी का मुख देखने के महापाप से

1. 'सटालाम्'

भ्रूयुगलेन वलि...  ...स्थगितदृष्टि:, धवलस्थूलगुञ्जापिच्छप्रच्छादितकपोलभागभास्वरेण वमन्निव विक्रम-
कालमकालेऽपि विकाशिकाशकाननविशदं शरदारम्भं भीमेन मुखेन, भृतमपि हृदयस्थितं स्वामिनमिव सितचामरेण वीजयन्ना-
भिलम्बेन कूर्चकलापेन, परिणामेऽपि धौतासिधाराजलपानतृषितैरिव विवृतवदनैर्बृहद्भिर्व्रणविदारैर्विषमितविशालवक्षा:,
निशितशस्त्रटङ्कुकोटिकुट्टितबहुबृहद्व्रणाक्षरपङ्क्तिनिरन्तरतया च सकलसमरविजय[2]पर्वगणनामिव कुर्वन्पूर्वपर्वत इव पादचारी,

टीका—सारमयेषु=दृढेषु शिरोरुहेषु परामृष्ट:=स्पृष्ट:, शशि०—शशिन:=चन्द्रस्य कराणां=किरणानां निकरवत्=
समूहवत् सिता:=श्वेता: सरला:=केशरा: अस्य सन्तीति ( सटा + लच् मतुवर्थे ) सटायुक्त: इत्यर्थ: निष्कपट:=निश्छल:
वास्तविक: इति यावत् य: पराक्रमस्य=शौर्यस्य रस:=अनुराग: तेन रचितां=कृतां सैंहीम्=सिंहस्य इयम् इति सैंही
( सिंह + अण् + ङीप् ) ताम् जातिं=योनिं जीवन् एव=मनुष्यरूपेण वर्तमानोऽपीत्यर्थ: अयं भाव: तस्य दृढा: शिर:-
केशा: सिंहस्य केशरा: इव दृश्यन्ते स्म, अतएव कवि कल्पयति मनुष्ययोनौ स्थितोऽपि स सिंहयोनौ इव परिणत:।
योन्यन्तरप्राप्ति: मरणानन्तरमेव जायते परन्तु स: अमृत्वैव सिंहीभूत:, अपर०—अपर: प्रभाकरवंशीयात् भिन्न: इत्यर्थ:
य: स्वामी=प्रभु: तस्य मुखस्य दर्शनम्=अवलोकनम् एव महापातकम्=महापापं तस्य परिजिहीर्षया=परिहर्तुमि-
च्छया ( परि + √हृ + सन् + अ + टाप् ) इवेत्युत्प्रेक्षायां वलिनम्=वलय: चर्मरेखा अस्य सन्तीति [ वलि + न
मतुवर्थे लोमादि-पामादि-पिच्छादिभ्य: शनेलच: पा० ५।२।१०० 'लोमश: । पामन: पिच्छल:' सि० कौ० ] च शिथिलं=
श्लथं च प्रलम्बं चर्म यस्य तथाभूतश्चेति तेन भ्रुवो: युगलेन द्वयेन स्थगिता=अन्तरिता दृष्टि:=नयनं यस्य स:, धवल०—
धवला=श्वेता स्थूला च या गुञ्जा='उत्तरोष्ठोपरि रोमराजि:' इति शङ्कर: पिच्छम्=वर्हम् इवेत्युपमिततत्पु०
तेन प्रच्छादित:=अन्तरित: आवृत: इति यावत् य: कपोलयो:=गण्डयो: भाग:=स्थलमित्यर्थ: तेन भास्वरेण द्योतमानेन
भीमेन=भयंकरेण मुखेन अकाले=असमये अपि विक्रमकालं=शौर्यसमयं, शरदि हि राजानो शत्रुषु आक्रमणं कृत्वा विक्रमं
दर्शयन्ति, विकाशि=विकस्वरं विकसितमित्यर्थ: यत् काशस्य=एतदाख्य-घासविशेषस्य काननं=वनं तेन विशदं=
श्वेतवर्णं शरद:=शरदृतो: आरम्भं=प्रारम्भं वमन्=उद्गिरन् इवेत्युत्प्रेक्षायाम्, नाभि=नाभिपर्यन्तं ( अध्वनोऽ-

टिप्पणी - शरदारम्भम् अपनी श्वेत मूछों से वह असमय में भी अभियान काल—शरत्समय—बना रहा था, वैसे
शरद् तो आश्विन-कार्तिक में ही आती है जब काश खिला रहता है किन्तु उसकी मूछें सभी ऋतुओं में रहती थी,
अत: वह उसे आक्रमण काल शरद् को ग्रीष्म-वसन्त आदि में भी बना देता था। शब्दशक्ति से यहाँ विक्रमकाल का
दूसरा अर्थ विक्रम संवत् लिया जाता है जो चैत्र से आरम्भ हुआ करता है, किन्तु शरदारम्भ विक्रमकाल लिखकर कवि
'अकालेऽपि' विक्रमसंवत् बता रहा है। यह व्यङ्ग्यार्थ है। जिसे शब्दों में श्लेष रखकर कवि ने अभिव्यक्त किया है।

पूर्वपर्वत— पर्वत पर्ववान् हुआ करता है। पर्व अमावस्या, पूर्णिमा और संक्रान्ति आदि को बोलते हैं।
कॉवल का कहना है कि ग्रह नक्षत्रों के उदयों की गणना के लिये ज्योतिषी लोग पूर्वपर्वत को ही काम में लाते थे।
सिंहनाद सेनापति का विशाल वक्ष:स्थल उस विशाल शिला-तल की तरह था जिस पर अक्षर पंक्तियाँ अंकित की
जाती थीं। ये शिलालेख कहे जाते हैं।

हिन्दी—बचने की इच्छा से - जैसे झुर्रियों वाले ढीले-ढाले और लंबी लटकती चमड़ी वाले भ्रू युगल से ( अपनी )
आँखों को ढके हुए था, जो सफेद और बड़े-बड़े मूछों से ढके हुए कपोल भाग से चमकते हुए भयंकर मुख से
असमय में भी शौर्य-समय-विकसित हुए काशवन को सफेद बने शरदारम्भ—को उगल--जैसा रहा था, जो नाभि तक
लटकी दाढ़ी के केश-समूह से स्वर्ग सिधारने पर भी हृदय में विराजमान स्वामी (महाराज) जैसे को चँवर डुला रहा था,
जिसका विशाल वक्ष:स्थल वृद्धावस्था में भी चमचमाती खड्गधार का पानी पीने के लिए प्यासे बने हुए--जैसे मुँह
खोले, बड़े-बड़े फूटे पड़े घावों से ऊबड़-खावड़ बना हुआ था, जो तेज शस्त्रों और कुल्हाड़ों की नोकों द्वारा खुदी व्रण-
रूपी अक्षर-पंक्तियों से खूब भरे हुए होने के कारण सभी समरों के विजयोत्सवों को गिनता हुआ—जैसा पादचारी
(पैदल चलने वाले) उस पूर्व पर्वत (उदयाचल) के समान था जो तेज शस्त्रों--छेनियों सी नोकों द्वारा खुदी व्रण-
जैसी अक्षरपंक्तियों से खचाखच भरे रहने के कारण सभी पर्वों की गिनती करता है और पादचारी (अत्यन्त पर्वतों के

१. 'वलित' . २. 'पर्वपूर्वपर्वत इव'

**विविधवीररसवृत्तान्तरामणीयकेन महाभारतमपि लघयन्निव, प्रतिपक्षक्षपणार्तिनिर्बन्धेन परशुराममपि शिक्षयन्निव, अब्भ्रमणेनानादरश्रीसमाकर्षणविभ्रमेण मन्दरमपि मन्दयन्निव, वाहिनीनायकमर्यादानुवर्तनेनाम्भोधिमप्यभिभवन्निव, स्थैर्यकार्कश्योन्नतिभिरचलानपि ह्रेपयन्निव, सहजप्रचण्डतेजःप्रसरपरिस्फुरणेन सवितारमपि तृणीकुर्वन्निव, ईश्वरभारोद्वहनघृष्टपृष्ठतया हर-**

---

टीका–स्तनतसंयोगे द्वि०) लम्बेन लम्बमानेन कूर्चस्य = श्मश्रुण: कलापेन = समूहेन मृतम् अपि स्मृतिरूपेण हृदये स्थितं = वर्तमानं स्वामिनं = प्रभुं राज्यवर्धनमित्यर्थः इवेत्युत्प्रेक्षायां सितेन = श्वेतेन चामरेण बालव्यजनेन वीजयन् = वीजितं कुर्वन्, परिणा० परिणामे = परिपाके वृद्धावस्थायामित्यर्थः अपि धौता = प्रक्षालिता शाणे निशितीकृतेत्यर्थः या असेः खड्गस्य धारा = अग्रम् एव धारा = नदी तस्याः जलस्य पानाय तृषितैः = पिपासुभिः, इवेत्युत्प्रेक्षायां विवृतं = न विरोपितम् ( व्रणपक्षे ) अथ उद्घाटितं (तृषितपक्षे) मुखम् = अग्रभागः अन्यत्र वक्त्रं येषां तैः वृहद्भिः = विशालैः व्रणानां = क्षतानां विदारैः = विदारणैः स्फोटनैरित्यर्थः विषमितं = विषमीकृतम् नतोन्नतीकृतमिति यावत् वक्षः = उरः यस्य तम्, अनारोपितव्रणेषु कविः उत्प्रेक्षते यत् ते मुखं व्यादाय असिधाराजलं पिपासन्तीव अर्थात् सेनापतेः वक्षः अद्यापि युद्धेषु खड्गप्रहारान् जिघृक्षति; निशित० निशितैः = तीक्ष्णैः टङ्कानां = कुठाराणां कोटिभिः = अग्रैश्च कुट्टिताः = कृत्ताः बहवः = अनेके वृहन्तः = आयताः व्रणाः = क्षतानि एव अक्षराणां = वर्णानां पङ्क्तयः = श्रेणयः, अन्यत्र निशितशस्त्रसदृशैः टङ्कानां = तक्षिणीनां कोटिभिः कुट्टिताः तष्टाः, मुद्रिताः = उत्कीर्णाः इति यावद् बहु-वृहद्व्रणवत् याः अक्षरपंक्तयः ताभिः निरन्तरः = निरवकाशः व्याप्तः इत्यर्थः तस्य भावः तत्ता तया सकलानि = सर्वाणि च यानि विजयपर्वाणि = विजयोत्सवाः तेषां गणना = संख्यानम् इवेत्युत्प्रेक्षायां कुर्वन् = विदधत् पूर्वपर्वतः = पूर्वदिशायाः गिरिः उदयाचलः इति यावत् पादचारी = पादेषु = प्रत्यन्तपर्वतेषु [ 'पादाः प्रत्यन्तपर्वताः' इत्यमरः ] चरतीति अर्थात् समीपवर्तिपर्वतानां मध्ये वर्तमानः ( पर्वतः ) अथ च पादाभ्यां चरतीति पदातिः इत्यर्थः ( सेनापतिः ) विविध० —विविधाः = नानाप्रकाराः ये वीररसस्य = शौर्यभावनायाः वृत्तान्ताः = वार्ताः तेषां रामणीयकेन = रमणीयतया महाभारतम् = पाण्डवकौरवमध्यजातं महायुद्धम् अपि लघयन् = लघूकुर्वन् अतिशयान इत्यर्थः इव प्रतिपक्षाणां शत्रूणां क्षपणस्य = विध्वंसस्य निर्बन्धेन = आग्रहेण परशुरामम् अपि शिक्षयन् = उपदिशन् इव, परशुरामेण एकविंशतिवारमेव शत्रवो हताः अनेन तु अनेकवारमिति भावः अब्भ्र० अप्सु = जलेषु समुद्रेष्वित्यर्थः यद् भ्रमणं यानद्वारा शत्रूणां विनाशाय यत्र तत्र द्वीपेषु गमनमिति यावत् अन्यत्र अप्सु = समुद्र-जले भ्रमणेन = परिवर्तनेन अनादरात् = अवहेलया अतिसौकर्यादिति यावत् श्रीणां = जितानामन्यभूपानां राजलक्ष्मीणाम् अन्यत्र लक्ष्मीदेव्याः समाकर्षणम् बलात् आदानम् अन्यत्र समुद्रान्तरजलात् बहिः निस्सारणम् तस्य विभ्रमेण = लीलया मन्दर = मन्दराचलं अपि मन्दयन् = मन्दीकुर्वन् लघूकुर्वन्निति यावत्, मन्दरेण एका एव श्रीः समुद्रात् समाकृष्टा अनेन तु अनेकाःश्रियः समाकृष्टा इति भावः — वाहिनी० वाहिनीनां = सेनानां यः नायकः = नेता सेनापतिः इत्यर्थः तस्य मर्यादा = प्रथा नियमा इति यावत् तस्याः अनुवर्तनेन = अनुरणनेन पालनेनेत्यर्थः अन्यत्र वाहिनीनां = नदीनाम् [ 'वाहिनी स्यात्तरङ्गिण्यां सेना-सैन्य-प्रभेदयोः' इति मेदिनी ] नायकः = पतिः तस्य मर्यादा सीमा तस्याः अनुवर्तनेन अम्भोधिं = समुद्रम् अपि अभिभवन् = पराजयमानः समुद्रः वाहिनीपतिमर्यादां पालयन् यत्र स्थितः तत्रैव वर्तते, सेनापतिस्तु वाहिनीपतिमर्यादां पालयन्नपि यत्र

हिन्दी–पथ्य स्थित ) होता है। जो वीर रस के विविध वृत्तान्तों की रमणीयता से महाभारत युद्ध को भी मानो नीचा दिखा रहा था, जो शत्रुओं के विनाश के आग्रह से परशुराम को भी मानो सीख दे रहा था, जो अब्भ्रमण (जलयात्रा) द्वारा सहज ही में ( अन्य द्वीपीय राजाओं की ) श्रियों ( राजलक्ष्मियों ) को खींच लाने की खिलवाड़ से अब्-भ्रमण ( समुद्र जल-मन्थन ) से ( कठिनाई से ही ) श्री ( लक्ष्मी देवी ) को खींच निकालने वाले मन्दराचल को भी (वर्ग में) मानो ढीला कर रहा था, जो वाहिनीनायक ( सेनापति ) की मर्यादा का अनुसरण करते रहने से वाहिनीनायक ( नदी-पति = समुद्र ) की मर्यादा को भी मानो परास्त कर रहा था। जो स्थैर्य ( स्थिरता निश्चय में अटलता ) कार्कश्य ( कठिनता ), शत्रु पर निर्दयता और उन्नति [ ऊँचाई; अभिमान ] से पर्वतों को भी मानो लज्जित कर रहा था, जो दिनरात फैले हुए स्वाभाविक तेज (प्रताप, चमक) के चमकते रहने से सूर्य को भी मानो तृणवत् समझता था, जो ईश्वर [ स्वामी ] का भार ( कर्तव्य भार ) वहन करते रहने से घिस जाने के कारण ईश्वर ( शिव )

वृषभमपि हसन्निव, अरणिरमर्षाग्नेः, ऐश्वर्यं शौर्यस्य, मदो मदस्य, विसर्पो दर्पस्य, हृदयं हठस्य, जीवितं जिगीषुतायाः, उच्छ्वसितमुत्साहस्य, अङ्कुशो दुर्मदानाम्, नागदमनो दुष्टभोगिनाम्, विरामो वरमनुष्यतायाः, कुलगुरुर्वीरगोष्ठीनाम्, तुला शौर्यशालिनाम्, सीमान्तदृश्वा शस्त्रग्रामस्य, निर्वोढा प्रौढवादानाम्, संस्तम्भयिता भग्नानाम्, पारगः प्रतिज्ञायाः, मर्मज्ञो महाविग्रहाणाम्, अघोषणापटहः समरार्थिनाम्, सन्निधावेव समुपविष्टः सिंहनादनामा स्वरेणैव दुन्दुभिनिर्घोषगम्भीरेण सुभटानां समररसमानयन्विज्ञापितवान्—'देव, न क्वचित्कृताश्रयया मलिनया मलिनतराः कोकिलया काका इव कापुरुषा

---

टीका—तत्र शत्रु-देशेषु अपि गच्छतीति भावः, स्थैर्य० स्थैर्यं = स्थिरता निश्चयात् अचलनं च कार्कश्यं = कठिनत्वं शत्रुविषयकं निर्दयत्वं च उन्नतिः = औन्नत्यम् अभिमानश्च तैः अचलान् = पर्वतान् अपि ह्रेपयन् = लज्जितान् कुर्वन् इव, सहज०— सहजं = स्वाभाविकं यत् प्रचण्डं = तीक्ष्णं तेजः = प्रतापः उद्योतश्च तस्य प्रसारस्य = विस्तारस्य परिस्फुरणेन = परितः भ्राजनेन सवितारम् = सूर्यम् अपि तृणीकुर्वन् = तृणमिव मन्यमानः इव, सूर्यस्य तेजो हि दिवा एव परिस्फुरति, किन्तु अस्य तेजस्तु दिवानिशं सर्वदैव परिस्फुरति, ईश्वरस्य = राज्ञः अन्यत्र महादेवस्य यः भारः = कर्तव्यभरः अन्यत्र शरीरभारः यस्य उद्वहनेन = अनुष्ठानेन अन्यत्र धारणेन घृष्टं = मृदितं पृष्ठं यस्य स तस्य भावः तत्ता तया, सेनापतिपक्षे पृष्ठे भारधारणं राजकीय-कर्तव्यपालनार्थे लाक्षणिकम्, हरस्य = महादेवस्य वृषभं = वृषम् अपि हसन् = उपहासास्पदी-कुर्वन् इव, उपरि सर्वत्र अर्थापत्त्युत्प्रेक्षयोः संसृष्टिः क्वचित् श्लेषोऽपि, व्यतिरेकालङ्कारश्च व्यज्यते, अमर्षः = क्रोधः एव अग्निः तस्य अरणिः = निर्मन्थ्यदारु [ 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः ] यज्ञार्थम् अग्निमुत्पादयितुं शमीवृक्षस्य मन्थनदण्डद्वयमित्यर्थः, शौर्यस्य = पराक्रमस्य ऐश्वर्यम् आधिपत्यं विभूतिरिति यावत्, मदस्य = गर्वस्य मदः = गर्वः = अर्थात् मदः तस्मिन् निजपूर्वविकसितरूपे आसीत्, दर्पस्य = अभिमानस्य विसर्पः = प्रसरः विस्तारः इति यावत् अथवा वेगः हठस्य हृदयं, जिगीषुतायाः = जयेच्छुतायाः जीवितं = प्राणाः, उत्साहस्य = संरम्भस्य उच्छ्वसितम् = उच्छ्वासः अत्युत्साही इति यावत्, दुर्मदानाम् = दुर्दान्तानाम् एव दुर्मदानां = मदमत्तानां गजानां अङ्कुशः = सृणिः दमनकर्तेत्यर्थः, दुष्टाः भोगिनः = राजानः एव भोगिनः = सर्पाः तेषां नागदमनः = नागान् = सर्पान् दमयतीति तथोक्तः गरुडः इत्यर्थः, वरायाः = श्रेष्ठायाः मनुष्यतायाः विरामः = पराकाष्ठा, वीराणां गोष्ठीनां संसदाम् समाजानामिति यावत् कुलगुरुः = कुलपरम्परागतः आचार्यः अर्थात् वीरपुरुषाः तस्मात् शिक्षां गृह्णन्तिस्म, शौर्येण = पराक्रमेण शालन्ते = शोभन्ते इति शौर्यशालिनः शूरा इत्यर्थः तेषां तुला = मानदण्डः अर्थात् स शूराणां शौर्यस्य मूल्याङ्कनं करोति स्म, शस्त्राणाम् = आयुधानां ग्रामः = समूहः एव ग्रामः = प्राकार-परिखा-हट्टादिशून्या वसतिः तस्य सीमान्तं = सीमाप्रान्तं दृष्टवान् इति सीमान्तदृश्वा [ √दृश् + क्वनिप् कर्तरि भूतकाले ] ग्रामस्य सीमाः भवन्ति अधिकारिणश्च तासां निरीक्षणं कुर्वन्ति, अर्थात् शस्त्रनिपुणाः प्रौढाः = अभिमान-पूर्णाः ये वादाः = वचनानि गर्वोक्तयः इत्यर्थः तेषां निर्वोढा = निर्वाहकः भग्नानाम् = शत्रुभिः परास्तानाम् संस्तम्भयिता = पारगामी पूरक इति यावत्, महान्तश्च ते विग्रहाः = युद्धानि तेषां मर्मज्ञः = तत्त्वज्ञः, समरं = युद्धम् अर्थयन्ते = कामयन्ते इति तथोक्तानां युद्धानामित्यर्थः आघोषणायाः = प्रख्यापनाया पटहः आनकः पटहवत् प्रोत्साहकः इत्यर्थः, उपरि यथायथं रूपकं ज्ञेयं, तच्च क्वचित् श्लिष्टमपि, सन्निधौ = समीपे एव समुपविष्टः = स्थितः सिंहनादः नाम यस्य सः दुन्दुभेः = भेर्याः यः निर्घोषः = तद्वद् गम्भीरेण = गभीरेण स्वरेण = कण्ठध्वनिना सुभटानां = सुयोधानां समररसं युद्धानुरागम् आनयन् उत्तेजयन्नित्यर्थः विज्ञापितवान् = निवेदितवान् न क्वचित् = न

हिन्दी—का भार ( शरीर-भार ) वहन करते रहने से घिसी हुई पीठ वाले शिवजी के बैल का भी मानो उपहास कर रहा था, जो क्रोधाग्नि की अरणि, शौर्य की महाविभूति, मद का मद, दर्प का विस्तार, हठ का हृदय, जयेच्छा का प्राण, उत्साह का उच्छ्वास, मदमत्त राजे-रूपी मदमत्त गजों का अंकुश, दुष्ट भोगी ( राजे ) रूपी भोगियों ( सर्पों ) का गरुड, श्रेष्ठमनुष्यता की पराकाष्ठा, वीर पुरुषों की गोष्ठियों का कुल-गुरु, शौर्यशालियों का मानदण्ड, शास्त्रों के ग्राम [ समूह ] रूपी ग्राम ( गाँव ) का सीमान्त देखे हुए, गर्वोक्तियों का निभाने वाला, परास्त हुए मनुष्यों का उठाने वाला, प्रतिज्ञा के पार पहुँचने वाला महायुद्धों का मर्मज्ञ और युद्धार्थियों का घोषणा-पटह था—धौंसे के शब्द की तरह गंभीर स्वर से ही वीर पुरुषों में युद्धानुराग भड़काता हुआ निवेदन करने लगा—देव, जैसे कहीं भी ( अपना ) आश्रय (नीड) न बनाये हुए मलिन ( काली ) कोयल द्वारा ठगे जाते हुए मलिनतर ( और भी अधिक काले ) कौवे अपने को

हृतलक्ष्म्या विप्रलभ्यमानमात्मानं न चेतयन्ते। श्रियो हि दोषान्धतादयः कामला विकाराः। छत्रच्छायान्तरितरवयो विस्मरन्त्यन्यं तेजस्विनं जडधियः। किं वा करोतु वराकः येनातिभीरुतया नित्यपराङ्मुखेन न तु दृष्टान्येव सर्वातिशायिशौर्यातिशयश्वयथुकपिलकपोलपुलकपल्लवितकोपानलानि कुपितानां तेजस्विनां मुखानि। नासौ तपस्वी जानात्येवं यथाभिचारा इव विप्रकृताः सद्यः सकलकुलप्रलयमुपाहरन्ति मनस्विनः। जलेऽपि ज्वलन्ति ताडितास्तेजस्विनः। सकलवीरगोष्ठीबाह्यस्य

---

टीका–कुत्रापि कृतः आश्रयः=स्थिरावासः इत्यर्थः यया तया मलिनया=कृष्णवर्णया कोकिलया=पिकेन मलिनतराः=कोकिलापेक्षया कृष्णवर्णतराः काकाः वायसाः इव न क्वचित् कृताश्रयया अस्थिरया चञ्चलयेति यावत् मलिनया पापिन्या हृतलक्ष्म्या=दुष्टलक्ष्म्या मलिनतरा=पापितरा कापुरुषाः=कुत्सिताः पुरुषाः नीचा इति यावत् विप्रलभ्यमानं=प्रतार्यमाणम् आत्मानं=स्वं न चेतयन्ते=नावगच्छन्ति। अत्र श्लिष्टोपमा श्रियः=लक्ष्म्याः दोषान्धता=दोषायां=रात्रौ अन्धता=निमीलनम् अथ च दोषेषु=भ्रमेषु अन्धता=अज्ञानं आदिर्येषां ते कामलाः=कमलात् आगताः विकाराः=परिणामाः लक्ष्मीः मनुष्यान् स्वदोषान् प्रति अन्धान् करोतीति भावः, छत्रस्य=राजचिह्नभूतस्य आतपत्रस्य छायया=अनातपेन अन्तरितः=व्यवहितः रविः=सूर्यः येषां तथाभूताः जडधियः=जडबुद्धयः मूर्खाः इति यावत् अन्यं तेजस्विनं=तेजोवन्तं प्रतापशालिनमिति यावत् विस्मरन्ति=न स्मरन्तीत्यर्थः, लक्ष्मीमदमत्ता हि स्वातिरिक्तमन्यं प्रतापिनं न पश्यन्तीति भावः वराकः=तपस्वी जडमतिः अतिशयेन भीरुणा कातरेण भयभीतेनेति यावत् नित्यं यथा स्यात् तथा पराङ्मुखेन=तेजस्विनो विमुखीभूतेन येन=वराकेण गौडेन्द्रेणेति यावत् सर्वान् अतिशेते=अतिक्राम्यतीति सर्वातिशायी यः शौर्यस्य = पराक्रमस्य अतिशयः = अतिरेकः आधिक्यमिति यावत् तस्य यः श्वयथुः=शोथः वृद्धिरित्यर्थः तेन कपिलौ=रक्तपीतौ यौ कपोलौ=गण्डौ तयोः पुलकेन=रोमाञ्चेन पल्लवितः=सञ्जातपल्लवः कोपानलः=क्रोधाग्निः येषु तानि कुपितानां तेजस्विनां=प्रतापिनां मुखानि न तु दृष्टानि=अवलोकितानि एव, अत्र रूपकम्। न असौ तपस्वी=वराकः जानाति विप्रैः=ब्राह्मणैः कृताः=अनुष्ठिताः अभिचाराः=हिंसाकर्माणि परमारणार्थं क्रियमाणानि अनुष्ठानानीति यावत् [ 'हिंसाकर्माभिचारः स्यात्' इत्यमरः ] इवेति श्लिष्टोपमायाम्, विप्रकृताः=अपमानिताः मनस्विनः=प्रशस्तमनसः महामनसः इति यावत् सद्यः=तत्कालम् सकलस्य कुलस्य=वंशस्य

टिप्पणी–कोकिलया–कोयल के सम्बन्ध में यह प्रसिद्ध है कि उसका अपना कोई घोंसला नहीं होता। बच्चों को जन्म देते ही वह पालन-पोषणार्थ उन्हें कौवों के घोंसलों में धर देती है। मूर्ख कौवे उन्हें काले होने के कारण अपने ही बच्चे समझकर पाल लेते हैं। इसलिये कोयल को परपुष्टा या अन्यपुष्टा भी कहते हैं। मूर्ख कौवे कोयल की इस ठगी को नहीं समझ पाते हैं। कालिदास ने भी इसका उल्लेख किया है—'प्रागन्तरिक्षगमनात् स्वमपत्यजातमन्यैर्द्विजैः परभृताः खलु पोषयन्ति'—कामला विकाराः—लक्ष्मी कमलों में रहती है इसलिए सहवास के कारण कमलगत दोष उसमें भी आ गए हैं। 'कमलदोषान्ध' रात्रि में अन्धा=बन्द रहता है। लक्ष्मी भी दोषान्ध है, दोषों की ओर विवेक नहीं करती। व्यञ्जना से 'कमला' शब्द का दूसरा अर्थ पाण्डुरोग भी लिया जाता है। पाण्डु रोग से आँखों में पीलापन आ जाता है और रोगी श्वेत को भी पीला ही देखता है और अपने इस दोष को नहीं देखता।

हिन्दी–(ठगा हुआ) नहीं समझते उसी तरह कहीं भी अपना आश्रय न जमाये हुए (चंचल) मलिन [पापिनी] दुष्ट लक्ष्मी द्वारा ठगे जाते हुए और भी मलिन [ काली करतूतों वाले ] नीच पुरुष अपने को (ठगा हुआ) नहीं देखते। कारण यह है कि लक्ष्मी के दोषान्धता—[ १. दोषों को न देखना २. दोषा ( रात्रि ) का बन्द हो जाना ] आदि विकार कमल से आये हुए हैं। ( राजकीय ) छत्र की छाया द्वारा सूर्य के व्यवहित हो जाने से मतिमन्द दूसरे तेजस्वी को भूल बैठते हैं, अथवा वह बेचारा भी क्या करे—कायर होने के कारण हमेशा पीठ फेरे हुए जिसने कुपित हुए तेजस्वियों के वे मुख तो देखे ही नहीं, जिनमें सभी को अतिक्रमण कर देने वाले अत्यधिक शौर्य के बढ़ जाने से लाल-पीले हुए कपोलों पर रोमाञ्च के रूप को वह बेचारा नहीं जानता है कि विप्रकृत ( ब्राह्मणों द्वारा किये हुए ) अभिचारों की तरह विप्रकृत ( अपमानित ) मनस्वी लोग तत्काल ही सारे कुल का क्षय कर डालते हैं [ जिस तरह ताडित (तड़ित्सम्बन्धी) तेज जल में भी जल उठते हैं उसी तरह ताड़ित ( आहत तेजस्वी लोग ) जल [ जड=मूर्ख ) पर भी ( क्रोध से ) जल उठते हैं। वीर पुरुषों की गोष्ठी से बहिष्कृत हुए उसके लिये ही यह उचित कर्म है, जो उसे ऐसे नरक में गिरा देने

तरयं वेदमुचितमनुत्तारनिरयनिपातनिपुणं कर्म। मनस्विनां हि प्रधनप्रधानधने धनुषि ध्रियमाणे सति च कमलाकलहंसीकेलिकुवलयकानने कृपाणे कृपणोपायाः पयोधिमथनप्रभृतयोऽपि श्रीसमुत्थानस्य किं पुनरीदृशाः। येषां च धात्रा धरित्रीं त्रातुं नियुक्ताः स्वयमसमर्था इव कुलिशकर्कशभुजपरिघप्रहरणहेतोरुद्गिरन्ति गिरयोऽपि लोहानि ते कथमिव बाहुशालिनो मनसापि विमलयशोबान्धवा ध्यायेयुरकार्यम्। सर्वग्रहाभिभवभास्वराणां हि सुभटकराणामग्रतो दिग्ग्रहणे पङ्गवः पतङ्गकराः। महामहिषशृङ्गतरङ्गभङ्गभङ्गुर¹भीषणान्तराला लोकप्रवादमात्रेण दक्षिणाशा परमार्थतो भटभ्रुकुटिरधिवासो यमस्य। चित्रं

टीका—प्रलयं=विनाशम् उपाहरन्ति=आनयन्ति कुर्वन्तीत्यर्थः ताडिताः=तडितः=विद्युतः इमाः इति (अण्) ताडिताः विद्युत्सम्बन्धिनः इत्यर्थः तेजस्विनः=अग्नयः विद्युत्तेजांसीत्यर्थः जले अपि ज्वलन्ति=प्रदीप्यन्ते। अत्र श्लेषद्वारा अन्योऽप्यर्थः व्यज्यते ताडिता=आहताः तेजस्विनः प्रतापशालिनः पुरुषाः जले=जडे श्लेषादौ डलयोरभेदात् अपि ज्वलन्ति=कुप्यन्तीत्यर्थः। अत्रोपमा व्यङ्ग्या। उपरि सर्वत्र गौडाधिपे हर्षवर्धने च विशेषे प्रस्तुते सामान्यमभिहितमिति अप्रस्तुतप्रशंसाऽपि बोध्या। सकला या वीराणां गोष्ठी=समाजः तस्याः बाह्यस्य निजापकर्मणा बहिष्कृतस्य अथवा वीरसमाजसम्पर्काद् बहिःस्थितस्य तस्य=गौडाधिपस्य एव (न तु अन्यस्य) इदम् उचितं=योग्यं अविद्यमानः उत्तारः=उत्तरणं यस्य तथाभूतः यः निरयः=नरकः तस्मिन् निपाते=निपातने निपुणं पटुकर्म=राज्यवर्धनस्य विश्वासघातपूर्वकवधरूपं कार्यम्। मनस्विनां=प्रशस्तमनसां प्रधने=युद्धे [ 'युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्' इत्यमरः ] प्रधानं=मुख्यं धनं तस्मिन् धनुषि चापे ध्रियमाणे=गृह्यमाणे कमला=लक्ष्मी एव कलहंसी=कलहंसयोषिद् तस्याः या केलिः=लीला तदर्थं कुवलयानां=नीलकमलानां काननं=वनं तस्मिन् कृष्णवर्णे कृपाणे नीलकुवलयवनस्य तादात्म्यं स्थाप्यते कलहंसी कमलेषु विहरति लक्ष्मीः च खड्गेषु, सा हि बलवत्तरं खड्गमाश्रयति, कृपाणे सति=विद्यमाने श्रियः=लक्ष्म्याः समुत्थानस्य आकर्षणस्येत्यर्थः पयोधेः=समुद्रस्य मथनं प्रभृतिः=आदिः येषां ते अपि कृपणाः=निम्ना अधमा इत्यर्थः उपायाः=साधनानि किं पुनः ईदृशाः गौडाधिपसमाश्रिताः ? धात्रा=ब्रह्मणा धरित्रीं=पृथिवीं त्रातुं=रक्षितुं नियुक्ताः=व्यापारिताः पुराणानुसारं पृथिवीधारणार्थं गिरयः ब्रह्मणा सृष्टाः त्रातुम् असमर्थाः=असक्ताः इवेत्युत्प्रेक्षायां कुलिशं=वज्रं तद्वत् कर्कशं=कठोरः भुजः बाहुः परिघः=अर्गलः इवेत्युपमितसपु० तस्मिन् यत् शस्त्रम्=आयुधं खड्ग इत्यर्थः तस्य हेतोः=तन्निमित्तमित्यर्थः गिरयः=पर्वताः अपि चेतनानां तु कथैव केत्यर्थापत्तिः लोहानि=अयांसि उद्गिरन्ति=उद्वमन्ति, अयं भावः स्वयं तु पृथिवीं त्रातुमसमर्थाः पर्वताः लोहं स्वाभ्यन्तरात् निस्सारयन्ति यया लोहेन खड्गादिकं निर्माय वीरपुरुषाः पृथिवीं त्रायेरन्, लोहादि धातवः पर्वतखनिषु जायन्त इत्यत्र उपर्युक्ता कवि-कल्पना, बाहुभ्यां=शालन्ते=शोभन्ते इति तथोक्ताः बाहुवीर्यवन्तः इत्यर्थः विमलं=निर्मलं यत् यशः=कीर्तिः तस्य बान्धवाः=सुहृदः इत्यर्थः कथम्=कस्मात् इवेति वाक्यालङ्कारे अकार्यम्=गौडाधिपविहितं निकृष्टं कर्म ध्यायेयुः=चिन्तयेयुः न कथमपीति काकुः। सर्वस्य=शत्रूणां सर्वस्वस्येत्यर्थः यत् ग्रहणम्=आदानम् तेन यः अभिभवः शत्रूणां पराभवः पराजयः इति

हिन्दी—को पर्याप्त है जहाँ से (उसका कोई) उद्धार नहीं। युद्ध के प्रधान धन धनुष के धारण किये और लक्ष्मीरूपी कलहंसी की क्रीड़ा के लिए कुवलय-वनरूप कृपाण के रहते रहते मनस्वियों की लक्ष्मी निकालने के लिए समुद्र-मन्थन आदि भी नीच उपाय है फिर ( गौडाधिप द्वारा अपनाए ) ऐसे—जैसे उपायों की तो बात ही क्या ? स्रष्टा द्वारा पृथिवी की रक्षा के लिए नियुक्त ( और तदर्थ ) असमर्थ—जैसे बने हुए पर्वत भी जिनके वज्र-सदृश कठोर और आगल-जैसी (विशाल) भुजाओं में शस्त्र हेतु लोह उगलते हैं, भुजशाली विमल यश के मित्र वे ( भला ) मन में भी ऐसे कार्य को ध्यान में क्यों लायें ? सभी कुछ के ग्रह ( ग्रहण, अपहरण ) द्वारा ( शत्रुओं के ) अभिभव ( पराजय ) से प्रकाशित होने वाले वीर पुरुषों के करों ( हाथों ) के सामने सभी ग्रहों ( मंगलादि ज्योतिष्पिण्डों ) के अभिभव ( दबा देने ) से प्रकाशित होने वाले सूर्य के कर ( किरण, हाथ ) दिशाओं के ग्रहण में पंगु हैं। विशाल महिष के सींगों की तरंग-सदृश भंगियों ( रेखाओं ) से भंगुर ( उन्नतावनत ) और भयंकर बने मध्यवर्ती प्रदेशों वाली दक्षिण दिशा लोगों के कहने मात्र से यम का निवासस्थान है; वास्तव में यम का निवास-स्थान तो वीरों की भ्रुकुटि है जिसका मध्यवर्ती स्थान विशाल महिष के सींगों के तरंग-भंगों की तरह भंगुर और भयंकर बना रहता है। आश्चर्य है कि रणों में सिंहनाद

१. 'भङ्गुरभङ्गिभीषणा'

**च यदुन्मुक्तसिंहनादानां सहसा साहसरसरोमाञ्चकण्टकनिकरेण सह न निर्यान्ति सटाः शूराणां रणेषु। द्वयमेव च चतुःसागरसम्भूतस्य[1] भूतिसम्भारस्य भाजनं प्रतिपक्षदाहि दारुणं वडवामुखं वा महापुरुषहृदयं वा। तेजस्विनः सकलाननवाप्य पयोराशीन्सहजस्य कुतो निवृत्तिरूष्मणः। वृथावितत‌विपुलफणाभारो भुजङ्गानां भर्ता बिभर्ति यो भोगेन मृत्पिण्डमेव केवलम्।**

टीका-यावत् तेन भास्वराणां = देदीप्यमानानां सुभटानां = सुयोद्धृणां कराणां = हस्तानां अग्रतः = समक्ष तत्तुलनाया।मत्यर्थः दिशां = दिशानां ग्रहणे = आकलने सर्वेत्यादि विशेषणं विभक्तिपरिवर्तनं कृत्वा 'पतङ्गकराः' इत्यत्रापि योज्यम् सर्वे च ते ग्रहाः = मङ्गलादयो ज्योतिष्पिण्डाः तेषाम् यः अभिभवः = स्वतेजसा आच्छादनं तेन भास्वराः = उज्ज्वलाः पतङ्गस्य सूर्यस्य [ 'पतङ्गौ पक्षिसूर्यौ च' इत्यमरः ] कराः किरणाः एव कराः = हस्ताः भङ्गवः = विकलाः अर्थात् सूर्यस्य करा सर्वासां दिशां ग्रहणे कमपि कालमपेक्षन्ते किन्तु सुभटानां कराः एकेनैव आघातेन तत्कालमेव सर्वदिग्ग्रहणं कुर्वन्ति, सकल जगत् आत्मसात्कुर्वन्त इत्यर्थः अत्र व्यतिरेकालङ्कारः स च श्लेषरूपकानुप्राणितः महा० —महान् चासौ महिषः = यमस्य सैरिभः तस्य शृङ्गयोः = विषाणयोः तरङ्गवत् ये भङ्गाः = वंकाः तैः भङ्गुराणि भङ्गिमन्ति तरङ्गितानीत्यर्थः भीषणानि = भयङ्कराणि च अन्तरालानि = मध्यभागाः यस्याः सा ( दक्षिणाशा ) महामहिषशृङ्गतरङ्गभङ्गवत् भंगुरं भीषणं च अन्तरालं यस्याः सा ( भटभ्रूकुटिः ) दक्षिणा आशा = दिशा यमस्य अधिवासः = निवासस्थानम् इति लोकापवादमात्रम् = लोकरूढ़िः एव, परमार्थतः = वस्तुतः यमस्य अधिवासः भटानां = वीराणां भ्रूकुटिः, यत्रैव क्रोधे वीराणां भ्रूकुटिभङ्गः तत्रैव यमः मृत्युरिति भावः। अत्र दक्षिणस्यां दिशि यमनिवाससम्बन्धेऽपि असम्बन्धप्रतिपादनात् सम्बन्धे असम्बन्धातिशयोक्तिः। **चित्रं**—चित्रं = विचित्रमिदं यत् उन्मुक्तः = उदीर्णः सिंहनादः = सिंहगर्जनं यैस्तेषाम् सहसा = सपदि साहसस्य = साहसिककर्मणः युद्धस्येत्यर्थः यः रसः = अनुरागः = युद्धविषयकहर्षोन्मादः इति यावत् तेन रोमाञ्चाः = पुलकोद्गमाः एव कण्टकाः तेषां निकरेण = समूहेन सह रणेषु = युद्धेषु शूराणां = वीराणां सटाः = केशराः न निर्यान्ति = नोद्गच्छन्ति अत्र सिंहनाद—रोमाञ्चरूपकारणसत्वेऽपि सटानिर्माणरूपकार्यं नोत्पद्यते इति विशेषोक्तिः। द्वयम् = द्वे एव चत्वारश्च ते सागराः = समुद्राः तेभ्यः सम्भूतस्य = उत्पन्नस्य भूतेः = भस्मनः अन्यत्र सम्पत्तेः [ 'भूतिर्भस्मनि सम्पदि' इत्यमरः ] सम्भारस्य = राशेः समूहस्येति यावत् भाजनं = पात्रम् भवतीति शेषः प्रतिपक्षाणां = शत्रूणाम् = एकत्र अपाम् अन्यत्र वैरिणां दाहि = प्लोषकम् अन्यत्र विनाशकम् दारुणं = भीषणं वडवामुखम् = अश्वामुखम् वडवामुखसदृशः समुद्रान्तः स्थितः वह्निरित्यर्थः अथवा महापुरुषस्य हृदयम्। अत्र प्रस्तुतस्य महापुरुष ( हर्षवर्धन ) हृदयस्य अप्रस्तुतस्य वडवानलमुखस्य एकधर्माभिसम्बन्धात् दीपकालङ्कारः स च श्लिष्टः। तेजस्विनः = तेजोवतः वडवानलस्येत्यर्थः सहजस्य = स्वाभाविकस्य ऊष्मणः = तापस्य निवृत्तिः = उपशमः सकलान् = समग्रान् पयोराशीन् = समुद्रान् अनवाप्य = न प्राप्य कुतः = कस्मात्? अत्र अप्रस्तुतप्रशंसया सकलशत्रूनविजित्य प्रतापिनो हर्षवर्धनस्य कोपस्य कुतः शमनम् इत्यर्थो व्यज्यते। वृथा० — वृथा = व्यर्थमेव यथास्यात्तथा विततः = विस्तारितः विपुलानां = विशालानां फणानां = स्फटानां भारः = भरः येन स भुजङ्गानां = सर्पाणाम् भर्ता = स्वामी शेषनागः इत्यर्थः अस्तीति शेषः यः भोगेन = शरीरेण अथ च पालनेन शासनेनेति यावत् केवलं मृत्पिण्डं = पिण्डाकारपृथिवीं बिभर्ति =

**टिप्पणी - वड़वा** - वड़वा घोड़ी को कहते हैं। उसके मुख की आकृति की सी आग जो समुद्र के भीतर रहती है वह वडवानल है। प्रलयकाल में वह सारा समुद्र-जल पी जाती है, देखिए महाभारत—'महद्धयशिरोभूत्वा यत्तद्वेदविदो विदुः। तमग्निमुद्गिरद्-वक्त्रात् पिबत्यापो महोदधौ' ( आ० प० २२ ) समुद्र का जल और उसके भीतर का सब कुछ फूक कर वह अग्नि 'भूतिसम्भार भाजन' अर्थात् भस्मराशि रखने वाला पात्र बन जाती है।

**हिन्दी–**छोड़े हुए शूर-वीरों की सहसा साहसिक कार्यों के अनुराग से ( उठे हुए ) रोमाञ्चरूपी कंटक-समूह के साथ-साथ सटायें नहीं निकलतीं। चारों समुद्रों से उत्पन्न भूति ( सम्पत्ति, भस्म ) समूह के दो ही पात्र हुआ करते हैं—या तो प्रतिपक्षों ( जलों, शत्रुओं ) को जला देने वाला भीषण वडवामुख या महापुरुष का हृदय। तेजस्वी ( वडवानल ) की स्वाभाविक गर्मी भी बिना सभी समुद्रों को प्राप्त किये कैसे शान्त हो सकती है? वह सर्पों का राजा ( शेषनाग ) व्यर्थ ही विशाल फणों का समूह फैलाये हुए है जो भोग ( शरीर, शासन ) से केवल मृत्पिण्ड ( पृथिवी ) को धारण

१. 'सम्भृतस्य'

अप्रतिहतशासनाक्रान्त्युपभोगसुखरसं तु रसाया दिक्कुञ्जरकरभारभास्वरप्रकोष्ठा वीरबाहव एव जानन्ति। रविरिवोन्मुखपद्माकरगृहीतपादपल्लवः सुखेनाखण्डिततेजा दिवसान्नयति शूरः। कातरस्य नु शशिन इव हरिणहृदयस्य पाण्डुरपृष्ठस्य कुतो द्विरात्रमपि निश्चला लक्ष्मीः। अपरिमितयशःप्रकरवर्षी विकासी वीररसः। पुरःप्रवृत्तप्रतापप्रहताः पन्थानः पौरुषस्य। शब्दविद्रुतद्विषन्ति भवन्ति द्वाराणि दर्पस्य। शस्त्रालोकप्रकाशिताः शून्या दिशः शौर्यस्य। रिपुरुधिरशीकरासारेण भूरिव श्रीरप्यनुरज्यते। बहुनरपतिमुकुटमणिशिलाशाणकोणकषणेन चरणनखराजिरिव राजताप्युज्ज्वलीभवति। अनवरतशस्त्रा-

टीका—वीरास्तु पृथिवीं समुद्रानपि च बिभ्रति व्यतिरेकालङ्कारः। अप्रति० —रसायाः=पृथिव्याः अप्रतिहतम्=अविरुद्धं अनुल्लङ्घनीयमित्यर्थः यत् शासनम्=आदेशः तेन या आक्रान्तिः=आक्रमणम् आधिपत्यमिति यावत् तस्याः यः उपभोगः=अनुभवः तस्य यत् सुखम्=आनन्दः तस्य रसं=स्वादं तु दिक्कुञ्जरस्य=दिग्गजस्य यः करस्य=शुण्डादण्डस्य भारः=भरः भारीकरः इत्यर्थः तद्वद् भास्वरः=दीप्तिमान् प्रकोष्ठः=अग्रहस्तः येषां तथाभूताः वीराणां बाहवः=भुजाः एव जानन्ति। शेषस्तु केवलं पृथिवीभारवाहकः पृथिव्याधिपत्यसुखस्वादानुभवितारः वीरबाहवो भवन्तीति भावः। रवि०—उत्=ऊर्ध्वं मुखम् अग्रं येषां ते इत्युन्मुखा ये पद्मानां=कमलानाम् आकराः=सरांसि वनानि वा तैः गृहीतः=लब्धः इत्यर्थः पादानां किरणानां पल्लवः=विस्तारः यस्य सः [ 'पल्लवोऽस्त्री किसलयं विस्तारः' इत्यमरः ] आखण्डितम्=विनाशितं लघूकृतमित्यर्थः, सायं हि सूर्यस्य प्रकाशः मन्दीभवति, तेजः=प्रकाशः यस्य स रविः=सूर्यः इवेति श्लिष्टोपमायाम् उन्मुखा=अनुरागप्रवणा इत्यर्थः या पद्मा=लक्ष्मी ['लक्ष्मीः पद्मालया पद्मा' इत्यमरः] तस्याः करेण=हस्तेन गृहीतः=सेवितः इत्यर्थः पादः पल्लवः इवेत्युपमिततत्पु० यस्य सः, अखण्डितम्=अप्रतिहतं तेजः=प्रतापः यस्य स शूरः सुखेन=सुखपूर्वकं दिवसान् नयति=करोति सूर्यस्य दिनकरत्वात् अन्यत्र अतियापयति हरिणवत्=मृगवत् ( भीरु ) हृदयं यस्य तस्य पाण्डुरपृष्ठस्य='देशभाषया निर्लज्जस्य' इति शङ्करः कातरस्य=कापुरुषस्य मृगलाञ्छनस्येत्यर्थः पाण्डुरं=धवलं पृष्ठम् उपरितनभागो यस्य तस्य शशिनः=चन्द्रमसः लक्ष्मीः=श्रीः शोभा च कुतः=कस्मात् द्विरात्रम्=द्वयोः रात्र्योः समाहारम् [ कालात्यन्तसंयोगे द्वि० ] रात्रिद्वयम् अपि किम्पुनः अधिकम् निश्चला=स्थिरा। केवलं पौर्णमास्यामेव शोभा न पुनः तदनन्तरम्, एवं कातरस्यापि श्रीः अस्थिरेति भावः। अपरिमितं=प्रभूतं यशसः=कीर्तेः प्रकरं=समूहं वर्षतीति यथोक्तः विकासी=विकसनशीलः वीररसः भवतीति शेषः। गौडाधिपसदृशस्य कातरस्य तु अपयशः एव प्रसरति। पुरः=अग्रे प्रवृत्तेन=गतेनेत्यर्थः प्रतापेन=तेजसा प्रहताः=क्षुण्णाः पौरुषस्य=शौर्यस्य पन्थानः=मार्गाः अर्थात् वीरपुरुषस्य प्रथमं प्रतापः प्रसरति, ततस्तन्मार्गः निर्बाधो जायते, न कोऽपि विघ्नः आयातीत्यर्थः शब्देन=वीरपुरुषस्य हुङ्कारध्वनिना विद्रुता=पलायिताः द्विषन्तः=शत्रवः येषु तथाभूतानि दर्पस्य=अभिमानस्य द्वाराणि भवन्ति दर्पवतः वीरस्य शब्दमात्रेणैव शत्रवः पलायन्ते इति भावः। शस्त्राणाम्=आयुधानाम् आलोकेन=प्रकाशेन प्रकाशिताः=विद्योतिताः शौर्यस्य दिशः शून्या भवन्तीति शेषः अर्थात् वीराणां शस्त्रैः प्रकाशितं निखिलं

हिन्दी—कर रहा है। पृथिवी के निर्बाध शासन द्वारा प्राप्त आधिपत्य के उपभोग के सुख का स्वाद तो दिग्गज की भारी शुण्ड के सदृश चमकीली कलाई वाली वीरों की भुजायें ही जानती हैं। उन्मुख ( ऊपर मुँह किये ) पद्माकरों ( कमल वनों ) द्वारा सेवित पाद-पल्लव ( किरण-समूह ) तथा आखण्डित ( सायं खंडित हुए ) तेज वाले सूर्य की तरह उन्मुख ( अनुरागोन्मुख ) पद्मा ( लक्ष्मी ) के करों ( हाथों ) द्वारा सेवित पाद-पल्लव ( चरणकिसलय ) तथा अखंडित तेज वाला शूर सुख के साथ दिन निकालता है। किन्तु हरिण-हृदय [ भीतर मृगचिह्न रखे ] और पाण्डुरपृष्ठ [ ऊपर से श्वेत बने ] चन्द्रमा की लक्ष्मी ( शोभा ) की तरह हरिणहृदय ( हिरण के से भीरु हृदय वाले ) और पाण्डुर पृष्ठ ( निर्लज्ज ) कायर की लक्ष्मी (राजश्री) क्योंकर दो रात भी टिके ? अमित यशः-समूह बरसाने वाला वीररस विकासशील हुआ करता है। शौर्य के पथ आगे-आगे जा रहे प्रताप से साफ हो जाते हैं। दर्प के द्वार शब्द-मात्र से पलायमान शत्रुओं से शून्य हो जाते हैं। शस्त्रों की चमक से प्रकाशित हुई शौर्य की दिशायें ( शत्रुओं से ) खाली हो जाती हैं। जिस तरह शत्रुओं के रुधिर-बिन्दुओं के धाराप्रवाह से भूमि अनुरक्त ( लाल ) हो जाती हैं वैसे ही शत्रुओं के रुधिर-धारा-प्रवाह से राजश्री अनुरक्त [ शूर पर अनुराग वाली ] हो जाती है। अनेक राजाओं के मुकटों पर ( जड़ी ) शाण जैसी रत्नशिलाओं की नोकों पर रगड़ खाने से पैरों की नख-पंक्ति की तरह राजत्व भी उज्ज्वल हो उठता है। लगातार

भ्यासेन करतलानीव रिपुमुखानि श्यामीभवन्ति। विविधव्रण[1]बद्धपट्टकशतैः शरीरमिव यशोऽपि धवलीभवति। कवचिषु रिपूरःकपाटेषु पात्यमानाः पावकशिखामिव श्रियमपि वमन्ति निष्ठुरा निस्त्रिंशप्रहाराः। यश्चाहितहतस्वजनो मनस्विजनो द्विषद्योषिदुरस्ताडनेन कथयति हृदयदुःखम् परुषा[2]सिलतानिपातपव[3]नेनोच्छ्वसिति निरुच्छ्वसितशत्रुशरीराश्रुधारापातेन रोदिति विपक्षवनिताचक्षुषा ददाति जलं स श्रेयान्नेतरः। न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं प्रबुद्धाः। स्थायिनि यशसि शरीरधीर्वीराणाम्। अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावं च मणिप्रदीपमिव कलुषः

---

टीका–जगत् शत्रुभिः शून्यं जायते। रिपूणां=शत्रूणां रुधिरस्य=रक्तस्य शीकराणां=बिन्दूनाम् आसारेण=धाराप्रवाहेण भूः=रणभूमिः इवेत्युपमायां श्रीः=राजलक्ष्मीः अनुरज्यते=रक्तवर्णा भवति अन्यत्र अनुरागं करोति। बहु०—बहुवश्च-ते नरपतयः=भूपाः तेषां मुकुटेषु (खचिताः) मणिशिलाः=मणिप्रस्तराः शाणाः इवेत्युपमिततत्पु० तेषां कोणेषु=प्रान्तेषु कषणेन=घर्षणेन चरणयोः नखराजिः=नखपंक्तिः इवेत्युपमायां राजता=राज्ञः भावः राज्यमित्यर्थः अपि उज्ज्वलीभवति=प्रकाशते इत्यर्थः। अनव०—अनवरतः=सततः यः शस्त्राणाम्=आयुधानाम् अभ्यासः पुनः पुनः प्रयोगः तेन करतलानि हस्तानां तलभागाः इवेत्युपमायां रिपूणां=शत्रूणां मुखानि=आननानि श्यामीभवन्ति=श्याम-वर्णानि जायन्ते एकत्र घर्षणात् अन्यत्र भयात् विविधेषु व्रणेषु=क्षतेषु बद्धानि यानि पट्टकानां=पट्टीनां शतानि शत-कानि तैः शरीरम् इवेत्युपमायां यशः=कीर्तिः अपि शूरस्येति शेषः धवलीभवति श्वेतीभवति, यशोहि कविजगति श्वेतत्वेन वर्ण्यते कवचाः=वर्माणि लोहवर्माणीत्यर्थः एषां सन्तीति तेषु रिपूणां=शत्रूणाम् उरांसि=वक्षांसि कपाटानि=द्वारावरककाष्ठपट्टानीवेत्युपमिततत्पु० तेषु पात्यमानाः=क्रियमाणाः इत्यर्थः निष्ठुराः=कठिनाः निस्त्रिं-शस्य=खड्गस्य प्रहाराः=आघाताः पावकस्य वह्नेः शिखां ज्वालाम् इवेत्युपमायां श्रियम्=राजलक्ष्मीम् अपि वमन्ति=उद्गिरन्ति, विजयी शूरः राजलक्ष्मीं प्राप्नोति यश्च० अहितेन=शत्रुणा हतः=मारितः स्वजनः=स्वकीयबन्धुजनः यस्य सः मनस्विजनः=महामनाः यः द्विषतां=शत्रूणां योषितां विधवाभूतानां स्त्रीणां (कर्तरि षष्ठी) उरसः=वक्षसः ताडनेन भर्तृवधे तत्पत्नीकर्तृकोरस्ताडनेन अर्थात् स्वजने मृते सति दुःखे स्वयं न स्ववक्षः ताडयित्वा स्वजनघातकं शत्रुं हत्वा तद्विधवाकृतोरस्ताडनेन हृदयस्य दुःखं कथयति परुषाः=कठिनाः ये असयः=खड्गाः लताः इवेत्युपमिततत्पु० तासां निपातेन=सवेगं शत्रूणामुपरि पातनक्रियया [उत्पन्नः] यः पवनः=वायुः तेन उच्छ्वसति दीर्घं निश्वसिति, निरुच्छ्-वसिताः - व्यक्तमाणाः ये शत्रवः तेषां शरीरेषु=शवेषु तद्विधवा कर्तृकः यः अश्रुधाराणां पातः=पातनं तेन रोदिति=क्रन्दति विपक्षाणां=शत्रूणां वनितानां=विधवाभूतानां पत्नीनां चक्षुषा=नयनेन शत्रु-हताय निजबन्धवे जलं=तर्पणजलं ददाति स्वय न रुदित्वा शत्रुपत्नीः रोदयतीति भावः सः=शूरः श्रेयान्=प्रशस्यतरः इतरः=कातरः न, न च-स्वप्ने=निद्रायां जाते अनुभवे आदौ दृष्टानि पश्चात् नष्टानि=लुप्तानि तेषु इवेत्युपमायां क्षणिकेषु=क्षणभङ्गुरेषु शरीरेषु प्रबुद्धाः=जागरिताः अन्यत्र ज्ञानवन्तः बन्धोः=स्वजनस्य बुद्धिं=विचारं न निबध्नन्ति=कुर्वन्तीत्यर्थः, ते क्षणभङ्गुर-भौतिकशरीराय महत्त्वं न ददतीत्याशयः। वीराणां स्थायिनि=मरणानन्तरमपि स्थिते यशसि शरीरस्यधीः=बुद्धिः

हिन्दी–शस्त्रों का अभ्यास करते रहने से शत्रुओं के मुखों की तरह (शूर के) करतल काले पड जाते हैं। व्रण पर बंधी सैकड़ों पट्टियों से शरीर की तरह यश भी श्वेत हो जाता है। कवच-बंधी शत्रुओं की किवाड़ जैसी छातियों पर पड़ रहे खड्ग के कठोर प्रहार आग की चिनगारी की तरह राजलक्ष्मी को भी उगलते हैं। शत्रु द्वारा अपने बन्धुजन के मारे जाने पर जो मनस्वी शत्रुओं की पत्नियों द्वारा छाती पीटी जाने के रूप में अपने हृदय का दुःख कहता है (वेग के साथ) कठोर खड्ग-लता की चोट से (उत्पन्न) हवा के रूप में आहें भरता है, मृत शत्रुओं के शवों पर (उनकी विधवाओं द्वारा) गिराई जा रही अश्रुधाराओं के रूप में रोता है और शत्रुओं की महिलाओं की आँखों (के अश्रुजल) द्वारा (अपने मृत बन्धु को) तर्पण देता है, वही प्रशंसनीय है अन्य नहीं। प्रबुद्ध (जागे हुए, ज्ञानी) लोग स्वप्नों में देखे और पीछे लुप्त हुए क्षणिक शरीरों की तरह (जागृत अवस्था के) क्षणिक शरीरों को बन्धु नहीं समझते, वीर लोग स्थायी यश को शरीर समझते हैं। निरन्तर जलते रहते तेज [प्रकाश] के प्रसार से देदीप्यमान प्रकृति के तेजस्वी मणिमय दीपक को जैसा काला कज्जल-मैल नहीं स्पर्श करता, वैसे ही निरन्तर जलते रहते तेज

---

१. 'बन्ध' २. 'पुरुषानसि' ३. 'निपातबनेन'

कज्जलमलो न स्पृशत्येव तेजस्विनं शोकः। स त्वं सत्त्ववतामग्रणीः प्राग्रहरः प्राज्ञानां प्रथमः समर्थानां प्रेष्ठोऽभिजातानामग्रेसरस्तेजस्विनामादिरसहिष्णूनाम्। एताश्च सततसन्निहितधूमायमानकोपाग्नयः सुलभासिधारातोयतृप्तयो विकटबाहुवनच्छायोपगूढा धीरताया निवासशिशिरभूमयः स्वायत्ताः सुभटानामुरःकवाटभित्तयः। यतः किं गौडाधिपाधमेनैकेन। तथा कुरु यथा नान्योऽपि कश्चिदाचरत्येवं भूयः। सर्वोर्वीश्रद्धाकामुकानामलीकविजिगीषूणां सञ्चारय चामराण्यन्तःपुरपुरंध्रिनिश्वसितैः। उच्छिन्धि रुधिरगन्धान्धगृध्रमण्डलाच्छादनैश्छत्रच्छायाव्यसनानि। अपाकुरु कदुष्णशोणितोदकस्वेदैः कुलक्ष्मीकुल-

---

टीका–भवतीति शेषः, ते यशःशरीरमेव शरीरं मन्यन्ते न तु विनश्वर—पार्थिवशरीरं शरीरम् इति भावः। एतद्विचारसम्बन्धे कालिदासोऽपि प्राह—'किमप्यहिंस्यस्तवचेन्मतोऽहं यशःशरीरे भव मे दयालुः। एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था किल भौतिकेषु' ( रघु० २।५७ ) अनवरत० – अनवरतं = निरन्तरं यथा स्यात्तथा प्रज्वलितं यत् तेजः = प्रकाशः अन्यत्र प्रतापः तस्य प्रसरेण = विस्तारेण भास्वरः = दीप्यमानः स्वभावः = प्रकृतिः यस्य तम् मणिप्रदीपं = मणिरूपं दीपम्, मणिर्हि दीपवत् प्रकाशते न तु कज्जलं करोति, इवेत्युपमायां कलुषः = कृष्णवर्णः, शोकोऽपि मनुष्यस्य मुखं कृष्णीकरोति, कज्जलः = दीपमसी एव मलः मालिन्यमित्यर्थः तेजस्विनम् = तेजोवन्तम् अन्यत्र प्रतापिनं पुरुषं शोकः न स्पृशति = आश्रयति। स = प्रसिद्धः त्वं = भवान् सत्त्ववताम् = बलवताम् अग्रणीः अग्रगण्यः, प्राज्ञानां = बुद्धिमतां प्राग्रहरः = प्रकृष्टम् अग्रं हरति गृह्णातीति अग्रस्थितः इत्यर्थः, समर्थानां = शक्तिमतां प्रथमः = आद्यः, अभिजातानां = कुलीनानां प्रेष्ठः = अग्रगामी [पुरोगाग्रेसरप्रष्ठाग्रतः सर पुरःसराः—इत्यमरः] तेजस्विनां = प्रतापिनाम् अग्रेसरः = अग्रगः असहिष्णूनाम् = असहनशीलानाम् आदिः = प्रथमः। एताः = इमाः सततं = निरन्तरं यथा स्यात्तथा सन्निहिताः = प्रत्यासन्नाः धूमायमानाः = धूमम् उद्वमन्तः न तु प्रज्वलिताः कोपाग्नयः = क्रोधानलाः यासाम् ताः [ भूमयः एवं भित्तयः अनयोः विशेषणम ] सुलभा = सुप्राणा असेः = खड्गस्य धारायाः = अग्रभागस्य एव धारायाः = नद्याः तोयेन = जलेन तृप्तिः = तृषानिवृत्तिरित्यर्थः यासु ताः, विकटाः = विशालाः बाहवः = भुजाः एव वनच्छाया = वनानातपः तया उपगूढाः = परिगताः, धीरतायाः = धैर्यस्य शिशिरभूमयः = शीतल स्थानानि सुभटानां = वीराणां उरांसि = वक्षांसि कवाटाः = कपाटाः इव तेषां भित्तयः = कुड्यानि स्वायत्ताः = त्वदधीनाः अर्थात् ईदृशाः सुभटाः भवत्सेवार्थं समुद्यताः सन्ति। यतः = यस्मात् एकेन गौडाधिपेन किम् = तन्मारणेनैव किम् ? एवम् = कपटाचारं भूयः = पुनः न आचरति = करोति। सर्वो० —सर्वा = निखिला या उर्वी = पृथिवी तस्याः श्रद्धया = विश्वासेन कामुकानाम् = इच्छुकानाम् अलीकानाम् = कपटिनां विजिगीषूणां = जयेच्छूनां, कपटेन राजलक्ष्मीमिच्छतामित्यर्थः अन्तःपुरस्य = अवरोधस्य या पुरन्ध्रयः = कुटुम्बिन्यः तासां निश्वसितैः = दीर्घोष्णनिश्वासैः चामराणि = वालव्यजनानि सञ्चारय = सञ्चालय वीजयेत्यर्थः कपटेन राज्येच्छुकानां भूपालानां वधं कृत्वा तेषां विधवानां शोके निर्गच्छता दीर्घोष्णनिश्वासवायुना तेषामुपरि कारयित्वा तेषां राजचिह्न-

टिप्पणी— धीरताया० भूमयः—वीरों की धीरता ठंडे स्थान में आराम कर रही है, जहाँ कोपाग्नि धुधुआ रही है किन्तु प्रज्वलित नहीं हो रही, वीरों की कपाट – जैसी छातियाँ की दीवारें खड़ी हुई हैं बाहु – शाखाओं का वन छाण किये हुए है और खड्ग-धार के जल से तृप्ति सुलभ है। सारे का सारांश यह है कि सुभटों की वीरता शान्त हुई बैठी है। उसके भड़कने मात्र की देर। आप उसपर फूंक मार दीजिए आपके इशारे पर चल पड़ेगी।

हिन्दी–[ प्रतापी ] को शोक नहीं स्पर्श करता। जगत् प्रसिद्ध आप बलवानों में अग्रणी, बुद्धिमानों में प्रधान, समर्थों में प्रथम, कुलीनों में श्रेष्ठ, तेजस्वियों में अग्रसर और असहिष्णुओं के आदि हैं और ये पास में धुधुआती कोपाग्नि वाली, तलवार धार के पानी से सुलभ तृप्ति वाली, विशाल भुजवन की छाया से घिरी धीरता की ठंडी निवास-भूमियाँ—सुभटों के कपाट-जैसे वक्षःस्थलों की भित्तियाँ—आपके अधीन हैं। क्योंकि एक ही नीच गौडाधिप से क्या ? आप ऐसा कीजिए जिससे कि दूसरा भी कोई फिर इस तरह का काम न करने पावे। विश्वास-पूर्वक सारी पृथिवी के इच्छुक, झूठी विजय चाहने वालों के अन्तःपुर की महिलाओं की आहों से उन पर चँवर डुलवाइए। खून की दुर्गन्धि से अन्धी बनी गीध-मण्डली के ( पंखों के ) आच्छादनों से उनकी ( राजकीय ) छत्र की छाया की लत मिटाइए। गुन-गुने जल-जैसे ( शत्रुओं के ) खून के सेकों द्वारा कुलक्ष्मीरूप कुलटा के कटाक्षों से हुए चक्षराग ( आँखों का प्रणय ) रूपी चक्षूराग ( आँख आने ) के रोगों का निरा-

टाकटाक्षचक्षूरागरोगान्। उपशमय निशितशरशिरावेधैर[1]कार्यशौर्यश्वयथून्। उन्मूलय लोहनिगडापीडमालामल[2]महौषधैः पादपीठदोहददुर्ललितपादपटुमान्द्यानि। क्षपय तीक्ष्णाज्ञाक्षरक्षारपातैर्जयशब्दश्रवणकर्णकण्डूः अपनय चरणनखमरीचिचन्दन-चर्चाललाटलेपैरनमितस्तिमितमस्तकस्तम्भविकारान्। उद्धर करदानसन्देशसन्दंशैर्द्रविणदर्पोष्मायमाणदुःशीललीलाशल्यानि। भिन्धि मणिपादपीठदीधितिप्रदीपिकाभिः शुष्कसुभटाटोपकुटिबन्धान्धकारान्। जय चरणलङ्घनलाघवगलितशिरोगौरवा-

टीका—चामरवीजनेच्छां पूरयेति भावः। उच्छिन्धि रुधिरस्य=रक्तस्य गन्धेन अन्धाः अत्यधिकमाकृष्टाः इत्यर्थः ये गृध्राः=पक्षिविशेषाः तेषां यत् मण्डलं=दलम्, तेन आच्छादनैः=आवरणैः छत्रस्य=राजकीयातपत्रस्य छायाया व्यसनानि=आसक्तीः उच्छिन्धि=अपाकुरु इत्यर्थः अर्थात् तान् हत्वा तेषां शवोपरि मांसलाभोभिगृध्राणां पक्षच्छायामापात्य तेषां राजच्छत्रच्छायाऽऽसक्तिम् अपाकुरु। कदुष्णं=कुत्सितम् उष्णम् ईषदुष्णमित्यर्थः शोणितं=रुधिरम् उदकम् इवेत्युपमिततत्पु० तस्य स्वेदैः=उष्णोदकादिना सेकैः कुलक्ष्मीः=दुष्टालक्ष्मीः एव कुलटा=स्वैरिणी व्यभिचारिणीत्यर्थः तस्याः कटाक्षैः=अपाङ्गदर्शनैः ये चक्षूरागाः=परस्परदर्शनेनोत्पन्नानुरागाः एव चक्षूरागाः=चक्षुर्लौहित्यानि रोगाः तान् अपाकुरु=निराकुरु (रूपकम्) उपश०—निशिताः=तीक्ष्णाः ये शरा=बाणाः तैः यः शिराणां=धमनीनां वेधः=वेधनम् तैः अकार्यं=विश्वासघातादि कलुषितकर्मणि यत् शौर्यं=पराक्रमः तेन उत्पन्ना इत्यर्थः ये श्वयथवः=शोथाः [ 'शोथस्तु श्वयथुः शोथः' इत्यमरः ] तान् उपशमय=शमं नय। यदि कस्मिन्नपि अङ्गे शोथो भवेत् तर्हि शलाकया शिरायाः वेधनं कृत्वा दूषितरक्तस्य बहिर्निस्सारेण शोथः शाम्यतीति वैद्यकम्। उन्मूल०—लोहस्य निगडः=शृङ्खला आपीडमाला=शेखरमाला इवेत्युपमिततत्पु० तस्याः मलः=मालिन्यमित्यर्थः एव महौषध तैः पाद-पीठे=चरणपीठे (सिंहासनसम्बद्धे) दोहदः=उत्करेच्छा तेन दुर्ललितः धृष्ट इत्यर्थः यः पादः=चरणः तस्य पटवः=तीव्राणि मान्द्यानि=मन्दता-जडत्वादिरोगान् उन्मूलय=निराकुरु, अर्थात् सततरत्नपीठन्यसनेन जडीभूतान् शत्रु-चरणान् निगडबद्धान् कृत्वा सञ्चालय, यदि कस्यापि चरणः पक्षाघातादिरोगेण जडीभवति तदा लोहशृङ्खलाबन्धनेन तदुपचारः। क्रियते वैद्यके। क्षपय—तीव्राणि=कठोराणि आज्ञाक्षराणि=आज्ञाशब्दाः एव क्षाराः='कॉस्टिक' प्रभृतीन् क्षारद्रव्याणि तेषां पातैः-पातनैः प्रयोगैरित्यर्थः जयशब्दे='जयतु महाराजः' इति प्रजोच्चार्यमाणध्वनिश्रवणे इत्यर्थः कर्णयोः=श्रोत्रयोः कंडः=खर्जूः क्षपय=शमय खर्जूःक्षारद्रव्येण शाम्यते। कठोराज्ञा-शब्दैः तेषां जयशब्दश्रवणोत्सुकतां निराकुरु इति भावः अत्र श्रवण-कर्णयोः पुनरुक्तवदाभासः। अपनय=चरणयोः=पादयोः नखमरीचयः=नखकिरणाः एव चन्दनस्य चर्चा=लेपः (रूपकम्) तया ललाटे=भाले लेपाः तैः अनमितानि=अप्रणमतानि अभिमानकारणात् न नीचैः पातितानि=स्तिमितानि=दृढानि निश्चलानीति यावत् यानि मस्तकानि=शिरांसि तेषां स्तम्भ-विकारात्=स्तम्भरोगात्

टिप्पणी—चक्षूराग—यहाँ कुलक्ष्मी पर कुलटा—व्यभिचारिणी स्त्री का आरोप किया गया है और चक्षूराग पर चक्षूराग रोग का। चक्षूराग शब्द में श्लेष है। आँखों-आँखों से होने वाला प्रेम चक्षूराग कहलाता है। इसी को 'आँखें चार होना' कहते हैं। साहित्यिक भाषा में इसे 'पूर्वराग' कहते हैं। कुलक्ष्मी-कुलटा ने नृपों पर कटाक्षपात किया कि चक्षुराग हुआ। यह चक्षुराग ही चक्षूराग रोग अर्थात् 'आँखें आ जाना' है। जिसमें आँखें लाल हो जाती हैं। इसका इलाज है कोसे जल से स्वेदन (सेक)। शत्रु राजाओं को मारकर उनके कदुष्ण खून से अनुचित साधन द्वारा राज-लक्ष्मी के प्रति उनके 'पूर्वराग' चक्षूराग का रोग मिटाइए अर्थात् छद्म से राज्य प्राप्त करने वाले का सफाया कीजिए। हिन्दी-करण करो। तीक्ष्ण बाणों से (शत्रुओं की) धमनियों को बींध कर बुरे काम करने से हुई सूजन को शान्त कर दो। शिरोमाला-जैसी लोहे की बेड़ियों के मैल-रूपी महौषधियों से पाद-पीठ की उत्कट इच्छा के कारण ढीठ बने पैरों की तीव्र जकड़न मिटाओ। आदेश के कठोर शब्दों की क्षार (कॉस्टिक) गिराकर 'जय जय' शब्द सुनाने के लिए उठी कानों की खुजली दूर करो। चरणों की नख-किरण-रूपी चन्दन के उबटन द्वारा माथे पर किये गए लेपों से अनझुके और अकड़े मस्तकों का स्तम्भ रोग हटाओ। कर देने के संदेश-रूपी संडसियों से दुश्चरित्रों की धनमद की गर्मी से भरी लीला-रूपी शल्यों को बाहर निकाल दो। मणिमय चरणपीठों की सूखी-बनावटी तेवड़ी-रूपी अन्धकार का भेदन करो। चरण द्वारा लंघन (प्रहार) रूपी लंघन (उपवास) से मिटे शिरोगौरव (शिरप्रतिष्ठा) रूपी शिरो-

१. 'वेधैर्वीरका'   २. 'मालामलयमहौषधैः'

रोग्यैर्मिथ्याभिमानमहासन्निपातान्। म्रदय सततसेवाञ्जलिमुकुलितकरसम्पुटोष्मभिरिष्वसनगुणकिणकार्कश्यानि। येनैव ते गतः पिता पितामहः प्रपितामहो वा तमेव मा हासीस्त्रिभुवनस्पृहणीयं पन्थानम्। अपहाय कुपुरुषोचितां शुचं प्रतिपद्यस्व कुलक्रमागतां केसरीव कुरङ्गीं राजलक्ष्मीम्। देव, देवभूयं गते नरेन्द्रे दुष्टगौडभुजङ्गजग्धजीविते च राज्यवर्धने वृत्तेऽस्मिन्महाप्रलये धरणीधारणायाधुना त्वं शेषः। समाश्वासय अशरणाः प्रजाः। क्ष्मापतीनां शिरःसु शरत्सवितेव ललाटंतपान्प्रयच्छ

---

टीका–अपनय=दूरीकुरु। स्तम्भरोगः केनापि लेपेन निराक्रियते, शत्रूणां स्तब्धमस्तकानि स्वपादयोः पातयित्वा पादनखकिरण-चन्दनलेपेन रोगविमुक्तानि क्रियन्तामिति भावः उद्धर—करदानस्य=राजस्वसमर्पणस्य सन्देशाः=संदंसिकाः संडासीति भाषायां प्रसिद्धाः तैः द्रव्यस्य=धनस्य दर्पेण=अभिमानेन उष्मायमाणाः=उष्माणम् उद्वमन्त्यः दुःशीलानां=दुश्चरित्राणां लीलाः=चेष्टितानि एव शल्यानि=बाणाग्राणि ( रूपकम् ) उद्धर=बहिर्निस्सारय, अर्थात् धनोष्मणां दुश्चेष्टितानि कुर्वतां भूपानां धनानि कररूपेण आकृष्य तेषां धनमदमपनय। भिन्धि—मणिपादपीठस्य=मणिमय-चरणविन्यासासनस्य दीधितयः=रश्मयः एव प्रदीपिकाः=उल्काः ताभिः ( रूपकम् ) शुष्कः=निस्सारः व्यर्थ इति यावत् यः सुभटानां=वीराणाम् आटोपः=प्रदर्शनम् सुभटम्मन्यतेति यावत् तेन भ्रुकुटिबन्धाः=भ्रूभङ्गाः एव अन्धकाराः तान् भिन्दि=विनाशय, अन्धकारो हि प्रदीपेन निराक्रियते वीरत्वाडम्बरवतः प्रतिपक्षान् आत्मपादपीठोपरि नतमस्तकान् कुरु इति भावः। जय-चरणेन लंघनम्=अतिक्रमणम् लत्ताप्रहारः इत्यर्थः एव लंघनम् उपवासः तेन यत् लाघवं अपमान एव लघुत्वं तेन गलितं यत् शिरोगौरवम्=मस्तकप्रतिष्ठा एव शिरोभारित्वम् तस्मात् जातैः आरोग्यैः=नैरुज्यैः मिथ्याभिमानाः=मिथ्याहंभावाः एव महासन्निपाताः=ज्वरविशेषाः तान् जय=अपनयेत्यर्थः। म्रदय—सततं सेवायाम् अलिपु मुकुलितः=मुकुलाकारं प्रापितः बद्धः इत्यर्थं यः करसम्पुटः=संयुक्तहस्तयुगलम् तस्य ऊष्मभिः=उष्णताभिः इष्वसनम्=इषवः बाणाः अस्यन्ते=प्रक्षिप्यन्ते अनेनेति ( इषु+अस्+ल्युट् करणे ) धनुरित्यर्थः तस्य यः गुणः=ज्या तेन तदाकर्षणेति यावत् यः किणः=आघातचिह्नं तस्य कार्कश्यानि=कठोरत्वानि म्रदय=मृदूकुरु ( नामधातुः ) सततबद्धाञ्जलिषु करयोः मध्ये ऊष्मस्वेदो जायते स्वेदेन च किणाः मृदूभवन्ति, विपक्षिणां करेषु कोमलतामुत्पाद्य तान् धनुर्ज्यास्फालनायोग्यान् विधेहीत्याशयः प्रतीयते। येन एव पथा=मार्गेण, मा हासीः=मा त्याक्षीः त्यजेत्यर्थः त्रिभुवनस्य=लोकत्रयस्य स्पृहणीयम्=अभिलषणीयम् पन्थानम् वीरतायाः मार्गमाश्रयेत्यर्थः कुपुरुषाणां=कातराणाम् उचितं=योग्यं शुचम्=शोकम् अपहाय=परित्यज्य कुलक्रमात्=वंशपरम्परातः आगताम्=प्राप्तां राजलक्ष्मीं केसरी=सिंहः कुरङ्गीम्=मृगीम् इवेत्युपमायां प्रतिपद्यस्व=स्वीकुरु। नरेन्द्रे=महाराजे प्रभाकरवर्धने देवभूयम्=देवस्य भाव इति ( देव+√भू+क्यप्' भुवो भवे' पा० ३।१।१०७ ) तम् देवत्वम् देवसायुज्यमिति यावत् [ स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि। देवभूयादिकं तद्वत्' इत्यमरः] गते=प्राप्ते स्वर्गते इत्यर्थं दुष्टः गौडः=गौडाधिपः एव भुजङ्गः=

टिप्पणी—सन्निपातान्—यह सारा वाक्य श्लिष्ट सांगरूपक है, लंघन, लाघव और गौरव शब्द द्व्यर्थक हैं। अभिमान में वे अपने शिर के गौरव को बनाये रखे हैं और किसी को भी शिर नहीं झुकाते। सन्निपात में भी शिर का गौरव-भारीपन रहता है। इसकी चिकित्सा लंघन=उपवास है। इससे सिर में लाघव=हल्कापन आ जाता है। लाघव का दूसरा अर्थ अपनी गिरावट भी है शत्रुओं के सिर पर लात मार कर अपमानित करो जिससे उनके सिर का गौरव चला जाएगा, मिथ्याभिमान में फिर सिर न उठा पाएँगे।

हिन्दी–गौरव (शिर के भारीपन) से हुए आरोग्यों द्वारा मिथ्याभिमान रूपी महान् सन्निपात-ज्वरों को भगाओ। निरन्तर सेवाञ्जलियों में जोड़े हुए हाथों की गर्मी द्वारा धनुष की डोरी के आघात चिह्नों की कठोरता को मृदु कर दो। जिस मार्ग से तुम्हारे पिता, दादा और परदादा गए, तुम भी त्रिभुवन द्वारा स्पृहणीय उसी मार्ग को मत छोड़ो। कायरों के योग्य शोक को त्यागकर कुलपरम्परा प्राप्त राजलक्ष्मी को इस तरह ग्रहण करो जैसे सिंह मृगी को ग्रहण किया करता है। देव, महाराज ( प्रभाकरवर्धन ) के देवलोक सिधारने पर और दुष्ट गौडाधिप रूपी सांप द्वारा राज्यवर्धन के प्राण खाये जाने पर उपस्थित हुए इस महाप्रलय ( घोरविपत्ति ) में पृथिवी धारण के लिए तुम ही शेष ( बचे हुए, शेषनाग ) हो। आश्रय-रहित प्रजा को समाश्वासन दो। क्ष्मापतियों ( राजाओं ) के शिरों पर पीड़ा पहुँचाने वाले पाद-न्यास ( चरणविन्यास ) इस तरह करो जैसे क्ष्मापतियों ( पर्वतों ) के शिरों ( शृंगों ) पर शरद् का सूर्य अपने पादविन्यास

पादन्यासान् । अहितानामभिनवसेवादीक्षादुःखसन्तप्तश्वासधूममण्डलैर्नखम्पचैः प्रचलितचूडामणिचक्रवालबालातपैश्छायाहि कल्माषपादताम् । अपि च हते पितर्येकाकी तपस्वी मृगैः सह संवर्धितः सहजब्राह्मण्यमार्दवसुकुमारमनाः कृतनिश्चयश्चण्डचाप-वनाटनिटांकारनादनिर्मदीकृतदिग्गजं गुञ्जज्ज्याजालजनितजगज्ज्वरं समग्रमुद्यतमेकविंशतिकृत्वः कृत्तवंशमुत्खातवान्राजन्यकं परशुरामः । किं पुनर्नैसर्गिककायकार्कश्यकुलिशायमानमानसो मानिनां मूर्धन्यो देवः । तदद्यैव कृतप्रतिज्ञो गृहाण गौडाधम-

टीका—सर्पः तेन जग्धं = खादितं जीवितं = प्राणाः यस्य तस्मिन् राज्यवर्धने च वृत्ते = जाते उपस्थिते इति यावत् अस्मिन् महाप्रलये = महत्यां विपत्तौ धरण्याः = पृथिव्याः धारणाय = वहनाय त्वं शेषः = अवशिष्टः शेषनागश्च । अशरणाः = शरण-रहिताः अनाश्रया इति यावत् प्रजाः = लोकान् समाश्वासय = सान्त्वय । शरदः = शरदृतोः सविता = सूर्यः इवेति श्लिष्टोपमायाम् क्ष्मापतीनां = पर्वतानां भूपालानां च शिरस्सु = मूर्धसु ललाटं तपतीति [ ललाट + √तप् + खश् मुमागमश्च ] तान् पादानां = किरणानां चरणानाञ्च न्यासान् = प्रक्षेपान् प्रयच्छ = देहि । अहिता०—अहितानां = शत्रूणाम् अभिनवः = नूतना अकृतपूर्वेत्यर्थः या सेवा चरणपतनादिरूपा एव दीक्षा कर्तव्यव्रतानुष्ठानं तया दुःखम् क्लेशः ( एव अग्निः ) तेन संतप्ताः ये श्वासाः = निश्वसितानि तेषां धूमस्य मण्डलैः = समूहैः नखम्पचैः = नखान् = चरणनखान् पचन्ति = तपन्तीति ( नख + पच् + खश् मुमागमश्च तथोक्ताः तैः चरणनखतापकैरित्यर्थः प्रचलितानि = प्रकम्पितानि यानि चूडामणीनां = शिरोरत्नानां चक्रवालानि = मण्डलानि तेषां बालातपैः = नवोदितसूर्यातपैः किरणावलोभिरित्यर्थः

**टिप्पणी—कल्माषपादताम्**—कल्माष रंग-विरंगे को कहते हैं । हर्षवर्धन के चरणों में सिर रखते हुए एक ओर राजाओं के गर्म आहों का नीला धुआं और दूसरी ओर चूडामणियों की श्वेत घटा पड़ती है जिससे उसके पैर कल्माष ( नील-श्वेत ) हो उठते हैं । कल्माष शब्द में श्लेष है जिसका दूसरा अर्थ सुदास का पुत्र नृप सुधन्वा कहलाता है। पुराणों में इसकी कथा इस तरह आती है कि, एक बार राजा ने दो सिंहों में एक को मार डाला जो मरकर राक्षस बन गया । उसने राजा से बदला लेने की प्रतिज्ञा कर ली । राजा एक बार यज्ञ कर रहा था कि यज्ञ समाप्ति पर वह राक्षस वसिष्ठ का वेष बना कर आ पहुँचा और राजा से मांसाहार की याचना कर बैठा । बाद को राक्षस ने याचक का रूप बना कर नर-मांस परोस दिया । इतने में असली वसिष्ठ आ गए और नर मांस परोसा जानकर राजा को शाप दे बैठे—'जा नरमांस भोजी बन जा' । निर्दोष राजा को क्रोध आ गया और वह प्रतिशाप देने के लिए हाथ में जल लिये हुए ही था कि उसकी रानी ने उसे रोक दिया । राजा ने शाप जल अपने ही पैरों में डाल दिया जिसे वे कल्माष हो गये और राजा कल्माषपाद कहलाया । प्रतिशाप देने वाले कल्माषपाद की तरह तुम भी प्रतिहिंसा करो और कल्माषपाद बन जाओ ।

**परशुराम**—परशुराम के पिता जमदग्नि के पास कामधेनु थी । एक दिन हैहयाधिप कार्तवीर्य आखेट करता जमदग्नि के आश्रम में आ पहुँचा । ऋषि ने सेना सहित राजा का यथाभिलषित आतिथ्य किया । यह सब कामधेनु का प्रभाव था । राजा ऋषि से कामधेनु की याचना कर बैठे लेकिन उन्होंने नहीं दी । परशुराम घर में नहीं थे । कुपित हुए कार्तवीर्य ने संघर्ष में जमदग्नि का वध कर दिया और बलात् कामधेनु को ले गया । परशुराम को पीछे पता चला तो उन्होंने क्षत्रिय जाति का विनाश करने की प्रतिज्ञा कर डाली और इक्कीस बार पृथिवी को क्षत्रियरहित कर दिया ।

**हिन्दी**–( किरण विन्यास ) किया करता है । नयी-नयी सेवा-दीक्षा के दुःख ( अग्नि ) से राजाओं के निकले निश्वासों के धूम-समूहों से तथा नाखून झुलसा देने वाले एवं हिलते हुए चूडामणि-समूहों के मृदु आतपों से रंग-बिरंगे पैरों वाले बन जाओ । अपि च, पिता के मार दिये जाने पर अकेला तपस्वी, मृगों के साथ पला-पुसा, स्वाभाविक ब्राह्मणोचित मृदुता के कारण कोमल हृदय वाला परशुराम ( बदला लेने का ) निश्चय किये हुए इक्कीस बार उस क्षत्रिय जाति का ध्वंस कर गया था जिसने धनुष कोटियों की भीषण टंकार-ध्वनियों से दिग्गजों को मदरहित कर दिया था और गूँजती हुई प्रत्यञ्चाओं के समूह से जगत के कानों में ज्वर उत्पन्न कर दिया था । फिर शरीर की स्वाभाविक कठोरता के कारण वज्र-जैसे हृदय वाले आप तो अभिमानियों के मुखिया ठहरे । अतः नीच गौड़ के विध्वंस के लिए आज ही

१. 'कृतवर्षं'

जीवितध्वस्तये जीवितसङ्कलनाकुलकालाकाण्डयात्राचिह्नध्वजं धनुः। न ह्ययमरातिरक्तचन्दनचर्चाशिशिरोपचारमन्तरेण शाम्यति परिभवानलपच्यमानदेहस्य देवस्य दुःखदाहज्वरः सुदारुणः। निकारसन्तापशान्त्युपायपरिक्षये हि हिडिम्बाचुम्बनास्वादितमिव रिपुरुधिरामृतममन्दरोपायमपायि पवनात्मजेन। जामदग्न्येन च शाम्यन्मन्युशिखिशिखासंज्वरसुखायमानस्पर्शशीतलेषु क्षत्रियक्षतजह्रदेष्वस्नायि।' इत्युक्त्वा व्यरंसीत्।

टीका–कल्माषौ=चित्रौ कर्बुरितौ श्यामश्वेतौ इति यावत् पादौ=चरणौ यस्य भावः तत्ता ताम् याहि=प्राप्नुहि श्यामश्वेतचरणवत् भवेत्यर्थः अत्र तद्गुणालङ्कारः। अपि च–पितरि जमदग्नौ हते=कार्तवीर्येण मारिते तपस्वी=तापसः मृगैः=हरिणैः संवर्धितः=तेषां सहवासे पालितः पुष्टश्च सहजं=स्वाभाविकं यत् ब्राह्मण्यम्=ब्राह्मणत्वम् तस्य मार्दवेन=मृदुतया सुकुमारं=कोमलं मनः=हृदयं यस्य तथाभूतः परशुरामः (पितृवधशोधाय) कृतः निश्चयः येन सः चण्डानि यानि चापानां=धनुषां वनानि=समूहाः तेषां या अटनयः=कोटयः अग्राणीत्यर्थः ['कोटिरस्याटनि' इत्यमरः] तासां टङ्कार-नादैः=टङ्कारध्वनिभिः निर्मदीकृताः=मदरहितीकृताः दिग्गजाः येन तत् गुञ्जत्=नदत् यत् ज्यानां=मौर्वीणां जालं=समूहः तेन जनितः=कृतः जगतः ज्वरः=तापः येन तत्, उद्यतम्=(सम्भूय) सज्जं समग्रं राजन्यकं=क्षत्रियजातिमित्यर्थः ['अथ राजकम् राजन्यकं च नृपति क्षत्रियाणां गणे क्रमात्' इत्यमरः] एकविंशतिकृत्वः=एकविंशतिवारम् कृत्तवंशम्=कृत्ताः छिन्नाः=वंशाः=कुलानि यस्मिन् कर्मणि यथास्यात्तथा उत्खातवान्=उत्पाटितवान् क्षत्रियजातेः कुलोच्छेदमकरोदिति भावः किं पुनः नैसर्गिकं यत् कायस्य=देहस्य कार्कश्यं=कठोरता तेन कुलिशायमानं=कुलिशवत्=वज्रवत् आचरत् इति (आचारार्थे क्यङ्) मानसं=मनः यस्य तथाभूतः मानिनाम्=अभिमानवतां मूर्धन्यः=मूर्धस्थानीयः मुख्यः इत्यर्थः देवः=भवान् तदद्यैव गौडाधमस्य जीवितस्य=प्राणानां ध्वस्तये=विनाशाय कृता प्रतिज्ञा येन तथाभूतस्त्वम् जीवितानां सङ्कलनं=सङ्ग्रहः तस्मिन् आकुलः=अधीरः अत्युत्सुक इति यावत् यः यमः=कृतान्तः तस्य अकाण्डे=सहसा या यात्रा=अभियानं तस्याः चिह्नभूतं ध्वजं=पताकाम्, गृहाण=आकलय। रूपकम्। सेनायाः अग्रे ध्वजः नीयते, तव धनुः शत्रुषु भीषणप्रलयमाधास्यतीति भावः। नहि अयं परिभवः=अपमानः एव अनलः=वह्निः तेन पच्यमानः=दह्यमानः इत्यर्थः देहः=शरीरं यस्य तथाभूतस्य देवस्य भवतः सुदारुणः=अतिकठोरः दुःखमेव दाहज्वरः=दाहको ज्वरः अरातेः=शत्रोः गौडाधिपस्य रक्तं रुधिरम् एव चन्दनचर्चा=चन्दनलेपः तया शिशिरोपचारः=शैत्याधायक–चिकित्सा तम् अन्तरेण=विना न शाम्यति=शमम् एति, रूपकम्। निकार०—निकारेण=अपमानेन यः सन्तापः=ऊष्मा तस्य शान्तेः=उपशमस्य उपायानां साधनानां परिक्षये=अनुपलब्धौ इत्यर्थः पवनस्य=वायोः आत्मजेन=पुत्रेण भीमसेनेन हिडिम्बायाः=स्वप्रियतमायाः एतन्नाम्न्या=राक्षस्याः यत् चुम्बनम्=मुखेन अधरस्पर्शः तस्मिन् आस्वादितं=गृहीत-स्वादं पीतमित्यर्थः इवेत्युपमायाम् रिपोः=शत्रोः (दुःशासनस्य) रुधिरं=रक्तम् एव अमृतम् न मन्दरः=मन्दराचलः उपायः साधनं यस्मिन् कर्मणि यथास्यात्तथा अपायि=पीतम् हिडिम्बा राक्षसी नररुधिरं पिबति स्म। तस्याः चुम्बने तदधरलग्नं नररुधिरं भीमेन पूर्वमास्वादितमेव। देवासुरैस्तु मन्दरद्वारा समुद्रमथनात् अमृतं लब्धं किन्तु भीमसेनः मन्दरसहायतां विनैव तल्लब्धवानिति व्यतिरेकालङ्कारः जमदग्नेः अपत्यं पुमान् इति जामदग्न्यः=(गोत्रापत्यार्थे यत्) परशुरामः तेन शाम्यन्०—शाम्यन्=शान्तो भवन् मन्युः=क्रोधः एव शिखीः=वह्निः तस्य शिखानां=ज्वालानां यः संज्वरः=तापः तस्मिन् सुखायमानेषु=सुखीभवत्सु (सुखादयो वृत्तिविषये तद्वति वर्तन्ते') सुखप्रदेषु इत्यर्थः स्पर्शे शीतलेषु च क्षत्रियाणां=राजन्यानां यत् क्षतजं=रुधिरं तस्य ह्रदेषु=सरस्सु अस्नायि=स्नातम्, यथोक्तम् महाभारते—'त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः। समन्तपञ्चके पञ्च चकार रुधिरह्रदान्॥ स तेषु तर्पयामास भृगून् भृगुकुलोद्वहः' (वनप० ११७ ९–१०) इति उक्त्वा=कथयित्वा व्यरंसीत्=विरराम।

हिन्दी–प्रतिज्ञा किये हुए तुम प्राणों को बटोरने में अधीर बने काल के आकस्मिक अभियान के चिह्नध्वज-रूप धनुष ग्रहण करो। अपमान-रूपी आग से जलते जा रहे शरीर वाले आपके अतिदारुण दुःखरूपी दाह-ज्वर ने विना शत्रु के रुधिर रूपी चन्दन लेप के शीतोपचार के शांत नहीं होता है अपमानजनित संताप के उपशमन का उपाय न मिलने पर भीमसेन ने विना मन्दराचल को साधन बनाये ही शत्रु (दुःशासन) का रुधिरामृत पान किया जो हिडिम्बा के चुम्बन में चाखे हुए (रुधिर) के सदृश था। परशुराम ने ठंडी पड़ती हुई क्रोधाग्नि की ज्वालाओं के ताप में सुखकर और स्पर्श में ठंडे लगने वाले क्षत्रियों के खून के सरोवरों में स्नान किया यह कहकर (सेनापति) चुप हो गया।

देवस्तु हर्षस्तं प्रत्यवादीत्—'करणीयमेवेदमभिहितं मान्येन। इतरथा हि मे गृहीतभुवि भोगिनायेऽपि दायादवद्दृष्टिरीर्ष्यालोर्भुजस्य। उपरि गच्छन्तीच्छति निग्रहाय ग्रहगणेऽपि भ्रूलता चलितुम्। अनमत्सु शैलेष्वपि कचग्रहमभिलषति दातुं करः। तेजोदुर्विदग्धानर्ककरानपि चामराणि ग्राहयितुमीहते हृदयम्। राजशब्दरुषा मृगराजानामपि शिरांसि वाञ्छति पादः पादपीठीकर्तुम्। स्वच्छन्दलोकपालस्वेच्छागृहीतानामाक्षेपादेशाय दिशामपि स्फुरत्यधरः, किं पुनरीदृशे दुर्जाते जाते। जातामर्षनिर्भरे च मनसि नास्त्येवावकाशः शोकक्रियाकरणस्य। अपि च हृदयविषमशल्ये मुसल्ये जीवति जाल्मे जगद्विगर्हिते गौडाधिपाधमचण्डाले जिह्रेमि शुष्काधरपुटः पोटेव प्रतिकारशून्यं शुचा सूत्कर्तुम्। अकृतरिपुबलावलाविलोललोचनोदकदुर्दिनस्य मे

टीका—तं=सिंहनादं प्रत्यवदत्=प्रत्यकथयत्–मान्येन=आदरणीयेन अभिहितं कथितम् इदं करणीयं=कर्तव्यं एव इतरथा=अन्यथा गृहीता=धृता भूः=पृथिवी येन तस्मिन् भोगिनां=सर्पाणां नाथे=स्वामिनि शेषे इत्यर्थः अपि अन्यस्य गृहीतभुवः भोगिनाथस्य=भूपतेः तु वार्तैव का इत्यर्थापत्तिः मे ईर्ष्यालोः=ईर्ष्यायुतः भुजस्य दायादे=दायं=पैत्रिक–सम्पत्तिम् आदत्ते इति तथोक्ते अथवा दायादस्य इव दृष्टिः=दर्शनम्। उपरि=गगन–मध्यं गच्छति=व्रजति ग्रहगणे=ज्योतिष्पिण्ड–समूहे अपि [ अर्थापत्तिः ] निग्रहाय=रोधाय भ्रूः लता इवेत्युपमिततत्पु० चलितुम्=गन्तुम् इच्छति=कामयते अर्थात् उपरि गगनमध्यमारोहन्तं ग्रहगणं मे भ्रूः तमपि रोद्धुमिच्छति, अहं पृथिव्या एव न अपितु आकाशीयग्रहानपि नियन्तुमिच्छामीति भावः। अनमत्सु=मदग्रे नमनं न कुर्वत्सु शैलेषु=पर्वतेषु अपि कचग्रहं केशाकर्षणं दातुं करः अभिलषति=इच्छति, केशाकर्षणपूर्वकं तान् नमयितुमिच्छतीति भावः। तेजोभिः दुर्विदग्धान्=दुर्विनीतान् दुर्मदानिति यावत् अर्कस्य=सूर्यस्य करान् किरणान् एव करान्=हस्तान् चामराणि ग्राहयितुम्=आकलयितुं मे हृदयम् इच्छति, अर्थात् सूर्यकरानपि स्वचामरग्राहकीकर्तुं मे इच्छा। मृगराजेषु प्रयुक्ते 'राज' शब्दे रुषा=क्रोधेन मे पादः=चरणः मृगराजानां=सिंहानां शिरांसि पादपीठीकर्तुं चरणपीठरूपे परिणमयितुं वाञ्छति=इच्छति अर्थात् मृगराजामपि शिरस्सु पादन्यासं कर्तुमिच्छामि किं पुनः नरराजानाम्। स्वच्छन्द०—स्वच्छन्दाः=स्वेच्छाचारिणः ये लोकपालाः=दिक्पालाः तेषां स्वेच्छया=स्वकाम्यया गृहीतानाम्=अधिकृतानां दिशाम्=दिशानाम् अपि आक्षेपस्य=तेषां हस्तेभ्यः आच्छेदनस्य आकर्षणस्येति यावत् आदेशाय=आज्ञादानाय मे अधरः=अधरोष्ठः स्फुरति=स्पन्दते। उपरि सर्वत्र अर्थापत्तिरलंकारः। ईदृशे=एवं विधे दुर्जाते=विपत्तौ [ 'दुर्जातं व्यसने क्लीबेऽसम्यग्जातेऽन्यलिङ्गकम्' इति मेदिनी ] जाते=सञ्जाते जातः=उत्पन्नः यः अमर्षः=क्रोधः तेन निर्भरे=परिपूर्णे मनसि न अस्ति एव अवकाशः=अवसरः इत्यर्थः शोकक्रियायाः करणस्य=शोकव्यापारस्येत्यर्थः। हृदये विषमे=दारुणे शल्ये०—शल्यरूपे बाणाग्रस्वरूपे

**टिप्पणी—दायादवद्दृष्टिः**—आशय यह है कि यदि मैं गौडाधम का दमन नहीं करता, तो मेरी भुजा ईर्ष्या से उसे पृथिवी लेने में अपना दायाद—हिस्सेदार–समझेगी। दायादों में ईर्ष्या होती ही है। अन्य राजा को तो क्या, मेरी भुजा पृथिवी धारण करने वाले शेष को भी दायाद मानने को तय्यार नहीं। वह तो अकेली स्वयं सारी पृथिवी धारण करना चाहती है।

**हिन्दी**—देव हर्षवर्धन ने उत्तर दिया—'आदरणीय द्वारा कहा हुआ यह तो करना ही है, क्योंकि यह तो भू को धारण किये हुए भोगिनाथ ( शेषनाग ) के प्रति भी मेरी ईर्ष्यालु भुजा की दायाद की—जैसी दृष्टि बनी रहेगी। ऊपर ( गगन-मध्य पर ) चढ़ते हुए ग्रहगणों को रोकने के लिए भी मेरी भ्रूलता जाना चाह रही है। ( मेरे आगे ) न झुकते हुए पर्वतों के भी बाल खींचने को मेरा हाथ इच्छुक है। ( अपने ) तेजों में अकड़े हुए सूर्य के कर ( किरण ) रूपी करों ( हाथों ) में मेरा हृदय चँवर पकड़वाना चाहता है। 'राज' शब्द से हुए क्रोध के कारण मेरा पैर मृगराजों ( सिंहों ) के भी शिरों को पादपीठ बनाने की इच्छा करता है। स्वच्छन्द बने हुए लोकपालों द्वारा यथेच्छ अपने अधिकार में की हुई दिशाओं को भी उनसे छीन लेने की आज्ञा देने के लिए मेरा होंठ फड़क रहा है। फिर ऐसी विपत्ति आ पड़ने पर तो बात ही क्या? और मन में इस तरह क्रोध के भरे रहते रोने-धोने के लिए अवकाश है ही नहीं। अपि च हृदय में दारुण शल्य-रूप, मुसल द्वारा वध योग्य, नीच, लोकनिन्दित गौडाधिप अधम चंडाल के जीते रहते। ( दुःखाग्नि में ) सूखे हुए होठों वाला मैं बिना बदला चुकाए, स्त्री-पुरुष के लक्षणों वाले व्यक्ति की तरह शोक में सिसकने से भी लजा रहा हूँ। शत्रु सेनाओं की अबलाओं की आखों में अश्रुजल बहाने वाला दुर्दिन लाए बिना मेरे दोनों हाथों का

कुतः करयुगलस्य जलाञ्जलिदानम् । अदृष्टगौडाधमचिताधूममण्डलस्य च चक्षुषः स्वल्पमप्यश्रुसलिलम् । श्रूयतां मे प्रतिज्ञा। शपाम्यार्यस्यैव पादपांशुस्पर्शेन यदि परिगणितैरेव वासरैः सकलचापचापलदुर्ललितनरपतिचरणरणरणायमाननिगडां निर्गौडां न करोमि मेदिनीं ततस्तनूनपाति पीतसर्पिषि पतङ्ग इव पातकी पातयाम्यात्मानम् ।' इत्युक्त्वा च महासन्धिविग्रहाधिकृतमवन्तिमन्तिकस्थमादिदेश—'लिख्यताम्, आ रविरथचक्रचीत्कारचकितचारणमिथुनमुक्तसानोरुदयाचलात्, आ त्रिकूटकटककुट्टाकटङ्कोल्लिखितकाकुत्स्थलङ्कालुण्ठनव्यतिकरात्सुवेलात्, आ वारुणीमदस्खलितवरुणवरनारीनूपुररवमुखरमुखरकुक्षेरस्तगिरेः, आ गुह्यकगेहिनीपरिमलसुगन्धिगन्धपाषाणवासितगुहागृहाच्च गन्धमादनात्, सर्वेषां राज्ञां सज्जीक्रियन्तां कराः करदानाय शस्त्र-

---

टीका—इति यावत् मुसल्ये = मुसलेन गदया वध्यः इति (मुसल + यत्) तस्मिन् जाल्मे = नीचे, पामरे [ 'जाल्मः स्यात् पामरे क्रूरेऽसमीक्ष्यकारिणि त्रिषु' इति मेदिनी ] जगता = लोकेन विगर्हिते = विनिन्दिते गौडाधिपः एव अधम = चण्डालः तस्मिन् जीवति = प्राणिति सति शुष्कः = दुखाग्निकारणात् शुष्कतां गतः अधरपुटः यस्य तथाभूतः अहं पोटा = स्त्री-पुंसलक्षणा व्यक्तिः [ पोटा स्त्रीपुंसलक्षणा' इत्यमरः ] इवेत्युपमायाम्, पोटापक्षे 'शुष्काधरपुट' शब्दः अश्लीलतया व्याख्यातुं न शक्यते [ अधरः = स्त्रीयोनिः ] प्रतिकारेण = वैरनिर्यातनेन शून्यं = रहितं यथास्यात्तथा प्रतिकारम् अकृत्वेत्यर्थः शुचा = शोकेन 'सूत्' इति कर्तुं जिह्रेमि = लज्जे । अकृत० न कृतं रिपूणां = शत्रूणां बलस्य = सैन्यस्य अबलानां = स्त्रीणां विलोलेषु = चञ्चलेषु लोचनेषु = नयनेषु उदकं = अश्रुजलं एव दुर्दिनम् = मेघच्छन्नदिनं येन तथाभूतस्य मे करयोः = हस्तयोः युगलस्य = द्वयस्य कुतः स्वभ्रात्रे राज्यवर्धनाय जलाञ्जलेः दानम् = अर्पणम् अर्थात् अहं साधारणजलेन न अपितु शत्रुविधवाश्रुजलेनैव भ्रात्रे जलाञ्जलिं दास्ये । अदृष्ट० —न दृष्टं गौडाधमस्य = नीचगौडाधिपस्य चितायाः धूम-मण्डलं येन तस्य मे चक्षुषः कुतः स्वल्पम् अपि अश्रुसलिलम् = अश्रुजलम् शपामि = शपथं करोमि आर्यस्य = आदरणीयस्य स्वर्गीयभ्रातुः पादयोः पांशोः धूलेः स्पर्शेण यदि परिगणितैः = संख्यातैः कतिपयैरित्यर्थः एव वासरैः = दिवसैः सकल०— सकलाः = निखिलाः चापानां = धनुषां चापलेन = चाञ्चल्येन दुर्ललिताः = दुर्विनीताः स्वधनुश्चापल्येन मदान्धाः इत्यर्थः ये नरपतयः = भूपाः तेषां चरणेषु रणरणायमानाः = रणरणशब्दं कुर्वन्तः निगडाः = शृंखलाः यस्यां तथाभूतां तथा निर्गौडाम् = गौडरहिताम् मेदिनीं = पृथिवीं न करोमि, ततः = तर्हि पातकी = पापी अहम् आत्मानं पतङ्गः = कीटविशेषः इवेत्युपमायां पीतं = गृहीतमित्यर्थः सर्पिः = घृतं येन तस्मिन् तनूनपाति = अग्नौ पातयामि, अग्नौ आत्मदाहं करिष्यामीत्यर्थः। इति उक्त्वा = कथयित्वा सन्धिः विग्रहः = युद्धं च तयोः अधिकृतः = नियुक्तः महांश्चासौ० कृतश्च तम् सर्वोच्च सन्धिविग्रहिकम् अधिकारिणमित्यर्थः अवन्तिम् = एतन्नामानम् अन्तिके समीपे तिष्ठतीति तथोक्तम् आदिदेश = आदिष्टवान् आ इति मर्यादायाम्, एतद् = योगे च पञ्चमी भवति, रवि० —रवेः = सूर्यस्य रथस्य यत् चक्रं तस्य चीत्कारेण = चरचर-शब्देन चकितानि = भयकम्पितानि यानि चारणानां = गन्धर्वाणां मिथुनानि = युगलानि तैः मुक्तानि = परित्यक्तानि सानूनि = प्रस्थाः यस्य तथाभूतात् = उदयाचलात् = उदयगिरेः उदयगिरिपर्यन्तमित्यर्थः, त्रिकूट० — त्रिकूटस्य = त्रिशृङ्गवतः लंकाधारभूतस्य = पर्वतविशेषस्य कटके = राजधान्यां लंकायामित्यर्थः, यथोक्तम् —'स सागरमनाधृष्यमतिक्रम्य महाबलः । त्रिकूटस्य तटे लंकां स्थितः स्वस्थो ददर्श ह' ( रामा० ) कुट्टयन्ति = छिन्दन्तीति कुट्टकाः = छेदकाः ये टङ्काः

हिन्दी—(मृत भ्राता को) जलांजलि देना कैसे (हो सकता है) ? नीच गौड की चिता का धूमसमूह देखे बिना मेरी आँख से तनिक भी अश्रुजल कैसे ( बह सकता है ) मेरी प्रतिज्ञा सुनिये । यदि गिनेगिनाये दिनों के भीतर मैं पृथिवी को धनुषों की चपलता के अभिमान से ढीठ बने सभी राजाओं के पैरों पर छणछणाती बेड़ियाँ डलवायें गौड़-रहित न बना दूँ तो मैं पापी घी पीये हुए अग्नि में अपने आपको पतंगों की तरह झोंक दूंगा । यह कहकर पास ही में बैठे हुए सन्धि-विग्रह के सबसे बड़े अधिकारी अवन्ति को उसने आज्ञा दी—'लिखो, उदयाचल तक जिसके पठार के रथचक्र की घर्घराहट से चकित हुए गंधर्वों के जोड़े छोड़े बैठे हैं, सुवेल पर्वत तक जहाँ चित्रकूट की राजधानी (लंका) में (पत्थर) छेद देने वाली छेनियों से राम द्वारा किये हुए लंकाविध्वंस की कहानी खुदी पड़ी है, अस्ताचल तक—जिसकी गुफाओं के भीतरी भाग में मदिरा के मद से लड़खड़ाती वरुण की सुन्दरियों के नूपुरों की झंकार गूंजती रहती हैं और गन्धमादन पर्वत तक—जहाँ गुफाओं के निवासस्थान गुह्यकों (यक्ष विशेषों) की गृहिणियों के परिमल से सुगन्धित बने पाषाणों से सुरभित रहते हैं । सभी

ग्रहणाय वा, गृह्यन्तां विशश्चामराणि वा, नमन्तु शिरांसि धनूंषि वा, कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा, शेखरीभवन्तु पादरजांसि शिरस्त्राणि वा, घटन्तामञ्जलयः करिघटाबन्धा वा, मुच्यन्तां भूमय इषवो वा, समालम्ब्यन्तां वेत्रयष्टयः कुन्तयष्टयो वा, सुदृष्टः क्रियतामात्मा मच्चरणनखेषु कृपाण[1]दर्पणेषु वा परागतोऽहमिति । पङ्गोरिव मे कुतो निवृत्तिस्तावद्यावन्न कृतः सर्वद्वीपान्तरसञ्चारी सकलनरपतिमुकुटमणिशिलालोकमयः पादलेपः ।' इति कृतनिश्चयश्च मुक्तास्थानो विसर्जितराजलोकः स्नानारम्भाकाङ्क्षी सभामत्याक्षीत् । उत्थाय च स्वस्थवन्निःशेषमाह्निकमकार्षीत् । अगलच्च दर्पप्रसर इव श्रुतप्रतिज्ञस्य शाम्यदूष्मा दिवसस्त्रिभुवनस्य ।

टीका–तक्षण्यः तैः लिखितः = उत्कीर्णः काकुत्स्थेन = रामेण (कृतः) लङ्कायाः लुण्ठनस्य विध्वंसस्येत्यर्थः व्यतिकरः=प्रसङ्गः वृत्तान्तः इति यावत् यस्मिन् तस्मात् सुवेलात् = लङ्कास्थितपर्वतविशेषात् आ = तत्पर्यन्तमित्यर्थः त्रिकूटः = सुवेलश्चैकस्यैव गिरेः नामनी स्तः वारुणी० –वारुणी = मदिराविशेषः तस्याः मदेन = प्रभावेण विकारेणेति यावत् स्खलिताः=पतिताः याः वरुणस्य = समुद्रस्य पश्चिमदिशायाश्च अधिष्ठातृदेवतायाः याः वरनार्यः = सुन्दर्यः तासां नूपुराणां = मञ्जीराणां रवेण = झङ्कारेण मुखरः = शब्दायमानः कुहराणां = कन्दराणां कुक्षिः = अभ्यन्तरं यस्य तस्मात् अस्तगिरेः = अस्ताचलात् आ=तत्पर्यन्तम्, गुह्यक० - गुह्यकानां=देवयोनिविशेषाणां याः गेहिन्यः=कुटुम्बिन्यः तासां परिमलेन=सौगन्ध्येन सुगन्धयः = सुगन्धिताः ये पाषाणाः = शिलाः तैः वासितं = सुरभितं गुहा एव गृहं = निवासस्थानं यस्मिन् तस्मात् गन्धमादनात् = एतदाख्यपर्वतविशेषात् आ = पर्यन्तमित्यर्थः=सर्वेषां राज्ञां = भूपालानां कराः = हस्ताः करस्य = राजभागस्य दानाय ( यदि सन्धिरिष्यते ) अथवा शस्त्रस्य ग्रहणाय ( यदि युद्धमिष्यते ) कराः = हस्ता सज्जीक्रियन्ताम् = प्रेर्यन्तामित्यर्थः लिख्यतामितिक्रियया सम्बन्धः दिशः गृह्यताम् = आश्रियन्ताम् अर्थात् स्वराज्यं परित्यज्य दिशासु पलायन्ताम् अत्र एवमपि व्याख्यातुं शक्यते दिशः = स्वराज्यदिशाः गृह्यन्ताम् तद्रक्षणार्थं युद्धाय तत्र स्थीयताम् अथवा मम दासतामङ्गीकृत्य ममोपरि वीजनार्थं चामराणि गृह्यन्ताम्, शिरांसि मदग्रे नमन्तु = नम्रीकुर्वन्तु धनूंषि = चापान् वा, मम आज्ञाः कर्णपूरीक्रियन्ताम् = कर्णपूरवत् श्रोत्रयोः धार्यन्ताम् सादरं श्रूयन्तामित्यर्थः मौर्व्यः = प्रत्यञ्चाः धनुर्मौर्वीः कर्णपर्यन्तमाकृष्य मया सह युद्धयन्तामित्यर्थः, मम पादयोः रजांसि = रेणवः शेखरीभवन्तु = शिरोभूषणवत् शिरोधार्याणि भवन्तु अथवा युद्धार्थं शिरस्त्राणि = शिरस्कानि शेखरी भवन्तु, मम अग्रे अञ्जलयः = प्रणामाञ्जलयः घटन्ताम् = जायन्ताम् अथवा करिघटानां = गजसमूहानां बन्धाः = युद्धार्थं व्यूहरचना घटन्ताम्, भूमयः = निजप्रदेशान् अथवा इषवः = बाणाः मुच्यन्ताम् = त्यज्यन्ताम्, वेत्रयष्टयः = द्वारपालैः धृताः वेत्रदण्डाः अथवा कुन्त-यष्टयः = भल्लदण्डाः समालम्ब्यन्ताम् = हस्तेषु गृह्यन्ताम्, मम दास्यमथवा युद्धः स्वीक्रियताम्, मम चरणानां नखेषु आत्मा सुदृष्टः = सम्यग् दृष्टः क्रियताम् अर्थात् मम चरणयोः पतित्वा आत्मा तत्र प्रतिबिम्बितः दृश्यताम् अथवा कृपाणाः = खड्गाः एव दर्पणाः तेषु आत्मा प्रतिबिम्बितः दृश्यताम् अर्थात् युद्धाय कृपाणो गृह्यताम्, अहम् परागतः—आगत एव' इति लिख्यताम् । उपरि सर्वत्र विकल्पालङ्कारः । पङ्गोः = गतिविकलस्य पादे आघातकारणात् चलितुमसमर्थस्य इवेत्युपमायां मे निवृत्तिः = युद्धात् उपरमः कुतः यावत्

हिन्दी–राजाओं के हाथ या तो ( मुझे ) कर देने के लिए या फिर शस्त्र ग्रहण करने के लिये तय्यार किये जायें । वे या (अपनी-अपनी) दिशाओं को पकड़े रहें या ( मेरे आगे ) चँवर ग्रहण करें, या तो (मेरे आगे) सिर झुकायें या धनुषों को तानें, या ( मेरी ) आज्ञाओं का कर्णभूषण बनावें या धनुष की डोरियों को कान तक चढ़ावें, ( मेरी ) चरण धूलियों को अथवा लोहे के टोपों को शिरोभूषण बनावें, ( मेरे आगे ) अंजलियाँ या गजघटा का व्यूह बाँधें, भूमियों को छोड़ें या फिर बाणप्रहार करें, बेंत की छड़ी ग्रहण करें या भाले का डंडा संभालें, मेरे चरणों के नखों में अपने आपको ( प्रतिबिम्बित ) देखें या तो फिर तलवार के दर्पण में अपना चेहरा देखें, मैं यह आ गया हूँ' । लंगड़े की तरह जबतक सभी द्वीपान्तरों में मिलने वाला समग्र नरपतियों के मुकुटों के मणि-प्रस्तरों की कान्तिरूपी लेप मेरे चरणों पर नहीं लगता, तब तक मुझे ( युद्ध से ) विराम कैसे ? यह निश्चय किये बैठक को छोड़े, राजा लोगों को विदा किये, स्नानारम्भ के इच्छुक हुए उसने सभा छोड़ दी। और उठकर स्वस्थ व्यक्ति की तरह दैनिक कृत्य किये। और शान्त हो रही ऊष्मा वाला दिन ढल गया जो ऐसा लगता था मानो (हर्षवर्धन की) प्रतिज्ञा को सुने त्रिभुवनों का दर्पसमूह ढल गया हो।

१. 'मणिदर्पणेषु'

ततश्च निजाधिकारापहारभीत इव भगवत्यपि क्वापि गते गततेजस्यहिमभासि, तामरसवनेष्वपि निगूढशिलीमुखालापेषु त्रासादिव सङ्कुचत्सु, विहगगणेष्वपि समुपसंहृतनिजपक्षविक्षेपनिश्चलेषु भियेवाप्रकटीभवत्सु, भुवनव्यापिनीं संध्यां प्रतिज्ञामिव मानयति नतशिरसि घटिताञ्जलिवने जने सकले, स्वपदच्युतिचकितदिक्पालदीयमानाभ्रंलिहलोहप्राकारवलयास्विव[1] बहलतिमिरमालातिरोधीयमानासु दिक्षु प्रदोषास्थाने नातिचिरं तस्थौ। नमन्नृपलोकलोलांशुकपवनकम्पितशिखैर्दीपिकाचक्रवालैरपि प्रणम्यमान इव प्राहिणोल्लोकं प्रतिषिद्धपरिजनप्रवेशश्च शयनगृहं प्राविशत्। उत्तानश्च मुमोचाङ्गानि शयनतले। दीपद्वितीयं

---

टीका—सर्वे च ते द्वीपाः जम्ब्वादयः तेषां अन्तरे=मध्ये सञ्चरति=मिलतीति तथोक्ताः सकलाः=समग्राः च ते नरपतय=राजानः तेषां मुकुटेषु=किरीटेषु याः मणिशिलाः तासाम् आलोकः=दीप्तिः एवेति आलोकमयः पादयोः लेप.=लेपनम्, पंगुः चरणयोः औषधलेपमपेक्षते, अर्थात् यावत् सर्वेऽपि भूपतयः मम चरणयोः न पतन्ति तावन्न मे युद्धात् व्युपरमः संभवः। कृतः निश्चयः=युद्धाध्यवसायः येन सः, मुक्तं=त्यक्तं आस्थानं=सभामण्डपः येन सः, विसर्जितः=गन्तुमनुज्ञातः राजलोकः=राजसमूहः येन सः, स्नानस्य आरम्भम् आकांक्षति=इच्छतीति तथोक्तः सन् सभाम् अत्याक्षीत्=त्यक्तवान्। स्वस्थवत्=प्रकृतिस्थवत् अनाकुलः सन्नित्यर्थः निःशेषं=सम्पूर्णम् आह्निकम्=दैनिकं स्नानसन्ध्यावन्दनादिक्रियाकलापम् अकार्षीत्=अन्वतिष्ठत् श्रुता=आकर्णिता प्रतिज्ञा हर्षवर्धनस्येत्यर्थः। येन तस्य त्रिभुवनस्य=लोकत्रयस्य दर्पस्य=अभिमानस्य प्रसरः=समूहः इवेत्युत्प्रेक्षायां शाम्यन्=शान्तो भवन् ऊष्मा=उष्णिमा यस्य तथाभूतः दिवसः अगलत्=क्षीणोऽभवत् इत्यर्थः, निजोष्मणा सह दिवसः अक्षिणोत्, कविकल्पनानुसारेण दिवसस्योष्मा न क्षीणः अपितु हर्षस्य भीषणप्रतिज्ञां श्रुत्वा त्रिभुवनस्य अभिमानः क्षीणोऽभवत्।

निजस्य=स्वकीयस्य अधिकारस्य=प्रभुत्वस्य यः अपहारः=अपहरणम् तस्माद् भीते=आतंकिते इवेत्युत्प्रेक्षायां गतं तेजः=प्रभा यस्य तस्मिन् अहिमा=अशीता उष्णेत्यर्थः भाः यस्य तस्मिन् सूर्ये इत्यर्थः क्व अपि गते=याते अस्तमिते सति, तामरसानां=कमलानां वनेषु, निगूढा=प्रच्छन्नाः विरताः इत्यर्थः शिलीमुखानां=भ्रमराणाम् आलापाः झङ्काराः इत्यर्थः येषु तेषु त्रासात्=हर्षवर्धनात् भयात् इवेत्युत्प्रेक्षायां संकुचत्सु=संकोचं प्राप्तवत्सु भयभीतो हि मौनमवलम्बते संकुचितश्चापि भवति; विहगानां=पक्षिणां गणेषु=समूहेषु समुपसंहृतः=निरुद्धः इत्यर्थः निजानां पक्षाणां=पतत्राणां विक्षेपः=सञ्चालनं यैः तेषु अतएव निश्चलेषु=निश्चेष्टेषु भिया=भयेन इवेत्युत्प्रेक्षायाम् अप्रकटीभवत्सु=अदर्शनं गच्छत्सु, अत्र पक्षाणां=स्वसमर्थकानां विक्षेपाणां=चेष्टानां समुपसंहृतत्वेन=समाप्तत्वेन निश्चलेष्वित्यप्यर्थो व्यज्यते। भुवनं=संसारं व्याप्नोतीति तथोक्तां सन्ध्यां=सन्ध्याकालम् प्रतिज्ञाम्=प्रतिश्रवं (हर्षवर्धनकृतम्) इवेत्युपमायां नतं=नम्रं शिरः यस्य तस्मिन् घटितं=बद्धमित्यर्थः अञ्जलीनां=संयुक्तकरपुटानां वनं=समूहः येन तस्मिन् सकले जने=सर्वेषु लोकेषु इत्यर्थः मानयति=आद्रियमाणे सति अर्थात् हर्षवर्धनस्य प्रतिज्ञामिव सन्ध्यां सर्वेऽपि जनाः बद्धाञ्जलयो भूत्वा नतशिरसा मानयितुमारेभिरे, स्वपद०—स्वस्य=आत्मनः पदात्=अधिकारात् या च्युतिः=भ्रंशः तस्मात् चकिताः=भयकम्पिताः ये दिक्पालाः=इन्द्रादयो दिगीशाः तैः दीयमानानि=निधीयमानानि अभ्रम्=आकाशम् लिहन्ति=स्पृशन्तीति [अभ्र+√लिह्+खश् मुमागमश्च] लोहस्य प्राकाराणां=वारणानां ['प्राकारो

हिन्दी—तदनन्तर अपना स्वामित्व छीने जाने से डरे हुए—जैसे निस्तेज बने सूर्य भगवान् के कहीं चले जाने पर, चुप बैठे हुए भ्रमरों वाले कमल-वनों के भय वश—जैसे संकुचित हो जाने पर, अपने पंखों की फड़फड़ाहट रोके और निश्चल बने पक्षि-गणों के भी डर के कारण—जैसे प्रकट न होने लगने पर, भुवनों में व्याप्त (लागू होने वाली हर्षवर्धन की) प्रतिज्ञा की तरह भुवनों में व्याप्त (फैली हुई) सन्ध्या के प्रति नत-मस्तक और अञ्जलि-बांधे सभी लोगों द्वारा आदर-भाव प्रकट करने लगने पर, अपने अधिकार से च्युत किये जाने से आशंकित हुए दिक्पालों द्वारा खड़ी की हुई गगन-चुम्बी लोहे की दीवारों के घरों वाली—जैसी दिशाओं के घने अन्धकार-समूह से आच्छादित होने लगने पर, वह सायंकालीन सभा स्थान में बहुत देर नहीं ठहरा। प्रणाम करते हुए राजा लोगों के हिलते हुए रेशमी वस्त्रों की हवा से हिलती हुई ज्योतियों वाले दीप-समूह द्वारा भी प्रणाम किये जाते हुए—जैसे उसने लोग विदा किए और नौकर-चाकरों का प्रवेश रोके वह शयन-गृह में प्रविष्ट हो गया। और चित लेटे हुए उसने शयन-तल पर अंग पसार दिये। केवल

---

1. 'वलयकलितास्विव'

च तमभितर इव लब्धावसरस्तरसा भ्रातृशोको जग्राह। जीवन्तमिव हृदये निमीलितलोचनो ददर्शाग्रजम्। उपर्युपरि भ्रातृजीवितान्वेषिण इव प्रसस्रुः श्वासाः। धवलांशुकपटान्तेनेव चाश्रुजलप्लवेन मुखमाच्छाद्य निःशब्दमतिचिरं रुरोद। चकार च चेतसि। कथं नामाकृतेरस्तादृश्या युक्तः परिणामोऽयमीदृशः। पृथुशिलासङ्घातकर्कशकायबन्धात्तातादचलादिव लोहधातुः कठिनतर आसीदार्यः। कथं चास्य मे हतहृदयस्यार्यविरहे सकृदपि युक्तमुच्छ्वसितुम्। इयं सा प्रीतिर्भक्तिरनुवृत्तिर्वा। बालिशोऽपि कः सम्भावयेदार्यमरणे मज्जीवितम्। तत्तादृशमैक्यमेकपद एव क्वापि गतम्। अयत्नेनैव हतविधिना

टीका—वरणः सालः' इत्यमरः] वलयानि=मण्डलानि यासु तासु इवेत्युत्प्रेक्षायां बहला = घना या तिमिरस्य=अन्धकारस्य माला=पटलमित्यर्थः तया तिरोधीयमानासु=आच्छाद्यमानासु दिक्षु=दिशासु प्रदोषस्य=रजनीमुखस्य ['प्रदोषो रजनीमुखम्' इत्यमरः] सायंकालस्येत्यर्थः आस्थाने=सभामण्डपे सायंकालीनसभायामित्यर्थः अतिचिरं=बहुकालं न तस्थौ=स्थितवान्। नमन्०—नमन्=प्रणमन् यः नृपलोकः=राजानः तस्य नमनक्रियायां लोलानि=चञ्चलानि यानि अंशुकानि= कौशेयवस्त्राणि तेषां पवनेन=वायुना कम्पिताः=स्खलिताः शिखाः=अर्चींषि येषां तैः दीपिकानां =दीपानां चक्रवालैः=समूहैः अपीत्यर्थापत्तिः प्रणम्यमानः=वन्द्यमानः इवेत्युत्प्रेक्षायां लोकं=लोकान् प्राहिणोत्= विससर्ज, प्रतिषिद्धः=निवारितः परिजनस्य=भृत्यवर्गस्य प्रवेशः येन स प्राविशत्=प्रविष्टवान्।

उत्तानः=ऊर्ध्वमुखशयितः ['उत्तानमगभीरे स्यादूर्ध्वास्यशयिते त्रिषु' इति मेदिनी] शयन-तले अङ्गानि=अवयवान् मुमोच=मुक्तवान् शय्यायां प्रसृतः इत्यर्थः। दीपः एव द्वितीयः सहचरः इत्यर्थः यस्य तम् दीपातिरिक्तः न कोऽपि तत्रा-सीदिति भावः, अभिसरः=भृत्यः इव ['अनुप्लवः सहायश्चानुचरोऽभिसरः' इत्यमरः] किन्तु शङ्करानुसारेण अभिसरः चौरः इवेत्युपमायां लब्धः अवसरः=समयो येन सः भ्रातुः शोकः तं जग्राह=गृहीतवान्, सेवको हि समुचितावसरमवाप्य स्वामिनो मन आत्मनि अनुकूलयति। निमीलिते=आवृते लोचने=नयने येन स हृदये अग्रजं=ज्यायांसं भ्रातरं राज्य-वर्धनं जीवन्तम्=सजीवम् इवेत्युत्प्रेक्षायां ददर्श=अपश्यत्। भ्रातुः जीवितं=प्राणान् अन्विष्यन्ति=मृगयन्ते इति तथोक्ताः इवेत्युत्प्रेक्षायां तस्य श्वासाः उपरि उपरि प्रसस्रुः=प्रसृताः। धवलेन=श्वेतेन अंशुकपटान्तेन कौशेयवसनाञ्चलेन इवेत्युत्प्रेक्षायाम् अश्रुजलस्य प्लवेन=प्रवाहेण मुखम् आच्छाद्य=पिधाय निःशब्दं=शब्दरहितं यथा स्यात्तथा रुरोद= रुदितवान्। चकार०—मनसि अचिन्तयत्। कथं नाम = वितर्के तादृश्याः=तथाविधायाः आकृतेः=शरीरस्य तादृशाकृतिक-भ्रातुरिति यावत् अयम् ईदृशः=एवंविधः परिणामः=फलम् अकालमृत्युरित्यर्थः युक्तः=उचितः? पृथु०—पृथवः= विशालाः ये शिलासंघाताः=शिलासञ्चयाः तैः कर्कशः=कठोरः कायबन्धः=शरीरव्यूहः यस्य तस्मात् अचलात्= पर्वतात् कठिनतरः=कठोरतरः लोहरूपो धातुः=इवेत्युपमायां शिलासंघातवत् कर्कश-कायबन्धात् तातात्= पितुः (प्रभाकरवर्धनात्) आर्यः=अग्रजः कठिनतरः आसीत्। हतं=दग्धं जघन्यमित्यर्थः हृदयं यस्य तस्य मे आर्यस्य=भ्रातुः विरहे=वियोगे एकवारमपि उच्छ्वसितुं=प्राणितुं युक्तम्? अनुवृत्तिः = आज्ञापालन-मित्यर्थः। बालिशः=मूर्खः अधिकः सम्भावयेत्=कल्पनां कुर्यात्, आर्यस्य=अग्रजस्य मम जीवितम्= (भावे क्तः) जीवनम्। ऐक्यम्=हृदययोः विचारयोः वा एकता एकपदे=तत्कालम् एव। अयत्नेन=विना प्रयत्नेन एव अनायासमेवेत्यर्थः हतेन=दग्धेन पापिनेति यावत् विधिना=दैवेन पृथक् कृतः=भ्रात्रा वियोजितः कृतः। दग्ध-

हिन्दी—दीपक को ही अपना दूसरा साथी बनाये हुए उसे अवसर पाये हुए चोर के समान भाई का शोक पकड़ बैठा। आँख मीचे हुए उसने हृदय में जीवित-जैसा अपना भाई देख लिया। भाई के प्राणों को ढूँढती हुई—जैसी उसकी उसाँसें ऊपर-ऊपर जाने लगीं। श्वेत रेशमी वस्त्र के छोर से—जैसे अश्रुजल-प्रवाह से मुख ढककर मन ही मन में देर तक रोता रहा। और उसके मन में आया—'वैसी-जैसी आकृति का यह ऐसा परिणाम कैसे ठीक है? विशाल शिला-समूहों से कठोर बने काय-गठन वाले पर्वत की अपेक्षा (उससे निकले) कठोरतर लोह धातु की तरह विशाल शिला-समूह के सदृश कठोर कायगठन वाले पिता की अपेक्षा आर्य (भी) कठोरतर थे। मुए हृदय वाले मेरे लिये आर्य के विरह में एकबार भी साँस लेना कैसे उचित था? यह है मेरी वह प्रीति, भक्ति अथवा आज्ञापालकता। कोई मूर्ख भी आर्य के स्वर्ग सिधारने पर मेरे जीवित रहने की कल्पना कैसे कर सकता? (हम दोनों की) वैसी एकता एकदम नहीं चली गई। अनायास ही मुए दैव ने पृथक् कर दिया है। मुए कोध द्वारा बचाए

पृथक्कृतोऽस्मि। दग्धरोषान्तरितशुचा सुचिरं रुदितमपि न मुक्तकण्ठं गतघृणेन मया। सर्वथा लूतातन्तुच्छटाच्छिदुरास्तुच्छाः प्रीतयः प्राणिनाम्। लोकयात्रामात्रनिबन्धना बान्धवता यतोऽहमपि नाम पर इवार्ये स्वर्गस्थे स्वस्थ इवासे। किं च दैवहतकेन फलमासादितमीदृशि परस्परप्रीतिबन्धनिर्वृतहृदये सुखभाजि भ्रातृमिथुने विघटिते। तथा चन्द्रमया इव जगदाह्लादिनो लोकान्तरीभूतस्य लग्नचिताग्नय इवार्यस्य त एव दहन्ति गुणाः। इत्येतानि चान्यानि च हृदयेन पर्यदेवत। प्रभातायां च शर्वर्यां प्रातरेव प्रतीहारमादिदेशाशेषगजसाधनाधिकृतं स्कन्दगुप्तं द्रष्टुमिच्छामीति।

अथ युगपत्प्रधावितबहुपुरुषपरम्पराहूयमानः, स्वमन्दिरावप्रतिपालितकरेणुश्चरणाभ्यामेव संभ्रान्तः, ससंभ्रमं दण्डिभिरुत्सार्यमाणजनपदः, पदे पदे प्रणमतः प्रतिदिशमिभभिषग्वरान्वरवारणानां विभावरीवार्ताः पृच्छन्, उच्छ्रितशिखिपिच्छलाञ्छित-

टीका—रोषेण=हतक्रोधेन अन्तरिता व्यवहिता शुक्=शोकः यस्य तेन गता=लुप्ता घृणा=दया यस्य तेन मया मुक्तः अनिरुद्धः कण्ठः यस्मिन् कर्मणि यथा स्यात्तथा सुचिरं=बहुकालं न रुदितम् अपि रोदनमपि न कृतमित्यर्थः लूतायाः=ऊर्णनाभस्य [ 'लूतास्त्री तन्तुवायोर्णनाभमर्कटकाः समाः' इत्यमरः ] तन्तुच्छटावत्=तन्तुजालवत् छिदुराः=भङ्गुराः तुच्छाः=निस्साराः प्रीतयः=प्रणयाः। लोकयात्रा=लोकव्यवहारः एव लोकयात्रामात्रं निबन्धनं=संश्लेषणं प्रयोजनमिति यावत् यस्याः सा बान्धवता=बन्धुत्वम्, परः=अन्यः सहोदरातिरिक्तः इत्यर्थः इव स्वार्ये=मृते इत्यर्थः स्वस्थः=प्रकृतिस्थः इव आसे=तिष्ठामि। दैवहतकेन=दग्धदेवेन आसादितं=प्राप्तम् परस्परं यः प्रीतिबन्धः=प्रेमबन्धः तेन निर्वृत्तं=आनन्दपूर्णं हृदयं यस्य तस्मिन् सुखं भजतीति भाक् तस्मिन् भ्रात्रोः मिथुनं=द्वयं तस्मिन् विघटिते=विच्छिन्ने विरहिते इति यावत्। चन्द्रमयाः=चन्द्ररूपाः इवेत्युत्प्रेक्षायां जगत् आह्लादयन्ति=प्रीणयन्तीति तथोक्ताः आर्यस्य=भ्रातुः गुणाः दयादाक्षिण्यवीरत्वादयः लोकान्तरीभूतस्य=अन्यः लोकः इति लोकान्तरम् तदस्यास्तीति लोकान्तरः [ अर्श-आदिभ्यः मतुबर्थीयोऽच् ] अलोकान्तरः लोकान्तरीभूतः तस्य लग्नः=संसक्तः चितायाः अग्निः येषु तथाभूताः इवेत्युत्प्रेक्षायां दहन्ति इति एतानि अन्यानि च पर्यदेवत=परिदेवितवान् शुशोचेति यावत् अर्थात् जीवितदशायाम् आनन्ददायका आर्यस्य गुणाः मृतदशायां दहन्ति। प्रभातायां=समाप्तायामित्यर्थः शर्वर्यां=रात्रौ प्रतीहारं=द्वारपालम् आदिदेश=आज्ञापयत्—अशेषं=निखिलं यत् गजसाधनं=गजसैन्यं तस्य अधिकृतम्=अधिकारिणं गजसेनाध्यक्षमित्यर्थः स्कन्दगुप्तम्=तन्नामानं द्रष्टुमिच्छामीति।

'अथ......हूयमानः स्वमन्दिरात्...स्कन्दगुप्तो विवेश राजकुलम्' इत्यस्ति वाक्यम्। युगपत्०—युगपत्=एकस्मिन्नेव काले प्रधाविताः=प्रद्रुताः बहवः ये पुरुषाः परम्पराभिः=श्रेणिभिः आहूयमानः=आकार्यमाणः, स्वमन्दि०—स्वस्य मन्दिरात्=भवनात् न प्रतिपालिता=प्रतीक्षिता करेणुः=(निजा) हस्तिनी येन सः चरणाभ्यां=पादाभ्याम् एव। सत्वरं चलितः, ससंभ्र०—संभ्रमः=त्वरा तया सहितैः दण्डिभिः=दण्डधारिभिः सैनिकैः उत्सार्यमाणाः मार्गे=पथि अपसार्यमाणाः जनपदाः=जानपदाः जना इति यावत् [ भवेज्जनपदो जानपदोऽपि जन-देशयोः' इति मेदिनी ] यस्मात् सः, पदे-पदे=प्रतिपदम् प्रणमतः=नमस्कुर्वतः प्रतिदिशं=दिशि दिशि इभानां=हस्तिनां भिषग्वरान्=वैद्यप्रवरान् वराणां=

हिन्दी—गए शोक वाला मैं निर्दयी गला फाड़-फाड़कर देर तक रोया भी तो नहीं। प्राणियों की तुच्छ प्रीतियाँ सर्वथा मकड़ी के तन्तुजाल की तरह क्षण-भंगुर हुआ करती हैं। बन्धुता लोकव्यवहार मात्र पर आधारित है, तभी तो मैं भी आर्य के स्वर्ग सिधारने पर अन्य की तरह हट्टा-कट्टा—जैसा ही तो हूँ। और परस्पर प्रीतिबन्धन से प्रसन्न हृदय एवं आनन्द उड़ाते हुए भाइयों के ऐसे जोड़े के बिछुड़ जाने पर दुर्दैव ने कौन सा फल पा लिया है? चन्द्रमय जैसे जगत को आह्लादित कर देने वाले आर्य के ही गुण उनके स्वर्ग सिधारने पर चिन्ता की आग लिए हुए-जैसे जला रहे हैं।' हृदय में वह ये तथा अन्य विलाप करता रहा। रात खुलने पर तड़के ही द्वारपाल को उसने आदेश दिया। समस्त गजसेना के अधिकारी स्कन्दगुप्त को मैं देखना चाहता हूँ।'

इसके बाद स्कन्दगुप्त ने राजदरबार में प्रवेश किया—जो एक साथ दौड़े हुए पुरुषों के बहुत से दलों द्वारा बुलाया जा रहा था, जो अपने भवन से (चढ़ने की निज) हथिनी की प्रतीक्षा किए बिना ही पैदल ही जल्दी-जल्दी चल पड़ा था, जिस ( के मार्ग ) से हड़बडाए दंडधारी सैनिकों द्वारा लोग हटाए जा रहे थे, जो पद-पद पर प्रणाम करते चारों ओर हाथियों के वैद्यवरों को श्रेष्ठ-श्रेष्ठ हाथियों के रात के समाचार पूछता जाता था, जिसके आस-पास गज-शिविर के लोगों के समूहों द्वारा कोलाहल मचाया हुआ था, जिनमें कुछ महावतों के दल थे जो विन्ध्य वनों की

वंशलतावनगहनगृहीतदिगायामैर्विन्ध्यवनैरिव वारणबन्धविमर्दोद्योगागतैः पुरःप्रधावद्भिरनायतमण्डलैराधोरणगणैश्च मरकत-हरितघासमुष्टीश्च दर्शयद्भिर्नवग्रहगजपतींश्च प्रार्थयमानैश्च लब्धाभिमतमत्तमातङ्गमुदितमानसैश्च सुदूरमुपसृत्य नमस्यद्भि-रात्मीयमातङ्गमदागमांश्च निवेदयद्भिः, डिण्डिमाधिरोहणाय च विज्ञापयद्भिः, प्रमाद[1]पतितापराधापहृतद्विरददुःखधृतदीर्घश्म-श्रुभिरग्रतो गच्छद्भिः, अभिनवोपसृतैश्च कर्पटिभिर्वारणाप्तिसुखप्रत्याशया धावमानैः, गणिकाधिकारिगणैश्चिरलब्धान्तरै-रुच्छ्रितकरैः कर्मण्यकरेणुकासङ्कथनाकुलैरुल्लासितपल्लवचिह्नाभिररण्यपालपङ्क्तिभिश्च निष्पादितनवग्रहनागनिवहनिवेदनोद्य-

टीका—श्रेष्ठानां वारणानां=हस्तिनां विभावर्या=रात्र्याः वार्ताः=समाचारान् पृच्छन् [प्रच्छधातुः द्विकर्मकः], उच्छ्रित०—उच्छ्रितम्=ऊर्ध्वीकृतं शिखिनां=मयूराणां पिच्छैः=बर्हैः लाञ्छितं=चिह्नितं यत् वंशलतावनानां=वेणुलतारण्यानां गहनं=दुष्प्रवेशस्थानम्, तेन गृहीतः दिशाम् आयामः=विस्तारः यैः तैः विन्ध्यस्य=विन्ध्याचलस्य वनैः इवेत्युपमायाम्, विन्ध्येऽपि वंशलतादण्डेषु मयूरास्तिष्ठन्ति, वारण०—वारणानां=हस्तिनां बन्धनोन्मुक्तानामिति शेषः बन्धे=बन्धने यः विमर्दः=संघर्षः तस्मिन् उद्योगाय=प्रयासाय आगतैः पुरः=अग्रे प्रधावद्भिः=त्वरया गच्छद्भिः न आयतानि=नियमितानि व्यवस्थितानीति यावत् मण्डलानि=दलानि येषां तथाभूतैः आधोरणानां=हस्तिपकानाम् [ 'आधोरणाः हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः ] गणैः=समूहैः एतत् अन्यानि च तृतीयान्तानि क्रियमाणकोलाहलः इत्यनेन सम्बध्यन्ते, स च स्कन्दगुप्तस्य विशेषणम्, मरकत०—मरकतवत्=मरकतमणिवत् हरिताः=हरितवर्णाः याः घासानां=तृणानां मुष्टयः=मुष्टिपरिमाणानि ताः दर्शयद्भिः गजानामग्रे इति शेषः; नव०—नवः=नूतनः ग्रहः=वने ग्रहणं येषां तथाभूतान् गजपतीन्=करीन्द्रान् प्रार्थयमानैः=शासनाय दातुं याचमानैः, लब्ध०—लब्धाः=प्राप्ताः अभिमताः=स्वाभीष्टाः ये मत्ताः=मदयुक्ताः मातङ्गाः=गजाः तैः मुदितं=प्रसन्नं मानसं=मनः येषां तैः अतएव सुदूरं दूरत एव उपसृत्य=उपगम्य नमस्यद्भिः=नमस्कुर्वद्भिः, रात्मी०—आत्मीयाः=स्वकीयाः स्वाधिकारे स्थिताः इति यावत् ये मातङ्गाः=गजाः तेषां मदस्य=मदजलस्य आगमान्=आरम्भान् निवेदयद्भिः=विज्ञापयद्भिः, डिण्डि०—डिण्डिमस्य पटहाख्य-वाद्यविशेषस्य अधिरोहणाय = हस्त्युपरि न्यसनाय विज्ञापयद्भिः = निवेदयद्भिः, प्रमाद०—प्रमादेन = अनवधानेन पतितः=जातः इत्यर्थः यः अपराधः तेन अपहृतात्=आच्छिन्नात् द्विरदात्=गजात् ( कारणात् ) यद् दुःखं=खेदः तेन धृतं=दीर्घं श्मश्रु=कूर्चं यैः तथाभूतैः अग्रतः=गजसेनापतेः पुरतः गच्छद्भिः क्षमायाचनार्थमिति शेषः अभिनव०—अभिनवं यथा स्यात्तथा उपसृतैः=उपगतैः सेवार्थमिदानीम् एवागतैरित्यर्थः कर्पटं =जीर्ण-शीर्णवस्त्रम् एषाम् अस्तीति तथोक्तैः वारणस्य=गजस्य आप्तौ=प्राप्तौ यत् सुखं तस्य प्रत्याशया = इच्छयेत्यर्थः धावमानैः=प्रद्रवद्भिः गणिका०—गणिका='गजानां प्रतिलोभनार्था हस्तिनी' इति शङ्करः तासाम् अधिकारिगणैः=अध्यक्षसमूहैः चिरात्=चिरकालात् लब्धं=प्राप्तम् अन्तरम् गजसेनापतिदर्शनावसरः यैः तैः उच्छ्रितौ=उपरि कृतौ करौ यैः तैः कर्मण्याः=कर्मणि साधवः इति [कर्मन्+यत्, साधुरत्र प्रवीणः] याः करेणुकाः=हस्तिन्यः तासां सङ्कथने=

हिन्दी तरह ऊपर उठाए मोरपंखों से चिह्नित बांस वृक्षों के झाड़ों द्वारा दिशाओं का विस्तार मापे (बन्धनमुक्त) हाथियों के बांधने के संघर्ष के प्रयत्न हेतु आए, आगे-आगे दौड़े जा रहे अस्त-व्यस्त दल बनाए हुए थे, ( कुछ ) मरकत की तरह हरी-हरी घास की मूठों को दिखाते हुए, ( जंगलों से ) नये-नये पकड़ लाये हुए गजराजों को ( वश में करने हेतु ) मांग रहे थे, ( कुछ ) मनपसन्द का मदमत्त हाथी प्राप्त किये, मन में प्रसन्न हुए काफी दूर हटकर प्रणाम कर रहे थे, ( कुछ ) अपने हाथियों का मद बहने लगने की सूचना दे रहे थे, ( कुछ हाथियों के ऊपर ) धौंसा चढ़ाए जाने हेतु प्रार्थना कर रहे थे, ( कुछ ) प्रमादवश हुए अपराध के कारण हाथी छीन लिये जाने के दुःख में लंबी दाढ़ी बढ़ाए ( क्षमा मांगने ) आगे-आगे जा रहे थे, ( कुछ नौकरी के लिए ) अभी-अभी आए, फटे-पुराने कपड़े पहने हाथी प्राप्त करने के सुख की आशा से दौड़े जा रहे थे, ( कुछ ) जंगली हाथियों को फांसने वाली गणिका-नामक हाथियों के अधिकारी-वर्ग थे जो चिर-काल बाद अवसर प्राप्त किये, हाथ उठाए कार्यनिपुण हथिनियों के कारनामे बखान करने में व्यस्त थे, ( कुछ ) चिह्न स्वरूप पल्लवों को ( देह पर ) चमकाए ऐसे वन-रक्षक थे, जो अंकुश हेतु ऊँचे काष्ठ-दण्ड उठाए हुए, नए-नए पकड़े हाथियों के यूथों के विषय में निवेदन करने को उद्यत हुए बैठे थे, ( कुछ ) ऐसे

१. 'प्रमारपतित'

तान्भिरुत्तम्भिततुङ्गतोत्रवनाभिर्महामात्रपेटकैश्च प्रकटितकरिकर्मचर्मपुटैः, अभिनवगजसाधनसञ्चरणवार्तानिवेदनविसर्जितैश्च नागवनवीथीपालदूतवृन्दैः, प्रतिक्षणप्रत्यवेक्षितकरिकवलकूटैः कटभङ्गसंग्रहं ग्रामनगरनिगमेषु निवेदयमानैः कटककदम्बकैः क्रियमाणकोलाहलः, स्वामिप्रसादसम्भृतेन महाधिकाराविष्कारेण स्वाभाविकेन चावष्टम्भाभोगेनोदासीनोऽप्यादिशन्निव, असंख्यकरिकर्णशङ्खसम्पत्सम्पादनाय समुद्रानाज्ञापयन्निव, शृङ्गारगैरिकपङ्काङ्गरागसंग्रहाय गिरीन्मुष्णन्निव, दिग्गजाधिकारं ककुभामैरावतमिवापहरन्, हरेर्हरपदभारनमितकैलासगिरिगुरुभिः पादन्यासैर्गुरुभारग्रहणगर्वमुर्व्याः संहरन्निव, गतिवशविलोलस्य

टीका-वनगजप्रलोभननैपुण्यानां प्रख्यापने आकुलैः व्यापृतैः, उल्ला०-उल्लासितानि=उपरि धृतानि पल्लवानि=किसलयानि एव चिह्नानि याभिः ताभिः निष्पादित.=सम्पादितः गृहीतः इत्यर्थः नवग्रहाणां=नवः ग्रहः येषां नागानां=गजानां यः निवहः=दलं तस्य निवेदने=विज्ञापने उद्यताभिः=प्रवृत्ताभिः इत्यर्थः उत्तम्भितम्=उन्नमितम् उत्थापितमिति यावत् तुङ्गम्=उच्चं तोत्रस्य=तोदनदण्डस्य अंकुशस्येति यावत् वनं=वनजातकाष्ठमित्यर्थः याभिः ताभिः अरण्यपालानां=वनरक्षकाणां पंक्तिभिः=श्रेणिभिः दलैरिति यावत् महा०-प्रकटितं=प्रदर्शितं करिणां=हस्तिनां कर्मणे युद्धाभ्यासायेत्यर्थः चर्मपुटं=चर्मनिर्मितहस्त्याकृतिः यैः तैः महामात्रा.=महती मात्रा=परिच्छिदः येषां ते प्रधानहस्त्यारोहाः ('महामात्राः प्रधानानि' इत्यमरः) तेषां पेटकैः=समूहैः ('पेटकः पुस्तकादीनां मञ्जूषायां कदम्बके' इति मेदिनी) अभिनव०-अभिनवाः=नूतनाः ये गजाः तेषां साधनस्य=सैन्यस्य दलस्येति यावत् सञ्चारणस्य=वने भ्रमणस्य वार्तायाः=समाचारस्य निवेदनाय=स्कन्दगुप्तं प्रतिसूचनादानाय विसर्जितैः=प्रेषितैरित्यर्थः नागानां=गजानां या वनवीथ्यः=वने भ्रमणमार्गाः तासां पालस्य=पालकस्य रक्षकस्येति यावत्, दूतानां=सन्देशहराणां वृन्दैः=समूहैः प्रतिक्षण०-प्रतिक्षणं=क्षणे क्षणे प्रत्यवेक्षितानि=सम्यक् परीक्षितानि करिणां=हस्तिनां कवलानां=ग्रासानां कूटानि=समूहाः यैः तैः, कट०-ग्रामाश्च नगराणि च निगमाः=वणिक्पथाः क्रयविक्रयस्थानानीति यावत् ('वणिक्पथः पुरं वेदो निगमः' इत्यमरः) च तेषु कटानां=सस्यानाम् ओषधीनामिति यावत् [फलपाकान्ता ओषधयः] भङ्गः=हस्तेन च्छेदनं ['कटभङ्गस्तु सस्यानां हस्तच्छेदे नृपात्यये' इति मेदिनी] तस्य संग्रहं निवेदयमानैः=विज्ञापयद्भिः कटकस्य=गजसैन्यशिविरस्य कदम्बकैः=जनसमूहैः क्रियमाणः कोलाहलः=कलकलः यस्य सः यस्य समीपे हस्तिरक्षानियुक्ताः लोकाः कोलाहलं कुर्वन्ति स्मेति भावः स्वामि०-स्वामिनः=प्रभोः हर्षवर्धनस्य यः प्रसादः=अनुग्रहः तेन सम्भृतेन=प्रवृद्धेन महान्=उन्नतः यः अधिकारः महाधिकारपदं तस्य आविष्कारेण=आविर्भावेन प्रकटनेनेति यावत् अर्थात् वाह्यवेशादिना तस्य महापदाधिकारित्वं व्यज्यतेस्म, स्वाभाविकेन=नैसर्गिकेण अवष्टम्भस्य=गौरवस्य आभोगेन=शारीरिकविस्तारेण विशिष्टव्यक्तित्वेनेति यावत् उदासीनः=तटस्थः आदेष्टुं नेच्छन्नपीत्यर्थः आदिशन्=आज्ञापयन् इवेत्युत्प्रेक्षायाम्, असंख्य०-असंख्याः=संख्यातीताः ये करिणः=हस्तिनः तेषां कर्णेषु शङ्खानां=कम्बूनां या सम्पद्=प्राचुर्यम् अथवा सौन्दर्यं तस्य सम्पादनाय=विधानाय समुद्रान् आज्ञापयन्=आदिशन् इवेत्युत्प्रेक्षायाम् शङ्खाः हि गजानां कर्णयोः शोभार्थं बध्यन्ते, शृङ्गार०-शृङ्गाराय=गजानां प्रसाधनाय यः गैरिकस्य=रक्तवर्णधातुविशेषस्य पङ्कः=द्रवः एव अङ्गरागः=अङ्गेषु लेपः तस्य संग्रहाय=सञ्चयाय गिरीन्=पर्वतान् मुष्णन्=अपहरन् इवेत्युत्प्रेक्षायाम्, दिग्गज०-

हिन्दी-प्रधान हस्तिपकों के दल थे, जो हाथियों के युद्धाभ्यास हेतु चमड़े के नकली हाथी दिखा रहे थे (कुछ) हाथियों की वनवीथियों के रक्षक के दूत-समूह थे जिन्हें हाथियों के यूथ के भ्रमण के समाचार की सूचना देने के लिए भेज रखा था और (कुछ) ऐसे (लोग भी) थे जो क्षण-क्षण में हाथियों के (लिये दिये जाने वाले) ग्रास-समूहों की जांच-पड़ताल किये हुए, ग्रामों, नगरों और मंडियों में हाथ से काटे सस्यों के संग्रह की सूचना दे रहे थे, जो (स्कन्द गुप्त) स्वामी (हर्षवर्धन) के अनुग्रह से बढ़े हुए महान् अधिकारी-पद के प्रकाशन तथा स्वाभाविक गर्व भरे विशिष्ट व्यक्तित्व के कारण आदेश न देना चाहता हुआ भी ऐसा लग रहा था मानो आदेश दे रहा हो, जो असंख्य हाथियों के कानों पर शंखों द्वारा शोभा उत्पादन हेतु समुद्रों को आज्ञा—जैसे दे रहा था, जो (हाथियों के) सिंगार के लिए गेरू-लेप का अंग राग इकट्ठा करने पर्वतों को लूट—जैसे रहा था, जो ऐरावत को दिशाओं को दिग्गजत्व के अधिकार से वंचित—जैसे कर रहा था, जो शिर के चरण-भार से झुके हुए कैलाशपर्वत की तरह भारी चरणन्यासों से विष्णु (कच्छपावतार-धारी) के पृथिवी के भारी भार धारण के गर्व को चूर—जैसे कर रहा था, जो चलने से हिलते जा रहे घुटनों तक लंबे

घाजानुलम्बस्य बाहुदण्डद्वयस्य विक्षेपैरालानशिलास्तम्भमालामिवोभयतो निखनन्, ईषदुत्तुङ्गलम्बेनाधरबिम्बेनामृतरसस्वादुना नवपल्लवकोमलेन कवलेनेव श्रीकरेणुकां विलोभयन्, निजनृपवंशदीर्घं नासावंशं दधानः, अतिस्निग्धमधुरधवलविशालतया पीतक्षीरोदेनेव पिबन्नीक्षणयुग्मायामेन दिशामायामम्, मेरुतटादपि विकटविपुलालिकः, सततमविच्छिन्नच्छत्रच्छायाप्ररूढिवशादिव नितान्तायतनीलकोमलच्छविसुभगेन स्वभावभङ्गुरेण कुन्तलबालवल्लरीवेल्लितविलासिना मुष्णन्निव सुसालोकानर्कंकरान्बर्बरकेण, अरिपक्षपरिक्षयपरित्यक्तकार्मुककर्मापि सकलदिगन्तश्रूयमाणगुरुगुणध्वनिः, आत्मस्थसमस्तमत्तमातङ्गसाधनोऽप्यस्पृष्टो

---

टीका-ककुभां=दिशानां दिग्गजस्य अधिकारं=स्वामित्वम् ऐरावतम्=इन्द्रस्य गजम् ऐरावतादित्यर्थः, हृ धातोः द्विकर्मकत्वम्, अपहरन्=आच्छिन्दन् अयं भावः दिशाः दिग्गजत्वेन ऐरावतस्य अधिकारे वर्तन्ते, किन्तु स्कन्दगुप्तः स्वहस्तिभिः सह सर्वासु दिक्षु अधिकारं करोति स्म अतएव कवि-कल्पनेयम् यत् स ऐरावतं स्वाधिकारात् वञ्चितमिवाकरोत्, हरेः—हरस्य=शिवस्य पद-भरेण=चरणयोः भारेण नमितः=अधः कृतः यः कैलासगिरिः=पर्वतविशेषः तद्वत् गुरुभिः=भारिभिः पादन्यासैः=चरणप्रक्षेपैः हरेः=विष्णोः कच्छपरूपस्य इत्यर्थः उर्व्याः=पृथिव्याः गुरोः=महतः भारस्य ग्रहणस्य=धारणस्य गर्वम्=अभिमानं संहरन्=समापयन् इवेत्युत्प्रेक्षायाम्, अर्थात् स्कन्दगुप्तस्य गुरुचरणन्यासेन धरा निम्नीभवति स्म, सा च कच्छप-रूपस्य हरेः पृष्ठे स्थिता तस्याः नमनेन कच्छपपृष्ठमपि नमति स्मेति तद्गर्वमपि स्कन्दगुप्तो निराकरोति स्मेव गति०—गतिवशात्=गमनकारणात् विलोलस्य=इत उतः सञ्चलतः आजानु=जानुपर्यन्तं लम्बस्य=दीर्घस्य बाहू दण्डौ इवेत्युपमिततत्पु० तयोः द्वयस्य=युगलस्य विक्षेपैः=सञ्चालनैः आलानानि=गजबन्धनाधारस्तम्भाः ये शिलास्तम्भाः=प्रस्तरस्थूणाः तेषां मालां=राजिम् इवेत्युत्प्रेक्षायाम् उभयतः=उभयोः पार्श्वयोः निखनन् निखातां कुर्वन्, ईषद्०—ईषत्=किमपि उत्तुङ्गम्=उन्नतम् अधरः बिम्बम्=फलविशेषः इवेत्युपमिततत्पु० तेन अमृतरसवत् स्वादुना=मधुरेण नवं=नूतनं यत् पल्लवं=किसलयं तद्वत्कोमलेन=मृदुना कवलेन=ग्रासेन इवेत्युत्प्रेक्षायां श्रीः=लक्ष्मीः एव करेणुका=हस्तिनी ताम् विलोभयन्=आकर्षन् अर्थात् तस्याधारः श्रीहस्तिन्याः प्रलोभनाय नवपल्लवग्रासः इव प्रतीयते स्म अत्र रूपकोत्थापितोत्प्रेक्षा, निज०—निजस्य नृपस्य=हर्षवर्धनस्य वंशवत्=कुलवत् दीर्घं=लम्बं नासा=नासिकावंशः वंशदण्ड इति यावत् इवेत्युपमिततत्पु० तम् दधानं=बिभ्रत्, अति०—अतिशयेन स्निग्धं=मसृणं च मधुरं च धवलं=श्वेतं च विशालम्=आयतञ्च तस्य भावः तत्ता तया पीतः=पानविषयीकृतः क्षीरोदः=क्षीरसागरः येन तेन इवेत्युत्प्रेक्षायाम् ईक्षणयोः=नयनयोः युग्मस्य=युगलस्य आयामेन=विस्तारेण दिशाम् आयामं पिबन् इवेत्युत्प्रेक्षायाम्, मेरु०—मेरोः=सुमेरुपर्वतस्य तटात्=नितम्बात् अपि विकटं=विस्तृतं विपुलं=विशालञ्च अलिकं=ललाटम् यस्य तम्, सतत०—सततं=निरन्तरं यथा स्यात्तथा अविच्छिन्ना=विच्छेदरहिता अविरतेति यावत् छत्रस्य=आतपत्रस्य [ तस्य राज्यचिह्नभूतस्य ] छायायाम्=अनातपे या प्ररूढिः=प्ररोहणम् उपचये इति यावत् तस्याः वशात्=कारणादित्यर्थः नितान्तम्=अत्यन्तं यथा स्यात्तथा आयता=लम्बा च नीला च कोमला च या छविः तया सुभगेन=मनोज्ञेन स्वभावतः भङ्गुरेण=कुञ्चितेन कुन्तलाः=अलकाः एव बाला=लघ्वी वल्लरी=लता तस्याः वेल्लितेन=उत्क्षेपेण सञ्चलनेनेति यावत् विलासिना=विलासवता शोभिनेत्यर्थः बर्बरकेण=केशसमूहेन [ 'बर्बरः पामरे केशे चक्रले

हिन्दी—दो भुज-दंडों के संचालनों से दोनों ओर हाथी बाँधने के शिला-स्तंभों की पंक्तियों को जैसे गाड़ रहा था, जो कुछ ऊँचे-लंबे अधर-बिम्ब से अमृत रस की तरह स्वादु नवकिसलय के सदृश कोमल ग्रास से-जैसे राजलक्ष्मी-रूपी हथिनी को लुभा रहा था, जो राजवंश के समान लंबी बाँस की डंडी-जैसी नाक रख रहा था, जो अत्यन्त स्निग्ध, मधुर, श्वेत और विशाल होने के कारण क्षीरसागर से-जैसे नयन-द्वय की विशालता से दिशाओं के विस्तार को पी रहा था, जिसका भाल मेरु पर्वत की ढाल से भी अधिक विकट और विशाल था, जो नित्य अविरत छत्र-छाया के नीचे बढ़ते रहने के कारण खूब लंबी काली और कोमल कान्ति से सुन्दर, स्वभावतः घुंघराले, जुल्फ-रूपी छोटी सी लता के हिलते रहने से शोभा पा रहे केशों से लुप्त प्रभा वाले सूर्य की किरणों को मलिन-जैसे कर रहा था, शत्रुपक्ष का विनाश कर देने के कारण धनुष का काम छोड़े हुए भी जिसके गुण ( धनुष की डोरी ) की बड़ी भारी ध्वनि सभी दिशा-प्रान्तों में सुनाई पड़ती रहती थी, नहीं, नहीं, जिसके ( शौर्यादि ) गुणों की बड़ी भारी ध्वनि सभी दिशा प्रान्तों में सुनाई पड़ती रहती थी, सारी गज सेना आत्मस्थ ( अपने में स्थित ) किये हुए भी जो मद ( मद जल ) से अछूता था, नहीं, नहीं

मदेन, भूतिमानपि स्नेहमयः, पार्थिवोऽपि गुणमयः, करिणामिव दानवतामुपरि स्थितः, स्वामितामिव स्पृहणीयां भृत्यतामप्यपरिभूतामुद्वहन्नेकभर्तृभक्तिनिश्चलां कुलाङ्गनामिवानन्यगम्यां प्रभुप्रसादभूमिमारूढः, निष्कारणबान्धवो विदग्धानाम्, अभृतभृत्यो भजताम्, अक्रीतदासो विदुषाम्, स्कन्दगुप्तो विवेश राजकुलम्। दूरादेव चोभयकरकमलावलम्बितं स्पृशन्मौलिना महीतलं नमस्कारमकरोत्।

---

टीका–नीवृदन्तरे' इति मेदिनी] लम्बीलताऽपि दीर्घा, हरिता, कोमला कुञ्चिता च भवति, लुप्तः = विगतः आलोकः = उद्योतः येषां तान् अर्कस्य = सूर्यस्य करान् = किरणान् लुलन् = छिन्दन् मलिनयन्नित्यर्थः इवेत्युत्प्रेक्षायाम्, तस्य केशाः स्व-श्यामिकया सूर्यस्य किरणान् स्वप्रभया वञ्चितान् कुर्वन्ति स्मेति भावः, अरि०—अरीणां = शत्रूणां पक्षाणां सहायकानामित्यर्थः परिक्षयेण = परितः विनाशनेन परित्यक्तम् = उत्सृष्टम् कार्मुकस्य = चापस्य कर्म = क्रिया आकर्षणादिरूपा येन तथाभूतोऽपि सकलेषु दिगन्तेषु = दिशाप्रान्तेषु श्रूयमाणः = आकर्ण्यमानः गुरुः = महान् गुणस्य = प्रत्यञ्चायाः ध्वनिः यस्य येन धनुष्कर्म त्यक्तं तस्य प्रत्यञ्चाध्वनिः कथं श्रोतुं शक्यते इति विरोधः तत्परिहारस्तु श्रूयमाणः महागुणानां वीरत्वधीरत्वादीनां ध्वनिः यस्य सः, आत्म०—आत्मनि स्थितम् आत्मसम्बन्धमिति यावत् सकलं मातङ्गसाधनं = गजसैन्यं यस्य तथाभूतोऽपि मदेन = मदवारिणा अस्पृष्टः = अपरामृष्टः आत्मना मातङ्गसम्पर्के कुतो न मदजलस्पर्श इति विरोधः तत्परिहारस्तु आत्मस्थम् = आत्माधीनम्, मदेन = गर्वेण अस्पृष्टः इति, भूतिः = भस्म अस्यास्तीति तथोक्तोऽपि स्नेहमयः = तैलमयः भस्मनि तैलाभावात् कथं स्नेहमयः इति विरोधः तत्परिहारस्तु भूतिः = ऐश्वर्यं तद्वान् स्नेहमयः = प्रेमपूर्णव्यवहारवान् इति, पार्थिवः = पृथिव्या मृत्तिकयेत्यर्थः निर्मितः अपि गुणमयः = तन्तुमयः पृथिवीनिर्मितः सूत्रनिर्मितश्चेति विरोधः, पार्थिवः = राजा गुणमयः = शौर्यादिमान् इति अथवा यः पार्थिवः द्रव्यरूपः पृथिव्याः द्रव्यरूपत्वात् स कथं गुणाः = रूपरसादयः तद्रूपः द्रव्यगुणयोः सर्वथा भिन्नपदार्थत्वात् इति विरोधः तत् परिहारः यथोक्तः एव उपरि सर्वत्र विरोधाभासालङ्कारः, दानं = मदजलं तद्वतां करिणां = हस्तिनाम् इवेति श्लिष्टोपमायां दानवतां दानिनाम् उपरि स्थितम्, एकत्र अध्यक्षम् अन्यत्र श्रेष्ठम् स्पृहणीयाम् = स्पृहायोग्याम् अभिलषणीयामिति यावत् स्वामितां = स्वामित्वम् इवेत्युत्प्रेक्षायां भृत्यतां = सेवकताम् अपि अपरिभूताम् = अपमानरहिताम् उद्वहन् = धारयन्, यद्यपि स राज्ञः भृत्य आसीत् तथापि न कदापि तेन अपमानः सोढ़ः अतः स्पृहणीयः स्वामी इव प्रतीयते स्मेति भावः। एकस्मिन् एव भर्तरि = स्वामिनि अन्यत्र पत्यौ या भक्तिः = दृढ़निष्ठा तया निश्चलां = स्थिरां कुलाङ्गनाम् = कुलस्त्रियम् इवेति श्लिष्टोपमायाम् न अन्येन = पुरुषान्तरेण गम्याम् = लभ्याम् अन्यत्र अन्येन गम्याम् = अभिगमनीयाम् भोग्यामिति यावत् प्रभोः = स्वामिनः अन्यत्र पत्युः प्रसादस्य = अनुग्रहस्य अन्यत्र प्रीतेः भूमिं = पात्रमित्यर्थः आरूढ़ः = आस्थितः, विदग्धानां = विद्यावतां निष्कारणः = कारणरहितः अकृत्रिमः इति यावत् बान्धवः = बन्धुः भजताम् = रक्षार्थं तच्छरणमुपागच्छतामित्यर्थः अभृतः = भृतिरहितः अवैतनिकः इति यावत् भृत्यः = सेवकः, विदुषां = पण्डितानाम् अक्रीतः दासः = विना मूल्येन प्राप्तः दासः स्कन्दगुप्तः = एतन्नामा गजसेनापतिः राजकुलं = राजगृहं विवेश = प्रविष्टवान्। उभयकरकमलाभ्याम् = उभाभ्यां हस्तकमलाभ्याम् अवलम्बितं = धृतं महीतलं मौलिना शिरसो स्पृशन्।

हिन्दी–सारी गजसेना आत्मस्थ ( अपने अधीन ) किये हुए भी जो मद (अभिमान) से अछूता था, जो भूति (भस्म) वाला होता हुआ भी स्नेह ( तेल ) वाला था, नहीं, नहीं, जो भूति ( ऐश्वर्य ) वाला होता हुआ भी स्नेह ( प्रेम ) वाला था, जो पार्थिव ( मिट्टी का बना ) होता हुआ भी गुणमय ( सूत का बना हुआ ) था, नहीं, नहीं, जो पार्थिव ( राजा ) होता हुआ भी गुणमय ( गुणवान् ) था, जो दान ( मदजल ) वाले हाथियों के-जैसे ऊपर ( अध्यक्ष ) था वैसे ही दानवालों ( दानियों ) के ऊपर ( बड़ा दानी ) था, जो अपमानरहित भृत्यता को रखता हुआ भी स्पृहा-योग्य स्वामिता को-जैसे रख रहा था, जो एक ही भर्ता ( पति ) के प्रति भक्ति में दृढ़, दूसरों द्वारा अगम्य ( असंभोग योग्य ), प्रभु ( पति ) के प्रसाद ( प्रीति ) की पात्र बनी कुलांगना की तरह एक ही भर्ता ( स्वामी ) के प्रति भक्ति में दृढ़, दूसरों द्वारा अगम्य [ अलभ्य ] प्रभु ( स्वामी ) के प्रसाद ( अनुग्रह ) का स्थान प्राप्त किये हुए था, जो बुद्धिमानों का अकारण बान्धव, शरण में आये हुओं का अवैतनिक भृत्य एवं विद्वानों का बिना मूल्य खरीदा हुआ दास था।

उपविष्टं नातिनिकटे तं तदा जगाद देवो हर्षः—'श्रुतो विस्तर एवार्यव्यतिकरस्यास्मच्चिकीर्षितस्य च। अतः शीघ्रं प्रवेश्यन्तां प्रचारनिर्गतानि गजसाधनानि। न क्षाम्यत्यतिस्वल्पमप्यार्यपरिभवपीडापावकः प्रयाण[1]विलम्बम्।' इत्येवमभिहितश्च प्रणम्य व्यज्ञापयत—'कृतमवधारयतु स्वामी समादिष्टं किंतु स्वल्पं विज्ञाप्यमस्ति भर्तृभक्तेः। तदाकर्णयतु देवः। देवेन हि पुष्पभूतिवंशसम्भूतस्या[2]भिजनस्याभिजात्यस्य सहजस्य तेजसो दिक्करिकरप्रलम्बस्य बाहुयुगलस्यासाधारणस्य च सोदरस्नेहस्य सर्वं सदृशमुपक्रान्तम्। काकोदराभिधानाः कृपणाः कृमयोऽपि न मृष्यन्ति निकारं[3] किमुत भवादृशास्तेजसां राशयः। केवलं देवराज्यवर्धनोदन्तेन कियदपि दृष्टमेव देवेन दुर्जनदौरात्म्यम्। ईदृशाः खलु लोकस्वभावाः प्रतिग्रामं प्रतिनगरं प्रतिविषयं प्रतिदेशं प्रतिद्वीपं प्रतिदिशं च भिन्ना वेशाश्चाकाराश्चाहाराश्च व्याहाराश्च व्यवहाराश्च जनपदानाम्। तदियमात्मदेशाचारोचिता स्वभावसरलहृदयजा त्यज्यतां सर्वविश्वासिता। प्रमाददोषाभिषङ्गेषु श्रुतबहुवार्ता एव प्रतिदिनं देवः। यथा नागकुल-

टीका–न अति निकटे = अतिसमीपे उपविष्टः = स्थितः जगाद = अकथयत्—आर्यस्य = भ्रातुः राज्यवर्धनस्य व्यतिकरस्य = वृत्तान्तस्य गौडाधिपकर्तृकप्रच्छन्नवधस्येति यावत् अथ च अस्माकं चिकीर्षितस्य = तत्प्रतीकारे कर्तुमिष्टस्य विस्तरः = विस्तारः भवता श्रुतः = आकर्णितः एव। प्रचारे = वानापणादिभ्रमणे निर्गतानि गजानां साधनानि = सैन्यानि प्रवेश्यन्ताम् = राजधान्यां प्रत्यावर्त्यन्ताम्। आर्यस्य = भ्रातुः यः परिभवः = अपमानः प्रच्छन्नवधरूपः तस्य या पीडा = वेदना सा एव पावकः = अग्निः स्वल्पम् अपि प्रयाणे = अभियाने युद्धयात्रायामिति यावत् विलम्बं = कालात्ययं न क्षाम्यति = सहते इति एवम् अभिहितः = कथितः प्रणम्य = प्रणामं कृत्वा व्यज्ञापयत् = निवेदितवान्—समादिष्टम् = आज्ञप्तं कृतं = सम्पादितम् एव स्वामी = भवानित्यर्थः अवधारयतु = अवगच्छतु इत्यर्थः, भर्तृभक्तेः = स्वामिभक्तेः कारणात् विज्ञाप्यं = निवेद्यम् अस्ति। आकर्णयतु = शृणोतु। पुष्पभूतेः = वंशप्रवर्तकस्य राजविशेषस्य वंशात् सम्भूतस्य = जातस्य अभिजनस्य = सन्ततेः [ 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः ] अभिजातस्य = कुलीनस्य भावः इत्याभिजात्यं तस्य सहजस्य = स्वाभाविकस्य तेजसः = प्रतापस्य दिक्करिणः = दिग्गजस्य करवत् = शुण्डवत् प्रलम्बस्य = दीर्घस्य बाहुयुगलस्य = भुजद्वयस्य असाधारणस्य = अनुपमस्य सोदरस्नेहस्य = भ्रातृस्नेहस्य सर्वं सदृशं = योग्यम् उपक्रान्तम् = प्रारब्धम्। काकोदरः = काकस्येव उदरं यस्य स सर्पः ( 'काकोदरः फणी' इत्यमरः ) अभिधानं = नाम येषां ते कृपणाः = दुर्बलाः कृमयः = कीटाः अपि निकारम् = अपमानम् आघातमिति यावत् न मृष्यन्ति = सहन्ते किमुत = किं वक्तव्यम् भवादृशाः भवद्विधाः तेजसां = प्रतापानां राशयः = पुञ्जाः, देवस्य राज्यवर्धनस्य उदन्तेन = वृत्तान्तेन ( 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः ) देवेन = भवता दुर्जनानां = खलानां दौरात्म्यम् = दुष्टतेत्यर्थः। लोकानां = जनानां स्वभावाः = प्रकृतयः विषयः = प्रदेशः राष्ट्रस्यैकभाग इति यावत्, वेशाः = भूषावसनादिकम्, आकाराः = आकृतयः आहाराः = भोजनानि, व्याहाराः = वचनानि व्यवहाराः = वर्तनानि जनपदानां लोकानां भवन्तीति शेषः तत् = तस्मात् कारणात् इयम् आत्मनः = स्वस्य देशस्य आचारस्य = व्यवहारस्य उचिता = योग्या स्वभावतः = निसर्गात् सरलम् = ऋजु यद्

हिन्दी–कुछ दूरी पर बैठे हुए उसे हर्षवर्धन ने कहा—'आर्य का वृत्तान्त और जो हम करना चाहते हैं उसका भी विस्तार तुमने सुन ही लिया है। इसलिए बाहर घूमने के लिए निकली हुई गज-सेनाओं को वापस बुला लो। आर्य के अपमान की वेदना रूपी आग युद्ध यात्रा में थोड़ा सा भी विलम्ब नहीं सहती।' इस तरह कहा जाता हुआ वह प्रणाम करके बोला—'स्वामी ने जो आज्ञा दी है, वह निश्चय ही हुई समझिए। किन्तु स्वामि-भक्ति के कारण थोड़ा सा निवेदन करना है। देव उसे सुनिए। देव ने जो आरम्भ किया है वह सब पुष्पभूति के वंश में उत्पन्न संतति की कुलीनता, स्वाभाविक तेज, दिग्गज की सूँड - जैसी लंबी भुजाओं और असाधारण भ्रातृ-स्नेह के अनुरूप ही है। साँप नाम के तुच्छ कीड़े भी अपमान नहीं सहन करते, तो फिर आप-जैसे तेजपुञ्जों की तो बात ही क्या? केवल देव राज्यवर्धन के वृत्तान्त से आपने दुर्जनों की थोड़ी सी भी दुष्टता देख ही ली है। सचमुच लोगों के इस तरह के स्वभाव वेश भूषा, आकार-प्रकार, खान-पान, बोल-चाल और आचार-व्यवहार प्रत्येक ग्राम, नगर, प्रदेश, देश, द्वीप और दिशा में भिन्न-भिन्न हुआ करते हैं। इसलिए अपने देशाचार के अनुरूप स्वभावतः सरल हृदय में उत्पन्न होने वाली सभी पर विश्वास कर देने की वृत्ति को छोड़ दीजिए। प्रमाद के दोष से आ पड़े संकटों के बहुत से वृत्तान्त आपने प्रतिदिन सुन ही रखे हैं,

१. 'प्रणयविलम्बम्' २. 'सम्भूतस्याजात्यस्य' ३. 'विकारम्'

जन्मनः सारिका¹श्रावितमन्त्रस्यासीन्नाशो नागसेनस्य पद्मावत्याम्। शुकश्रुतरहस्यस्य च श्रीरशीर्यत श्रुतवर्मणः श्रावस्त्याम्। स्वप्नायमानस्य च मन्त्रभेदोऽभून्मृत्यवे मृत्तिकावत्यां सुवर्णचूडस्य। चूडामणिलग्नलेखप्रतिबिम्बवाचिताक्षरा च चारुचामीकरचामरग्राहिणी यमतां ययौ यवनेश्वरस्य। लोभबहुलं च बहुलनिशि निधानमुत्खनन्तमुत्खातखड्गप्रमाथिनी ममन्थ माथुरं बृहद्रथं विदूरथवरूथिनी। नागवनविहारशीलं च मायामातङ्गाङ्गान्निर्गता महासेनसैनिका वत्सपतिं न्ययंसिषुः। अतिदयितलास्यस्य च शैलूषमध्यमध्यास्य मूर्धानमसिलतया मृणालमिवालुनादग्निमित्रात्मजस्य सुमित्रस्य मित्रदेवः। प्रियतन्त्रीवाद्यस्यालाबुवीणाभ्यन्तरशुषिरनिहितनिशिततरवारयो गान्धर्वच्छात्रच्छद्मानः चिच्छिदुरश्मकेश्वरस्य शरभस्य शिरो रिपुपुरुषाः।

टीका–हृदयं तस्मात् जायते इति० जा सर्वेषु विश्वासः अस्यास्तीति सर्वविश्वासी तस्य भावः तत्ता त्यज्यतां = विसृज्यताम्। प्रमादः = अनवधानता एव दोषः तेन (प्राप्ताः) अभिषङ्गाः अभिभवाः संकटाः इति यावत् [ 'अभिषङ्गः पराभवे' इत्यमरः ] तेषु तद्विषये इत्यर्थः देवः = भवान् प्रतिदिनं श्रुताः बह्वचः = अनेकाः वार्ताः = वृत्तान्ताः येन तथाभूतः अस्त्येवेति शेषः। नागकुले जन्म यस्य तस्य सारिकया = 'मैना' इति प्रसिद्धपक्षिविशेषेण श्रावितः = श्रवणविषयतां नीतः मन्त्रः = गुप्तराजनीतिकमन्त्रणा यस्य तस्य नागसेनस्य = नृपविशेषस्य पद्मावत्यां एतदाख्यायां नगर्याम् नाशः अभवदिति शेषः। शुकात् = कीरात् श्रुतम् = आकर्णितं रहस्यं = गुप्तमन्त्रः यस्य तस्य श्रुतवर्मणः = नृपविशेषस्य श्रीः = राजलक्ष्मीः, श्रावस्त्याम् = एतदाख्यनगर्यां या प्राचीनायोध्याराज्ये आसीत् अशीर्यत = नाशमगात्, स्वप्नायमानस्य = स्वप्नं वेदयते इति ( स्वप्न + क्यङ् + शानच् ) तस्य स्वप्ने प्रलपत इत्यर्थः सुवर्णचूडस्य = एतदाख्यनृपविशेषस्य मन्त्रभेदः = रहस्योद्घाटनम् मृत्तिकावत्यां = एतन्नाम्न्यां पुर्यां मृत्यवे = निधनाय अभूत् = अभवत्। चूडामणौ = शिरोरत्ने लग्नः = संसक्तः यः लेखस्य = पत्रस्य प्रतिबिम्बः = प्रतिच्छाया तत्र वाचितानि = पठितानि अक्षराणि यया सा चारु = सुन्दरं चामीकरस्य = सुवर्णस्य चामरं गृह्णाति = वहतीति तथोक्ता दासी यवनेश्वरस्य = यवनभूपतेः यमतां ययौ = यमरूपा जाता तद्वधमकरोदितिभावः। लोभः बहुलः = प्रचुरः यस्मिन् तम् अतिलोभिनमित्यर्थः बहुलनिशि = कृष्णपक्षस्य निशायां निधानं = कोशं रत्नादिकमिति यावत् उत्खनन्तं = भूमिं विदार्य उद्धरन्तं माथुरं = मथुराधिपम् बृहद्रथम् = एतन्नामानम् उत्खातः = कोषाद् बहिर्निस्सारितः यः खड्गः तेन प्रमथ्नाति = हन्तीति तथोक्ता विदूरथस्य नृपविशेषस्य वरूथिनी = सेना [ 'वरूथिनी बलं सैन्यम्' इत्यमरः ] ममन्थ = जघानेत्यर्थः। नागानां = गजानां वनेषु विहारः = विहरणं भ्रमणमिति यावत् शीलं = स्वभावः यस्य तम् वत्सपतिं = वत्सदेशस्य राजानं मायायाः = छद्मनः यः मातङ्गः = गजः कृत्रिमगज इत्यर्थः तस्य अङ्गात् = उदरादित्यर्थः निर्गताः = निसृताः महासेनस्य = एतन्नामकस्य उज्जयिन्याः भूपालस्य सैनिकाः = भटाः न्ययंसिषुः = ( नि + √यम् + लुङ् प्र० बहु० ) बबन्धुः। मित्रदेवः = नृपविशेषः शैलूषाणां [ 'शिलूषस्य ऋषेः अपत्यं पुमान् शैलूष इति क्षीरस्वामी' ] = नटानाम् ( 'शैलूषा जायाजीवा कृशाश्विनः। भरता इत्यपि नटाः' इत्यमरः ) तेषां मध्यम् अध्यास्य = अधिष्ठाय तैः सह स्थित्वेत्यर्थः, अतिशयेन दयितं = प्रियं लास्यं = नृत्यं यस्य तस्य अग्निमित्रस्य = राजविशेषस्य आत्मजस्य = पुत्रस्य सुमित्रस्य = एतदाख्यस्य मूर्धानं = शिरः मृणालम् = बिसम् इवेत्युपमायाम् अलुनात् = अच्छिनत् प्रियाणि = दयितानि तन्त्रीवाद्यानि = वीणाद्याः वाद्यविशेषाः यस्य तस्य अश्मकेश्वरस्य = अश्मकदेशभूपालस्य शरभस्य =

हिन्दी–(उदाहरणार्थ) —जैसे नागकुल में उत्पन्न हुआ नागसेन मैना द्वारा उसका गुप्त रहस्य सुना दिये जाने पर पद्मावती नगरी में मार डाला गया था। तोते से रहस्य सुन लेने पर श्रुतवर्मा की राजलक्ष्मी श्रावस्ती में विनष्ट हो गई थी, सुवर्णचूड़ का स्वप्न में किया हुआ रहस्य भेद मृत्तिकावती में उसकी मृत्यु का कारण बना, चूड़ामणि में पड़े हुए पत्र के प्रतिबिम्ब में अक्षरों को बाँचे हुए, सुन्दर सुवर्ण-चामर डुलाने वाली दासी यवनराज का काल बन गई; कृष्ण पक्ष की रात में खजाना खोदते हुए अतिलोभी मथुरानरेश बृहद्रथ को म्यान से तलवार खींच कर मार करती हुई विदूरथ की सेना ने मौत के घाट उतार दिया था, हाथियों के बनों में विचरण करने के स्वभाववाले वत्सराज को नकली हाथी के पेट से निकले हुए महासेन के सैनिकों ने बाँध डाला था, नर्तकों के मध्य बैठकर मित्रदेव ने अग्निमित्र के पुत्र नृत्य के शौकीन सुमित्र का शिर तलवार से मृणाल की तरह काट दिया था, तुमड़ी और वीणा ( दण्ड ) के भीतरी छेद में तेज तलवार छिपा रखे हुए, संगीत के छात्रों का वेष बनाए शत्रुओं के लोग वीणा के शौकीन अश्मक देश के नरपति

१. 'प्लावितमन्त्रस्य'

प्रज्ञादुर्बलं च बलदर्शनव्यपदेशदर्शिताशेषसैन्यः सेनानीरनार्यो मौर्यं बृहद्रथं पिपेष पुष्यमित्रः स्वामिनम्। आश्चर्यकुतूहली च चण्डीपतिर्दण्डोपनतयवननिर्मितेन नभस्तलयायिना यन्त्रयानेनानीयत क्वापि। काकवर्णः शैशुनागिश्च नगरोपकण्ठे कण्ठे निचकृते निस्त्रिंशेन। अतिस्त्रीसङ्गरतमनङ्गपरवशं शुङ्गममात्यो वसुदेवो देवभूतिदासीदुहित्रा देवीव्यञ्जनया वीतजीवित-

---

टीका—एतन्नाम्नः शिरः = मूर्धानम् अलाबूः = तुम्बी ['तुम्ब्यलाबूरुभे समे' इत्यमरः] वीणा = विपञ्ची च तयोः अभ्यन्तरे = मध्ये यत् सुषिरं = छिद्रं तस्मिन् निहिताः = स्थापिताः निशिताः = तीक्ष्णाः तरवारयः = खड्गाः यैः ते गांधर्वं = गन्धर्वाणामिदम् (अण्) गन्धर्वाणां कलां सङ्गीतमित्यर्थः तस्य छात्राणां छद्म = कपटं येषां ते सङ्गीतछात्रवेशधारिणः इत्यर्थः रिपोः = शत्रोः पुरुषाः = जनाः चिच्छिदुः = कृत्तवन्तः बलस्य = सैन्यस्य दर्शनस्य = अवलोकनस्य व्यपदेशेन = व्याजेन दर्शितं = प्रकाशितम् अशेषं = निखिलं सैन्यं येन सः अनार्यः = दुष्टः सेनानीः = सेनापतिः पुष्यमित्रः प्रज्ञया = बुद्धया दुर्बलं = निर्बलं मौर्यं = मौर्यवंशीयं बृहद्रथं = प्रसिद्धम् अन्तिमं मौर्यसम्राजम्, पुष्यमित्रेण मौर्यवंशस्थाने शुङ्गराजवंशः स्थापितः। पुष्यमित्रस्यैव तनयः अग्निमित्रः कालिदासकृतमालविकाग्निमित्रनाटकस्य नायकोऽस्ति, पिपेष = पिष्टवान् जघानेत्यर्थः। आश्चर्यं = आश्चर्यकारकवस्तुनि कुतूहलं = कौतुकम् अस्यास्तीति तथोक्तः चण्डीपतिः = एतन्नामा राजा दण्डार्थम् दण्डप्राप्त्यर्थम् उपनीताः = समुपस्थापिताः ये यवनाः = पराजिताः म्लेच्छजातीयाः शत्रवः तैः निर्मितेन = रचितेन नभस्तले = गगनतले याति = गच्छतीति तथोक्तेन यन्त्रयानेन = यन्त्रात्मक वायुयानविशेषेण क्वापि सुदूरस्थाने अनीयत = प्राप्यत, तत्र च स मारितोऽभवत्। शैशुनागिः = शिशुनागस्य अपत्यं पुमान् काकवर्णः = एतन्नामा राजा नगरस्य उपकण्ठे = परिसरे पार्श्ववर्तिभूमौ इत्यर्थः कण्ठे = गले निस्त्रिंशेन = खड्गेन निचकृते = अकृत्यत कृत्तशिरा अभवदित्यर्थः। अमात्यः मन्त्री वसुदेवः अतिशयिते स्त्रीसङ्गे = स्त्रीणामुपभोगे रतं = सक्तं अनङ्गस्य = कामस्य परवशम् = अधीनं शुङ्गम् = भूपालविशेषं देवभूतेः एतदाख्यस्य दास्याः दुहित्रा = पुत्र्या देव्याः = महिष्याः व्यञ्जनं = छद्म यस्याः तया परि-

टिप्पणी—नागसेन—मन्त्र भेद हो जाने पर राजा संकटों में फँस जाया करते हैं इस सम्बन्ध में ग्रन्थकार प्रेम और षड्यन्त्रों की कहानियाँ देता है जो कौटिल्य के अर्थशास्त्र, कामन्दकीय नीतिसार एवं बृहत्संहिता में आई हुई हैं और ऐतिहासिक प्रतीत होती हैं। नागसेन आदि के सम्बन्ध में शंकर लिखता है—'नागसेननामा पद्मावत्यां मन्त्रिणम् अर्धराज्यहरम् अपाकर्तुं सारिकासमक्षं मन्त्रमकरोत्। स चापि मन्त्री सारिकामुखाद् विज्ञाय विस्रम्भपूर्वकं तं दण्डेन अवधीत्'। 'श्रावस्त्यां च श्रुतवर्मा पूर्ववच्छुकश्रावितमन्त्रो राज्याच्चुच्याव'। 'सुवर्णचूडो नाम राजा कश्चिद्विश्रम्भ-पूर्वकं जिघृक्षन् मन्त्रितवान् तदेव तस्मै विललास। ततस्तत्पूर्वं तत्प्रयुक्तेन विश्वासिना शिरोरक्षकेण स्वस्वामिप्रयुक्तेन व्यापादितः। यवनेश्वरः केनचित् शत्रुणा आसाद्य व्यापादयितुमिष्टः। स्वसुहृदा शत्रुप्रहितलेखेन बोधितः। लेखपृष्ठे च तेन लिखितम्—'स्वयं वाचयितव्यो लेखः' इति। ततो यवनेश्वरस्य स्वयं वाचयतश्चूडामणि प्रतिबिम्बितान्यक्षराणि वाचयित्वा तत्प्रहिता चामरग्राहिणी प्रभवे निवेद्य तदाज्ञया जघानेति। वत्सपति—वत्सराज और वासवदत्ता के प्रणय पर संस्कृत में पर्याप्त साहित्यसृजन हो रखा है। उज्जयिनी का राजा महासेन (प्रद्योत) वत्सराज को अपनी कन्या वासवदत्ता देना चाहता था किन्तु वह नहीं मान रहा था। महासेन ने एक महाभारी लकड़ी का हाथी बनाया जिसके भीतर सैनिक बैठा दिये गए और उसे वत्सदेश की सीमा के पास खड़ा कर दिया। वत्सराज हाथियों के आखेट का बड़ा शौकीन था। उसने जंगल में वह विचित्र हाथी देख लिया। वह वीणा बजाकर उसे जीवित ही वश में करना चाहता था। अतः वह महासेन की राज्यसीमा के भीतर अकेला घुसा ही था कि हाथी के भीतर से सैनिक निकले और उसे बाँध ले गए। पीछे वत्सराज यौगन्धरायण की सहायता से कारागार से निकल, वासवदत्ता का अपहरण करके भाग निकला। सुमित्र के सम्बन्ध में संकेत टीका लिखती है—'सुमित्रो राजा मित्रव्यसनी स्त्रीजनपरिवारे इव नटजने विश्रब्धो मित्रदेवेन नटत्वमाश्रित्य हतः स च योगचूर्णविचूर्णितस्तिरोहितो बभूव। अतो व्यसनिभिः प्रकृतलोकविश्वासिभिश्च न भाव्यम्'।

हिन्दी—शरभ का शिर काट गए, सेना देखने के बहाने सारी सेनाओं का प्रदर्शन किए हुए अनार्य सेनापति पुष्यमित्र ने दुर्बल बुद्धि वाले मौर्यवंशीय बृहद्रथ को पीस डाला, आश्चर्यजनक वस्तुओं (को देखने) का कुतूहली राजा चंडीपति दण्ड देने के लिए सामने लाये हुए यवनों द्वारा निर्मित, गगनतल में जाने वाले यान्त्रिक यान द्वारा कहीं ले जाया गया, शिशुनाग का पुत्र काकवर्ण नगर के समीप ही खड्ग द्वारा गले से काट दिया गया। स्त्री-संग में अत्यासक्त, कामाधीन शुंग को अमात्य

मकारयत् । असुरविवरव्यसनिनं चापजह्रुरपरिमितरमणीमणिनूपुरझणझणाह्लादरम्यया मागधं गोधनगिरिसुरङ्गया स्वविषयं मेकलाधिपमन्त्रिणः । महाकालमहे च महामांसविक्रयवादवातूलं वेतालस्तालजङ्घो जघान जघन्यजं प्रद्योतस्य पौणकिं कुमारं कुमारसेनम् । रसायनरसाभिनिवेशिनश्च वैद्यव्यञ्जनाः सुबहुपुरुषान्तरप्रकाशितौषधगुणा गणपतेर्विदेहराजसुतस्य राजयक्ष्माणमजनयन् । स्त्रीविश्वासिनश्च महादेवीगृहगूढभित्तिभाग्भ्राता भद्रसेनस्याभवन्मृत्यवे कालिङ्गस्य वीरसेनः । मातृशयनीयतूलिकातलनिषण्णश्च तनयोऽन्यं तनयमभिषेक्तुकामस्य दध्रस्य करूषाधिपतेरभवन्मृत्यवे । उत्सारकरुचिं च रहसि ससचिवमेव दूरीचकार चकोरनाथं शूद्रकदूतश्चन्द्रकेतुं जीविताद् । मृगयासक्तस्य च मग्नतो गण्डकानुद्दण्डनडवलनलवननिलीनाश्च चम्पाधिपचमूचरभटाश्चामुण्डीपतेराचेमुः प्राणान्पुष्करस्य । बन्दिरागपरं च परप्रयुक्ता जयशब्दमुखरमुखा मल्ला मौखरिं मूर्खं

---

टीका–हितवेषया इत्यर्थः वीतं = गतं जीवितं = प्राणाः यस्य तम् निष्प्राणमित्यर्थः अकारयत् = कारितवान् असुरविवरस्य = असुराणां = राक्षसानां निवासस्थानभूतस्य विवरस्य = रन्ध्रस्य पातालस्येत्यर्थः व्यसनी = अनुरागी मागधम् = मगधदेशभूपालं, मेकलाधिपस्य = मेकलदेशनृपतेः, मेकलः अमरकण्टकापरपर्यायः पर्वतविशेषः यस्मात् नर्मदा निस्सरति, तत्समीपवर्ती देशोऽपि मेकलशब्देन उच्यते, मन्त्रिणः = अमात्याः अपरिमिताः अनेकाः या रमण्यः = कामिन्यः तासां नूपुराणां = मञ्जीराणां झणझणाह्लादेन = झङ्कारशब्देन रम्यया = मनोहरया गोधनगिरेः = 'गोधनः सूर्याख्यः पर्वतः' इति शङ्करः तस्य सुरङ्गया = आन्तर्भूमिमार्गेण स्वविषयं = स्वकीयदेशम् अपजह्रुः = अपहृतवन्तः । महाकालस्य = महाकालाख्यमहादेवस्य, उज्जयिन्यां महाकालस्य प्रसिद्धं मन्दिरं वर्तते, महे = उत्सवे ( 'मह उद्धव उत्सवः' इत्यमरः ) महामांसस्य = नरमांसस्य विक्रयस्य मूल्यं गृहीत्वा दानस्य वादे = सिद्धान्ते वातूलस्य = वातं न सहते इति ( वात + ऊलुप्रत्ययः ) तस्य उन्नतस्येत्यर्थः नरमांसविक्रयसिद्धान्तस्य दृढविश्वासीति यावत् तम्, प्रद्योतस्य एतदाख्यनृपस्य जघन्यजं = जघन्ये = चरमे जायते इति ( जघन्य + √जन् + डः ) अनुजम् [ 'जघन्यजे स्युः कनिष्ठ–यवीयोऽवरजानुजाः' इत्यमरः ] पौणकिम् 'पुणको गोत्रविशेषः तत्र भवः पौणकिः' इति शङ्करः, तं कुमारं = राजकुमारं कुमारसेनम् तालजङ्घो नाम वेतालः प्रेतविशेषः जघान = हतवान्, तत्सकाशात् महामांसमलभमानं तं मारितवानिति भावः । रसायनम् = आयुर्वर्धकं जराव्याधिनिवारकञ्च औषधञ्च यथोक्तं वैद्यके -'यज्जराव्याधिविध्वंसि वयसस्तम्भकं तथा । चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम्' ॥

टिप्पणी–असुरविवर–बाण ने कादम्बरी और हर्षचरित–दोनों में कई बार असुरविवर का उल्लेख कर रखा है। जैसे हम पीछे भी स्पष्ट कर आए हैं–ये पृथिवी के भीतर बड़े गहरे गर्त होते हैं जिनमें कहते हैं कि असुर निवास करते हैं और यहां से होकर निधि पाने के लिए पाताल जाया जाता है। धन-लोभ में कितने ही यहां प्राण गँवा बैठे हैं। वास्तव में ये वे खानें होती हैं, जहां अतीत में खुदाई हो रखी है और जहां से खनिज निकाले जा चुके होते हैं। मेकलाधिप भेस बदले हुए मंत्रियों ने मगधाधिप को विश्वास दिला दिया कि हमने तपोबल से पाताल-मार्ग बना दिया है, जहां से इधर-उधर चलती-फिरती नाग-युवतियों के नूपुरों की झंकारें भी सुनाई पड़ती हैं। राजा लोभ में आ गया। मन्त्री उसे सुरंगमार्ग से अपने देश ले गए और वहां उसे मार दिया।

हिन्दी–वसुदेव ने रानी का वेश बनाये देवभूति की दासी की पुत्री द्वारा मरवा दिया, मेकल देश के राजा के मंत्री असुर-विवर के अनुरागी मगध देश के नरपति को अनेक मणियों के नूपुरों की झंकार-ध्वनि से रमणीय बनी गोधन पर्वत की सुरंग द्वारा हरकर अपने देश ले गए। महाकाल शिव के उत्सव पर तालजंघ नामक बेताल नरमांस-विक्रय के सिद्धान्त में उन्मत्त बने हुए, प्रद्योत के छोटे भाई, पुणकगोत्रीय राजकुमार कुमारसेन को समाप्त कर बैठा। रसायन रस के कट्टर पक्षपाती, अन्य बहुत से लोगों द्वारा ( अपनी ) औषधि के गुणों का खूब प्रचार करवाये नकली वैद्यों ने विदेहराज के पुत्र गणपति को क्षयरोग लगा दिया। स्त्रियों में विश्वास करने वाले कलिंग देश के राजा भद्रसेन के भाई वीरसेन ने महारानी के घर की दीवार के सहारे छिपकर उस ( भद्रसेन ) का वध किया। माता की शय्या के गद्दे के तले स्थित ( छोटे ) पुत्र ने ( बड़े ) पुत्र को राजगद्दी देना चाहते हुए करूष के नृपति दध्र को यमलोक पहुँचा दिया। द्वारपाल की ओर रुचि रखे हुए चकोर देश के राजा चन्द्रकेतु को सचिव सहित शूद्रक के दूतों ने प्राणों से वियुक्त किया। ऊँचे-ऊँचे नालदण्डों वाले सरकंडों के वन में छिपे चम्पा नगरी के राजा की सेना में रहने वाले भट गेंडों का शिकार करते हुए, मृगयाव्यसनी, चामुंडी नगरी के पुष्कर-नामक नृपति के प्राण पी गए। स्तुतिपाठकों से ही रुचि रखने वाले मौखरि वंश

क्षत्रवर्माणमुदखनन् । अरिपुरे च परकलत्रकामुकं कामिनीवेशगुप्तश्च चन्द्रगुप्तः शकपतिमशातयदिति । प्रमत्तानां प्रमदाकृताः प्रमादाः श्रुतिविषयमागता एव देवस्य । यथा मधुमोदितं मधुरकसंलिप्तैर्लाजैः सुप्रभा पुत्रराज्यार्थं महासेनं काशिराजं जघान । व्याजजनितकन्दर्पदर्पा च दर्पणेन क्षुरधारापर्यन्तेनायोध्याधिपतिं परन्तपं रत्नवती जारूथ्यम्, विषचूर्णचुम्बितमकरन्देन च

---

टीका—तस्य रसे=द्रवे अभिनिवेशः आग्रहः येषां ते रसायनवादिनः इत्यर्थः वैद्यव्यञ्जनाः=वैद्यं व्यंजयन्ति=आत्मानं वैद्यं प्रकाशयन्तीति तथोक्ताः अर्थात् छद्मवैद्याः वैद्यवेशधारिण इति यावत्, सु=सम्यक् बहुभिः पुरुषान्तरैः=अन्यपुरुषैः प्रकाशिताः=प्रख्यापिताः औषधस्य=भेषजस्य गुणाः=धर्माः यैः ते विदेहराजस्य सुतस्य=पुत्रस्य राजयक्ष्माणं क्षयरोगम् अजनयन्=उदपादयत् तं क्षयरोगिणमकुर्वन्निति भावः। स्त्रीषु विश्वसितिः=विश्वासं करोतीति तथोक्तस्य कालिङ्गस्य=कलिङ्गदेशस्याधिपतेः भद्रसेनस्य=एतदाख्यस्य भ्राता=अनुजः वीरसेनः=महादेव्याः=पट्टराज्ञ्याः गृहे=भवने गूढं प्रच्छन्नं यथा स्यात्तथा भित्तिं=कुड्यं भजति=आश्रयतीति तथोक्तः सन् मृत्यवे=भद्रसेनस्य विनाशाय अभवदिति शेषः, भ्रातृजायया सह कृतोपजापः वीरसेनः स्वभ्रातरं जघानेत्यर्थः। मातुः=जनन्याः शयनीयस्य=शय्यायाः तूलिकायाः=तूलगर्भप्रच्छदपटस्य तले निषण्णः=स्थितः तनयः=पुत्रः अन्यं तनयम् अभिषेक्तुकामस्य=अभिषेक्तुमिच्छतः करूषस्य=एतदाख्य-देशविशेषस्य अधिपतेः=राज्ञः दध्रस्य=एतन्नाम्नः मृत्यवे=प्राणनाशाय अभवत्। उत्सारके=दौवारिके ['दण्डी दौवारिको वेत्री उत्सारकश्च' इति क्षीरस्वामी] रुचिः=रागो यस्य तम् चकोरस्य=देशविशेषस्य नाथं=भूपालं चन्द्रकेतुम्=एतदाख्यम् शूद्रकस्य=एतन्नाम्नः शत्रुभूपस्य इतः सचिवेन सहितम् इति ससचिवम् एव जीवितात्=प्राणेभ्यः दूरीचकार=दूरीकृतवान् व्यापादितवानित्यर्थः। मृगयायाम्=आखेटे आसक्तस्य=अनुरक्तस्य गण्डकान्=खड्गिनः मध्नतः=व्यापादयतः तेषां आखेटं कुर्वतः इत्यर्थः चामुण्डी=नगरीविशेषः तस्याः पत्युः=स्वामिनः पुष्करस्य एतन्नामकस्य राज्ञः प्राणान् उद्दण्डानाम् उत्+ऊर्ध्वं दण्डाः=नालानि येषां तेषां नड्वले=नडप्राये देशे ('नलप्राये नड्वान् नड्वल इत्यपि' इत्यमरः] नलानां=नडानां वने निलीनाः=प्रच्छन्नाः चम्पानगर्याः अधिपस्य=राज्ञः चमूचराः=चमूं=सेनां चरन्ति=आश्रयन्तीति तथोक्ताः भटाः=सैनिकाः प्राणान्=असून् आचेमुः=पपुः तं प्राणैः व्ययोजयन्नित्यर्थः। वन्दिषु स्तुतिपाठकेषु रागः=रुचिः परं=प्रधानं यस्य तम् अर्थात् वन्दिजनस्य स्तुतिश्रवणव्यसनी तम् मौखरिं=मौखरिवंशीयम् मूर्खं क्षत्रवर्माणम्=एतदाख्यं राजानम् परेण=शत्रुणा प्रयुक्ताः=प्रेरिताः जय-शब्देन। 'जय जय देवे'ति ध्वनिना मुखरं=वाचालितं मुखं येषां ते मङ्खाः=वन्दिनः उदखनन्=उदपाटयन्। अरेः=शत्रोः पुरे=नगरे परस्य=अन्यस्य कलत्रस्य=पत्न्याः कामुकम्=इच्छुकं शकानाम् एतदाख्य-जातिविशेषीयाणां पतिं=स्वामिनम् कामिन्याः=स्त्रियाः वेशे=छद्मनीत्यर्थः गुप्तः=प्रच्छन्नः धृतस्त्रीवेशः इति यावत् चन्द्रगुप्तः एतदाख्यः गुप्तवंशीयः रामगुप्तस्य भ्राता अशातयत्=अवधीत्। प्रमत्तानां=प्रमादवतां प्रमदाभिः=कामिनीभिः कृताः=सम्पादिताः प्रमादाः=

**टिप्पणी—शकपतिम्—**ईशवीय सन् के प्रारम्भ से पूर्व शक नाम की विदेशी जाति ने भारत पर आक्रमण किया था। ये स्कीथिअन थे। कुछ समय भारत में इनका राज्य रहा। शकपति ने चन्द्रगुप्त (द्वितीय) के बड़े भाई रामगुप्त को परास्त कर दिया था, जो एक भीरु पुरुष था। शकपति ने रामगुप्त की रानी ध्रुवस्वामिनी को उसे सौंप देने को कहा। चन्द्रगुप्त यह कैसे सहन करता। वह ध्रुवस्वामिनी के वेश में रात को शकपति के पास पहुँचा और उसका काम तमाम कर गया। इसी कथावस्तु को लेकर जयशंकर प्रसाद ने 'ध्रुवस्वामिनी' नामक नाटक लिखा।

**हिन्दी—**के मूर्ख राजा क्षत्रवर्मा को शत्रु द्वारा भेजे और मुख से जय-जयकार करते हुए स्तुतिपाठकों ने उखाड़ फेंका। स्त्री के वेश में छिपे चन्द्रगुप्त ने शत्रु के नगर में (जाकर) परस्त्री को चाहनेवाले शकपति की हत्या की। प्रमादियों की, स्त्रियों द्वारा की हुई विपत्तियाँ आपने सुन ही रखी हैं, जैसे—पुत्र को राज्य प्राप्त होने के लिए सुप्रभा ने मदिरा (के नशे) से प्रफुल्लित हुए काशिराज महासेन को विष-लिपी फूलियों से मार दिया था, (इसी तरह) नकली कामावेश उत्पन्न किये रत्नवती ने किनारे पर उस्तरे की धार लगे दर्पण से शत्रुओं का दमन करनेवाले अयोध्यापति जारूथ के प्राण ले लिये; देवर पर आसक्त हुई देवकी ने विषचूर्ण-मिले मकरन्द वाले कान के नीलकमल से सुह्म देश के नरेश देवसेन का वध किया;

कर्णेन्दीवरेण देवकी देवरानुरक्ता देवसेनं सौह्मम्, योगपरागविसरवर्षिणा च मणिनूपुरेण वल्लभा सपत्नीरुषा वैरन्त्यं[1] रन्तिदेवम्, वेणीनिगूढेन च शस्त्रेण विन्दुमती वृष्णि विदूरथम्, रसदिग्धमध्येन च मेखलामणिना हंसवती सौवीरं वीरसेनम्, अदृश्यागदलिप्तवदना च विषवारुणीगण्डूषपायनेन पौरवी पौरवेश्वरं सोमकम् ।' इत्युक्त्वा विरराम स्वाम्यादेशसम्पादनाय च निर्जगाम ।

---

टीका–विपत्तीः देवस्य=भवतः श्रुतिविषयं=कर्णगोचरम् आगताः=एव भवता श्रुताः एवेत्यर्थः यथा मधुना=मदिरया मोदितम्=आह्लादितं जनितोल्लासमिति यावत् । काशिराज महासेनम्=एतदाख्यं सुप्रभा=एतन्नाम्नी तन्महिषी मधुरकेण=विषयविशेषेण लिप्तैः=दिग्धैः लाजैः=भृष्टधान्यैः पुत्रस्य=निजतनयस्य राज्यार्थं=राज्यप्राप्त्यर्थं जघान=हतवती । व्याजेन=छद्मना जनितः=उत्पादितः कन्दर्पस्य=कामस्य दर्पः=आवेशः इत्यर्थः यया कृत्रिमकामावेशा इति यावत् रत्नवती क्षुरस्य=लोमच्छेदकशस्त्रविशेषस्य धारा=अग्रम् पर्यन्ते=प्रान्तभागे यस्य तेन दर्पणेन=मुकुरेण अयोध्यायाः=पुरीविशेषस्य पतिं=नरेशं परान्=शत्रून् तापयतीति ( पर+ताप्+खश्+मुमागमः उपधाह्रस्वश्च ) परंतपं जारूथम्=एतन्नामकं जघानेति सर्वत्रान्वयः, विषस्य चूर्णेन=क्षोदेन चुम्बितः=स्पृष्टः मकरन्दः-मधु=मधु-यस्य तेन कर्णस्य इन्दीवरेण=नीलकमलेन देवरे=पत्युः कनीयसि भ्रातरि अनुरक्ता=आसक्ता देवकी सौह्मं=सुह्मदेशस्य नरेशं देवसेनं जघान, योगपरागः=अभिचार-चूर्णम्' इति शङ्करः अभिमन्त्रित-चूर्णविशेषः इत्यर्थः तस्य विसरं=समूहं वर्षतीति तथोक्तेन मणिनूपुरेण=मणिखचितमञ्जीरेण वल्लभा=प्रिया राज्ञः महिषीत्यर्थः सपत्न्याः=सपत्नीकारणात् रुषा=क्रोधेन माम् अवज्ञाय सपत्न्यां रमते इति क्रोधादिति भावः वैरन्त्यं=विरन्ती-नगर्याः पतिं रन्तिदेवम् जघान, वेण्यां=केशपाशे निगूढेन=गोपितेन शस्त्रेण विन्दुमती=एतन्नाम्नी महिषी वृष्णिम्=वृष्णिवंशीयं यादवमित्यर्थः विदूरथम्=राजविशेषम्. रसेन=विषेण [ 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः ] दिग्धं=लिप्तं मध्यम्=अभ्यन्तरं यस्य तेन मेखलायाः=काञ्च्याः मणिना=रत्नेन हंसवती=एतदाख्यमहिषी सौवीरं=सौवीरदेशनृपतिं वीरसेनम् जघान, अदृश्यः=दृष्टयविषयः अन्तर्गूढः इत्यर्थः यः अगदः=( विषघ्नम् ) औषधं तेन लिप्तं=दिग्धं वदनं=मुखं यया सा विषमिलिता वारुणी=मदिरा विषवारुणी ( मध्यमपदलो० स० ) तस्याः यः गण्डूषः=मुखपूरणं तस्य पायनेन=पानप्रेरणया पौरवी नाम महिषी पौरवाणां=पुरुवंशीयानाम् ईश्वरं=राजानं सोमकं जघान, विषमिश्रितमदिरायाः गण्डूषं स्वमुखात् राज्ञो मुखे दत्तवती स्वमुखे विषप्रतिरोधकौषधलेपकारणात् तस्यां विषस्य प्रभावो न जातः इति भावः । इति उक्त्वा=कथयित्वा विरराम=तूष्णींबभूव गजाध्यक्षः स्वामिनः=भर्तुः हर्षवर्धनस्य आदेशस्य=आज्ञायाः सम्पादनाय=अनुष्ठानाय निर्जगाम=निरगच्छत् । एताः कथाः कौटिल्यस्यार्थशास्त्रे एवमागताः सन्ति—"देवीगृहे लीनो भ्राता भद्रसेनं जघान । मातुः शय्यान्तर्गतश्च पुत्रः कारूशम् । लाजान्मधुनेति विषेण पर्यस्य देवी काशिराजम् । विषदिग्धेन नूपुरेण वैरन्त्यं, मेखलामणिना सौवीरं, जालूथमादर्शेन वेण्यागूढं शस्त्रं कृत्वा देवी विदूरथं जघान ।"

हिन्दी–जादूमंत्र किये चूर्ण-समूह को बिखेरते हुए मणिनूपुर से प्रियतमा ने सौतियाडाह के कारण विरन्ती नगरी के भूप रंतिदेव की इहलीला समाप्त की; केशपाश में छिपाये शस्त्र से विन्दुमती वृष्णिवंशीय विदूरथ की प्राणलेवा बनी, करधनी के बीच में विषलिप्त मणि से हंसवती ने सौवीर देश के राजा वीरसेन को यमपुरी पहुँचाया; दिखाई न पड़ने वाली ( विषप्रतिरोधी ) औषधि से ( अपना ) मुँह लिपे हुए पौरवी ने विष-मिली मदिरा की चुल्ली पिलाने से पुरुवंशियों के राजा सोमक की हत्या की' यह कहकर [ स्कन्दगुप्त ] चुप हो गया और स्वामी की आज्ञा को क्रियात्मक रूप देने के लिए निकल पड़ा ।

---

१. वैरन्त्या'

देवोऽपि हर्षः सकलराज्यस्थितीश्चकार। ततश्च तथा कृतप्रतिज्ञे प्रयाणं विजयाय विशां समादिशति देवे हर्षे गतायुषां प्रतिसामन्तानामुदवसितेषु बहुरूपाण्युपलिङ्गानि वितेनिरे। तथा ह्यविप्रकृष्टाः कालदूतदृष्टय इवेतस्ततश्चेरुश्चटुलाः कृष्णशारश्रेणयः। प्रचलितलक्ष्मीनूपुरप्रणादप्रतिमा मधुसरघासंघातझंकारा जह्लादिरेऽजिरे। विवृतविकृतवदनविवरविसृतवह्निविसरा वासरेऽपि विरसं विरेसुश्चिरमशिवार्यमशिवाः शिवाः। शवपिशितप्ररूढप्रसरा इव कपिपोतकपोलकपिलपक्षतयः काननकपोताः पेतुः। आमन्त्रयमाणा इव दधुरकालकुसुमानि सममुपवनतरवः। तरलकरतलप्रहारप्रहतपयोधरा रुरुदुः प्रसभं सभाशालभञ्जिकाः। ददृशुरासन्नकचग्रहभयोद्भ्रान्तोत्तमाङ्गमिवात्मानं कबन्धमादर्शोदरेषु योधाः। चूडामणिषु चक्रशाङ्ग-

टीका–देवः अपि हर्षः सकलाः राज्यस्य स्थितीः=व्यवस्थाः चकार=कृतवान् राज-रूपेण सर्वाणि कार्याणि अकरोदिति भावः। कृताप्रतिज्ञा=संकल्पः येन तस्मिन्, दिशां=दिशानां विजयाय दिग्विजायायेत्यर्थः प्रयाणं=यात्रां समादिशति=आज्ञापयति सति, गतं=समाप्तम् आयुः=जीवनकालः येषां तेषां प्रतिसामन्तानां=प्रतिद्वन्द्विभूपानाम् उदवसितेषु=गृहेषु [ 'गृहं गेहोदवसितम्' इत्यमरः ] बहूनि रूपाणि येषां तानि बहुविधानीत्यर्थः उपलिङ्गानि=दुर्निमित्तानि, अशुभचिह्नानि वितेनिरे=विततानि अभूवन्। कालस्य=यमस्य दूतानां दृष्टयः=अवलोकनानि इवेत्युत्प्रेक्षायाम् अविप्रकृष्टा=अदूरस्थाः सन्निहिताः इत्यर्थः चटुलाः चञ्चलाः कृष्णशाराणां=विन्दुलाञ्छितमृगविशेषाणां श्रेणयः=राजयः इतस्ततः चेरुः=अभ्रमन् भीतानां मृगाणां वनेभ्यः नगराभिमुखमागमनं विपत्तेः सूचकम् विन्दुचिह्नितमृगाः यमदूतानां कृष्णदृष्टिपाताः इव लगन्तिस्मेति भावः। प्रचलिता=भूपान् विहाय प्रस्थिताः या लक्ष्मीः तेषां राजलक्ष्मीः तस्याः नूपुराणां=मञ्जीराणां प्रणादेन=रवेण झङ्कारेणेत्यर्थः प्रतिमा=उपमा येषां ते मधु-सरघाणां=मधुमक्षिकाणां संघातस्य=समूहस्य झंकाराः=अजिरे=प्राङ्गणे जह्लादिरे=जुगुञ्जुः सहसा मधुकोषमुत्सृज्य मधुमक्षिकाणाम् उड्डयनं भावि भीतेः सूचकम्। विवृतात्=व्यात्तात् विकृतात्=भीषणाच्च वदनस्य=मुखस्य विवरात्=रन्ध्रात् विसृतः=निसृतः वह्नेः=अग्नेः विसरः=समूहः यासां ताः अशिवाः=अमंगलाः शिवाः=शृगाल्यः शिवाशब्देन शृगाल्यः शृगालाश्चोभयमेव गृह्यते, वासरे=दिवसे अपि अशिवार्थम्=अमंगलाय विरसं=कर्णकटु यथा स्यात्तथा चिरं बहुकालं विरेसुः शब्दयाञ्चक्रिरे। शवानां=मृतदेहानां पिशिते=मांसे प्ररूढः=वृद्धिंगतः प्रसरः=( शरीरस्य ) विस्तारः येषां मांसभक्षणेन हृष्ट-पुष्ट-शरीराः इत्यर्थः इवेत्युत्प्रेक्षायां कपिपोतस्य=वानर-शावकस्य कपोलवत्=गण्डस्थलवत् कपिला=रक्तनीला पक्षतिः पक्षमूलं येषां ते रुधिरलिप्तमांसभक्षणेन तेषां पक्षतीनां श्यामरक्तत्वं स्वाभाविकमेव, काननकपोताः=गृध्राः पेतुः पतन्तिस्म। आमन्त्रयमाणाः=आपृच्छमानाः इवेत्युत्प्रेक्षायां हर्षवर्धनेन पराजेष्यमाणान् भूपालानिति शेषः उपवनानाम्=उद्यानानां तरवः=वृक्षाः समम्=युगपत् अकाले=असमये कुसुमानि=पुष्पाणि दधुः=धारयामासुः, अकालपुष्पोद्गमः दुर्निमित्तेषु गम्यते। सभानां=सभामण्डपानां शालभञ्जिकाः=पुत्तलिकाः तरलाभ्यां=चञ्चलाभ्यां करतलाभ्यां=हस्ततलाभ्यां ये प्रहाराः=आघाताः तैः प्रहतौ=ताडितौ पयोधरौ=कुचौ याभिः ताः प्रसभं

हिन्दी–देव हर्षवर्धन ने भी राज्य की सारी स्थिति (ठीक ठाक) की। तदनन्तर उस तरह कृतसंकल्प देव हर्षवर्धन के दिग्विजय हेतु अभियान का आदेश निकाल देने पर क्षीण आयु वाले शत्रु-राजाओं के घरों में तरह-तरह के अपशकुन फैलने लगे, जैसे—पास ही में यमराज के दूतों के दृष्टिपातों-जैसी चपल कृष्णसार मृगों की कतारें घूमने लगीं। चलती हुई लक्ष्मी के नूपुरों की झनझनाहट के सदृश मधु-मक्खियों के समूह की झंकार प्रांगण में गूँजने लगी। फाड़े हुए भीषण मुख-विवर से अग्नि-( ज्वालाओं का ) समूह निकलते हुए अमंगलकारी गीदड़-गीदड़ियाँ दिन में भी अमंगल हेतु कर्णकर्कश स्वर में चिल्लाने लगे। मुर्दों के मांस से—जैसे खूब हट्टे-कट्टे बने हुए, वानर के बच्चे के गल की तरह लाल-काले पंखों वाले गीध गिरने लगे। ( राजाओं को ) विदा देते हुए—जैसे उपवनों के वृक्ष एक साथ असमय में फूल देने लगे। सभा-मंडपों की पुतलियाँ चञ्चल करतलों से छातियाँ पीटती हुई ( जैसी ) जोर-जोर से रो पड़ीं सैनिक निकट भविष्य में बाल खींचे जाने के भय से भागे हुए मस्तकों वाले—जैसे अपने को दर्पणों के भीतर घर के रूप में देखने लगे। राजा-रानियों की चूड़ा-

१. 'दिलसति' २. 'प्रविष्टकाल' ३. 'जह्लादिरेचिरम्'
४. 'विरेसुरूपशिविरं' ५. 'प्ररूढप्रणयेव' शवार्थम्

कमललक्ष्माणः प्रादुरभवन्पादन्यासा राजमहिषीणाम् । चेटीचामराण्यकस्मादधावन्त पाणिपल्लवात् । प्रणयकलहेऽपि दत्त-पृष्ठाश्चिरमभवन्भटाः पराङ्मुखा मानिनीनाम् । करि[1]कपोलेषु व्यघटन्त मधुलिहां मधुमदिरापानगोष्ठ्यः । समाघ्रातयम-महिषगन्धा इव ताम्यन्तः स्तम्बकरिमपि हरयो हरितं नवयवसं न चेरुः । चलवलयावलीवाचालबालिकातालिकातोद्यलालिता अपि न ननृतुर्मन्दा मन्दिरमयूराः । निशि निशि रजनिकरहरिणनिहितनयन इवोन्मुखस्तारमुपतोरणमकारणमकाणीत्कौलेयक-गणः । गणयन्तीव गतायुषस्तर्जनतरलया तर्जन्या दिवसमाट वाटकेषु कोटवी । कुट्टिमेषु कुटिलहरिणखुरवेणीतरङ्गिण्यः

टीका = प्रसह्य बलवदिति यावत् रुरुदुः = रुदितवत्यः इवेति प्रतीमानोत्प्रेक्षा योधाः = भटाः आसन्नः सन्निहितः यः शिरः कर्तनार्थं कचग्रहः = केशग्रहः हर्षवर्धनसैनिककर्तृकः इत्यर्थः तस्मात् यत् भयं तेन उद्भ्रान्तं = पलायितम् उत्तमाङ्गं = शिरः यस्य तम् आत्मानं = स्वम् आदर्शानां = दर्पणानाम् उदरेषु = अभ्यन्तरेषु कबन्धम् = अपमूर्धकलेवरम् अशिरस्क-देहमिति यावत् ददृशुः = अपश्यन्, दर्पणे आत्मनः कबन्धरूपदर्शनम् अपशकुनम् । राजमहिषीणां = राज्ञां पट्टराज्ञीनां चूडामणिषु = शिरोरत्नेषु कस्यापि सम्राजः = हर्षवर्धनस्येति यावत् चक्रं च शंखश्च कमलञ्चेति लक्ष्माणि = चिह्नानि येषु तथाभूताः पादयोः = चरणयोः न्यासाः = स्थापनानि प्रादुः अभवन् = प्रकटिता बभूवुः अर्थात् हर्षवर्धनः तासां पतीनां शिरःसु चक्रादिचिह्नितौ स्वपादौ निधास्यति । अत्र पादन्यासः पश्चाद्भविष्यति तत्कार्यं चक्रादिप्रतिफलनं पूर्वमेव जातमिति कार्यकारणपौर्वापर्यविपर्ययरूपा अतिशयोक्तिः सा च कारणं पादन्यासः शत्रुशिरस्सु प्रतिफलनं च कार्यं तन्महिषीणां चूडामणिषु इति कार्यकारणयोः भिन्नदेशत्वात् असंगत्या संकीर्यते । चेटीनां = शत्रुराजानां दासीनां चामराणि = बालव्यजनानि पाणिपल्लवात् = करकिसलयात् अकस्मात् = सहसा अधावन्त = प्राद्रवन् प्रच्युतानीत्यर्थः भटाः = योधाः प्रणयस्य = प्रेम्णः कलहे अपि वीरैः सह युद्धस्य तु वार्तैव केत्यर्थापत्तिः दत्तं = प्रदर्शितमित्यर्थः पृष्ठं = पृष्ठभागं यैः ते चिरं = बहुकालं मानिनीनां = मानवतीनां निजप्रेयसीनां पराङ्मुखाः = विमुखाः अभवन् । करिणां = हस्तिनां कपोलेषु = गण्डस्थलेषु मधुलिहां = भ्रमराणां मधुजलम् एव मदिरा तस्याः पान-गोष्ठ्यः पानसभाः व्यघटन्त = व्ययुज्यन्त अर्थात् भयात् गजकपोलेषु मदजलप्रवाहः शुष्कः भ्रमराश्च प्रपलायिताः । हरयः = अश्वाः समाघ्रातः = घ्राणविषयीकृतः यमस्य = यमराजस्य महिषस्य = सैरिभस्य गन्धः यैस्ते इवेत्युत्प्रेक्षायाम् ताम्यन्तः = वैकल्यं प्राप्नुवन्तः स्तम्बं = गुच्छं करोतीति तयोक्तं बद्धस्तम्बं गुच्छरूपे स्थितमित्यर्थः अपि हरितं नवयवसं = नवघासं न चेरुः = चरितवन्तः भक्षितवन्तः इति यावत् । चला = चञ्चला वलयानां = कंकणानां या अवली = राजिः तया वाचालाः = मुखराः शब्दायमानाः इति यावत् या बालिकाः = कन्याः तासां तालिका = करताल एव आतोद्यं = वाद्यं तेन लालिताः = प्रेरिताः इत्यर्थः अपि मन्दिरस्य = भवनस्य मयूराः = नीलकण्ठाः मन्दाः = उद्विग्नाः विषण्णाः न ननृतुः = नृत्यं चक्रुः । निशिनिशि = प्रतिरात्रि रजनिकरः = चन्द्रः हरिणः = अङ्करूपः मृगः तस्मिन् निहिते = दत्ते इत्यर्थः नयने येषां ते इवेत्युत्प्रेक्षायाम् उन्मुखः = ऊर्ध्वीकृताननः कौलेयकानां = शुनाम् [ 'कौलेयकः सारमेयः कुक्कुरो मृगदंशकः' इत्यमरः ] गणः = दलम् उपतोरणं = तोरणस्य = बहिर्द्वारस्य समीपे इति ( अव्ययी० ) अकारणं = विनैव कारणं यथा स्यात्तथा तारम् = उच्चैः = अकाणीत् आचक्रन्द अर्थात् चन्द्रगतं मृगसदृशमङ्कं मृग इति मत्वा तज्जिघांसया शब्दयाञ्चक्रे, एतदपि अशुभ चिह्नम् । गतम् आयुः = जीवितमित्यर्थः येषां तान् भूपालानिति शेषः तर्जने = भर्त्सने चञ्चला तया

हिन्दी–मणियों में (हर्षवर्धन) के चक्रशंख-कमलों वाले पादन्यास (प्रतिबिम्ब रूप में) प्रकट होने लगे । सैनिक लोग प्रेम-कलह में भी पीठ किये हुए चिरकाल तक ( अपनी मानिनियों ) से विमुख हो गये । हाथियों के गण्डस्थलों पर भ्रमरों के मदजल के रूप में मदिरापान की गोष्ठियाँ भंग हो गयीं । यमराज की महिष की गन्ध सूँघे हुए जैसे घोड़े गुच्छों से भरी नयी हरी घास को भी नहीं चरते थे । हिलती हुई चूड़ियों की पंक्ति से मुखरित हुई बालिकाओं द्वारा वाद्य के रूप में हाथ के ताल से प्रेरित किये जाते हुए भी घर के अनमने मोर नाचते ही नहीं थे । रात-रात को चन्द्रमा के मृग की ओर दृष्टि लगाए हुए—जैसे, ऊपर मुँह किये कुत्तों का दल बाहरी दरवाजे के पास बिना कारण ही जोर-जोर से चिल्लाने लगता । ( पगली ) नंगी स्त्री फटकार में हिलती हुई अपनी तर्जनी-अंगुलि से मरने वालों की गिनती करती हुई–जैसी दिनभर हाट-बाटों में विचरती रहती, हरिणों की टेढ़ी खुर-पंक्तियों से तरंगित हुई–जैसी घास की

१. करिणी कपोलेषु....

शष्पराजयोऽजायन्त। जनितवेणीबन्धानि निरञ्जनरोचनारोचींषि चषकमधुनि मुखकमलप्रतिबिम्बान्यदृश्यन्त भटीनाम्। समासन्नात्मापहारचकिता इव चकम्पिरे भूमयः। वध्यालङ्कारक्तचन्दनरसच्छटा इवालक्ष्यन्त शूराणां पतिताः शरीरेषु विकसितबन्धूककुसुमशोणितशोचिषः शोणितवृष्टयः। पर्यग्नीकुर्वाणा इव विनश्वरीं श्रियमविरलस्फुरत्स्फुलिङ्गाङ्गारोद्गार-दग्धतारागणा गणशः पतन्तः प्रज्वलन्तो न व्यरंसिषुरुल्कादण्डाः। प्रथममेव प्रतीहारीवापहरन्ती प्रतिभवनं चामरातपत्र-

टीका-तर्जन्या=प्रदेशिन्या अङ्गुष्ठानन्तरवर्तिन्या अङ्गुल्या इत्यर्थः गणयन्ती=संकलयन्ती इवेत्युत्प्रेक्षायां कोटवी=नग्नस्त्री ['स्त्री नग्निका कोटवी स्यात्' इत्यमरः] विक्षिप्तेत्यर्थः वाटकेषु=वाटेषु मार्गेष्विति यावत् दिवसं=दिनपर्यन्तं (कालात्यन्तसंयोगे द्वि०) आट (√अट्+लिट्)=अभ्रमत्। कुट्टिमेषु=बद्धभूमिषु कुटिलाः=वक्राः याः हरिणानां=मृगाणां खुराणां=शफानां वेण्यः=वेणीसदृशराजयः ताभिः तरङ्गिण्यः=तरङ्गवत्यः तरङ्गायमाणाः इत्यर्थः शष्पाणां=बालघासानां राजयः=पंक्तयः अजायन्त=उदपद्यन्त, अर्थात् राज्ञां विनाशे तेषां गृहकुट्टिमानि वनानीव प्ररूढघासानि जातानि इवेति प्रतीयमानोत्प्रेक्षा। भटीनां=भटस्त्रीणां जनितः=कृतः वेणीबन्धः=एकवेणीरूपकेशः, केशबन्धः येषु तानि [यथा विधवासु पश्यामः] निरञ्जनानि=अञ्जनशून्यानि च तानि रोचनायाः=गोरोचनायाः रोचिः=कान्तिः इव रोचिः येषां तानि मुखकमलानां=कमलसदृशमुखानां प्रतिबिम्बानि=प्रतिच्छायाः चषकस्य=पानपात्रस्य मधुनि = मदिरायाम् अदृश्यन्त दृष्टिपथमगच्छन्, एकवेणीबन्धनम्, कज्जलाप्रयोगः दुःखे मुखस्य पीतवर्णता च वैधव्यचिह्नानि भवन्ति। समासन्नः=सन्निहितः यः आत्मनः=स्वस्य उपहारः=अपहरणं तस्मात् चकिताः = भीताः इवेत्युत्प्रेक्षायां भूमयः राज्ञां निजराज्यभूमयः चकम्पिरे=अकम्पन्त शूराणां=वीराणां शरीरेषु पतिताः विकसितं = प्रफुल्लितं यत् बन्धूकं = बन्धुजीवकं कुसुमं तद्वत् शोणितं रक्तवर्णं शोचिः = कान्तिः यासां तथाभूताः शोणितस्य = रुधिरस्य वृष्टयः = वर्षाः वध्यानां वधाय = वधभूमिं नीयमानानां व्यक्तीनामित्यर्थः अलंकाराः भूषारूपाः रक्तचन्दनस्य=रक्तवर्णचन्दनस्य रसस्य=द्रवस्य छटाः=कान्तयः इवेत्युत्प्रेक्षायाम् अलक्ष्यन्त=अदृश्यन्त, रुधिरवृष्टिः अशुभचिह्नमुच्यते, शरीरेषु तत्पतनात् राजानः वध्यस्थानं नीयमानाः रक्तचन्दन-चर्चिताः वध्याः पशव इव दृश्यन्ते स्मेति भावः वध्यो हि रक्तचन्दनेन रक्तपुष्पैश्च अलंकृतो भवति यथा प्राह मृच्छकटिके चारुदत्तः—सर्वगात्रेषु विन्यस्तै रक्तचन्दनहस्तकैः। पिष्टचूर्णावकीर्णश्च पुरुषोऽहं पशूकृतः (१०।५) परि=परिगतः परितः गतः अग्निः याम् इति पर्यग्निः अपरिगताग्निं परिगताग्निं कुर्वाणाः इति पर्यग्नीकुर्वाणा इवेत्युत्प्रेक्षायां विनश्वरीं विनाशशीलां श्रियं=लक्ष्मीम्, हर्षवर्धनस्य हस्ते गमनोन्मुखीं राजलक्ष्मीं परितः दीपिकामिव भ्रमयन्तः, यज्ञे बलीक्रियमाणं पशुं परितः यथा दीपिका क्रियते, तथैव हर्षवर्धनाय समर्प्यमाणां राजलक्ष्मीं परितः उल्कादण्डाः दीपिकायाः कार्यं कुर्वन्ति स्मेति भावः अविरलं=निरन्तरं यथा स्यात्तथा स्फुरन्तः=भासमानाः स्फुलिङ्गाः=अग्निकणाः येषां तथाभूताः ये अङ्गाराः तेषाम् उद्गारेण=निस्सारणेन दग्धः=प्लुष्टः ताराणां गणः=समूहः यैः ते गणशः=समूहरूपेण पतन्तः प्रज्वलन्तश्च उल्काः=दण्डाः इवेत्युपमिततत्पु० दण्डाकाराः ज्योतिष्पिण्डाः न व्यरंसिषुः=न विरता बभूवुः सततं आकाशात् पतन्ति स्मेति भावः। प्रतीहारी=दौवारिकः इवेत्युपमायां परुषा=कठोरा वात्या=वातानां समूहः इति (वात+य) ['स्याद् वात्या वातमण्डली' इत्यमरः] चामराणि च आतपत्राणि=छत्राणि च व्यजनानि=तालवृन्तानि

हिन्दी-पंक्तियाँ फर्शों पर उग जातीं। सैनिकों की महिलाओं के प्याले भी मदिरा में पड़े हुए मुख-कमलों के प्रतिबिम्ब एक-वेणीबन्धवाले अंजन-शून्य एवं गोरोचना की-सी (पीली) कान्तिवाले दिखाई पड़ते। निकट भविष्य में होने वाले अपने अपहरण से डरी हुई-जैसी भूमियाँ काँप उठतीं। शूर-वीरों के शरीरों पर पड़ीं, खिलते हुए गुड़हल के फूल की-सी लाल कान्ति वाली रुधिरवृष्टियाँ ऐसी लगती थीं मानो वध्यों पर अलंकार-रूप में लगाए लाल चन्दन लेप की छटायें हों। नष्ट होने वाली राजलक्ष्मी के चारों ओर अग्नि (आरती) घुमाते हुए—जैसे निरन्तर चमकते हुए स्फुलिंगों वाले अंगारे निकाल कर तारों को जलाये हुए, जलते हुए डंडे—जैसी उल्कायें ढेरों के रूप गिरने से नहीं रुकती थीं।

व्यजनानि परुषा बभ्राम वात्येति ।

इति श्रीबाणभट्टकृतौ हर्षचरिते राजप्रतिज्ञावर्णनं
नाम षष्ठ उच्छ्वासः ।

—:०:—

---

टीका-अपहरन्ती=प्रतिद्वन्द्विभूपेभ्यः आच्छिन्दन्ती भवने भवने इति प्रतिभवनं राज्ञां गृहे गृहे बभ्राम=अभ्रमत्। प्रतीहारी राज्ञः कृते छत्रचामरादीन् वहति । इति=उच्छ्वास-समाप्तौ ।

इति श्रीमोहनदेवपंत-विरचितायां हर्षचरित-च्छात्रतोषिण्यां षष्ठ उच्छ्वासः ।

हिन्दी-प्रतीहारी की तरह पहले ही चामरों, छत्रों और व्यजनों को ले जाती हुई तीव्र आंधी घर-घर घूमने लगी।

।। बाणभट्ट के हर्षचरित का राजप्रतिज्ञावर्णन नाम का छठा उच्छ्वास समाप्त ।।

---

१. कृते हर्षचरिते षष्ठ, इति श्रीमहाकविचक्रचूडामणिबाणभट्टविरचिते हर्षचरिते महाकाव्ये राजप्रतिष्ठानाम षष्ठ उच्छ्वासः सम्पूर्णः

## सप्तम उच्छ्वासः ।

अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥ १ ॥
धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्यम् ।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥ २ ॥

अथ व्यतीतेषु च केषुचिद्दिवसेषु मौहूर्तिकमण्डलेन शतशः सुगणिते सुप्रशस्तेऽह्नि दत्ते चतसृणामपि दिशां विजययोग्ये दण्डयात्रालग्ने सलिलमोक्षविशारदैः शारदैरिवाम्भोधरैः कालधौतैः शातकौम्भैश्च[1] कुम्भैः स्नात्वा विरचय्य परमया भक्त्या

---

टीका—अङ्गनवेदीति— अन्वयः सरलः। कृता=विहिता प्रतिज्ञा=दृढ़संकल्पः येन तथाभूतस्य वीरस्य=शूरस्य कृते वसुधा=पृथिवी अङ्गनस्य=प्राङ्गणस्य वेदी=परिष्कृता भूमिः [ 'वेदी परिष्कृता भूमिः' इत्यमरः ] अर्थात् वीराणां कृते विशालापि पृथिवी विचारितुम् सुगमा यथा गृहप्राङ्गणस्था वेदी; जलधिः=समुद्रः कुल्या=अल्पा कृत्रिमा सरित् [ 'कुल्याल्पा कृत्रिमा सरित्' इत्यमरः ] अर्थात् तस्य कृते सागरपारगमनं कुल्यापारगमनमिवास्ति, पातालं= रसातलं च स्थली=अकृत्रिम-भूमिः दुर्गमेऽपि पाताले स समतलस्थलवत् गन्तुं शक्नोतीत्यर्थः, सुमेरुः=मेरुपर्वतः वल्मीकः=श्वेतपिपीलिकाभिः उत्थापितो मृत्तिकाचयः, दुरारोहोऽपि पर्वतः वीरस्य कृते वल्मीक इवास्तीत्यर्थः अयं भावः हर्षवर्धनः शत्रूणां विनाशाय कृतसंकल्पोऽस्ति। आत्मानं गोपयितुं ते यत्र कुत्रापि किं न गच्छेयुः क्वापि तेषां रक्षा न संभाव्या अत्र रूपकालंकाराणां संसृष्टिः। आर्या वृत्तम्, तल्लक्षणं च पूर्वंदत्तमेव ॥ १ ॥

धृतेति०—बाहुभ्यां=भुजाभ्यां शालते=शोभते इति इति बाहुशाली तस्मिन् बाहुवीर्यवतीत्यर्थः पुरुषे धृतं धनुः चापः येन तस्मिन्, अत्र 'धनुषश्च' ( पा० ५।४।१३२ ) इत्यनेन धनुरन्तस्य बहुव्रीहेः अनङादेशे प्राप्ते धृतधन्वनि इत्येवं भवितुमुचितम्, किन्तु समासान्तविधेः अनित्यत्वात् धृतधनुषि इति जातम् यत् शैलाः=पर्वताः न नमन्ति=न निम्ना भवन्ति तत् आश्चर्यम्=विस्मयः, रिपुः संज्ञा=नाम येषां तेषु वराकेषु=दीनेषु काकेषु=वायसेषु ( विषयसप्तमी ) गणना एव का न कापीत्यर्थः वीराणां समक्षं काक-तुल्याः शत्रवः अतितुच्छाः इति भावः। अत्र रिपुषु काकत्वारोपे रूपकम् तच्च अर्थापत्त्या संसृज्यते। अत्रापि पूर्ववत् आर्या वृत्तम् ॥ २ ॥

व्यतीतेषु=व्रीतेषु केषुचिद्दिवसेषु "भवनान्निर्जगाम (हर्षः) इत्यस्ति वाक्यम्। मुहूर्तं=मुहूर्तबोधकं शास्त्रम्

**टिप्पणी** आख्यायिका की परिभाषा के अनुसार उच्छ्वास के ये प्रारम्भिक श्लोक भावी कथानक पर प्रकाश डाल रहे हैं। हर्षवर्धन रिपु-विनाश के लिए कृतसंकल्प है। वह अपने शत्रुओं को कहीं भी नहीं छोड़ेगा। क्या पर्वत, क्या समुद्र और क्या पाताल —कहीं भी वे भाग कर चले जायें, हर्षवर्धन की मार से नहीं बच सकेंगे। वीरों के आगे आत्मविनाश के भय से पर्वत नहीं झुकते—यही महान् आश्चर्य है, बेचारे कौवे-जैसे तुच्छ दीन-हीन शत्रुओं की तो बात ही क्या ?

**हिन्दी**—कृत-संकल्प वीर पुरुष के लिए पृथिवी चौक की वेदी, समुद्र छोटी सी नहर, पाताल स्थल और सुमेरु पर्वत दीमकों द्वारा बनाया हुआ मिट्टी का टीला है ॥ १ ॥

भुजशाली ( वीर ) के धनुष उठाते जो पर्वत नहीं झुक जाते, यही आश्चर्य की बात है, बेचारे शत्रुनामक कौओं की तो गिनती ही क्या ? ॥ २ ॥

इसके बाद कुछ दिन बीत जाने पर ज्योतिषी-गण द्वारा सैकड़ों बार अच्छी तरह गिने हुए प्रशस्त दिन पर दिए गए चारों दिशाओं के विजय के योग्य सेना यात्रा के लग्न में जल के मोक्ष ( बरसा देने ) से शुभ्र बने, कालधौत ( समयानुसार धुले ) मेघों की तरह जल के मोक्ष ( गिराने ) में पटु, कालधौत ( चाँदी के ) और सोने के कलशों से

---

१. 'शातकुम्भैश्च'

भगवतो नीललोहितस्यार्चामुदर्चिषं हुत्वा प्रदक्षिणावर्तशिखाकलापमाशुशुक्षणिं दत्त्वा द्विजेभ्यो रत्नवन्ति राजतानि जातरूपमयानि च सहस्रशस्तिलपात्राणि कनकपत्रलतालङ्कृतशफशृङ्गशिखरा गाश्चार्बुदशः समुपविश्य विततव्याघ्रचर्मणि भद्रासने विलिप्य प्रथमविलिप्तायुधो निजयशोधवलेनाचरणतश्चन्दनेन शरीरं परिधाय राजहंसमिथुनलक्ष्मणी सदृशे दुकूले परमेश्वरचिह्नभूतां शशिकलामिव कल्पयित्वा सितकुसुममुण्डमालिकां शिरसि नीत्वा कर्णाभरणमरकतमयूखमिव कर्णगोचरतां[1] गोरोचनाच्छुरितमभिनवं दूर्वापल्लवं विन्यस्य सह शासनवलयेन गमनमङ्गलप्रतिसरं प्रकोष्ठे परिपूजितप्रहृष्टपुरोहितकरप्रकीर्यमाण-

---

टीका–अधीयते विदुः वा इति (मुहूर्त+ठक्) मौहूर्तिकाः=ज्योतिषिणः तेषां मण्डलेन=गणेन शतशः=शतवारं सु=सुष्ठु गणिते=कृतसंख्याते सम्यग् विचारित इत्यर्थः सुप्रशस्ते=शुभतमे अहनि=दिने दत्ते=निर्दिष्टे चतसृणाम् अपि दि ाम् पूर्व-पश्चिमोत्तर-दक्षिणदिशानां विजयस्य योग्ये=उचिते दण्डः=सेना तस्य यात्रायाः=अभियानस्य लग्ने=राश्युदये ('राशीनामुदयो लग्नम्' इत्यमरः) नियत-समये इत्यर्थः सलिलस्य=जलस्य मोक्षेण=निपातेन वर्षतीं सति शेषः विशारदैः=विशदैः शुभ्रैरित्यर्थः शारदैः=शरत्कालीनैः अम्भोधरैः=मेघैः इवेत्युपमायां सलिलस्य मोक्षणे=पातने विशारदैः=पटुभिः पेशलैः इत्यर्थः कालेन=समयेन धौतैः=श्वेतैः वर्षागमनेन शरदि श्वेततां गतैरित्यर्थः अन्यत्र कलधौतस्य=रजतस्य ('कलधौतं रूप्य-हेम्नोः' इत्यमरः) इमे इति कालधौताः (अण्) रजतनिर्मिताः इत्यर्थः तैः शातकुम्भैः=शतकुम्भे गिरौ भवं शातकौम्भं=सुवर्णम् ('तपनीयं शातकौम्भम्' इत्यमरः) शातकौम्भस्य इमे इति शातकौम्भाः=सुवर्णघटिताः तैः कुम्भैः=कलशैः स्नात्वा स्वराज्याभिषेकसमये इति शेषः नीललोहितस्य ('नीलः कण्ठे लोहितश्च केशेऽतो नीललोहितः' इति पुराणम्' इति क्षीरस्वामी) शिवस्य ('धूर्जटिर्नीललोहितः' इत्यमरः) अर्चां=पूजां विरचय्य=कृत्वा उद्गतानि अर्चींषि=ज्वालाः यस्य तम्, प्रदक्षिणावर्तः=दक्षिणोन्मुखः शिखानां=ज्वालानां कलापः=समूहः यस्य तम् दक्षिणोन्मुखी ज्वाला शुभावहा, कालिदासोऽप्याह—'तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ। प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ' (रघु० ४।२५) आशुशुक्षणिम्=अग्निम् हुत्वा=तत्र हवनं कृत्वा, द्विजेभ्यः=ब्राह्मणेभ्यः रत्नवन्ति=रत्नपूर्णानि राजतानि=रजतमयानि जातरूपमयानि=सुवर्णमयानि ['स्वर्णं सुवर्णम् ……। चामीकरं जातरूपम्' इत्यमरः] तिलपात्राणि=तिलपूर्णानि पात्राणि (मध्यमपदलोपी स०) कनकस्य=सुवर्णस्य पत्राणि लताश्च ताभिः अलंकृतानि=भूषितानि शफा=खुराः शृङ्गयोः शिखराणि=अग्राणि च यासां ताः अर्बुदशः=कोटिशः ('अर्बुदं दशकोटयः) दत्त्वा=दाने वितीर्य, विततं=विस्तारितं व्याघ्रस्य शार्दूलस्य चर्म=त्वक् यस्मिन् तस्मिन् भद्रासने=राजसिंहासने ['नृपासनं तु यद्भद्रासनं सिंहासनं तु तत्' इत्यमरः] समुपविश्य=स्थित्वा, प्रथमं विलिप्तम् आयुधं=शस्त्रं येन स निजं=स्वकीयं यत् यशः तद्वत् धवलेन=श्वेतेन चन्दनेन आचरणतः चरणपर्यन्तं शरीरं विलिप्य=चर्चितं कृत्वा, राजहंसयोः मिथुनं=युगलं लक्ष्म=चिह्नं ययोः ते सदृशे=राजोचिते इत्यर्थः दुकूले=चीनांशुकवसनद्वयं परिधाय=धृत्वा, परमेश्वरस्य=महादेवस्य चिह्नभूतां=चिह्नरूपां शशिकलां=चन्द्रकलाम् इवेति श्लिष्टोपमायां परमेश्वरस्य=सम्राजः चिह्नभूतां सितकुसुमानां=श्वेतपुष्पाणां मुण्डमालिकां=शिरोमालां शिरसि कल्पयित्वा=कृत्वा धारयित्वेत्यर्थः शशिकलाऽपि सितकुसुमवत् श्वेता भवतीति ध्येयम्, कर्णाभरणभूतं यत् मरकतं=हरिद्वर्णो मणिविशेषः तस्य मयूखं=किरणम् इवेत्युपमायां गोरोचनया=गोशिरसि प्राप्तव्येन पीतवर्ण—रञ्जकद्रव्य-

हिन्दी–स्नान करके, बड़ी भक्ति के साथ शिव की अर्चना करके ऊपर लपटें छोड़ती हुई दक्षिणदेशोन्मुख ज्वालाओं वाली अग्नि में आहुतियाँ डाल के, ब्राह्मणों को रत्न, चाँदी और सुवर्ण वाले हजारों तिल-पात्र तथा सोने की बेल-पत्तियों से मढ़े खुरों एवं सींगों की नोकों वाली करोड़ों गाएँ दान में देकर, व्याघ्रचर्म-बिछे राजसिंहासन पर बैठकर अपने यश के समान श्वेत चन्दन को पहले शस्त्र पर लगा (फिर उससे) पावों तक (अपना) शरीर लिप्त करके, राजहंसों के जोड़े से चिह्नित, राजोचित दो रेशमी वस्त्र पहन कर, परमेश्वर (सार्वभौम) की चिह्नभूत श्वेत-पुष्पों की शिरोमाल शिर पर धारणकर कर्णभूषण के मरकत मणि की किरण के सदृश, गोरोचन लिपा नया दूर्वांकुर कान में रखकर राजमुद्रांकित कंकण के साथ-साथ यात्रा में मंगलकारक रक्षासूत्र मणिबन्ध (कलाई) पर धारण करके, पूजे

---

१. 'कर्णपूरगोचरताम्'

शान्तिसलिलसीकरनिकराभ्युक्षितशिरा संप्रेक्ष्य महार्हाणि वाहनानि बहुलरत्नालोकलिप्तककुम्भि च भूषणानि भूभुजां संविभज्य क्लिष्टकार्पटिककुलपुत्रलोकमोचितैः प्रसाददानैश्च विमुच्य बन्धनानि नियुज्य तत्कालस्मरणस्फुरणेन कथितात्मानमिव चाष्टादशद्वीपजेतव्याधिकारे दक्षिणं भुजस्तम्भमहमहमिकया सेवकैरिव सुनिमित्तैरपि समग्रैरग्रतो भवद्भिः प्रमुदितप्रजाजन्यमानजयशब्दकोलाहलो हिरण्यगर्भ इव ब्रह्माण्डात्कृतयुगकरणाय भवनान्निर्जगाम ।

टीका–विशेषेण छुरितं = लिप्तम् अभिनवं = नूतनं दूर्वायाः = मांगलिकतृणविशेषस्य पल्लवं = किसलयं कर्णगोचरतां = कर्णस्थानमित्यर्थः नीत्वा प्रापय्य कर्णे धृत्वेत्यर्थः शासनस्य = राजत्वमुद्रायाः वलयं = कंकणं राजत्वमुद्राचिह्नितमिति यावत् तेन सः गमने = यात्रायां मंगलं = मांगलिकं प्रतिसरं = रक्षार्थं करसूत्रम् [भवेत् प्रतिसरो ·· ··· । आरक्षे करसूत्रे च इति मेदिनी] प्रकोष्ठे = मणिबन्धे विन्यस्य = संस्थाप्य, परिपूजितः = अर्चितः प्रहृष्टः = प्रसन्नश्च यः पुरोहितः = पुरोधा. तस्य करेण = हस्तेन प्रकीर्यमाणः = प्रक्षिप्यमाणः प्रोक्ष्यमाण इति यावत् शान्ति-सलिलस्य = शान्तिजलस्य सीकराणां = कणानां यः निकरः = समूहः तेन अभ्युक्षितं = सिक्तं शिरः यस्य सः, विघ्नविपत्त्यादिनिराकरणाय ग्रहादीनां शान्तिः ( अनुष्ठानम् ) क्रियते, तत्र मन्त्रपूतं जलं शान्तिजलमुच्यते येन यजमानः शिरसि 'शान्तिरस्तु, पुष्टिरस्तु' इत्यादिमन्त्रैः सिच्यते, महान् अर्हः = मूल्यं येषां तानि महार्हाणि वाहनानि = अश्व-गजादीनि बहुलः = प्रभूतः यः रत्नानाम् आलोकः = कान्तिः तेन लिप्ताः = छुरिताः रञ्जिताः इति यावत् ककुभः = दिशाः यैः तानि भूषणानि = अलंकारान् भूभुजां = नृपाणां संविभज्य = विभागं कृत्वा नृपेभ्यः वितीर्येत्यर्थः 'क्लिष्टः ·······दानैश्च' एतस्य वाक्यांशस्य अर्थः संदिग्धः काणेमहोदयः तथा काँवलमहोदयः '०लोकम् उचितैः' इति पाठं परिवर्त्य एवं व्याचक्षाते—क्लिष्टः = क्लेशपतितः विपन्नः इत्यर्थः यः कार्पटिकलोकः = तीर्थयात्रिजनः अथ च क्लिष्टः यः कुलपुत्रलोकः = उच्चकुलोत्पन्नप्रजाजनः तम् प्रसाद-दानैः = अनुग्रहरूप—दक्षिणाभिः' किन्तु एतद्व्याख्या प्रकारेऽपि 'सन्तोष्य' इति क्त्वान्तक्रियाध्याहारः अपेक्ष्यते, बन्धनानि विमुच्य इति तु पृथक् वाक्यांशं मत्वा, बन्धनानि कारागारबद्धान् विमुच्य = बन्धनमुक्तान् कृत्वा इति तौ व्याचक्षाते, जीवानन्दस्तु सर्वमेकमेव वाक्यांशं मत्वा एवं व्याचष्टे—' क्लिष्टकार्पटिकाः = जीर्णमलिनवसनाः अतिदरिद्राः इत्यर्थः ये कुलपुत्रलोकाः = सत्कुलजातजनाः सत्पात्राणीत्यर्थः तेषु मोचितैः = विनियुक्तैः दारिद्र्यक्लेशविघटनपटीयोभिः इति भावः प्रसाददानैः = अनुग्रहविवरणैः बन्धनानि = दारिद्र्यनिगडसन्दानानि विमुच्य अपाकृत्येत्यर्थः' अस्माकं विचारे इयमपि कष्टकल्पनैव । वस्तुतस्तु मूलपाठः चिन्त्यः एव । तस्मिन् काले यत् स्मरणं = स्मृतौ आनयनम् तस्मिन् स्फुरणम् = उपस्थितिरित्यर्थः तेन कथितः = सूचितः इत्यर्थ आत्मा येन तम् सेवकमिति शेषः इवेति श्लिष्टोपमायां तत्काले स्मरणार्थं = स्मारयितुमित्यर्थः यत् स्फुरणं = स्पन्दनं तेन कथितः = सूचितः आत्मा = आत्मनः अष्टादशद्वीपविजयरूपकर्तव्यं येन तम् दक्षिणं = वामेतरम् भुजः स्तम्भः = स्थूणा इवेत्युपमिततत्पु० तम् अष्टादशद्वीपानां विजेतव्यस्य - विजयस्य ( भावे तव्यप्रत्ययः ) अधिकारे = पदे नियुज्य = संस्थाप्य पुरुषस्य दक्षिणभुजस्पन्दनं शुभलक्षणमुच्यते, अहमहमिकया = 'अहम् अग्रे' 'अहम् अग्रे' इत्यात्मकाहंकारेण [ 'अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकारः' इत्यमरः ] अग्रतो

**टिप्पणी**—हिरण्यगर्भ—मनुस्मृति के अनुसार स्वयम्भू ने सबसे प्रथम जल का सृजन किया और उसमें बीज डाल दिया । बीज एक अंडा बन गया जिसके भीतर हिरण्यगर्भ एक वर्ष तक रहा । अंडा फूट कर द्विधा विभक्त हो गया और उसमें से हिरण्यगर्भ निकला जिसने युगों तथा द्यो और भू की सृष्टि की ( मनु० १।९-९ )

**हिन्दी**-और प्रसन्न हुए पुरोहित के हाथ द्वारा शान्त्युदक के कणसमूह से सिर पर अभिषिक्त हो बहुमूल्य वाहन एवं रत्नों की अत्यधिक कान्ति से दिशाओं को लिप देने वाले भूषण राजाओं में बाँटकर, क्लेश भोग रहे तीर्थयात्रियों एवं उच्चकुलीन लोगों को अनुग्रह दानों से सन्तुष्ट करके, बन्धनगतों ( कैदियों ) को उन्मुक्त कर, तत्काल ( स्वामी द्वारा ) स्मरण करते ही स्फुरण ( उपस्थिति ) से अपनी सूचना देने वाले सेवक की तरह तत्काल स्मरणार्थ स्फुरण ( स्पन्दन ) से अपना बोध करा देने वाले दाहिने हाथ को अट्ठारह द्वीपों की विजय का अधिकार सौंप कर, 'पहले मैं' 'पहले मैं'—की होड़ लगाए सेवकों के सदृश आगे होते जा रहे शुभ शकुनों एवं प्रसन्न हुई प्रजा द्वारा किए जा रहे जयजयकार की ध्वनि के कोलाहल के बीच हर्षवर्धन कृतयुग ( सत्ययुग ) के सृजन हेतु ब्रह्माण्ड से निकले हुए ब्रह्मा की तरह कृतयुग ( न्यायराज्य ) के स्थापन हेतु राज्यगृह से निकल पड़ा ।

नातिदूरे च नगरादुपसरस्वति निर्मिते महति तृणमये, समुत्तम्भिततुङ्गतोरणे, वेदीविनिहितपल्लवललामहेमकलशे, बद्ध-वनमालादाम्नि[1], धवलध्वजमालिनि, भ्रमच्छुक्लवाससि, पठद्द्विजन्मनि, मन्दिरे प्रस्थानमकरोत्। तत्रस्थस्य चास्य ग्रामाक्ष-पटलिकः सकलकरणिपरिकरः 'करोतु देवो दिवसग्रहणमद्यैवावन्ध्यशासनः शासनानाम्' इत्यभिधाय वृषाङ्कामभिनवघटितां हाटकमयीं मुद्रामुपनिन्ये। जग्राह च तां राजा। समुपस्थापिते च प्रथमत एव मृत्पिण्डे परिभ्रश्य करकमलादधोमुखी महीतले पपात मुद्रा। मन्दाश्यानपङ्कपटले मृदुमृदि सरस्वतीतीरे स्फुटं व्यराजन्त राजयो वर्णानाम्। अमङ्गलाशङ्किनि च विषीदति

टीका–भवद्भिः =अग्रे अग्रे गच्छद्भिरित्यर्थः सेवकैः =भृत्यैः इवेत्युपमायां सुनिमित्तैः =सुलक्षणैः सहेति शेषः प्रमुदिताः = प्रहृष्टाः याः प्रजाः ताभिः जन्यमानः =क्रियमाणः जयशब्दस्य ='जय जय देव' इत्यात्मकध्वनेः कोलाहलः कलकलः यस्य तथाभूतः हर्षवर्धनः कृतयुगस्य =सत्ययुगस्य करणाय =निर्माणाय ब्रह्माण्डात् निर्गतः हिरण्यगर्भः =ब्रह्मा इवेत्युप-मायां कृतयुगस्य करणाय = दुष्टान् दुष्टान् राज्ञः विनाश्य लोके धार्मिकभावप्रवर्तनाय भवनात् = राजगृहात् निर्जगाम = निर्गतः।

नगरात् च न अति दूरे=प्रायः सन्निहिते इत्यर्थः सरस्वत्या नद्याः समीपे इत्युपसरस्वति ( अव्ययीभा० ) तृणमये= तृणरूपे समुत्तम्भितं =समुत्थापितं निर्मितमित्यर्थः तुङ्गम् =उन्नतं तोरणं बहिर्द्वारं यस्मिन् [ 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः ] वेद्यां =वेदिकायां विनिहितः =स्थापितः पल्लव-ललामः =पल्लवः =किसलयः ललामं =चिह्नं भूषणं वा यस्य सः, हेमकलशः =सुवर्णकुम्भः यस्मिन् ( ललामं लाञ्छने ध्वजे। शृंगे प्रधाने भूषायाम्' इत्यमरः ) तस्मिन्, बद्धाः = पिनद्धाः वनमालानां =पुष्पपत्रप्रतियोजितानां स्रजाम् ( शङ्करः ) दाम सूत्रं यस्मिन् तस्मिन्, धवलध्वजानां = श्वेतपता-कानां माला =राजिः यस्मिन् तस्मिन् भ्रमन्तः =इतस्ततः विचरन्तः शुक्लानि =श्वेतानि वासांसि=वस्त्राणि येषां तथाभूताः परिजनाः =भृत्याः यस्मिन् पठन्तः =पाठं कुर्वन्तः द्विजाः =ब्राह्मणाः यस्मिन् तस्मिन्। प्रस्थानम् अकरोत्=प्रस्थितोऽभवत्, एतस्मात् एव स्थानात् अभियानं प्रारप्स्यमाणमासीत्। तत्र तिष्ठतीति तत्रस्थः तस्य अस्य हर्षवर्धनस्य ग्रामस्य अक्षपटलिकः =अक्षाणां =भूतानां पटले =समूहे नियुक्तोऽक्षपटलिकः इति शङ्करः मुख्यः इत्यर्थः, सकलाः करणिनः =करणं =लेख्यं एषामस्तीति तयोक्ताः करणिकाः लेखकाः कायस्थाः इति यावत् परिकरः =अनुयायि-वर्गः यस्य सः—न वन्ध्यं =विफलं शासनं =आज्ञा यस्य तथाभूतः देवः =महाराजः अद्य एव शासनानाम् =आज्ञानाम् दिवसस्य ग्रहण करोतु अर्थात् अभिनवराज्यारूढो देवः अद्य यावत् राजकीयान् आदेशान् न दत्तवान्, अतः अद्यतन-दिवसात् एव आरभ्य आदेशाः दीयन्ताम् इति अभिधाय =कथयित्वा वृषः =वृषभः अङ्कः =चिह्नं यस्याः ताम् अभिनवं =सद्यः यथा स्यात्तथा घटितां =निर्मितां हाटकमयीं =सुवर्णमयीं मुद्रां =मुद्रयते अङ्क्यते राजकीयाज्ञापत्रम् अनया इतिमुद्रा =प्रत्ययकारिणीति त्रिकाण्डशेषः 'मोहर' इति भाषायां प्रसिद्धा ताम् उपनिन्ये = उपहृतवान्। जग्राह = गृहीतवान्। प्रथमतः =पूर्वमेव परीक्षार्थम् मृत्पिण्डे =मृत्तिकाखण्डे समुपस्थापिते=आनीते अर्थात् मुद्राक्षराणि अस्मिन् मृत्पिण्डे कथम् अङ्क्यन्ते - इति परीक्षितुं यदा जनाः मृत्पिण्डं आनीतवन्तः तदा सा करकमलात् =राज्ञः हस्तपल्लवात् परिभ्रश्य पतित्वा अधोमुखी =निम्नमुखी महीतले पपात =पतिता। मन्दम्=ईषत् यथा स्यात्तथा अश्यानं = शुष्कं पंकपटलं=

हिन्दी–और नगर से थोड़ी ही दूर सरस्वती नदी के समीप निर्मित एक विशाल भवन को वह चल पड़ा जो घास फूस का बना हुआ था, जहाँ एक ऊँचा तोरण खड़ा किया गया था, वेदी पर पल्लवों से विभूषित एक सुवर्ण-कलश रखा हुआ था, वनमालाओं की डोर बँधी हुई थी, श्वेत ध्वजाओं की पंक्ति ( लहरा रही थी ) श्वेत वस्त्र पहने हुए नौकर-चाकर घूम रहे थे और ब्राह्मणलोग ( मंगल ) पाठ कर रहे थे। वहाँ बैठे हुए हर्षवर्धन को ( अपने ) सभी लेखकों को साथ लिए हुए ग्राम के पटेल ( पटवारी ) ने—अप्रतिहत—शासन वाले देव आज के दिन से ही (राजकीय) आदेश ( देने का कार्य-भार ) ग्रहण करें' यह कहकर बैल के चिह्न वाली, नयी-नयी बनी सोने की मोहर अर्पण कर दी। और राजा ने वह ग्रहण कर ली, पहले-पहल ही ( परखने हेतु ) एक मिट्टी की डली उपस्थित किये जाने पर राजा के करकमल से छूट कर मोहर भूतल पर औंधी गिर पड़ी। कुछ सूखे पंक-समूह और कोमल मिट्टीवाले सरस्वती नदी के तीर पर अक्षरों की पंक्तियाँ स्पष्ट चमकने लगी। अपशकुन की आशंका करने वाले भृत्यजन के खिन्न होने लगने पर

१. 'धाम्नि'

परिजने नरपतिरकरोन्मनस्येतत्—'अतत्त्व[1]दर्शिन्यो हि भवन्त्यविदग्धानां धियः। तथाहि एकशासनमुद्राङ्का भूर्भवतो भविष्यतीति निवेदितमपि निमित्तेनान्यथा गृह्णन्ति ग्राम्याः।' इत्यभिनन्द्य मनसा महानिमित्तं तत्सीरसहस्रसंमितसीम्नां ग्रामाणां शतमदाद्द्विजेभ्यः। निनाय च तत्र तं दिवसम्। प्रतिपन्नायां शर्वर्यां संमानितसर्वराजलोकः सुष्वाप।

अथ गलति तृतीये यामे सुप्तसमस्तसत्त्वनिःशब्दे दिक्कुञ्जरजृम्भमाणगम्भीरध्वनिरताडयत प्रयाणपटहः। अप्रतः स्थित्वा च मुहूर्तमिव पुनः प्रयाणक्रोशसंख्यापकाः स्पष्टमष्टावदीयन्त प्रहाराः पटहे पटीयांसः।

ततो रटत्पटहे, नन्दन्नान्दीके, गुञ्जत्कुञ्जे, कूजत्काहले, शब्दायमानशङ्खे, क्रमोपचीयमानकटककलकले, परिजनोत्थापन-

---

टीका—कर्दमसमूहः यस्मिन्, मृद्वी=कोमला=कोमला मृत्=मृत्तिका यस्मिन् तस्मिन् सरस्वत्याः नद्याः तीरे वर्णानाम्=मुद्रायाम् उत्कीर्णानां राज्ञः नामाक्षराणां राजयः=पंक्तयः स्फुटं=व्यक्तं यथा स्यात्तथा व्यराजन्त=अभासन्त। अमंगलम्=मुद्रापातने अपशकुनम् आशंकते इति तथोक्ते विषीदति=खिद्यमाने च परिजने=भृत्यवर्गे नरपतिः=भूपालः हर्षवर्धनः मनसि एतत् अकरोत्=अचिन्तयदित्यर्थः—'तत्त्वं=यथार्थं न पश्यन्तीति तथोक्ताः भवन्ति=जायन्ते अविदग्धानाम्=अनिपुणानाम् अज्ञानामित्यर्थः धियः=बुद्धयः। तथाहि=उदाहरणार्थम् एकं=केवलं यत् शासनम्=अधिकारः तस्य मुद्रा अंकः=चिह्नं यस्याः सा भूः=पृथिवी भवतः=तव भविष्यतीति निमित्तेन=शुभलक्षणेन निवेदितं=विज्ञापितम् अपि ग्राम्याः ग्रामीणाः अन्यथा=प्रकारान्तरेण अपशकुनरूपेणेत्यर्थः गृह्णन्ति=अवगच्छन्ति' इति तत् महानिमित्तं शुभशकुनम् मनसा अभिनन्द्य=प्रशस्य सीराणां=हलानाम् ('लाङ्गलं हलम्। गोदारणं च सीरोऽथ' इत्यमरः) यत् सहस्रं=सहस्रात्मकसंख्या तेन समिता=परिमिता सीमा=प्रान्तभागः येषां तेषां ग्रामाणां शतम् शतसंख्यकग्रामान् इत्यर्थः अर्थात् सहस्रहलैः कृष्यते स्म, द्विजेभ्यः=ब्राह्मणेभ्यः अदात्=दत्तवान्। तं दिवसं च तत्र तस्मिन्नेव स्थाने निनाय=यापितवान्। शर्वर्यां=रात्र्यां प्रतिपन्नायाम्=आगतायाम् संमानितः=आदृतः सर्वः राजलोकः=नृपजनः येन स सुष्वाप=शयितवान्।

गलति=स्रवति समाप्ते इत्यर्थः पुरा जलघटिकया समयमानं क्रियते स्म अत एव 'गलति' शब्द प्रयोगः सुप्तानि=शयितानि समस्तानि सत्त्वानि=प्राणिनः यस्मिन् स चासौ निःशब्दः=शब्दरहितश्च तस्मिन् तृतीये यामे=प्रहरे दिक्कुञ्जरस्य=दिग्गजस्य इव जृम्भमाणः=वर्धमानः गम्भीरः=घनः ध्वनिः=शब्दः यस्य तथाभूतः प्रयाणस्य=अभियानस्य पटहः=दुन्दुभिः अताडयत=आहन्यत। मुहूर्तमिव=किञ्चित्कालं प्रयाणस्य तद्दिवसीययात्रायाः इत्यर्थः क्रोशानां=योजनस्य चतुर्थभागानां संख्यापकाः=संख्याबोधका अष्टौ पटीयांसः=तीव्रतराः प्रहाराः=आघाताः पटहे स्पष्टं=सुव्यक्तं यथा स्यात्तथा आदीयन्त अक्रियन्तेत्यर्थः अर्थात् तद्दिने अष्टक्रोशान् चलितव्यं सेनाभिः।

ततः·····'प्रयाणसमये'·······राजभिः आपुपूरे राजद्वारम् इत्यस्ति मुख्यवाक्यम्। रटन्तः=शब्दायमानाः पटहाः यस्मिन् एतत् अन्यानि सप्त्यन्तानि च 'प्रयाणसमये' इत्यस्य विशेषणानि, नन्दन्ती=प्रहृष्यन्ती अथवा अन्तर्भावितणिचि आनन्दयन्ती नान्दी='मङ्गलपटहः' इति शङ्करः अथवा द्विजादिकृतमंगलस्तुतिः यत्र तस्मिन्, गुञ्जन्तः=प्रतिध्वनन्तः

हिन्दी—राजा के मन में (विचार) हुआ—'अज्ञानियों की बुद्धि यथार्थ बात को नहीं देख पाती, जैसे—ये गवार लोग निमित्त द्वारा यह बता दिए जाने पर भी कि केवल एकमात्र आपके शासन की मुद्रा से अंकित यह पृथिवी आप की होगी' और ही तरह (अपशकुन-रूप में) समझ रहे हैं। इस प्रकार मन से उस महान् शुभ शकुन की प्रशंसा करके एक हजार हलों (की जोत) की सीमा वाले एक सौ गाँव उसने ब्राह्मणों को दान दे दिए। और वह दिन वहीं काटा। रात होने पर सभी राजा लोगों का आदर-संमान किये हुए वह सो गया।

इसके बाद सभी प्राणियों के सोये पड़े रहने से सन्नाटा भरा (रात का) तीसरा पहर बीत जाने पर दिग्गज की सी बढ़ती हुई गंभीर ध्वनि वाला कूच का नगाड़ा बजा दिया गया। और आगे कुछ देर ठहर कर फिर यात्रा के कोसों की संख्या बताने वाली जोर की आठ स्पष्ट चोटें पटह पर मार दी गईं।

तदनन्तर कूच के समय—जिसमें नगाड़े बज रहे थे, मंगल गान आनन्द दे रहा था, लता-कुञ्ज गूंज रहे थे, ढोल शब्द कर रहे थे, शंख बज रहे थे, धीरे-धीरे शिविर का कोलाहल बढ़ता जा रहा था, कर्मचारी अपने नौकर-

---

१. 'तत्त्व'—

व्यापृतव्यवहारिणि, द्रुतद्रुघनघातघटचमानकोणिकाकीलकोलाहलकलितककुभि, बलाधिकृतबध्यमानपाटीपतिपेटके, जनज्वलितोल्कासहस्रालोकलुप्यमानत्रियामातमसि, यामचेटीचरणचलनोत्थाप्यमानकामिमिथुने, कटुक[1]कटुनिर्देशनश्यन्निद्रोन्मिषन्निषादिनि, प्रवुद्धहास्तिकशून्यीक्रियमाणशय्यागृहे, सुप्तोत्थिताश्वीयविधूयमानसटे, रटत्कटकमुखरखनित्रखन्यमानक्षोणीपाशे, समुत्कील्यमानकीलशिञ्जानहिञ्जीरे, अप[2]नीयमाननिगडतालककलरवोत्तालतुरङ्गतरङ्ग्यमाणखुरपुटे, लेशिकमुच्यमानमदाय-न्दिदन्तिसन्दानशृङ्खलाखनखननिनादनिर्भरभरितदशदिशि, घासपूलक[3]प्रहारप्रमृष्टपांसुलकरिपृष्ठप्रसार्यमाणप्रस्फोटित[4]प्रमृष्टचर्मणि, गृहचिन्तकचेटकसंवेष्ट्यमानपटकुटीकाण्डपटमण्डपपरिवस्त्रावितानके, कीलककलापापूर्यमाणचिपिटचर्मपुटे, सम्भाण्डाप-

टीका–कुञ्जाः=लतागृहाणि यत्र, अत्र कुञ्जाः अप्रसक्ताः एव अतः 'गुञ्जद्गुञ्जे' इति पाठः साधीयान् गुञ्जन्त्यः गुञ्जाः 'गुञ्जासञ्ज्ञः शंखभेदो य पृष्ठे जतु परिकल्पितं भवति, 'सन्ना' इति यस्य प्रसिद्धिः' इति शङ्करः तूर्यविशेषः इत्यर्थः यत्र कूजन्ती=शब्दं कुर्वंती काहला=विशाल-सैनिक-डिंडिमः एव शब्दायमानाः=आपूर्यमाणाः इत्यर्थः शंखाः यत्र क्रम०–उपचीयमानः=वृद्धिं गच्छन् कटकस्य=शिविरस्य कलकलः=कोलाहलः यत्र परिजन०—परिजनस्य=भृत्यवर्गस्य उत्थापने प्रबोधने व्यापृताः=व्यग्राः व्यवहारिणः=कर्मचारिणः यत्र, 'द्रुत०'—द्रुतः=सत्वरः द्रुघनेन=द्रुघणेन मुद्गरेणेत्यर्थः [ 'द्रुघणो मुद्गरघनौ' इत्यमरः ] यः आघातः=ताडनम् तेन घटचमानः सम्मेल्यमानः यः कोणिकायाः=भेर्याः कीलः=दण्डः तस्य कोलाहलेन कलिताः=पूरिताः इत्यर्थः ककुभः=दिशः यस्मिन् बला०—बले=सेनायाम् अधिकृतैः=सेनाधिकारिभिः बध्यमानः=पंक्तौ एकत्र क्रियमाणः इत्यर्थः पाटीपतीनां = 'पाटी बहुपरिवारपुरुषगृहीतो निवासभूभागः' इति शंकरः सैन्यवासः इत्यर्थः तेषां पतीनाम् = अध्यक्षाणां सैन्यवासपर्यवेक्षकाणामिति यावत् पेटकः=समूहः यस्मिन्, जन०—जनैः=लोकैः ज्वलितम् प्रज्वालितम् = यत् उल्कानां=दीपिकानां सहस्रं तस्य आलोकेन=प्रकाशेन लुप्यमानं विनश्यत् त्रियामायाः=रात्रेः तमः=अन्धकारः यस्मिन्, याम०—यामचेटया=यामकिन्या प्रहरजागरणनियुक्तया चेटया प्रहरिणी–दास्या इत्यर्थः चरणाभ्यां चलनेन=विचरणेन उत्थाप्यमानं=प्रबोध्यमानं कामिनोः=कामी च कामिनी च तयोः ( एकशेष० ) मिथुनं=युगलं यस्मिन्, कटु० - कटुकानां='हस्तिपकयोक्त्राणां' इति शङ्करः हस्तिपकाधिकृतानामिति यावत् यः कटुः=रूक्षः निर्देशः=आज्ञा तेन नश्यन्ती अपगच्छन्ती या निद्रा तस्या (पं०) उन्मिषन्तः=नेत्रोन्मीलनं कुर्वन्तः प्रबुध्यमानाः इत्यर्थः निषादिनः=हस्त्यारोहा। यस्मिन् [ 'आधोरणा हस्तिपका हस्त्यारोहा निषादिनः' इत्यमरः ] तेन शून्यीक्रियमाणं=रिक्तीक्रियमाणं शय्यागृहं=शयनगृहं यस्मिन्, सुप्तो० —आदौ सुप्तं पश्चात् उत्थितम् यत् अश्वीयं=अश्ववृन्दम् ( 'वृन्दे त्वश्वीयमाश्ववत्' इत्यमरः ) तेन विधूयमानाः=प्रकम्प्यमानाः सटाः=जटाः यस्मिन्, रटत०—रटत्=शब्दायमानं यत् कटकं=शिविरं तस्मिन् मुखरैः=शब्दं कुर्वद्भिः खनित्रैः=अवदारणैः=खननसाधनैः इति यावत् खन्यमानाः=विदार्यमाणाः क्षोणीपाशाः=भूमिगतरज्जवः यस्मिन्, समुत्०—समुत्कील्यमानाः उत्खन्यमानाः ये कीलाः गजबन्धनार्था शंकवः तैः शिञ्जानाः=झणत्कुर्वन्तः हिञ्जीराः=लौहशृङ्खलाः यस्मिन्, अपनी० —अपनीयमानं=निस्सार्यमाणं यत् निगडार्थं =अश्वानां बन्धनार्थं तालकं=पादलौहबन्धनविशेषः तस्य

हिन्दी–चाकरों को जगाने में व्यस्त हो रहे थे, ( घड़ियाल पर ) जल्दी-जल्दी लकड़ी के हथौड़े की चोटों के साथ मिलता जा रहा ढोल के डंडे का कोलाहल दिशाओं में छाया हुआ था, सेना के अधिकारियों द्वारा सैन्यावासों ( वारिकों ) के अध्यक्षों को पंक्तिवद्ध किया जा रहा था, लोगों द्वारा जलाई हजारों मशालों के प्रकाश से रात का अन्धकार मिट रहा था, पहरेदार दासी के चरणों के चलने ( की आहट ) से कामियों के जोड़े जगाए जा रहे थे, हाथीवानों के सरदारों की कठोर आज्ञा से टूटती हुई नींद से हाथीवान जाग रहे थे, जागे हुए हस्ति-दल से शय्या-गृह खाली किये जा रहे थे, सोकर उठे अश्व-समूह द्वारा अयाल हिलाये जा रहे थे, कोलाहल भरे शिविर में ठकठकाते कुदालों द्वारा भूमि में गाड़ी रस्सियाँ खोदी जा रही थीं, उखाड़ी जा रही कीलों से ( हाथी बाँधने की ) लोह-शृङ्खलायें झणझणा रही थीं, हटाये जा रहे पैर के लोह-कड़ों की झनझनाहट से विदके हुए घोड़ों द्वारा अपने खुर-पुट तरंग-सदृश टेढ़े-मेढ़े किये जा रहे थे, महावतों द्वारा खोले जा रहे मद-स्राही हाथियों की बन्धन शृङ्खलाओं के खण-खण-शब्द से दशों दिशायें खूब भर गई थीं, घास की पूली मार कर साफ की हुई हाथियों की धूल भरी पीठों पर कमाये हुए चमड़े की खालें खोल पर बिछाई

१. 'कटुककटुक–' २. 'पनीयमान' ३. 'पुलिक' ४. 'प्रस्फोटितचर्मणि'

मानभाण्डागारिणि, भाण्डागारवहनवाह्यमानबहुनालीवाहिके, निषादिनिश्चलनेकानीक[1]पारोप्यमाणकोशकलशपीडापीडसङ्कटायमानसामन्तौकसि, दूरगतदक्षदासेरकक्षिप्रप्रक्षिप्यमाणोपकरणसम्भारध्रियमाणदुष्टदन्तिनि, तिर्यगानमन्नाघ[2]निककरकृच्छ्रकृष्टलम्बमानपरतन्त्रतुन्दिलघुन्दीजनजनितजनहासे, पीडयमानशारशारिवरत्राणुणप्राहितगात्रविहारवृंहद्बहु हदुम्मदकरिणि, करिघटाघटमानघण्टाटांकारक्रियमाणकर्णज्वरे, पृष्ठप्रतिष्ठाप्यमानकष्ठालककर्दर्थितकूजत्करभे, अभिजातराजपुत्रप्रेष्यमाणकुप्र-

---

टीका–कलरवेण = झणत्कारेण उत्तालाः = चकिताः अथवा दुर्दान्ताः ये तुरङ्गाः = अश्वाः तैः तरङ्गयमाणाः = तरंगवत् वक्रीक्रियमाणाः खुरपुटाः = पुटाकारशफाः यस्मिन् लेशिकः० – लेशिकैः = हस्त्यारोहैः ['हस्तिभ्यः घासदायकैः' इति शङ्करः] मुच्यमानाः = बन्धनात् उन्मुक्तीक्रियमाणाः ये मदस्यन्दिनः = मदजलवाहकाः दन्तिनः = हस्तिनः तेषां सन्दानस्य = बन्धनस्य शृङ्खलानां = निगडानां खनखननिनादेन = खणत्कारेण निर्भरं = पूर्णतया यथा स्यात्तथा भरिताः = पूरिताः दश दिशः यस्मिन्, घास० — घासस्य पूलकस्य = पुल्याः प्रहारेण ताडनेन तद्-द्वारा मार्जनेनेत्यर्थः प्रमृष्टं = शोधितं पांसुलं = धूलियुक्तं यत् परिपृष्ठं = हस्तिपृष्ठभागः तस्मिन् प्रसार्यमाणं = बिस्तार्यमाणं प्रस्फोटितं = विपूरितं विस्फारितमिति यावत् प्रमृष्टं = शोधितं परिष्कृतमित्यर्थः चर्म = त्वक् यस्मिन्, गृहः० — गृहाणां = सैनिकवासपटगृहाणामित्यर्थः चिन्तकाः = अवेक्षकाः ये चेटकाः = भृत्याः तैः संवेष्टयमानानि = आकुञ्च्यमानानि संपिडयमानानि संपुटीक्रियमाणानीति यावत् पटकुट्यः = लघुपटवेश्मानि च काण्डपटमण्डपाः = काण्डे = काष्ठादिनिर्मितस्तम्भे स्थितस्य पटस्य मण्डपाः बृहन्ति पटवेश्मानीत्यर्थः च परिवस्त्रा = तिरस्करिणी च वितानकानि = उल्लोचाः च यस्मिन्, कील० — कीलकानां = शंकूनां कलापेन = समूहेन आपूर्यमाणं = ध्रियमाणं चिपिटं = ह्रस्वं चर्मपुटं = चर्मप्रसेकः चर्ममभ्त्रिकेति यावत् यस्मिन्, सम्भाण्डा० — सम्भाण्डायमानाः = भाण्डानि समाचिन्वन्तः ('भाण्डात्समाचयने वा' इति णिच्) भाण्डागारिणः = बण्डारिणः यस्मिन्, भाण्डा० — भाण्डागारस्य = भाण्डारस्य भाण्डारवस्तुनिचयस्येत्यर्थः वहने = नयने स्थानान्तरप्रापणे इति यावत् वाह्यमानाः = प्राप्यमाणाः नियुज्यमानाः इत्यर्थः बहनाः नालीवाहिकाः 'करिणां घासग्रहणनियुक्ताः हस्तिपकाः मेण्ठाख्याः' इति शङ्करः यस्मिन्, निषादि० — निषादिभिः = हस्तिपकैः निश्चलेषु = स्थिरेषु कृतेषु अनेकेषु अनीकपेषु = अनीकं = सेनां पाति = रक्षतीति अनीकपाः = हस्तिनः तेषु, अत्र 'अनेकप' पाठः साधीयान् अनेकाभ्यां शुण्डेन मुखेन चेति द्वाभ्यां पिबन्तीति द्विपाः इति यावत् अत्रार्थः सुगमः पूर्वत्र कष्टकल्पना, तेषु आरोप्यमाणाः = स्थाप्यमानाः कोशाः = चषकाः (पानपात्राणि) कलशाः = जलपात्राणि च तेषां पीडानां = पेटकानां मञ्जूषाणामिति यावत् ['पिटकः पेटकः पीडा' इत्यमरः] ये आपीडाः = समूहाः तैः संकटायमानानि = संकीर्यमाणानि पूर्णानीत्यर्थः सामन्तानां = भूपानाम् ओकांसि = गृहाणि यस्मिन्, दूर० — दूरगताः = दुष्टेभ्यः हस्तिभ्यः किमपि दूरे स्थिताः इत्यर्थः दक्षाः = चतुराः ये दासेराः एव दासेरकाः = दासीपुत्राः भृत्याः इति यावत् तैः क्षिप्रं = त्वरितं यथा स्यात्तथा प्रक्षिप्यमाणाः = गजपृष्ठेषु स्थापनार्थं दीयमानं इत्यर्थः यः उपकरण-सम्भारः = सामग्रीणां समूहः तेन ध्रियमाणाः = आपूर्यमाणाः दुष्टाः = दुर्मत्ताः विकटाः इति यावत् दन्तिनः = हस्तिनः यस्मिन्, तिर्यग्० — तिर्यक् = वक्रं यथा स्यात्तथा आनमन्तः = निम्नीभवन्तः ये नाधनिकाः =

हिन्दी–जा रही थीं, सैनिक आवासों की देखभाल करनेवाले भृत्यों द्वारा छोटे-छोटे तम्बू, खम्भों के सहारे खड़ी बड़ी-बड़ी छोलदारियाँ, कानात और शामियाने लपेटे जा रहे थे, ढेरों कीलें चमड़े के चपटे थैले में भरी जा रही थीं, भंडारी भाण्डे-बर्तनों को इकट्ठा कर रहे थे, भंडार की वस्तुओं के ले जाने में हाथियों के बहुत से घसियारे लगाए जा रहे थे, हाथीवानों द्वारा निश्चल खड़े किये गए अनेक हाथियों पर लादे जा रहे प्यालों कलशों की पट्टियों के ढेरों से सामन्तों के घर खचाखच भरे जा रहे थे, दूर खड़े हुए समझदार भृत्यों द्वारा जल्दी-जल्दी फेंकी जा रही सामग्रियों के समूह से दुष्ट हाथी (का पृष्ठतल) भरा जा रहा था, तिरछा झुकते हुए द्रुतगामी भृत्यों के हाथों से कठिनतापूर्वक खिंची, पिछड़ती, पराधीन, तोंद निकली कुट्टनियाँ लोगों में हँसी उत्पन्न कर देती थीं, दृढ़ कसी जा रही पलानों की रंग-बिरंगी कमरबन्द की डोरी से अंगों का हिलना-डुलना रुक जाने के कारण विशाल मदमत्त हाथी चिंघाड़ रहे थे, गज-दलों पर लगे घण्टाओं की टंकार से कान फटे जा रहे थे, पीठ पर रखी जा रही जालीदार गूणों (बोरों) से पीड़ित हुए ऊँट डकार रहे थे, कुलीन राजपुत्रों द्वारा भेजे जा रहे धूर्त दूतों से कुलीन कुलपुत्रों की महिलाओं की सवारियाँ ठसाठस भरी जा

१. 'अनेकानेकपा'    २. 'घनिकर'

युक्ताकुलकुलीनकुलपुत्रकलत्रवाहने, गमनवेलाविप्रलब्धवारणाधोरणान्विष्यमाणनवसेवके, प्रसादवित्तपत्तिनीयमाननरपतिवल्लभवारवाजिनि, चारुचारभटसैन्यन्यस्यमाननासीरमण्डलाडम्बरस्थूलस्थासके, स्थानपालपर्याणलम्बमानलवणकलायीकिङ्किणीनालीसनाथसङ्कलिततलसारके, कुण्डलीकृतावरक्षणीजालजटिलवल्लभपालाश्वघटानिवेश्यमानशाखामृगे, परिवर्धकाहूयमाणापं-

टीका-जघास्पर्शिनः कामिनः इत्येके, वस्तुतः जाघनिकाः = जघिकाः त्वरितगामिनः भृत्या उच्यन्ते तैः करेण = हस्तेन कृच्छ्रेण = कठिनतया आकृष्टः लम्बमानः = विलम्बमानः परतन्त्रः = स्थूलशरीरत्वात् पराधीनः तुन्दिलः = विशालोदरः चुन्दीजन = कुट्टनीलोकः ( 'चुन्दी इति देश्यः शब्दः' इति क्षीर स्वामी ) तेन जनितः = कृतः जनेषु = लोकेषु हासः = हास्यं यस्मिन् **पीडय०**—पीडयमानः = दृढीक्रियमाणः शारायाः = शबलायाः विविधवर्णायाः इति यावत् या शारिः = युद्धार्थं गजपर्याणम् ( 'शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थं गजपर्याणे' इति मेदिनी ) तस्याः वरत्रायाः = कक्षबन्धनस्येति यावत् ( 'चूषा कक्ष्या वरत्रा स्यात्' इत्यमरः ) यः गुणः = रज्जुः तेन ग्राहितः = संयतः रुद्धः इत्यर्थः यः गात्राणां = अङ्गानां विहारः = स्वच्छन्दसञ्चालनं तेन बृंहन्तः = चीत्कुर्वन्तः बृंहन्तः = महान्तः उन्मदकरिणः मदमत्ताः हस्तिनः यस्मिन्, **करि०**—करिणां = हस्तिनां घटासु = श्रेणीषु घटमानाः संयुज्यमानाः बद्धाः इत्यर्थः याः घण्टाः तासां टांकारेण = टन-टन शब्देन क्रियमाणः = जन्यमानः कर्णयोः ज्वरः = पीडेत्यर्थः यस्मिन्, **पृष्ठ०**—पृष्ठेषु = पृष्ठभागेषु प्रतिष्ठाप्यमानैः = विधीयमानैः कण्ठालकैः = जालगोणिकाभिः ( इति त्रिकाण्डशेषः ) कदर्थिताः = पीडिताः अतएव कूजन्तः = शब्दायमानाः करभाः = उष्ट्राः यस्मिन् **अभिजात०**—अभिजाताः = उच्चकुलोत्पन्नाः ये राजपुत्राः तैः प्रेष्यमाणाः = प्रहीयमाणाः कुप्रयुक्ताः = धूर्ताः प्रणधयः = चरा इति यावत् तैः आकुलानि = पूर्णानि कुलीनानां कुलपुत्राणां = शिष्टजनानां कलत्राणां = महिलानां वाहनानि यस्मिन्, **गमन०**—गमनस्य = अभियानस्य या वेला = समयः तस्यां तद्विषये इत्यर्थः विप्रलब्धाः = भ्रान्ताः अर्थात् कस्यां वेलायां यात्रा प्रारप्स्यते इत्यत्र सजातभ्रमाः समये नोपस्थिताः इति यावत् अत एव वारणानां = हस्तिनाम् आधोरणैः = हस्तिपकैः अन्विष्यमाणाः = मृग्यमाणाः नवसेवकाः = नवनियुक्तभृत्याः यस्मिन्, **प्रसाद०**—प्रसादेन = अनुग्रहेण राज्ञः इति शेषः वित्तैः = विज्ञातैः प्रख्यातैः इति यावत् [ 'प्रतीते प्रथित-ख्यात-वित्त-विज्ञात-विश्रुताः' इत्यमरः ] पत्तिभिः = पदातिभिः नीयमानाः = चाल्यमानाः नरपतेः = राज्ञः वल्लभाः = प्रियाः वारवाजिनः = वारे विशिष्टसमये प्रदर्शनार्थाः वाजिनः = अश्वाः यस्मिन् क्वचित् वरवाजिनः = श्रेष्ठाश्वाः इत्यपि पाठः, **चारु०**—चारवः = सोल्लासाः सुसज्जिताः ये चारभटाः = वीरयोद्धारः तेषां सैन्येन = सेनया न्यस्यमानाः = निधीयमानाः अर्प्यमाणाः इत्यर्थः नासीराणाम् = अग्रेसराणां सैनिकानां मण्डले श्रेण्याम् = आडम्बराय = प्रदर्शनाय तेषां वैशिष्ट्य बोधनायेति यावत् स्थूलाः = महान्तः स्थासकाः = चन्द्रकाः चर्चा, अनुलेपनानि इत्यर्थः [ 'चर्चा तु चार्चिक्यं स्थासकः' इत्यमरः ] यस्मिन्, **स्थान०**—स्थानपालानाम् = अश्वपालानां पर्याणे = पल्ययने लम्बमानानि = दोलायमानानि लवणकलायीनि = 'मृगाकृतिः अश्वानां दारुमयी क्रियते' इति शङ्करः च किङ्किण्यः = क्षुद्र-घण्टिकाः च नाली = प्रधावनार्थं वंशयष्टिका च ताभिः सनाथानि = युक्तानि संकलितानि = बद्धानि तलसारकाणि = तलसारकोऽश्वमुखपट्टिका ऊर्णादिसूत्रमयी, 'उरः पट्टिकेत्यन्ये' इति शङ्करः यस्मिन्, **कुण्डली०**—कुण्डलीकृतानि = वलयीकृतानि बलयाकारं प्रापितानीति यावत् यानि अवरक्षणीनां = अश्वबन्धनरज्जूनाम् इति शंकरः जालानि = आनायाः तैः जटिलाः = आकुलीकृताः बल्लभपालाः = वल्लभः 'सल्लक्षणतुरङ्गमः' ( मेदिनी ) तेषां पालाः = रक्षकाः, वल्लभपालोऽश्वपालः इति शङ्करः, अन्ये तु 'यो बलवान् महाकायो हयोपकरणं यवसतण्डुलादि वहति स वल्लभपालोऽश्वपालः' इत्याहुः, यासां ताः अश्वघटाः = अश्वराजयः तासु निवेश्यमानाः = स्थाप्यमानाः आरोप्यमाणाः इति यावत् शाखामृगाः = कपयः यस्मिन् सम्भवतः भटानां

**हिन्दी**—रही थी, यात्रा-समय के सम्बन्ध में भ्रम[1] पड़े हुए, नये-नये रखे नौकर हाथियों के महावतों द्वारा ढूंढे जा रहे थे, ( राजा के ) अनुग्रह से ख्याति प्राप्त किये हुए पैदल सिपाहियों द्वारा राजा के प्रिय तथा विशेष अवसरों पर प्रदर्शन-योग्य घोड़े ले जाये जा रहे थे, सुसज्जित वीरभटों के सैन्य द्वारा अग्रपंक्ति के सैनिक-समूह ( के शरीरों ) पर ( अग्रपंक्ति का विशेष चिह्न ) दिखाने के लिये गाढ़ा लेप लगाया जा रहा था, अश्वपालों की पलानों पर लटकी हुई लकड़ी की मृगाकृतियां, छोटी-छोटी घंटियों और छड़ी से युक्त जेबन्द ( उपपट्टिकायें ) कसी हुई थीं, घोड़े बांधने की कुण्डलाकार की हुई रस्सियों की जाल में उलझे हुए अश्वपाल घोड़ों पर वानरों को रखे जा रहे थे, प्रातःकाल खाने

१. 'कलापि'

जग्धप्राभातिकयोग्याशनप्रारोहके, व्याक्रोशीविजृम्भमाणघासिकाघोषे, गमनसंभ्रमभ्रष्टभ्रमदुत्तुण्डतरुणतुरङ्गमतन्यमानानेकमन्दुराविमर्दे, सज्जीकृतकरेणुकारोहाह्वानत्वरसुन्दरीदीयमानमुखालेपने, चलितमातङ्गतुरङ्गप्रधावितप्राकृतप्रातिवेश्यकलोकलुण्ठ्यमाननिर्घास[1]सस्यसञ्चये, सञ्चरच्चेलचक्राक्रान्तचक्रीवति, चक्रचीत्कारिगन्त्रीगणगृह्यमाणप्रहतवर्त्मनि, अकाण्डदीय[2]मानभाण्डभरितानडुहि, निकटघासलाभलुभ्यल्लम्बमानप्रथमप्रसार्यमाणसारसौरभेये, प्रमुखप्रवर्त्यमानमहासामन्तमहानसे, पुरःप्रधावद्धुवजवाहिनि, प्रियशतोपलभ्यमानासङ्कटकुटीरकान्तरालनिःसरणे, करिचरण[3]चलितमठिकोत्थितलोकलोष्टहन्यमान-

टीका-मनोरञ्जनार्थं मंगलार्थं वा कपयो नीयन्ते स्म, परि०—परिवर्धकैः=अश्वपालैः आकृष्यमाणाः=उत्थाप्यमानाः इत्यर्थः अर्ध-जग्धाः=अर्धभक्षिताः प्राभातिक्यां=प्रभातकालीनायां योग्यायाम् सैनिकाभ्यासे अशनार्थं=भक्षणार्थं प्रारोहकाः=प्ररोहाः घासांकुराः इत्यर्थः यस्मिन् अश्वपालैः सैनिकाभ्यासात् पूर्वम् घासोऽश्वानाम् अग्रे प्रक्षिप्तमासीत्, किन्तु तदानीमेव अभियानादेशः प्राप्तः, तस्मात्तैः अर्धभक्षितघासः अश्वानामग्रतः आकृष्टः इति भावः, अथवा प्राभातिकं योग्यं=समुचितम् अशनं तदर्थमित्यपि व्याख्यातुं शक्यते, व्याक्रो०—व्याक्रोश्या=परस्पराह्वानेन विजृम्भमाणः=वर्धमानः घासिकानां=घासप्रबन्धे नियुक्तानां भृत्यानाम् आघोषः=कोलाहलः यस्मिन् गमन०—गमनस्य संभ्रमेण=त्वरया भ्रष्टाः=बन्धनमुक्ताः भ्रमन्तश्च उत्तुण्डाः=उत्=ऊर्ध्वं तुण्डं=मुखं येषां तथाभूताः ये तरुणाः=युवानः तुरङ्गमाः=अश्वाः तैः तन्यमानः=क्रियमाणः अनेकासां मन्दुराणां=वाजिशालानां विमर्दः=विध्वंसः यस्मिन्, सज्जी०—सज्जीकृताः=आस्तरणादिना भूषिताः याः करेणुकाः=हस्तिन्यः तासाम् आरोहैः=आधोरणैः यत् आह्वानम्=आकारणं तस्मिन् त्वरं=शीघ्रं सुन्दरीभिः दीयमानं=क्रियमाणमित्यर्थः मुखस्य आलेपनं=सिन्दूरादिना शृङ्गारः यस्मिन्, चलित०—चलितेषु=प्रस्थितेषु मातङ्गाः=हस्तिनश्च तुरङ्गमाः=अश्वाश्च तेषु प्रधाविताः=द्रुतमागतः प्राकृतः=साधारणः निम्नजातीयः इति यावत् यः प्रतिवेश्यकः (प्रतिवेश + ष्यञ् कन्) प्रतिवेशी चासौ लोकः=जनः तेन लुण्ठ्यमानः=ह्रियमाणः निर्घासः=निर्गतः घासः=अन्नं यस्मात् तथाभूतः सस्यसञ्चयः=तृणराशिः यस्मिन् अर्थात् अश्वपालैः तृणमेव परित्यक्तमासीत् अन्नं तु ते नीतवन्तः एव, शंकरस्तु 'निर्घासो मुक्तशेषो धासः' इति व्याचष्टे, अस्मिन् पक्षे सस्यशब्देन गोधूमयवादि ग्राह्यम्, सञ्चर०—सञ्चरन्तः=गच्छन्तः चेलानां=वसनानां [ 'चेलं वसनमंशुकम्' इत्यमरः ] चक्रेण=भारेण पोटलिकाभिरित्यर्थः आक्रान्ताः=अधिष्ठिताः चक्रीवन्तः=गर्दभाः ( 'चक्रीवन्तस्तु बालेया रासभाः गर्दभाः खराः' इत्यमरः ] यस्मिन्, शंकरस्तु चेलशब्दस्य चेटः इत्यप्यर्थं करोति ततश्च बालवृन्दाधिष्ठिताः गर्दभाः अपि पश्चाद् गच्छन्ति स्मेत्यर्थः, चक्र०—चक्राणां=रथाङ्गानां चीत्कारी=चीत्कारशब्दयुक्तः यः गन्त्रीणां=वृषभशकटानां गणः=राजिः तेन गृह्यमाणम्=आश्रियमाणं प्रहतं=क्षुण्णं सर्वसेवितमिति यावत् वर्त्म=मार्गः यस्मिन्, अकाण्ड०—अकांडे=सहसा दीयमानैः=आरोप्यमाणैः इत्यर्थः भाण्डैः=पात्रैः भरिताः=पूरिताः अनड्वाहः यस्मिन्, निकट०—निकटस्य=समीपवर्तिनः घासस्य=तृणस्य लाभे लुभ्यन्तः=तृष्यन्तः अत एव लम्बमानाः=विलम्बं कुर्वाणाः प्रथमं=पूर्वमेव प्रसार्यमाणाः साराः=बलवन्तः सौरभेयाः=सुरभेः अपत्यानि पुमांसः अनड्वाहः इति यावत् ('अनड्वान्

हिन्दी–योग्य आधा खाया हुआ घास अश्वपालों द्वारा खींचा जा रहा था, घसियारों का (एक दूसरे को) पुकारने का हुल्ला-गुल्ला बढ़ता जा रहा था, चलने की त्वरा में छूट पड़े, घूमते हुए, ऊपर मुँह किये नौजवान घोड़ों द्वारा अनेक घुड़सालों में तोड़-फोड़ की जा रही थी, तय्यार की हुई हथिनियों के महावतों के आह्वान पर सुन्दरियों द्वारा उनके मुखों पर ( सिन्दूर आदि का ) लेप किया जा रहा था, हाथियों और घोड़ों के चल पड़ने पर आसपास के दौड़े आए नीच जाति के लोगों द्वारा खाने से बचा-खुचा अन्न रहित घास का ढेर लूटा जा रहा था, कपड़ों के गट्ठों से लदे हुए गधे जा रहे थे, पहियों से चर-चर शब्द करती हुई बैलगाड़ियों की पंक्ति द्वारा घिसा-पिटा मार्ग अपनाया जा रहा था, सहसा दिए जाने वाले भांडों से बैल लादे जा रहे थे, ( खाद्य सामग्री लिये ) पहले ही भेजे जा रहे तगड़े बैल आस-पास घास मिलने से ललचाए हुए पिछड़ते जा रहे थे, बड़े-बड़े सामन्तों का रसोई का सामान आगे-आगे भेजा जा रहा था, झंडे लिये हुए लोग आगे दौड़ रहे थे, भीड़-भाड़ वाले कुटीरों के भीतरों से ( सैनिकों का ) निकलना सैकड़ों मित्रों द्वारा देखा जा रहा था, हाथियों के चरणों से हिले हुए छोटे-छोटे घरों से निकले लोगों की पत्थरों की मारें खाये जा रहे

१. 'निर्घाससञ्चये' २. 'अकांडोड्डीयमान–' ३. 'चरणदलित'

मेण्ठक्रियमाणासन्नसाक्षिणि, सङ्घट्टविघट्टमानव्याघ्रपल्लीपलायमानक्षुद्रकुटुम्बके, कलकलोपद्रवद्रवद्द्रविणबलीवर्दविद्राणवणिजि, पुरःसरदीपिकालोकविरलायमानलोकोत्पीडप्रस्थितान्तःपुरकरिणीकदम्बके, हयारोहाहूयमानलम्बितशुनि, सरभसचरणनिपतननिश्चलगमनसुखायमानखक्खटस्तूयमानतुङ्गतङ्गणगुणे, स्रस्तवेसरविसंवादिसीदद्दाक्षिणात्यसादिनि, रजोजगज्जगति प्रयाणसमये, प्रतिदिशमागच्छद्भिर्गजवधूसमारूढैराधोरणैरूर्ध्वध्रियमाणहेमपत्रभङ्गशारशाङ्गैः, अन्तरासनासीनान्तरङ्गगृहीता-

टीका-सौरभेयो गौः' इत्यमरः) यस्मिन् शङ्करस्तु 'लम्बमानो गर्दभो वणिजां कर्मकरो वा इति व्याचष्टे, अर्थात् वणिजां कर्मकरैः भोजनसामग्रीं वहन्तो नड्वाहः पूर्वमेव आगामिशिविरे नीयन्ते स्म, प्रमुख० —प्रमुखे = अग्रे प्रवर्त्यमानं=प्रेष्यमाणं महतां सामन्तानां = भूपानां महानसं = सूपकारशाला यस्मिन् पुरः० —पुरः = अग्रे प्रधावन्तः = प्रद्रवन्तः ध्वजवाहिनः = पताकावाहकाः पुरुषाः यस्मिन्, प्रिय०—प्रियाणां = प्रियमित्राणां शतैः = शतशः प्रियमित्रैरित्यर्थः उपलभ्यमानं दृश्यमानमित्यर्थः आसंकेटभ्यः = आकीर्णेभ्यः कुटीरकाणां = तृणकुटीनां लघुगृहाणामित्यर्थः अन्तरालेभ्यः = अन्तरेभ्यः निःसरणं = संनिकानां = निर्गमनं यस्मिन् करि०—करिणां = हस्तिनां चरणैः = पादन्यासैरित्यर्थः चलिताः = कम्पिताः अत्र दलितपाठः साधीयान् याः मठिकाः = लघुगृहाणि ताभ्यः उत्थितेन = उद्गतेन लोकेन = जनेन तद्वासिजनैरित्यर्थः लोष्ठैः = प्रस्तरैः हन्यमानाः = प्रह्रियमाणाः ये मेण्ठाः = हस्तिपकाः इति त्रिकाण्डशेषः जागरिकाः इति शंकरः, तैः क्रियमाणाः आसन्नाः - समीपवर्तिनः लोकाः साक्षिणः = प्रत्यक्षदर्शिनः अभियोगार्थमिति शेषः यस्मिन्, सङ्घ०—सङ्घट्टेन = संघर्षणेन संमर्दनेति यावत् विघट्टमानाः = ध्वंसमानाः याः व्याघ्रपल्ल्यः = तृणकुटीभेदा इति शंकरः ताभ्यः पलायमानानि = प्रधावन्ति क्षुद्रकुटुम्बकानि = पुत्रकलत्रादि लघुपरिवाराः यस्मिन्, कल०—कलकलः = कोलाहलः एव उपद्रवः = विपत्तिः तेन द्रवन्तः = पलायमानाः ये द्रविण-बलीवर्दाः = धनवाहिनो वृषभाः ( मध्यमपदलो० ) तैः विद्राणाः = सशोकाः इति शङ्करः निराशीभूताः इत्यर्थः वणिजः = व्यापारिणः यस्मिन्, पुरः०—पुरः = अग्रे अग्रे गच्छन् यः दीपिकानाम् = उल्कानाम् आलोकः = प्रकाशः अथवा पुरःसराणाम् = अग्रे गच्छताम् सेवकानां = हस्तस्थितोल्कानाम् आलोकः तेन विरलायमानः = विरलीभवन् न्यूनतां गच्छन्निति यावत् यः लोकानां = जनानाम् उत्पीडः = सम्मर्दः तेन प्रस्थितानि सुखं चलितानि अन्तःपुराणाम् = अवरोधानाम् अन्तःपुरवासिमहिलानामिति यावत् करिणी-कदम्बकानि हस्तिनी-श्रेणयः यस्मिन्, हया० —हयारोहैः = अश्वारोहिभिः आहूयमानाः = आकार्यमाणाः लम्बिताः = कृतविलम्बाः श्वानः = सारमेयाः यस्मिन्, शत्रूणाम् रात्रौ 'आक्रमणादि सूचनादानाय सेनायां सारमेयाणाम् आवश्यकता जायते, सरभ०—रभसेन = वेगेन सहितं यथा स्यात्तथा यत् चरणानाम् = अश्वानां पादानां निपतनम् = भूमौ प्रक्षेप इत्यर्थः तेन निश्चलेन गमनेन गत्या च सुखायमानाः = सुखीभवन्तः ( 'सुखादयो वृत्तिविषये तद्वति वर्तन्ते' ) ये खक्खटाः = वृद्धाः इति शङ्करः तैः स्तूयमानः = प्रशस्यमानः तुङ्गानाम् = उन्नतानां तङ्गणानाम् = 'तङ्गणो देशः, तद्देशजोऽप्यश्वस्तङ्गण' इति शङ्करः, तेषां गुणः = गतिवैशिष्ट्यादिः यस्मिन्, सेनायां वीराणां मनोविनोदार्थं कथाश्रवणाय, प्रोत्साहनाय पराक्रमप्रशंसनाय च वृद्धाः नीयन्ते स्म, स्रस्त०—स्रस्ताः = पतिताः वेसराणाम् = अश्वतराणां विसवादः = परिशीलनम् ( आरोहणम् ) इति शङ्करः एषामस्तीति तथोक्ताः वेसरारूढाः इत्यर्थः अथवा वेसराणां विसंवादिनः = अननुकूलाः सीदन्तः = कष्टमनुभवन्तः दाक्षिणात्याः = दक्षिणदेशीयाः सादिनः = आरोहिणः ( 'सादी-तुरङ्ग-मातङ्ग-रथारोहेषु' इति मेदिनी ) यस्मिन्, अयं भावः दक्षिणे वेसराः न भवन्ति, अतः तदारोहणेऽनभ्यासात् ते तेभ्यः

हिन्दी–हाथीवानों द्वारा आस-पास के लोग साक्षी बनाये जा रहे थे, रेल-पेल में टूटी जा रही झोपड़ियों में से छोटी-छोटी गृहस्थियाँ भागी जा रही थीं, हल्ले गुल्ले के उपद्रव से भागे जा रहे धन-लदे बैलों के कारण बनिये निराश हो पड़े थे, आगे-आगे जा रहे मशालों के प्रकाश से लोगों की भीड़ छँटे जाने के कारण अन्तःपुर की महिलाओं की हथिनियों की कतार ( सुगमता से ) चल पड़ी, घुड़सवारों द्वारा पीछे रहे हुए ( अपने ) कुत्ते बुलाये जा रहे थे, वेग से पैर धरने और निश्चल गति से आराम अनुभव करते हुए वृद्धों द्वारा तंगण देश के ऊँचे घोड़ों का गुण सराहा जा रहा था, नीचे गिरे पड़े, खच्चरों पर चढ़े दाक्षिणात्य सवार कराह रहे थे और जगत् धूल में अन्तर्लीन हो गया—राजद्वार राजाओं से भर गया, जो प्रत्येक दिशा से आ रहे थे और हथिनियों पर चढ़े हुए थे, जिनके सुवर्ण की पत्रलताओं से रंग-बिरंगे बने धनुष महावतों द्वारा ऊपर धारण किये जा रहे थे और खड्ग बीच में बैठे विश्वासपात्र पुरुषों द्वारा पकड़े हुए

१. लोकोत्पीड़ा　　२. 'खक्खटक्षत्रियस्तु०'

सिभिः, ताम्बूलिकविधूयमानचामरपल्लवैः, पश्चिमासननिकापितभस्त्राभरणभिन्दिपालपूलिकैः, पत्रलताकुटिलकलधौतनलकपल्लवितपर्याणैः, पर्याणपक्षकपरिक्षेपपट्टिकाबन्धनिश्चलपट्टोपधानस्थिरावधानैः, प्रचलपादफलिकास्फालनस्फायमानपदबन्धमणिशिलाशब्दैः, उच्चित्रनेत्रसुकुमारस्वस्थान स्थगितजङ्घाकाण्डैश्च कार्दमिकपटकल्माषितपिशङ्गपिङ्गैः, अलिनीलमसृणसतुला-

टीका-पतन्ति स्म सीदन्ति स्म चेति, रजोभिः=धूलिभिः जग्धं=भक्षितं व्याप्तमित्यर्थः जगत्=लोकः येन तस्मिन्, प्रतिदिशम्=दिशातः दिशातः आगच्छद्भिः एतत् अन्यानि च तृतीयान्तपदानि 'राजभिः' इत्येतस्य विशेषणानि. गज०—गजवधूषु=करिणीषु समारूढः=स्थितैः, आधो०—आधोरणैः=हस्तिपकैः ऊर्ध्वम्=उपरि ध्रियमाणाः=उह्यमानाः हेम्नः=सुवर्णस्य पत्रभङ्गैः=पत्रलतादि-रचनया शाराः=चित्रवर्णाः शार्ङ्गाः=कार्मुकाः ('शार्ङ्गं कार्मुकमात्रेऽपि' इति मेदिनी) येषां तैः अन्तः०—अन्तरासने=मध्यवर्तिस्थाने आसीनाः=स्थिताः ये अन्तरङ्गाः=विश्वासपात्रपुरुषाः तैः गृहीताः=धृताः असयः खड्गाः येषां तैः, ताम्बू०—ताम्बूलिकैः=ताम्बूलदायक-भृत्यैः विधूयमानाः=वीज्यमानाः चामरपल्लवाः पल्लवसदृशचामराणि येषां तैः, पश्चिम०—पश्चिमम् आसनम् एषामस्तीति (ठन्) तथोक्ताः तेभ्यः=हस्त्युपरि पश्चाद्वर्त्यासने स्थितेभ्यः पुरुषेभ्यः अर्पिताः=दत्ताः भस्त्रा=चर्मकोषः आभरणं यासां तथाभूताः भिन्दिपालानां=भिन्दितः पालयन्तीति तथोक्तानां प्रासानां=प्रक्षेपास्त्रविशेषाणां हस्तक्षेप्य-लगुडानाम् इति यावत् पूलिकाः=गुच्छकाः यैः तैः, शंकरस्तु 'भस्त्राभरणं तूणीरभेदः' इत्याह तत्पक्षे भस्त्राभरणे भरितानां भिन्दिपालानां पूलिकाः इति मध्यमपदलोपी समासः आश्रयणीयः, पत्र०—पत्रलतावत् अथवा पत्रलताभिः कुटिलाः=भंगुराः ये कलधौतस्य रौप्यस्य अथवा कनकस्य [ कलधौतं रूप्य-हेम्नोः इत्यमरः ] ये नलकाः अयं शब्दः स्पष्टार्थः अनेन बाणः अथवा बाणधिः तूणीरः इति यावत् ग्रहीतुं शक्यते, तैः पल्लवितं=सञ्जातपल्लवमिव पुलकितमिव पर्याणं=पल्ययनं येषां तैः, पर्याण०—पर्याणस्य=पल्ययनस्य पक्षकयोः=उभयोः पार्श्वयोः [ 'पक्षकस्तु पुमान् पार्श्वद्वारे च पार्श्वमात्रके' इति मेदिनी ] परिक्षेपार्थं=परितो वेष्टनार्थं या पट्टिका=कक्ष्या तया बन्धनेन=संयमनेन निश्चलं=स्थिरम् यत् पट्टोपधानं=कौशेयं पीठोपधानम् उपवर्हः इति यावत् तेन स्थिरम् अवधानं=ध्यानं येषां तैः; अत्र 'धानैः' इत्यस्य स्थाने 'स्थानैः' इति पाठः साधीयान् ततश्चायमर्थः येषाम् अवस्थानम्=आसनं स्थिरमासीत्, प्रचल०—प्रचला=प्रेंखन्ती या पादफलिका=पादधारिणी तस्याः आस्फालनेन परस्परसंघट्टनेन स्फायमानः=वृद्धिं गच्छन् पदबन्धस्य=पादकटकस्य इति शंकरः मणिशिलानां=मणिप्रस्तराणां शब्दः येषां तैः उच्चित्र०—उद्गतानि चित्राणि येषु तानि उच्चित्राणि यानि नेत्राणि=अंशुकानि तैः सुकुमाराणि=कोमलानि स्वस्थाने=निजसमुचितस्थाने इत्यर्थः स्थगितानि=आवृतानि जंघाकाण्डानि=जंघाः काण्डानि=दण्डा इवेत्युपमिततत्पु० येषां तैः, कार्द०—कर्दमेन रक्तः इति (कर्दम+ठक्) कार्द-

**टिप्पणी—पदबन्ध**—शंकर पदबन्ध शब्द को पादबन्ध में बदल कर उसका पदकटक (पाँव का कड़ा) अर्थ करता है। कॉवल और काणे ने भी यही अर्थ किया है, लेकिन यहाँ स्पष्ट नहीं हो रहा है कि पाद का कड़ा किसका? क्या राजे पादकटक=नूपुर पहने हुए थे? घोड़ों के पादकटक हो सकते हैं, परन्तु उनका रकाबों से क्या सम्बन्ध? यदि पादबंध का अर्थ पादफलिका लें तो उनमें रत्न जड़े होते ही हैं और वे हिलने से बजते हैं। यह अर्थ कुछ संगत बैठ जाता है। **स्वस्थान**—यह शब्द भी संदिग्ध है। शंकर ने 'स्वस्थानं स्वस्थानिति यस्याः प्रसिद्धिः' अर्थ किया है। वह भी स्पष्ट नहीं हो रहा है। इसका 'स्वस्थगनस्थगित' पाठान्तर है जो कुछ अच्छा अर्थ रखता है वे अपने स्थगन से अपने को छिपाये रखते हुए भी जंघाकांड को ढके हुए थे अर्थात् वे इतने महीन थे कि शरीर पर देखे नहीं जा रहे थे फिर भी वे राजाओं के जंघाकाण्डों को ढके हुए थे।

**हिन्दी**—थे, जिन पर तमोली किसलय-जैसे चामर डुला रहे थे, जिन्होंने पीछे के स्थान पर बैठे हुए पुरुषों को तुरीणों (अथवा चमड़े के थैलियों) में भरे बछियों के गट्ठे सौंप रखे थे, जिनके पलान बेल-बूटों से टेढ़े-मेढ़े बने चाँदी के नलकों (१ तुरीणों) से पल्लवित-जैसे हो रखे थे, जो पलान के दोनों पार्श्वों में लपेटने की पेटी द्वारा बँध जाने से रेशमी गद्दी के निश्चल हो जाने के कारण ध्यान में स्थिर थे, जिनकी लटकी हुई रकाबों के परस्पर टकराने से पाद-कटकों में जड़े रत्न-शिलाओं का शब्द बढ़ रहा था जिनके कोमल जंघा-काण्ड चित्र काढ़े रेशमी वस्त्र से अपने (उचित) स्थान में ढके हुए थे, जिनमें से कुछ की लाल-लाल सी टाँगे सलेटी रंग के वसन से रंग-बिरंगी हो रही थीं (कुछ की) भ्रमर-जैसी काली

१. 'स्वस्थगनस्थगित'

समुत्पादितसितसमायोगपरभागैश्चावदातदेहवर्णविराजमानराजावर्तमेचकैः, कञ्चुकैश्चा[1]पचितचीनचोलकैश्च तारमुक्तास्तबकितस्तवरकवारबाणैश्च नानाकषायकर्बुरकूर्पासकैश्च शुकपिच्छच्छायाच्छादनकैश्च व्यायामोल्लुप्तपार्श्वप्रदेशप्रविष्टचारुशस्त्रैश्च गतिवशवेल्लितहारलतागलल्लोलकुण्डलोन्मोचनप्रधावितपरिजनैश्च चामीकरपत्राङ्कुरकर्णपूरकविघट्टमानवाचालबालपाशैश्चोष्णीषपट्टविष्टब्ध[2]कर्णोत्पलनालैश्च कुङ्कुमरागकोमलोत्तरीयान्तरितोत्तमाङ्गैश्च चूडामणिखण्डखचितक्षौमखोलैश्च[3] मायूरा[4]-

टीका-मिक: य: पट:=परिधानविशेष: तेन कल्माषिता=कर्बुरिता चित्रितेत्यर्थ: पिशङ्गा:=रक्तपीता पिङ्गा=जंघिका इति शङ्कर: येषां तै:, अलि०—अलिवत्=भ्रमरवत् नीला च मसृणा=चिक्कणा च या सतुला अर्ध-जंघिका, अन्ये अर्धजंघालेत्याहु:' इति शङ्कर: अर्धजंघावसानं जांघिया इति प्रसिद्धम् तया समुत्पादित:=जनित: सितस्य=श्वेतवर्णस्य श्वेतवर्णपट्टिकाया इति यावत् य: समायोग:=संयोग: तस्य परभाग:='वर्णस्य वर्णान्तरेण शोभातिशय:' इति शङ्कर: [ परभाग: गुणोत्कर्षे इति क्षीरस्वामी ] येषां तै:, अवदात०—अवदात:=गौर: य: देहस्य वर्ण: तस्मिन् विराजमानै:=शोभायमानैश्च राजावर्तवत्=कृष्णपाषाणवत् [ 'राजावर्त: कृष्णपाषाण:' इति शंकर: ] मेचकै:=श्यामै: कञ्चुकै:=परिधानविशेषै: जाकट इति भाषायां प्रसिद्धै: अत्रोपलक्षणे तृतीया ज्ञेया अर्थात् कञ्चुकै:=कञ्चुकोपलक्षितै: वस्तुतस्तु 'कञ्चुकै:' इति पृथक् न कृत्वा प्रचलितक्रमानुसारेण 'मेचककञ्चुकै:'=मेचका: कञ्चुका: येषां तै: इत्येव पाठेन भाव्यमिति विभावयन्तु विद्वांस:, अपचि०—'अपचितं=परिहितम्' इति शंकर: धृता: चीनस्य चोला:=चीनदेशोत्पन्नानि उत्तरीयाणि [ 'संव्यानामुत्तरीयं च चोल: कूर्पासकोऽस्त्रियाम्' इत्यमर: ] यै: तै: तार०—तारा:=शुद्धा: उज्ज्वला: इति यावत् या:=मौक्तिकानि ताभि: स्तबकिता:=सञ्जातस्तबका: स्तवरकस्य वस्त्रजातिविशेषस्य वारबाणा:=कञ्चुका: येषां तै:, नाना=विविधै: कषायै:=निर्यासै: [ 'निर्यासेऽपि कषायोऽस्त्री' इत्यमर: ] रञ्जकद्रव्यैरित्यर्थ: कर्बुरा:=विविधवर्णा: कूर्पासका:=चोलका: येषां तै: शुक०—शुकस्य=कीरस्य पिच्छस्य=पक्षस्य छाया=कान्ति: इव छाया येषां तानि तथोक्तानि आच्छादनानि=उत्तरीयाणि येषां तै:, व्यायाम०—व्यायामेन=अङ्गसञ्चालनादिश्रमेण उल्लुप्त:=कृशीकृत: इत्यर्थ: य: पार्श्व-प्रदेश:=पार्श्वभाग: तस्मिन् प्रविष्टानि=गतानि बद्धानीत्यर्थ: चारूणि=सुन्दराणि शस्त्राणि=आयुधानि येषां तै: गति०—गतिवशेन=चलनेन वेल्लिता:=उच्चलिता: या: हारलता=हारा: लता: इवेत्युपमिततत्पु० तासु गलत्=पतत् ता: स्पृशत् इत्यर्थ: लोलं=लम्बमानं यत् कुण्डलं तस्य उन्मोचनाय=वियोजनाय प्रधाविता:=प्रद्रुता: परिजना:=भृत्या: येषां तै:, चामी०—चामीकरस्य=सुवर्णस्य पत्रै: अङ्कुरै:=प्ररोहैश्च विनिर्मित: इति शेष: य: कर्णपूरक:=कर्णभूषणं तेन विघट्टमान:=ताड्यमान: अत एव वाचाल:=शब्दायमान: बालपाश:=कर्णाभरणभेद:' इति शङ्कर: बालिका इत्यर्थ: येषां तै:, उष्णीष०—उष्णीषं=शिरोवेष्टनं तस्य पट्टेषु=वसनेषु विष्टब्धं संसक्तमित्यर्थ: कर्णोत्पलस्य आभरणरूपेण धृतस्य कमलस्य नालं=वृन्तं यैषां तै:, कुंकुम०—कुंकुमस्य=काश्मीरजस्य रागेण=रंजनेन कोमलेन=मृदुना सुन्दरेणेत्यर्थ: उत्तरीयेण=प्रावारेण अन्तरितं=वेष्टितं उत्तमाङ्गं=शिर: येषां तै:, चूडा०—चूडामणे:=शिरोरत्नस्य खण्डेन=शकलेन खचित:=पूरित: क्षौम:=शाण: खोल:=शिरस्त्राणं येषां तै: [ 'खोलक: पाकवल्मीकपूगकोशशिरस्त्रके' इति विश्वकोश: ], मायूर०—मायूराणि=मयूरपिच्छनिर्मि-

हिन्दी—और चिकनी जाँघिया सफेद रंग (की पट्टी) के संयोग से दो वर्णों में शोभातिशय उत्पन्न कर रही थी, (कुछ की) कृष्णमणि-जैसी काली जाकटें ( कंचुक ) गोरी देह के रंग पर शोभा पा रही थीं ( कुछ ने ) चीन देश की बनी चोलियाँ पहन रखी थीं, ( किन्हीं के ) स्तवरक जाति के कपड़े के ऐसे कोट थे जिन पर असली मोतियों के गुच्छे लगे हुए थे, ( किन्हीं के ) तरह-तरह के निर्यासों ( काढ़ों ) से रंग-बिरंगे कञ्चुक थे, ( किन्हीं के ) तोतों के पंखों की सी कान्ति के ( हरे ) शाल थे ( किन्हीं ने ) व्यायाम के कारण कृश बने हुए पार्श्वभाग में सुन्दर शस्त्र खोंस रखे थे, (किन्हीं की) चलने से हिली लता-जैसी ( लम्बी ) मौक्तिक मालाओं में फँसे कुण्डलों को छुड़ाने के लिए भृत्य लोग दौड़े आये थे ( किन्हीं की ) कानों की बालियाँ सोने के पत्रों और अंकुरों से बने हुए कर्णपूरों से टकराई हुई बज रही थीं, (किन्हीं ने) कर्णोत्पलों के डंठल पगड़ी के वस्त्र में खोंस रखे थे ( किन्हीं ने ) केशर से रँगे कोमल उत्तरीयों से मस्तक ढक रखे थे ( किन्हीं के ) रेशमी शिरस्त्राणों पर चूडामणि के टुकड़े जड़े हुए थे, ( किन्हीं के ) शिरमालाओं ( के ऊपर ) के

१. 'शस्त्रैश्च' २. 'पट्टावष्टब्ध' ३. 'चोलैश्च' ४. 'मायूरपत्राय'

तपत्रायमाणशेखरषट्पदपटलैश्च मार्गागतशारिक शारिवाहवेगदण्डैः, पुरश्चञ्चच्चामरकिर्मीरकार्दरङ्गचर्ममण्डलमण्डनोड्डीयमानचटुलडामरचारभटभरितभुवनान्तरैः, आस्कन्दत्काम्बोजवाजिशतशिञ्जानजातरूपायानरवमुखरितदिङ्मुखैश्च निर्दयप्रहतलम्बपटहशतपटुरवबधिरीकृतश्रवणविवरैः, उद्घोष्यमाणनामभिः, उन्मुखपादातप्रतिपाल्यमानाज्ञापातैः राजभिरापुपूरे राजद्वारम् ।

उदिते च भगवति दिनकृति राज्ञः समायोगग्रहणसमयशंसी सस्वान संज्ञाशङ्खो मुहुर्मुहुः । अथ नचिरादिव प्रथमप्रयाण एव दिग्विजयाय दिग्गजसमागममिव गमनविलोलकर्णतालदोलाविलासैः कुर्वाणया करेणुकया सिद्धयात्रयोह्यमानः, वैदूर्य-

टीका-तानि यानि यानि आतपत्राणि तद्वत् आचरन्तीति तथोक्तानि शेखरेषु=शिरोमालासु षट्पदानां=भ्रमराणां पटलानि=वृन्दानि येषां तैः, मार्गा०-मार्गात् आगताः दूरदेशात् मार्गं चलित्वा आगताः इति यावत् अतएव शारिकान्=कर्बुरान् अथवा शारिवत् धूसरितान् शारीन्=युद्धार्थपर्याणानि [ 'शारिर्नाऽक्षोपकरणे स्त्रियां शकुनिकान्तरे । युद्धार्थगजपर्याणे' इति मेदिनी ] वहन्तीति वाहाः वेगदण्डाः=तरुणहस्तिनः इति शङ्करः येषां तैः, अर्थात् दूरात् आगमनकारणात् हस्तिपर्याणानि धूलि-धूसरितानि आसन्, पुरः० —पुरः=अग्रे चञ्चन्ति=दोलायमानानि वीज्यमानानीत्यर्थः चामराणि येषां तथाभूताश्च किर्मीराणि=चित्रवर्णानि [चित्रकिर्मीरकल्माष सवलैताश्च कर्बुरे इत्यमरः] कार्दरंगकानि='कार्दरंगदेशोद्भवानि बहुसुवर्णसूत्ररचितानि चर्माणि=स्फोटकाः 'स्निग्धवर्णमांसस्फाराणि कार्दरंगचर्माणि' इति शङ्करः मण्डनानि येषां तथाभूताश्च उड्डीयमानाः इव प्रधावन्तः इत्यर्थः चटुलाः = चपलाः योद्धुम् आकुलाः इत्यर्थः डामराः=उद्भटाः—ये चारभटाः=वीरसैनिकाः तैः भरितं=पूरितं भुवनान्तरं=जगदन्तरालं यैः तथाभूताश्च तैः, आस्कन्द०—आस्कन्दतः=चलन्तः काम्बोजाः=बाह्लीकदेशजाः ये वाजिनः=अश्वाः तेषां यत् शतम् तस्य शिञ्जानं=झणत्कुर्वन् जातरूपस्य=सुवर्णस्य यत् आयानम्=अश्वभूषण इति शङ्करः तस्य रवेण=शब्देन मुखरितानि=वाचालितानि दिङ्मुखानि - दिक्प्रान्ताः यैः तैः, निर्दय० - निर्दयं=तीव्रं यथा स्यात्तथाया प्रहताः=ताडिताः ये लम्बपटहाः पटहभेदाः 'तमिलाः इति प्रसिद्धाः' इति शङ्करः तेषां पटुना=तीव्रेण रवेण=शब्देन बधिरीकृतानि=श्रवणशक्तिरहितीकृतानि श्रवणयोः=कर्णयोः विवराणि=छिद्राणि यैः तैः उद्घो०—उद्घोष्यमाणानि=प्रकाश्यमानानि नामानि येषां तैः, ०उन्मुख—उन्मुखैः=उत्=ऊर्ध्वं मुखं येषां तथाभूतैः पादातैः=पदातिभिः पाल्यमानः=प्रतीक्ष्यमाणः आज्ञायाः पातः=पतनं प्राप्तिरित्यर्थः येषां तैः राजभिः=राजद्वारम् आपुपूरे=पूर्णमभवत् ।

उदिते=उदयं गते दिनं करोतीति दिनकृत् (क्विप्) तस्मिन्=सूर्ये राज्ञः=हर्षवर्धनस्य समायोगः=समवायः सेनाव्यूहः इत्यर्थः [ 'समायोगस्तु संयोगे समवाये प्रयोजने' इति मेदिनी ] तस्य ग्रहणं=दर्शनमित्यर्थः तस्य समयं=कालं

**टिप्पणी**—दिग्गजसमा०—हथिनी कानों को फड़फड़ा रही थीं। फड़फड़ाने से शब्द हो रहा था, जो आकाश में गूंज उठता था और दिग्गजों तक पहुँच जाता था। दिग्गजों का आकर मानो हर्षवर्धन के साथ समागम हो रहा था—यह कविकल्पना है अथवा विलास-भरे कर्णताल से वह दिग्गज के साथ समागम करती हुई जैसी प्रतीत हो रही थी—यह आशय भी हो सकता है।

**हिन्दी**—भ्रमर-समूह मोर-पंखों से बने छत्रों की समानता रख रहे थे, (किन्हीं के दूर से) आये हुए युवा हाथी रंग-बिरंगी पलानें रखे हुए थे, जिनके २ चामर डुलाये जा रहे थे, जो चित्र-विचित्र रंग, कार्दरंग गेण्डा की बनी ढालों से मंडित थे, जिन्होंने उड़ते हुए-जैसे द्रुतगामी उद्भट वीर भटों द्वारा भुवन का मध्यभाग भर दिया था, जिन्होंने कम्बोज देश के चल रहे सैकड़ों घोड़ों के झनझनाते हुए सोने के साज-श्रृंगार के शब्द से दिग्भागों को मुखरित कर रखा था, जिन्होंने जोर-जोर से पीटे जा रहे सैकड़ों पटहों के शब्द से कानों के छिद्र बहरे कर दिये थे, जो अपना-अपना नाम बताते जा रहे थे और जिनकी पैदल सेना आज्ञा प्राप्त करने के लिए ऊपर मुँह किये प्रतीक्षा कर रही थी।

भगवान् सूर्य के उदय होने पर राजा द्वारा व्यूहबद्ध सेना (सैनिक परेड) देखने के समय की सूचना देने वाला संकेत-स्वरूप शंख बार-बार बज उठा। इसके बाद थोड़ी ही देर में पहले ही बार के अभियान में राजा हर्षवर्धन दिग्विजय के लिये निकल पड़ा—जो चलने से हिलते हुए कानों के झूले की तरह इधर-उधर भ्रमण के विलासों से दिग्गजों का समागम—जैसे करती हुई मांगलिक यात्रा वाली हथिनी द्वारा ले जाया जा रहा था, जो वैदूर्यमणि के

१. 'शारीरिकशारिवाहं' २. 'करेणुकयोह्य०'

दण्डविकटेनोपरि प्रत्युप्तपद्मरागखण्डखचिततया सूर्योदयदर्शनकोपादिव लोहितायतया ध्रियमाणेन मङ्गलातपत्रेण, कदलीगर्भाभ्यधिकम्रदिम्ना नवनेत्रनिर्मितेन द्वितीय इव भोगिनामधिपतिरङ्गलग्नेन कञ्चुकेन, अमृतमथनदिवस इव क्षीरोदफेनपटलधवलाम्बरवाही, बाल एव पारिजातपादप इवाखण्डलभूमिमारूढः, विधूयमानचामरमरुद्विधुतकर्णपूरकुसुममञ्जरीरजसा सकलभुवनवशीकरणचूर्णेनेव दिशश्छुरयन्, अभिमुखचूडामणिघटमानपाटलप्रतिबिम्बमुदयमानं सवितारमपि पिबन्निव तेजसा, बहलताम्बूलसिन्दूरच्छुरितया विलभमान इव द्वीपान्तराण्योष्ठमुद्रयानुरागस्य, स्फुरन्महाहारमरीचिचक्रवालानि चामराणीव

टीका-शंसति = कथयति मचयतीति यावत् तथोक्तः संज्ञायाः = संकेतस्य शंखः मुहुर्मुहुः = पुनः-पुनः सस्वान = शब्दमकरोत्। अथ नचिरादिव प्रथमप्रयाणे एव दिग्विजयाय ....निर्जगाम नरपतिः इत्यस्ति मुख्यं वाक्यम्। नचिरादिव = किञ्चित्कालानन्तरम् प्रथमे प्रयाणे = अभियाने एव दिशां विजयाय, अन्यैः राजभिस्तु कतिशः लघुप्रयाणानन्तरमेव दिग्विजययात्रा प्रारब्धा, परन्तु हर्षस्य प्रथमयात्रा दिग्विजययात्रा जातेति भावः, दिग्गज० — दिग्गजानां दिग्गजैः वा समागमः = सङ्गमः तम् इवेत्युत्प्रेक्षायाम् गमने-चलने कर्णयोः तालाः = आस्फालनानि विधूननानीति यावत् तेषु दोला-विलासैः = दोलावत् इतस्ततः भ्रमणविभ्रमैः कुर्वाणया = विदधत्या करेणुकया = हस्तिन्या सिद्धा = माङ्गलिकीत्यर्थः यात्रा यस्याः तया उह्यमानः = नीयमानः, वैदूर्य० — उपरि राज्ञः इति शेषः वैदूर्यस्य = विदूरात् = पर्वतविशेषात् प्रभवतीति वैदूर्यं = मणिविशेषः तस्य दण्डेन = विकटेन = सुन्दरेण ( इति विश्वः ) प्रत्युप्ताः = प्रतिबद्धाः ये पद्मरागस्य = रक्तमणिविशेषस्य खण्डाः = शकलानि तैः खचितं = युक्तं तस्य भावः तत्ता तया सूर्योदयस्य यत् दर्शनम् = अवलोकनं तेन कोपात् = क्रोधात् इवेत्युत्प्रेक्षायां लोहितायतया = अलोहितं लोहितं भवतीति लोहितायति ततः शतरि तृतीयायां लोहितायता इत्येव पाठः साधीयान् = रक्तवर्णीभवता, लोहितायतीति लोहितायः ( कर्तरि पचाद्यच् ) तस्य भावः तत्ता तयेति केषाञ्चित् व्युत्पत्तिः कष्टकल्पनैव, ध्रियमाणेन = धार्यमाणेन मङ्गलेन माङ्गलिकेन आतपत्रेण = छत्रेण अत्र इत्थम्भूतलक्षणे तृतीया तदुपलक्षितः इत्यर्थः, कदली० - कदल्याः = रम्भावृक्षस्य गर्भात् अभ्यन्तरात् अभ्यधिकः = अत्यधिकः म्रदिमा = मृदोः भावः मृदुत्वमित्यर्थः यस्य तेन नवं = नूतनं यत् नेत्रम् = वस्त्रभेदः [ 'नेत्रं मणिगुणे वस्त्रभेदे मूले द्रुमस्य च' इति मेदिनी ] अङ्गलग्नेन = शरीरधृतेन परिहितेनेति यावत् कञ्चुकेन = वस्त्रविशेषेण अन्यत्र निर्मोकेण द्वितीयः = अपरः इवेत्युत्प्रेक्षायां भोगिनां = सर्पाणाम् अधिपतिः = अधीशः शेषनागः इत्यर्थः अमृतमन्थनस्य = अमृताय क्षीरसागरविलोडनस्य दिवसः इवेत्युपमायां क्षीरोदस्य = क्षीरसागरस्य फेनपटलवत् = फेनसमूहवत् धवलं = श्वेतं अम्बरं = वसनं वहति = धारयतीति तयोक्तः अन्यत्र क्षीरोदफेनपटलैः धवलम् अम्बरम् = आकाशं वहतीति अत्र श्लिष्टोपमोत्प्रेक्षयोः संकरः, बाल० — बालः = क्षीरोदात् नवोद्गतः अन्यत्र बाल्यावस्थायामेव स्थितः आखण्डलस्य = इन्द्रस्य भूमिं = स्थानम् स्वर्गमित्यर्थः आरूढः = गतः मन्थनावसरे प्राप्तो एव इन्द्रः पारिजातं स्वर्गमनयत्, पारिजातः वृक्षविशेष इवेत्युपमायाम् आखण्डलस्य = इन्द्रस्य भूमिष्ठं पदमित्यर्थः आरूढः प्राप्तः महीन्द्रो जातः इति भावः। विधूय० - विधूयमानैः = वीज्यमानैः चामरैः (उत्थितः) यः मरुत् पवनः तेन विधुता = कम्पिता कर्णपूररूपा कुसुममञ्जरी = पुष्पवल्लरी तस्याः रजसा = परागेणेत्यर्थः सकलस्य

हिन्दी—दण्ड से अभिराम, गाड़े हुए पद्मरागमणि के टुकड़ों से जड़े होने के कारण, सूर्योदय देखकर हुए क्रोध से—जैसे लाल होते हुए सिर के ऊपर धारण किये जा रहे मांगलिक छत्र से युक्त था, जो केले के भीतरी भाग से भी और अधिक कोमल नये रेशमी वस्त्र के बने शरीर पर कंचुक [ परिधान-विशेष ] पहने ऐसा लग रहा था मानो शरीर पर लगे हुए कंचुक ( केंचुली ) वाला दूसरा शेषनाग हो, जो क्षीर-सागर के फेन-समूह से श्वेत बने अम्बर ( गगन ) को रखे हुए अमृत मन्थन के दिवस के सदृश क्षीर-सागर के फेन-समूह की तरह श्वेत अम्बर ( वस्त्र ) पहने था, जो बाल ( समुद्र से निकला छोटा ) होता हुआ ही इन्द्र की भूमि ( स्वर्गलोक ) में आरूढ़ ( गये ) पारिजात वृक्ष की तरह बाल ( बाल्यावस्था-स्थित ) होता हुआ ही इन्द्र की भूमि ( पद, महीन्द्र ) पर आरूढ़ हो गया था, जो डुलाये जा रहे चामरों से उत्पन्न पवन द्वारा उड़ाये कर्णपूर की कुसुम मंजरी के पराग से सकल जगत के वशीकरण-चूर्ण से—जैसे दिशाओं को लीप रहा था, जो सामने से चूड़ामणि के भीतर पड़े लाल प्रतिबिम्ब वाले, उदय हो रहे सूर्य को भी अपने वर्चस्व से पी—जैसे रहा था, जो प्रचुर पान से रंजित, बंद हुए ओठों द्वारा अनुराग ( लाली, भक्ति ) को सिन्दूर-सहित ओष्ठ-रूपी मोहर लगे अन्य द्वीप पुरस्कार में—जैसे दे रहा था, जो चमकते हुए बड़े-बड़े हारों की किरणावलियाँ

दिशोऽपि ग्राहयन्, राजकेक्षणोत्क्षिप्तत्रिभागया त्रीनपि लोकान्करदानायाज्ञापयन्निव सविभ्रमं भ्रूलतया, द्राघीयसा बाहुप्राकारेण परिक्षिपन्निव रिरक्षया सप्तापि सागरमहाखातान्, अखिलमिव क्षीरोदमाधुर्यमादायोद्गतया लक्ष्म्या समुपगूढः, गाढममृतमय इव पीयमानः कुतूहलोत्तानकटकलोकलोचनसहस्रैः, स्नेहार्द्रेषु राज्ञां हृदयेषु गुणगौरवेण मज्जन्निव, मज्जामपि

---

टीका–समस्तस्य भुवनस्य=लोकस्य वशीकरणस्य=वशे आनयनस्य चूर्णेन=क्षोदेन मायाचूर्णेनेतियावत् दिशः छुरयन्=लिम्पन् व्याप्नुवन्नित्यर्थः, अभिमु०—अभिमुखे=सम्मुखस्थिते चूडामणौ=शिरोरत्ने घटमानं=जायमान पतदित्यर्थः पाटलं=रक्तवर्णं प्रतिबिम्बं=प्रतिच्छाया यस्य तम् उदयमानम्=उदयं गच्छन्तं सवितारम्=सूर्यम् अपि तेजसा=वर्चसा पिबन्=पानविषयीकुर्वन् इवेत्युत्प्रेक्षायाम्, उदयमानस्य रक्तवर्णसूर्यस्य रक्तं प्रतिबिम्बं शिखामणौ पतितम्, कविरुत्प्रेक्षते शिखामणौ रक्तप्रतिबिम्बरूपेण हर्षः स्वतेजसा सूर्यतेजोऽपिबदिव, बहल०—बहलं प्रचुरं ताम्बूल सिन्दूरमिवेत्युपमिततत्पु० तेन छुरितया=लिप्तया रञ्जितयेति यावत् ओष्ठयोः मुद्रया=संवरणेन संवृतोष्ठाभ्यामित्यर्थः अन्यत्र ताम्बूलम् एव सिन्दूरं छुरितया=रञ्जितया ओष्ठ एव मुद्रा=प्रत्ययकारि चिह्नविशेषः तया द्वीपान्तराणि=अन्यान् द्वीपान् अनुरागस्य=लालिम्नः अन्यत्र भक्तेः कृते विलभमानः=दाने ददत् इवेत्युत्प्रेक्षायाम्, अयं भावः तस्य ताम्बूलरक्तोष्ठलालिमा सर्वत्र प्रसरतिस्म, कविकल्पना चेयं यत् स सकलान् अन्यद्वीपान् अनुरागस्य ( राजभक्तेः ) कृते पुरस्कारस्वरूपं प्रयच्छतिस्म भृत्यो हि ससिन्दूरया राजमुद्रया सत्यापित पुरस्कारं गृह्णाति; सर्वे द्वीपाः सपदि तदनुरागिणो भविष्यन्तीति यावत् ससिन्दूरराजमुद्रासम्बन्धे ३३१ पृष्ठे दृश्यताम्, अत्र श्लिष्टरूपकोत्प्रेक्षायाः संकरः, स्फुरन्०—स्फुरन्ति=भ्राजमानानि महतां=विशालानां हाराणां=स्रजां मरीचीनां=अंशूनां चक्रवालानि=समूहान् चामराणि इवेत्युत्प्रेक्षायां दिशः=दिग्वधूरित्यर्थः ग्राहयन्=हस्ते अवलम्बयन्, अर्थात् तस्य महाहारकिरणावली सर्वत्र दिक्षु प्रसृता; किरणाः चामरवत् धवलाः आसन्, अतः कविरुत्प्रेक्षते स दिग्वधूनां हस्ते स्ववीजनार्थं चामराणि ग्राहयति, सर्वाः दिशः दासीकरोतीति यावत्, राजक०—राजकानां=राजन्यानां ईक्षणे=अवलोकने उत्क्षिप्तः=उत्थापितः त्रिभागः=( त्रिशब्दोऽत्र पूरणार्थकः ) तृतीयो भागः यस्याः तया भ्रूलतया=लतासदृशभ्रुवा सविभ्रमं=सविलासं सखेलमित्यर्थः त्रीन् अपि लोकान् करदानाय=राजस्वार्पणाय आज्ञापयन्=आदिशन् इवेत्युत्प्रेक्षायाम्. द्राघी० अतिशयेन दीर्घः इति द्राघीयान् तेन बाहुः एव प्राकारः प्राचीरं तेन रिरक्षया ( सन्नन्तः ) =रक्षितुमिच्छया सप्त अपि सागराः एव महाखाताः=परिखाः तान् परिक्षिपन्=वेष्टयन् ( अत्र महाखातानि इति नपुंसकमुचितम् ) साधारणतया परिखा प्राकारं रक्षति किन्तु हर्षस्य दृष्टौ सागराः लघुतडागाः एवासन् अतः स्वबाहुप्राकारेण स तान् रक्षतीति भावः अत्रोत्प्रेक्षा सा च रूपकोत्थापिता, अखिल० –अखिलं समग्रम् क्षीरोदस्य=क्षीरसागरस्य माधुर्यं=सौन्दर्यम् इवेत्युत्प्रेक्षायाम् आदाय=गृहीत्वा लक्ष्म्या=कान्त्या अथ च राजलक्ष्म्या समुपगूढः=समाश्लिष्टः गाढ०—अमृतम् एव अमृतमयः इवेत्युत्प्रेक्षायां कुतूहले=औत्सुक्ये उत्तानानि ऊर्ध्वीकृतानि यानि कटकस्य=शिविरस्य लोकाना=जनानां लोचनानां=नेत्राणां सहस्राणि तैः गाढ=भृश यथा स्यात्तथा पीयमानः=पानविषयीक्रियमाणः, क्षीरोदस्य सकलमाधुर्यमादाय लक्ष्म्या आश्लिष्टः सोऽमृतमयीभूतः अतो लोकलोचनानि तं पिबन्ति स्मेवेति भावः, स्नेहा०—स्नेहेन=अनुरागेण आर्द्रेषु=कोमलेषु अथ च स्नेहेन=तैलेन आर्द्रेषु=द्रवरूपेषु राज्ञां हृदयेषु मनःसु गुणानां=शौर्यदयादाक्षिण्यादीनां गौरवेण=महत्त्वेन अथ च भारवत्त्वेन मज्जन्=मग्नो भवन् इवेत्युत्प्रेक्षायाम् भारवद्वस्तु स्वभावतः द्रवे मज्जति एव, मज्जा०—सौभाग्यम्=भाग्यशालिता एव द्रवः=रसः (रूपकम्) तेन द्रष्टृणां=दर्शकानां मज्जाम्=अस्थिसारम् अपि लिम्पन्=लिप्तीकुर्वन्, इवेत्युत्प्रेक्षायाम् तद्दर्शनं प्रजानां कृते

हिन्दी-चाँवरियाँ-जैसे दिशाओं को पकड़वा रहा था, जो राजाओं को देखने में तीसरा भाग ऊपर उठाये भ्रूलता से खेल ही खेल में तीनों लोकों को कर देने के लिये आज्ञा जैसे दे रहा था, जो विशाल बाहु-रूपी दीवार द्वारा मानो समुद्र-रूपी खाइयों को रक्षा करने की इच्छा से घूर-जैसे रहा था, जो क्षीरसागर के सारे माधुर्य को-जैसे लेकर निकली लक्ष्मी ( सुन्दरता, राजश्री ) द्वारा गले लगाए हुए था, जो अमृतमय-जैसा बना हुआ शिविर के लोगों की उत्सुकता से ऊपर उठाई हजारों आँखों से पिया जा रहा था, जो गुणों के गौरव ( महिमा, भारीपन ) के कारण स्नेह ( अनुराग, तेल ) से तरल बने राजाओं के हृदयों में डूब-जैसे रहा था, जो भाग्य-शालिता के रस से देखने वालों की मज्जा तक को

लिम्पन्निव सौभाग्यद्रवेण द्रष्टॄणाम्, अमरपतिरिवाग्रजवधकलङ्कप्रक्षालनाकुलः, पृथुरिव पृथिवीपरिशोधनावधानसङ्कलितसकलमहीभृत्समुत्सारणः, पुरःसरैरालोककारकैः सहस्रसंख्यैरर्क इव किरणैरधिकारचातुर्यचञ्चलचरणैर्व्यवस्थास्थापननिष्ठुरैः भयपलायमानलोकोत्पीडान्तरिता दशापि दिशो ग्राहयद्भिरिव चलितकदलिकासम्पातपीतप्रचारं पवनमपि विनये स्थापयद्भिरिव द्रुतचरणोद्धूतधूलिपटलावधूतान्दिनकरकिरणानप्युत्सारयद्भिरिव कनकवेत्रलतालोकविक्षिप्यमाणं दिनमपि दूरीकुर्वद्भिरिव दण्डिभिरितस्ततः समुत्सार्यमाणजनसमूहो निर्जगाम नरपतिः ।

टीका महाभाग्यफलमासीदिति भावः, अमर०—अमराणां=देवतानां पतिः=स्वामी इन्द्रः इत्यर्थः स इवेतिश्लिष्टोपमायाम् अग्रजस्य=ब्राह्मणस्य वृत्रस्य वधेन=मारणेन यः कलंकः=पापं तस्य प्रक्षालनाय=शोधनाय निराकरणायेत्यर्थः आकुलः=उत्सुकः अन्यत्र अग्रजस्य=ज्येष्ठभ्रातुः राज्यवर्धनस्य वधः गौडेन्द्रकृता हत्या एव कलंकः=अपवादः तस्य प्रक्षालने=निर्यातने आकुलः वृत्रो हि ब्राह्मणस्य त्वष्टुः पुत्रः आसीत् तद्वधकृतपापनिराकरणाय इन्द्रेण अश्वमेधयज्ञः कृतः इति पुराणवार्ता, पृथुः वेनपुत्रो राजविशेषः इवेति श्लिष्टोपमायाम्, पृथिव्याः=क्षितेः परिशोधनस्य=परिष्करणस्य अवधानेन विचारेणेत्यर्थः संकलितान्=एकीभूतान् सकलान् महीभृतः=पर्वतान् समुत्सारयति=निराकरोतीति तथोक्तः अन्यत्र पृथिव्याः परिशोधनं=गौडेन्द्रादिदुष्टनृपैः शून्यीकरणं तस्य अवधानेन संकलितान् सकलान् महीभृतः=नृपान् समुत्सारयति=उत्तेजयति प्रोत्साहयतीति यावत् तथोक्तः पुरा०—पुरःसरैः=अग्रगामिभिः आलोकस्य=प्रकाशस्य कारकैः=सम्पादकैः सहस्रसंख्यकैः=सहस्रसंख्यावद्भिः किरणैः=रश्मिभिः अर्कः=सूर्यः इवेति श्लिष्टोपमायाम् सूर्यः सहस्ररश्मिभिः उच्यते आलोकस्य=जयशब्दस्य ['आलोको जयशब्दः स्यात्' इति हलायुधः] अर्थात् 'जय, जीव, आलोकय' इत्याद्यात्मकस्तुतिशब्दस्य कारकैः अधिकारः=कर्तव्यानुष्ठानं तस्मिन् चातुर्येण=नैपुण्येन चञ्चलाः=चपलाः त्वरायुक्ताः इत्यर्थः चरणाः येषां तैः एतत् अन्यानि च तृतीयान्तानि 'दण्डिभिः' इत्यस्य विशेषणानि, व्यवस्थायाः=क्रमबद्धस्थितेः स्थापने=सम्पादने इत्यर्थः निष्ठुरैः=कठोरैः, भय०—भयेन=भीतया पलायमानाः=प्रद्रवन्तः ये लोकाः जनाः तेषाम् उत्पीडनेन=समूहेन अन्तरिताः=व्यवहिताः दश अपि दिशः लोकैः ग्राहयद्भिः=आश्रयद्भिः इवेत्युत्प्रेक्षायाम् अर्थात् अग्रगामिराजपुरुषैः लोकाः सुदूरं समुत्सारिताः सर्वासु दिक्षु लोकैः आच्छन्नासु ताः हर्षवर्धनस्य दर्शने नागताः चलित०—चलितानां=वेल्लितानां कदलिकानां=पताकानाम् ( 'रम्भावृक्षेऽथ कदली पताका—मृगभेदयोः' इति मेदिनी ) तासां सम्पातेन=निवहेन पीतः=पानविषयीकृतः निरुद्धः इत्यर्थः प्रचारः=गतिः यस्य तम् पवनं=वायुम् अपि विनये अनुशासने

**टिप्पणी**—पृथु— पृथु के सम्बन्ध में पहले भी संकेत आया है कि पहले पर्वत बड़ा उत्पात मचाते रहते थे जहाँ कहीं भी इकट्ठे होकर पृथिवी को घेर बैठते थे। अन्न कैसे पैदा होता। अकालपीड़ित प्रजा ने पृथु से प्रार्थना की। उसने अपने धनुष से पर्वतों को हटाया पृथिवी को समतल किया जिससे बाद को प्रजा अन्न उगाने योग्य बन सकी।

**हिन्दी**—भी लीप—जैसे रहा था, जो अग्रज ( ब्राह्मण=वृत्र ) के वध का कलंक (पाप) धोने (मिटाने) के लिए आकुल बने इन्द्र के समान अग्रज ( बड़े भाई ) के वध का कलंक ( अपवाद ) धोने ( उसका बदला लेने ) के लिए आकुल था जो पृथिवी को ( पर्वतों से ) साफ करने का विचार रखकर एकत्र हुए सभी महीभृतों ( राजाओं ) को हटाने वाले पृथु राजा की तरह पृथिवी को ( गौडेन्द्र—जैसे कुनृपतियों ) से साफ कर देने का विचार रख कर एकत्र हुए सभी महीभृतों ( राजाओं ) को प्रोत्साहित कर रहा था, जिसके आगे-आगे जा रहे ऐसे दण्डधारी राजपुरुषों द्वारा इधर-उधर लोगों की भीड़ हटाई जा रही थी जो सूर्य के आगे-आगे जा रही आलोक ( प्रकाश ) करने वाली सहस्र संख्यक किरणों की तरह आलोक ( जय, जीव, देव ) करते हुए सहस्रों की संख्या में थे, जो कर्तव्य पालन की दक्षता में जल्दी-जल्दी पैर रखते हुए व्यवस्था स्थापित करने में कठोर थे, जो भय से भागती हुई लोगों की भीड़-भाड़ से ढकी दसों दिशायें ( लोगों द्वारा ) आश्रित करवा रहे थे, जो चल रहे पताका-समूह द्वारा रुकी हुई गति वाले पवन को भी मानो अनुशासन में रख रहे थे, जो जल्दी-जल्दी पड़ रहे चरणों से उठी धूलियों के समूह से तिरस्कृत ( आच्छादित ) सूर्य की किरणों को भी मानो हटा रहे थे, और सोने के बेतों की चमक से हटाये जा रहे दिन को भी मानो दूर कर रहे थे।

१. क्वचित् 'मज्जामपि' इति नास्ति

अवनमति च विनयनमितवपुषि भयचकितमनसि चलनशिथिलमणिकनकमुकुटकिरणनिकररुचिरशिरसि विलुलितकुसुमशेखररजसि राजचक्रे, प्रभामुचां चूडामणीनामवाञ्चस्तिर्यञ्च उदञ्चश्च चञ्चन्तो मरीचयश्चापराशय इव सुशकुनसम्पादनाय चेलुः। मेघायमानरेणुमेदुरं मन्दिरशिखण्डिन इव खमुड्डीयमानाः कोमलकल्पपादपपल्लववन्दनमालाकलापा इवाबध्यन्त दिग्द्वारेषु दिक्पालैः। प्रणम्यमानश्च नेत्रत्रिभागैश्च कटाक्षैश्च समप्रेक्षितैर्भ्रूवञ्चितैश्चार्थस्मितैश्च परिहासैश्च छेकालापैश्च कुशलप्रश्नैश्च प्रतिप्रणामैश्चोन्मत्तभ्रूवीक्षितैश्चाज्ञादानैश्चाक्रीणन्निव[2] मानमयान्प्राणान्प्रणयदानैः प्रवीराणां वीरो यथानुरूपं विबभाज राजकम्।

टीका-स्थापयद्भिः = व्यापारयद्भिः पवनमपि विनयं शिक्षयद्भिरित्यर्थः इवेत्युत्प्रेक्षायाम्, द्रुत०-द्रुतैः = सत्वरैः चरणैः उद्धतम्=उत्थितं यत् धूलिपटलं = रेणुसमूहः तेन अवधूतान् = तिरस्कृतान् अन्तरितानित्यर्थः दिनकरस्य = सूर्यस्य किरणान् अपि उत्सारयद्भिः = दूरीकुर्वद्भिः इवेत्युत्प्रेक्षायाम्, कनक०—कनकस्य = सुवर्णस्य वेत्रलतानां=लतासदृशप्रलम्बवेत्रदण्डानाम् आलोकेन दीप्त्या विक्षिप्यमाणम् = उत्सार्यमाणं दिनम् अपि दूरीकुर्वद्भिः इवेत्युत्प्रेक्षायाम् अर्थात् वेत्रलताभिः स्वप्रकाशेन दिनस्य प्रकाशः अन्धकारितः अत एव सोऽपि उत्सारित इव प्रतीयते स्म उपरि सर्वत्र अपिशब्दबलात् दण्डापूपिकन्यायेन अर्थापत्त्यलङ्कारोऽपि बोध्यः दण्डिभिः = दण्डधारिभिः राजपुरुषैः समुत्सार्यमाणः = दूरीक्रियमाणः जनानां = लोकानां समूहः यस्मात् तथाभूतः नरपतिः = हर्षवर्धनः निर्जगाम = निःसृतः।

विनयेन = नम्रतया नमितं = नीचैः कृतं वपुः = शरीरं येन तस्मिन्, भयेन चकितं = त्रस्तं मनः यस्य तस्मिन् चलनेन = गमनेन शिथिलाः = श्लथाः मणयः = रत्नानि येषां तानि यानि कनकमुकुटानि = स्वर्णकिरीटानि तेषां किरणानां निकरेण = समूहेन रुचिरं = दीप्यमानं शिरः यस्य तेन, विलुलितं = विगलितमित्यर्थः शेखरस्य = शिरोमालायाः रजः = परागः यस्य तस्मिन् राजचक्रे = नृपमण्डले अवनमति = प्रणमति सतीति भावसप्तमी, अत्र 'अवनमति' इत्यारभ्य 'कुसुमपर्यन्ताः सर्वेपि वर्णाः लघव इति ज्ञेयम्, प्रभां = कान्तिं मुञ्चन्ति = त्यजन्ति निस्सारयन्तीत्यर्थः तयोक्तानाम् चूडामणीनां = शिरोरत्नानाम् अवाञ्चः = अधः पतन्तः, तिर्यञ्चः = तिर्यक् = पार्श्वभागेषु पतन्तः उदञ्चः = उपरि गच्छन्तश्च मरीचयः = रश्मयः चाषाणां = नीलकण्ठाख्यानां पक्षिविशेषाणां राशयः = समूहाः सुशकुनानां = शुभलक्षणानां सम्पादनाय = विधानाय चेलुः = चलितवन्तः, यात्रायां गच्छतः पुरुषस्य चाषपक्षिणां दर्शनं दक्षिणतश्च गमनं शुभ-शकुनमाहुः। मेघवत् आचरन् यः रेणुः = सेनोत्थापितधूलिः तेन मेदुरं = मेदितुं (स्थूलीभवितुं) शीलं यस्येति (मिद् + घुरच्) स्थूलीभूतं, भरितम् आवृतमित्यर्थः खम् = आकाशम् उड्डीयमानाः = उद्गच्छन्तः मन्दिरस्य = भवनस्य शिखण्डिनः = मयूरा इवेत्युपमायाम् खम् उड्डीयमानाः मरीचयः इति पूर्वतोऽनुवृत्तम्, कोमलानां कल्पपादपस्य = कल्पवृक्षस्य पल्लवानां = किसलयानां वन्दनमालानां = मङ्गलस्रजाम् [ 'मङ्गलस्रक् तोरणोर्ध्वे भवेद् वन्दनमालिका' इति क्षीरस्वामी ] कलापाः = समूहाः इवेत्युत्प्रेक्षायां दिग्द्वारेषु = दिशां द्वारेषु दिक्पालैः = दिगीशैः अबध्यन्त = आबद्धाः अभवन्। प्रणम्यमानः = राजभिः नमस्क्रियमाणः कांश्चित् नृपान् नेत्रस्य त्रिभागैः = त्रिभागोन्मीलितनयनवीक्षणैरित्यर्थः कांश्चित् इति सर्वत्र योज्यम्, कटाक्षैः

हिन्दी-विनय से शरीर झुकाये, भय के कारण मन में चकित हुए, चलने से शिथिल हुई मणियों वाले मुकुटों की किरणावली द्वारा सिरों से चमकते हुए और कुसुमों के शेखरों से पराग गिराये राजमंडल के प्रणाम करने पर प्रभा बिखेरती चूड़ामणियों की नीचे, अगल-बगल में और ऊपर पड़ती हुई किरणें नीलकण्ठ-पक्षियों के समूह की तरह शुभ शकुन करने के लिए चल पड़ीं। मेघ-सदृश धूलि से भरे आकाश में उड़ने वाले भवन के मयूरों की तरह आकाश में उड़ रही शिखामणियों की किरणें ऐसी लग रही थीं मानो दिशाओं के द्वारों पर दिक्पालों द्वारा कल्पवृक्ष के कोमल पल्लवों की वदनवारों की पंक्तियाँ बाँध दी गई हों। राजाओं द्वारा प्रणाम किया जाता हुआ वीर हर्षवर्धन (किन्हीं को) नेत्र के तीन भागों, (किन्हीं को) भ्रू-सचालनों, (किन्हीं को) वैदग्ध्यपूर्ण उक्तियों, (किन्हीं को) कुशल प्रश्नों, (किन्हीं को) प्रणाम करने पर प्रणामों, (किन्हीं को) मदभरे भ्रूभंग सहित अवलोकनों, और (किन्हीं को) आज्ञा प्रदानों के रूप में प्रणय (अनुराग, अनुग्रह) के दानों से उन प्रकांड वीरों के (अपने प्रति किये जा रहे) सम्मान-रूपी प्राणों को खरीदता हुआ-जैसा राजमंडल को यथायोग्य विभक्त कर बैठा।

१. 'चन्दनमाला' २. ०'क्रीडन्निव'

अथ प्रस्थिते राजनि कलकलत्रस्तदिङ्नागशूत्काररव इवेतस्ततस्तस्तार तारतरस्तूर्याणां प्रतिध्वनिराशातटेषु। दिग्गजेभ्यः प्रकुपितानां त्रिप्रस्रुतानां करिणां मदप्रस्रवणवीथीभिरलिकुलकालीभिः कालिन्दीवेणिकासहस्राणीव सस्यन्दिरे। सिन्दूररेणुराशिभिररुणायमानबिम्बे रवावस्तमयसमयं शशङ्किरे शकुनयः। करिणां षट्पदकोलाहलमांसलैः कर्णतालनिस्वनैस्तिरोदधिरे दुन्दुभिध्वनयः। दोधूयमानश्च सचराचरमाचचाम चामरसङ्घातो विश्वम्। अश्वीयश्वासनिक्षिप्तैः शिशिवन्दे सिन्धुवारदामशुचिभिर्निरन्तरमन्तरिक्षं फेनपिण्डैः। पिण्डीभूततगरस्तबकपाण्डुराणि वपुरिव परस्परसङ्घट्टनष्टाष्टदिशं[1] दिवसमुच्चचामीकर-

---

टीका—=अपाङ्गदर्शनैः समग्रेक्षितैः=पूर्णदर्शनैः अर्धप्रेक्षितैः=अर्धवीक्षितैः भ्रूवञ्चितैः=भ्रूचलितैः इति शङ्करः (भावे क्तः) अर्धस्मितैः=अर्धमन्दहसितैः परिहासैः=नर्मभि छेकालापैः छेकः=विदग्धः [ 'छेको विदग्धे' इति क्षीरस्वामी ] तस्य आलापैः वैदग्ध्यपूर्णोक्तिभिः कुशलस्य=क्षेमस्य प्रश्नैः प्रतिप्रणामैः=प्रणामस्योत्तरे प्रणामैः उन्मत्तैः=मदपूर्णैः भ्रूभङ्गसहितवीक्षितैरित्यर्थः आज्ञादानैः=आदेशदानैश्च प्रणयदानैः=अनुग्रहदानैः प्रवीराणां=प्रकृष्टवीराणां मानमयान् =राज्ञः हर्षवर्धनस्य आदररूपान् प्राणान्=आत्मानमित्यर्थः आक्रीणन्=क्रीतान् कुर्वन् इवेत्युत्प्रेक्षायाम् अर्थात् राजानो हर्षवर्धनस्य आदर-संमानं कुर्वन्ति स्म आदर-संमानरूपाः तेषां प्राणाः, जीवितम् हृदयमिति यावत् आसीत्, तेभ्यः दर्शनालापादिरूपेण स्वं प्रणयं ( अनुरागम्, अनुग्रहम् ) दत्त्वा स तेषां प्राणान् क्रीतवान्, वीरः=हर्षवर्धनः अथवा प्रवीराणां=प्रकृष्ट वीराणां मध्ये वीरः हर्षः इति योज्यम्, राजकं=राजन्य राजमंडलमिति यावत् यथानुरूपं=यथायोग्यं विबभाज =विभक्तवान् व्यूहरूपे स्थापितवानित्यर्थः।

राजनि=हर्षवर्धने प्रस्थिते=प्रस्थानं कृतवति कलकलेन=सेनाकोलाहलेन त्रस्ताः=भीताः ये दिङ्नागाः=दिग्गजाः तेषां शूत्कारस्य=भयेन 'शूत्' इत्यस्य रवः=शब्दः इवेत्युत्प्रेक्षायाम् तूर्याणां=वाद्यविशेषाणां तारतरः=अतिशयेन तारः= तीव्रः प्रतिध्वनिः=प्रतिशब्दः आशानां=दिशां तटेषु=प्रान्तेषु इतस्ततः तस्तार=विसृतोऽभवत्। दिग्गजेभ्यः प्रकुपितानाम् [ अत्र। क्रुधद्रुहेत्यादिना चतुर्थी ] क्रुद्धानाम् त्रिभिः स्थानैः—गण्डशुण्डनेत्रैः प्रस्रुतानां=कृतमदजलप्रस्रवणानां करिणां= हस्तिनाम अलीनां=भ्रमराणां कुलैः=पंक्तिभिः कालीभिः=कृष्णवर्णाभिः मदस्य=दानजलस्य प्रस्रवणस्य=प्रवाहस्य वीथिभिः=पदवीभिः मार्गैरिति यावत्, कालिन्द्याः=यमुनायाः वेणिकानां=प्रवाहाणां सहस्राणि इवेत्युत्प्रेक्षायाम् सस्यन्दिरे=प्रसुतानि। सिन्दू० सिन्दूरस्य=रञ्जनद्रव्यविशेषस्य रेणूनां=धूलीनां राशिभिः=समूहैः अरुणायमानं=लोहितायमानं बिम्बं=मण्डलं यस्य तस्मिन् रवौ=सूर्ये अस्तमयस्य=अस्तगमनस्य समयं शशङ्किरे=शङ्कितवन्तः शकुनयः= चक्रवाकाः इत्यर्थः होलिकायामिव माङ्गलिकेषु उत्सवेष्वपि रञ्जकद्रव्यं विकीर्यंते, मांगलिकविजययात्रायां सिन्दूरराशिविकिरणेन सूर्यबिम्बं रक्तमभूत् अतः चक्रवाकानां भ्रान्तिर्जाता सूर्योऽस्तं गच्छतीति अस्तंगमने तस्य रक्तत्वात्, अत्र भ्रान्तिमान् अलंकारः। करिणां० करिणां = हस्तिनां षट्पदानां = भ्रमराणां कोलाहलेन = स्वनेन मांसलैः अतिशयेन मांसमस्यातीति [ मांस + लच् ] मांसलः तैः वृद्धिगतैरित्यर्थः, कर्णयोःतालस्य = आस्फालनस्य निस्वनैः=शब्दैः दुन्दुभीनां=पटहानां ध्वनयः शब्दाः तिरोदधिरे=तिरोहिता बभूवुः। दोधूय०— दोधूयमानः=पुनः पुनः धूयमानः ( यङन्तरूपम् ) चामराणां=बालव्यजनानां संघातः=समूहः चरैः=जंगमैः अचरैः= स्थावरैश्च सहितं विश्वं=जगत् आचचाम=आचान्तवान् आच्छादितवानित्यर्थः। अश्वीय०—अश्वानां समूहः अश्वीयं तस्य श्वासैः=उच्छ्वासवायुभिः निक्षिप्तैः=निस्सारितैः सिन्धुवारस्य=श्वेतपुष्पविशेषस्य दामवत्=मालावत् शुचिभिः=

हिन्दी—इसके बाद राजा हर्षवर्धन के प्रस्थान करने पर कोलाहल से भयभीत दिग्गजों का शूत्कार-शब्द-जैसा तूरियों का बड़ा भारी प्राणशब्द दिशाओं के प्रान्तभागों में फैल गया। दिग्गजों पर क्रुद्ध हुए हाथियों के तीन स्थानों (कनपटी, सूंड और नेत्र) से बहती हुई, भ्रमर समूहों से काली बनी मदजल प्रवाह की वीथियों से ऐसा लगता था मानों यमुना की हजारों धारायें बह चली हों। सिन्दूर रज-समूह से सूर्यमंडल के लाल हो जाने पर चकवे-चकवियों को सांझ का भ्रम हो पड़ता था। भ्रमरों के हल्ले से बढ़े हुए हाथियों के कानों के फड़फड़ाने के शब्द से नगाड़ों की आवाजें दब गई। डुलाया जा रहा चमरों का समूह स्थावर-जंगम सहित विश्व को ढक बैठा। अश्व-समूह के निश्वासों से निकले हुए, सिन्धुवार-पुष्पों की तरह श्वेत फेन के टुकड़ों से माला की तरह आकाश कहीं भी श्वेत हुए बिना नहीं रहा। ढेरों में इकट्ठे लगे तगर के फूलों के गुच्छों के समान सफेद, ऊपर उठे सोने के डंडों वाले छत्रों के समूह परस्पर सटे रहने से

1. 'दिशि'

दण्डान्यातपत्रवनानि । रजोरजनीनिमीलितोऽपि मुकुटमणिशिलावलीबालातपेन विचकास वासरः । राजतैर्हिरण्मयैश्च मण्डनकभाण्डमण्डलैर्ह्लादमानैर्हरितीकृताः[1] परिह्लादा हरितो बधिरतां दधुः । अरिप्रतापानलनिर्मूलनायेव मदोष्मशीकरैः शिशीकिरे[2] करिणः ककुभां चक्रम् । चक्षुषामुन्मेषं मुमुषुस्तडिच्चञ्चलानि चूडामणीनामर्चींषि । स्वयमपि विसिष्मिये बलानां भूपालः सर्वतो विक्षिप्तचक्षुश्चाद्राक्षीदावासस्थानसकाशात्प्रतिष्ठमानं स्कन्धावारम्, अधोक्षजकुक्षेरिव युगादौ निष्पतन्तं जीवलोकम्, अम्भोनिधिमिव कुम्भभुवो वदनात्प्लावितभुवनमुद्वमन्तम्, अर्जुनबाहुदण्डसहस्रसंपिण्डितोन्मुक्तमिव सहस्रधा

---

टीका–श्वेतैः फेन-पिण्डैः = फेनसमूहैः निरन्तरं = निरवकाशम्, अन्तरिक्षं = गगनं शिश्विन्दे (√श्विन्द + लिट) श्वेतमभवत् । पिण्डी०–पिण्डीभूतानि = संधीभूतानि यानि तगराणि = पुष्पविशेषाः तेषां स्तवकवत् = गुच्छवत् पाण्डुराणि = श्वेतानि उच्चाः चामीकरस्य = सुवर्णस्य दण्डाः येषां तानि आतपत्राणां = छत्राणां वनानि = समूहाः परस्परम् = अन्योन्यं सङ्घट्टेन = संघर्षेण सम्मेलनेनेत्यर्थः नष्टाः = अदर्शनं गताः लुप्ताः इत्यर्थः अष्टदिशः यस्मिन् तथाभूतं दिवसं पपुः = पीतवन्ति इवेत्युत्प्रेक्षायाम्, अर्थात् आतपत्राणि इत्यधिकसंख्यायामासन् यत्तैः दिशायाः कोऽपि भागः अनावृतो नासीत् आतपत्राणां श्वेतिम्ना स्वर्ण-दण्डानां पीत-च्छटया च दिवसालोकः विलुप्तः । रजो० – रजः = धूलिः एव रजनी = रात्रिः तया निमीलितः = अन्धीकृतः अन्धकारीकृतः इति यावत् वासरः = दिवसः मुकुटेषु = राज्ञां किरीटेषु मणिशिलानां = रत्नोत्पलानाम् आवलीनां = राजीनां बालातपेन = प्रातःकालीननवालोकेन विचकास = अदीप्यत, अत्र रूपकम् । राजतैः० – ह्लादमानैः = शब्दायमानैः राजतैः = रौप्यमयैः हिरण्मयैः = सुवर्णमयैश्च मण्डनकानि = अलंकाररूपाणि यानि भाण्डानि = अश्वानाम् आभरणानि [ स्याद् भाण्डमश्वाभरणे' इत्यमरः ] तेषां मण्डलैः = समूहैः हरितीकृताः = हरितवर्णीकृताः परिह्लादाः = परितः = सर्वतः ह्लादः = शब्दः यासां ताः हरितः = दिशाः बधिरतां = श्रवणशक्तिराहित्यं दधुः = धृतवन्तः । अरि० – अरीणां = शत्रूणां प्रतापः = तेजः एव अनलः = अग्निः तस्य निर्मूलनाय = उपशमनाय निर्वापणायेति यावत् इवेत्युत्प्रेक्षायाम् करिणः = हस्तिनः मदस्य = मदजलस्य ऊष्मणः = तापस्य शीकरैः = उष्णमदजलकणैरित्यर्थः ककुभां = दिशां चक्रं = समूहं शिशीकिरे ( 'शीक = सेचने + लिट् ) = सिक्तवन्तः । तडितवत् = विद्युद्वत् चञ्चलानि = चपलानि चूडामणीनां = शिरोरत्नानाम् अर्चींषि = रश्मयः चक्षुषां = नयनानाम् उन्मेषम् = उन्मीलनं मुमुषुः = मुषितवन्ति अहरन्निति यावत् चूडामणीनां जाज्वल्यमाना प्रभा नेत्रप्रतिघातिनी आसीदितिभावः । भूपालः = हर्षवर्धनः स्वयमपि = आत्मनापि बलानां = सैन्यानां अत्र बलैः इत्यस्य स्थाने सम्बन्धविवक्षया षष्ठी बोध्या, विसिष्मिये = विस्मितोऽभवत्, 'तस्तार' इत्यारभ्य कविः विसिष्मिये' इत्यन्तं लिट्लकारमेव सर्वत्र प्रयुक्तवान् इति ध्येयम् । सर्वतः = परितः विक्षिप्तम् = प्रेरित चक्षुः येन सः

**टिप्पणी**—'कुम्भभुवो'—पुराणों के अनुसार एक बार उर्वशी को देखकर मित्रावरुणों का वीर्य स्खलन होकर अंशतः कुम्भ में और अंशतः समुद्र में पड़ गया था । कुम्भ वाले से उत्पन्न होने के कारण व्यक्ति के कुम्भभू, कुम्भज, कुम्भयोनि नाम पड़े । ये अगस्त्य ऋषि हुए । एक बार देवासुर संग्राम में इन्होंने इन्द्र की सहायता की । कालेय जाति के असुर देवताओं को मारकर समुद्र में छिप जाया करते थे अतः अगस्त्य जी उनके विनाश के लिए सागर ही पी गए थे । अर्जुन० इसके सम्बन्ध में शङ्कर लिखता है--"पूर्वं कार्तवीर्येणान्तःपुरैः सह रेवा-तीरे विहरता तत्स्रोतो भुजसहस्रेणो-भयो वृत्वा त्यक्तमभूत्' ।

**हिन्दी**–आठों दिशाओं को गायब किये हुए मानो दिन को पी गए । धूलिरूपी रात्रि के कारण अंधेरा बना हुआ दिवस ( राजाओं के ) मुकुटों की रत्नोपल-राजियों के अरुणोदय से चमक उठा था । घोड़ों के झनझनाते हुए चांदी सोने की साज सजावटों से हरी बनी और चारों तरफ झनझनाहटों से भरी हुई दिशायें बहरी हो गई । शत्रुओं के प्रतापानल को बुझा देने के लिए—जैसे हाथियों ने मदजल के उष्ण कणों से दिशाओं का समूह सींच डाला । बिजली की तरह चूड़ामणियों की छटायें ( चकाचौंध से ) आंखें नहीं खोलने देती थीं, स्वयं भी राजा को सेनाओं से आश्चर्य हुआ और दृष्टि डाले हुए उसने देखा कि निवास-स्थल के समीप से स्कन्धावार ( सैन्यदल ) इस तरह निकल रहा है– जैसे कि युग के प्रारम्भ में विष्णु की कुक्षि से प्राणि-जगत् निकला था । ( अथवा ) अगस्त्य के मुख से भुवन को प्लावित किये हुए समुद्र बाहर आया था ( अथवा ) कार्तवीर्य के एक हजार भुजदण्डों से ( पहले ) रोका और ( पीछे ) छोड़ा हुआ

---

१. 'कृतापराह्लादा' २. 'शिशेकिरे'

प्रवर्तमानं प्रवाहं नर्मदायाः। 'प्रसर तात। भाव, किं विलम्बसे। स्वङ्गति[1] तुरङ्गमः। भद्र, भग्नचरण इव सम्वरसि यावदमी पुरःसराः सरभसमुपरि पतन्ति। वाहयसि किमुष्ट्रम्। न पश्यसि निर्दय निःशूक शिशुं शयानम्। वत्स रामिल, रजसि यथा न नश्यति[2] तथा समीपे भव। किं न पश्यसि गलति सक्तुप्रसेवकः। किमेवमित्वर त्वरसे। सौरभेयसरणिमपहाय हयमध्यं धावसि धीवरि। विशसि मन्तुकामा मातङ्गि मातङ्गमार्गम्। अङ्ग, गलति तिरश्चीना चणकगोणी गणयसि न मामारटन्तम्। अवटम[3]तटेनावतरसि। सुखमास्स्व स्वैरिणि सौवीरककुम्भो भग्नः। मन्थरक, खादिष्यसि गतः सन्निक्षुम्। उक्षाणं प्रसारय[4]। कियचिरं चिनोषि चेट बदराणि दूरं गन्तव्यम्। किमद्यैव विद्रासि द्रोणक, द्राघीयसी दण्डयात्रा।

टीका–आवासस्थानस्य = सन्निवेशस्थलस्य सकाशात् = समीपात् प्रतिष्ठमानं = प्रस्थानं कुर्वन्तं स्कन्धावारं = कटकं सैन्यसमूहमित्यर्थः अधोक्षजः = विष्णुः [ 'अधो न क्षीयते जातु यस्मात्तस्मादधोक्षजः' इति महाभारतम् ] तस्य कुक्षेः = उदरात् इवेत्युपमायाम् युगादौ = कल्पादौ निष्पतन्तं = निर्गच्छन्तम् जीवलोकं = प्राणिजातम्, कुम्भभुवः = कुम्भजस्य अगस्त्यस्येत्यर्थः वदनात् = मुखात् उद्भवन्तं = निस्सरन्तम्, प्लावितम् = आपूरितं भुवनं = जगत् येन तं अम्भोनिधिं = जलधिम् इवेत्युपमायाम् अर्जुनस्य = सहस्रार्जुन-कार्तवीर्यस्य बाहुदण्डानां = दण्डसदृशबाहूनां सहस्रेण आदौ सम्पिण्डितं = राशीकृतं रुद्धमित्यर्थः पश्चात् उन्मुक्तं = त्यक्तं सहस्रधा = सहस्रप्रकारैः प्रवर्तमानं = गच्छन्तमित्यर्थः नर्मदायाः प्रवाहम् इवेत्युपमायाम्। तात ! = प्रिय प्रसर = गच्छ। भाव ! = मान्य ! स्वङ्गति = चलति तुरङ्गमः = अश्वः। भग्नौ = खण्डितौ चरणौ यस्य सः पुरःसराः = अग्रगामिनः-सरभसं = सवेगं यथा स्यात्तथा। वाहयसि = चालयसि। निःशूक ! = निर्गतं शूकं = दया यस्मात् [ 'शूकोऽस्त्री शुङ्ग-दययोः' इति मेदिनी ] रजसि = धूलौ नश्यसि = अदृश्यो भवसि। सक्तूनां प्रसेवकः = स्यूतः धान्यादिभरणार्थं कृतं वस्त्रभाण्डमित्यर्थः ( 'स्यूत-प्रसेवौ' इत्यमरः ]। इत्वर ! = एति = गच्छतीति [ इण् + क्वरप् ] तत्सम्बुद्धौ गन्तः ! पथिक ! इति यावत् सौरभेयाणां = वृषभाणां सरणिं = मार्गम् अपहाय = त्यक्त्वा हयानाम् = अश्वानां मध्यं = मध्ये इत्यर्थः धीवरि ! = धीवरपत्नि ! मन्तुकामो यस्याः मातङ्गि = करिणि अथवा चण्डालि ! मातङ्गानां = करिणां मार्गं विशसि = प्रविशसि ? अङ्ग इति सम्बोधने, तिरश्चीना = वक्रा चणकानां गोणी = शणनिर्मितधान्यादिवहनार्थम् आधारविशेषः गलति = पतति, आरटन्तम् = पौनःपुन्येन कथयन्तं मां न गणयसि = अवधत्से आद्रियसे इति यावत्। अतटेन = भृगुणा [ 'प्रपातस्त्वतटो भृगुः' इत्यमरः ] शङ्करस्तु 'अतटेन अमार्गेण' इत्याह, अवटं = गर्तम् ( 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः ) अवतरसि = पतसीत्यर्थः। स्वैरिणि ! = स्वेच्छाचारिणि ! सौवीरस्य = सुवीरेषु प्रायो भवं सौवीरकम् अवन्तिसोमकम् अम्लं यवकाञ्जिकमित्यर्थः तस्य कुम्भः = घटः भग्नः = स्फुटितः, अतः सुखं यथा स्यात्तथा आस्स्व = तिष्ठ। मन्थरक ! = मन्दमन्द-गामिन्। गतः = गन्तव्यं स्थानं प्राप्तः एव सन् इक्षुदण्डं पश्चात् खादिष्यसि, इदानीं सत्वरम् उक्षाणं = वृषभं प्रसारय = अग्रे वर्धयेत्यन्वयः साधुः प्रतीयते। चिनोषि = एकत्र करोषि बदराणि = बदरीफलानि। विद्रासि = धावसि, दण्डयात्रा = सैनिकाभियानं द्राघीयसी = अतिशयेन दीर्घा अस्तीति शेषः, अर्थात् प्रथमदिवसे एव किं धावसि, यात्रा दीर्घास्ति, पुनः धाविष्यसि।

हिन्दी–नर्मदा का प्रवाह हजारों धाराओं में बहा था, जिस (छावनी) में 'प्रिय आगे चल'। 'मान्य क्यों देर कर रहे हो ?' घोड़ा सरपट मार रहा है" भले मानुष, ऐसा चल रहे हो जैसे कि पाँव टूटे हुए हों, इधर देखो तो ये आगे जाने वाले हमारे ऊपर गिर पड़ रहे हैं'। 'ऊँट क्यों' हाँके जा रहा है ? 'अरे कठोर निर्दयी ! नहीं देखता कि बच्चा सोया पड़ा है ?' बेटा रामिल, पास-पास में रह, कहीं धूल में गायब न हो बैठना, अरे नहीं देख रहा है कि थैले से सत्तू गिर रहा है ?' 'ओ जाने वाले इतनी जल्दी क्या पड़ी हुई है ?' 'अरी धीवरी, तू तो बैलों का मार्ग छोड़कर घोड़ों के बीच दौड़े जा रही है'। 'ओ हथिनी, तू भी हाथियों के मार्ग में जाना चाहती हुई ( उधर ही ) घुसी जा रही है'। 'अब टेढ़ी-मेढ़ी पड़ी चनों की गूण गिर रही है, कभी से चिल्ला रहा हूँ मेरी पर्वाह ही नहीं करती चट्टान से खड्ड में उतर रहा है'। अरी स्वेच्छाचारिणी काँजी का घड़ा फूट गया है, मौज कर। मन्थरक ( पड़ाव ) पर पहुँचकर गन्ना खा लेना, बैल आगे बढ़ा'। 'अबे, टहलवे, कब तक बटोरता रहेगा, दूर जाना है'। 'द्रोणक, क्यों आज ही दौड़े जा रहा है ? सैनिक

१. 'लङ्घति' २. 'नश्यसि न पश्यसि' 'नश्यासि नो पयसि' ३. 'अवटेन' ४. 'प्रसादय'

विनैकेन निष्ठुरकेण निष्क्रेयमस्माकम् । अग्रतः पन्थाः स्थपुटकः[1] । स्थावरक, यया न भनक्षि फाणितस्थालीम् । गरीयान्गण्डक तण्डुलभारको न निर्वहति दम्यः । दासक, माषीणा[2]दमुतो द्राग्दात्रेण मुखघासपूलकं लुनीहि । को जानाति यवसगतं गतानाम् । धव, वारय बलीवर्दान्, वाहीकरक्षितं क्षेत्रमिदम् । लम्बिता शकटी, शाक्वरं धुरन्धरं धुरि धवलं नियुङ्क्ष्व । यक्षपालित, प्रमदाः पिनक्षि । अक्षिणी किं ते स्फुटिते । हत हस्ति[3]पक रे, दीव्यसि करिकरदण्डे । समद, संमर्दकर्दमे स्खलसि । भ्रातर्भाव विधुर[4]बन्धो, उद्धर पङ्कादनड्वाहम् । इत एहि माणवक, घनेभघटासङ्घट्टसङ्कटे नास्ति निस्सरण[5]-सरणिः ।' इत्येवमाविप्रवर्तमानानेकसंलापैः क्वचित्स्वेच्छामृदितोद्दामसस्यघासविघससुखसम्पन्नान्नपुष्टैः केलिकलैः किलकिलाय-

टीका-निष्ठुरेण = निर्दयेन एकेन = गौडेन्द्रेणेत्यर्थः विना तं विहाय अस्माकं निष्क्रेयम् = ऋणमुक्तिः नैवेति काकुः । पन्थाः = मार्गः स्थपुटकः नतोन्नतः (इति क्षीरस्वामी) भनक्षि = भग्नां करिष्यसि, फाणितस्य = मत्स्यण्डयाः [ 'मत्स्यण्डी फाणितम्' इत्यमरः ] स्थाली = पात्रम् हे गण्डक ! तण्डुलानां = निस्तुषधान्यानां भारः एव भारकः गरीयान् अतिशयेन गुरुरस्तीति शेषः, दम्यः = वृषभः न निर्वहति नेतुं न शक्नोतीत्यर्थः । दासक ! दास एव दासक ! अमुतः = अमुष्मात् माषीणात् = माषाणां भवनं क्षेत्रम् ( इति माष + खञ् ) तस्मात् माषक्षेत्रादित्यर्थः दात्रेण = लवित्रेण [ 'दात्रं लवित्रम्' इत्यमरः ] मुखे घासः [ 'किञ्चिन्मात्रं बुभुक्षानिवृत्तये घासो मुखघासः' इति शङ्करः ] तस्य पूलकं = गुच्छं द्राक् = सत्वरं लुनीहि = छिन्दि । गतानां = यातानाम् अस्माकमिति शेषः अस्मासु दूरं गतेष्वित्यर्थः यवसगतं = यवसविषये को जानातीति ? न कोपीत्यर्थः अर्थात् क्षेत्रस्वामिन कृषिफलं किं भवतीति को वेत्ति । धव ! मुस्वष ! [ 'धवः पुमान् नरे धूर्ते पत्यौ वृक्षान्तरेपि च' इति मेदिनी] बलीवर्दान् = वृषभान् वारय = रुन्धि वाहीकैः = जर्त्तिकैः जाटैः इति भाषायाम् 'वाहीकः कष्ठकः परिपालक इत्यन्ये गोरक्षक इति चान्ये' इति शङ्करः ] रक्षितम् अवेक्षितमित्यर्थः । शकटी = लघुशकटं लम्बिताः = विलम्बवती, चिरायति, मन्दं मन्दं चलतीत्यर्थः शाक्वरं = शक्नोतीति शाक्वरं शूरं तरुणं वेति शङ्करः धुरं = युगं धरतीति तथोक्तम् धवलं = महोक्षं धुरि = युगे नियुङ्क्ष्व = नियोजय । यक्षपालित ! यक्षैः पालित = यक्षाविष्ट, भूताविष्ट, मत्त इति यावत् प्रमदाः = कामिनीः पिनक्षि = दलयसि । अक्षिणी = नयने स्फुटिते = भग्ने ? हत ! हतक ! दग्ध ! हस्तिपक ! करिणः = हस्तिनः, करे दण्डे इवेत्युपमि० दीव्यसि = क्रीडसि । समद ! मदयुक्त हस्तिन् इति शेषः संमर्दात् = जनसंमर्दात्, संकुलात् कारणादित्यर्थः जाते कर्दमः स्खलसि = पतसि । भाव = मान्य ! भ्रातः विधुराणां = दुःखितानां बन्धो = मित्र ! अनड्वाहं = बलीवर्दम् पंकात् = कर्दमात् उद्धर = विमोचय । माणवक ! वटो ! घना निविडा या इभानां घटा = समूहः तस्याः सङ्घट्टस्य = सम्मेलनस्य संकटे = संबाधे

**टिप्पणी–** निष्क्रेयम्—निष्क्रय मूल्य चुकाने को कहते हैं किन्तु यहाँ विना न शब्द रखे अथवा प्रश्न रूप में काकु बनाये अर्थ ठीक नहीं बैठ रहा है। अतएव म. म. काणे का सुझाव है कि यहाँ 'निष्क्रेयम्' के स्थान में 'निष्ठेयम्' पाठ होना चाहिए । तब अर्थ यह होगा—उस निष्ठुर के सिवा हम सब की यह निष्ठा ( विश्वास ) है कि अभियान लंबा चलेगा । वह समक्ष रहा होगा कि हम हार खाकर वापस चले जायेंगे ।

**हिन्दी–**अभियान लंबा है' । 'एक निष्ठुर ( गौड़ेन्द्र ) को छोड़ कर क्या हमारा ऋण (बदला) चुकाया जा सकता है ?' आगे से रास्ता सम-विषम है, स्थावरक ! कहीं कच्ची खांड का भाण्डा न फोड़ बैठना' । 'गण्डक, चावलों का बोझा बहुत भारी है, बैल नहीं ले जा सकता' । ओ टहलुवे, इस उड़द के खेत में से दरान्ती से मुँह में रखने के लिये शीघ्र घास की एक पूली तो काट ले, हमारे चले जाने पर खेती का क्या होता है—कौन जाने' 'ओ आदमी, बैलों को रोक, जाट इस खेत की रखवाली कर रहे हैं । 'गड्डा पिछड़ रहा है, जुआ खींचने वाला तगड़ा बैल आगे लगा' । ओ भूतने ! प्रमदाओं को पीसे जा रहा है, क्या तेरी आँखें फूट गई हैं ? अरे मुए महावत, हाथी के सुण्डादंड से खेल रहा है' ? ओ मतवाले हाथी भीड़-भाड़ के कारण हुए कीचड़ में तेरा पैर फिसला जा रहा है' । दुखितों के मित्र मान्य भाई साहब बैल को कीचड़ से उबारिए' । ओ छोकरे, इधर से जा हाथियों के इस घने जमघट में से निकलने का रास्ता नहीं है । इत्यादि अनेक प्रकार की बातें चल रही थीं, जो कहीं स्वेच्छा से कुचले बहुत सा धान्य घास में से खाकर बचे, सहज ही प्राप्त अन्नों से पुष्ट हुए, बड़े साहसी, खलों में चिल्लाते और किलकारियाँ मारते हुए गजपालकों, नवयुवकों, अल्हड़ों

१. स्थपुटक २. 'माषीणममुतो' ३. 'हस्तिपको नेदीयसी करीकरदण्डे समदः' ४. 'विधुरे बन्धुरुद्धर' ५. 'निस्सरणम्'

मानैर्मेण्ठवण्ठवठरलम्बनलेशिकलुण्ठकचेटचाट चण्डालमण्डलैराण्डीरैः स्तूयमानम्, क्वचिदसहायैः क्लेशार्जितकुग्रामकुटुम्बिसम्पादितसीदत्सौरभेयशम्बलसंवाहनायासावेगागतसंयोगैः स्वयंगृहीतगृहोपस्करणैः 'इयमेका कथंचिद्दण्डयात्रा यातु। यातु पातालतलम्। तृष्णाभूतेरभवनिः भवतु। शिवं सेवा करोतु। स्वस्ति सर्वदुःखकूटाय कटकाय' इति दुर्विधकुलपुत्रकैर्निन्द्यमानम्, क्वचिदतितीक्ष्णसलिलस्रोतःपातिनौगतैरिव प्रथितैरिव पङ्क्तिभूतैर्जनैरतिद्रुतं द्रवद्भिः कृष्णकठिनस्कन्धगुरुलगुडगृहीतसौवर्णपादपीठीपर्यङ्क²करङ्ककलशपतद्ग्रहाव³ग्राहैः प्रत्यासन्नपार्थिवोपकरणग्रहणगर्वदुर्गं सर्वमेव बहिः कारयद्भिर्भूपतिभृतकभारिकर्महानसोपकरणवाहिभिश्च वराहवध्रवाध्रीणसैर्लम्बमानहरिणघटुकचटकजूटजटिलैः शिशुशशकशाकपत्रवेत्राग्रप्रसंग्रहसंग्रा-

---

टीका—निस्सरणस्य वहिर्निर्गमनस्य सरणिः=मार्गः नास्ति इति एवम् आदिर्येषां तथाभूताः प्रवर्तमानाः=प्रचलन्तः अनेके संलापाः=वार्तालापाः यस्मिन् तथाभूतम्, स्कन्धावारम्, इतः परम् सर्वाणि स्कन्धावारस्यैव विशेषणानि। क्वचित्०—स्वेच्छया=स्वच्छन्दं मृदितानि=क्षुण्णानि उद्दामानि=प्रभूतानि सस्यं धान्यादि च घासश्च तयोः विघसात्=भोजनशेषात् [ 'अमृतं विघसो यज्ञशेष-भोजशेषयोः' इत्यमरः ] सुखेन=सौकर्येण सम्पन्नानि=प्राप्तानि यानि अन्नानि तैः पुष्टाः पोषं प्राप्ताः तैः, केलिषु=क्रीडासु कलैः=कोलाहलिभिः किलकिलायमानैः=किलकिलशब्दं कुर्वाणैः, मेण्ठ०—मेण्ठाः गजपालाश्च वण्ठाः=अकृतवाहाः तरुणाः ये दण्डमादाय हस्तिनां दर्पमापयन्ति इति शङ्करः कठराः=मूर्खाश्च लम्बनाः=गर्दभदासाः गर्दभवत् भारवाहिनो दासाः इति यावत् लेशिकाः=जनपरिचारकाश्च लुण्ठकाः=चौराश्च चेटाः=दासाश्च चाटाः [ शंकरानुसारेण अत्र 'शाटाः' इति पाठे धूर्ताश्च 'प्रतारकाः विश्वास्य ये परधनमपहरन्ति (मिताक्षरा) चाण्डालाः=अश्वपालाश्च तेषां मण्डलैः=समूहैः आण्डीरैः=साहसिकैः स्तूयमानम्=प्रशस्यमानम्। अत्र सर्वस्मिन्नपि संदर्भे बाणेन बहवो दुर्बोधाः कोशबाह्याश्च शब्दाः प्रयुक्ताः सन्ति, अत्र शंकरः एव शरणम्, असहायैः—क्वचित् असहायैः निराश्रयैः कुलपुत्रकैः इत्यनेन अन्वयः, क्लेशेन=दुःखेन कृच्छ्रेणेत्यर्थः अर्जिताः=प्राप्ताः कुग्रामाणां=कुत्सितग्रामाणां कुटुम्बिभिः=परिवारैः सम्पादिताः=दत्ताः ये सीदन्तः=क्षीयमाणाः दुर्बलाः इत्यर्थः सौरभेयाः=वृषभाः तैः शम्बलस्य=पाथेयस्य संवाहने=संप्रापणे यः आयासः=क्लेशः तेन यः आवेगः=मनःक्षोभः तेन आगतः=प्राप्तः संयोगः=एकत्रावस्थानं येषां तैः अर्थात् आयासेन क्षुब्धाः ते समवेताः भवन्ति स्म, स्वयं गृहीतानि=आत्मोपरि धृतानि गृहोपस्करणानि=गृहसामग्र्यः यैः तैः, कथंचित्=केनापि प्रकारेण दण्डयात्रा=सैनिकाभियानम् यातु=सम्पन्ना भवतु, [ अन्या दण्डयात्रा ] पातालं यातु=गच्छतु तृष्णायाः=गृध्नुतायाः लोभस्येति यावत् भूतिः=वैभवम् अतिशयः इत्यर्थः अभवनिः=न भवनं [ 'आक्रोशे नञ्यनिः' पा० ३।३।११२ ] 'नञि उपपदे अनिः स्यादाक्रोशे। आजीवनिस्ते शठ भूयात्' सि० कौ० ] समूलोच्छेदः इत्यर्थः भवतु=जायताम्। सेवा इयं राजभृतिः। शिवं=कल्याणं करोतु। सर्वेषां दुःखानां कूटाय=राशये कटकाय=स्कन्धावारस्य स्वस्ति अस्तु (स्वस्त्यर्थे चतुर्थी) इति दुर्विधैः=दरिद्रैः ('निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः' इत्यमरः) कुलागतैः=कुलपुत्रैः=कुलागतैः सेवकैः निन्द्यमानम्=गर्ह्यमाणम् अतिती०—अतितीक्ष्णम्=आर्तवेगवत् यत् सलिलस्य=जलस्य स्रोतः=

हिन्दी—भार-वाहकों, टहलुवों, लुटेरों, भृत्यों, धूर्तों एवं अश्वपालों की, टोलियों द्वारा सराहा जा रहा था, जो कहीं कठिनाई से प्राप्त, नीचों के ग्रामों के परिवारों द्वारा दिये हुए मड़ियल बैलों से पाथेय ले जाने के क्लेश से मन में क्षुब्ध हो इकट्ठे हुए, गृह-सामग्री स्वयं अपने ऊपर रखकर ले जा रहे, असहाय, गरीब कुल-पुत्रों द्वारा—'यह अभियान किसी तरह निभ जाय। (और) जावे जहन्नुम में (तृष्णातिशय) का सत्यानाश हो। ( राजकीय ) सेवा का कल्याण हो। भला हो सभी दुःखों की राशि इस छावनी का इस प्रकार निन्दा का विषय बनाया जा रहा था, जहाँ कहीं बड़े वेग के जलप्रवाह में पड़ी नौका में जा रहे—जैसे, ( रस्सी से ) बांधे हुए पंक्ति-बद्ध लोगों द्वारा, तेज दौड़ते हुए काले-काले कठोर कन्धों पर बड़े-बड़े लट्ठ धरे, सोने की पीढ़ी, पलंग, पानदान, कलशें, पीकदान और नहाने की द्रोणी ( टब ) ग्रहण किये, समीपवर्ती राजा का सामान ले जाने की अकड़ के कारण न रोके जा सकने वाले सभी को बाहर करवाते हुए राजा के वेतन भोगी कुलियों, रसोई का समान ढोने वाले सूअर के चमड़े के पट्टों से गेंडों को बान्धे, मृगों के अगले हिस्सों एवं ढेरों चिड़ियाओं को लटकाये खरगोश के बच्चों, साग-सब्जी के पत्तों और बाँस के अंकुरों के ढेर इकट्ठे किये, सफेद

---

१. 'शाट' २. 'पीठीकरङ्क' ३. 'पतद्ग्राहावगाहैः'

हिभिः शुक्लकर्पटप्रावृतमुखैकदेशदत्तार्द्रमुद्रागुप्तगोरसभाण्डैस्तलकतापकतापिकाहस्तकताम्रचरुककटाहसङ्कटपिटकभारिकैः समुत्सार्यमाणपुरोवर्तिजनम्, क्वचित् 'क्लेशोऽस्माकम्। फलकालेऽन्य एव विटाः समुपस्थास्यन्ते' इति मुखरैः पदे पदे पततां दुर्बलबलीवर्दानां नियुक्तैः खलने[1] खलचेटकैः खेद्यमानासंविभक्तकुलपुत्रलोकम्, क्वचिन्नरपतिदर्शनकुतूहलादुभयतः प्रजवितप्रधावितग्रामेयकजनपदम्, मार्गग्रामनिर्गतैराग्रहारिकजाल्मैः पुरःसरजरन्महत्तरोत्तम्भिताम्भःकुम्भैरुपायनीकृतदधिगुडखण्डकुसुमकरण्डैर्धनघटितपेटकैः सरभसं समुत्सर्पद्भिः प्रकुपितप्रचण्डदण्डिवित्रासनविद्रुतैर्दूरगतैरपि स्खलद्भिरपि पतद्भिरपि नरेन्द्रनिहितदृष्टिभिरसतोऽपि पूर्वभोगपतिदोषानुद्भावयद्भिरतिक्रान्तयुक्तकशतानि च शंसद्भिश्चिरन्तनचाटपरावांश्चाभिदधानैरुद्भू-

टीका-प्रवाह: तस्मिन् पतति = गच्छतीति पातिनी या नौः=नौका तस्यां गतैः = स्थितैरित्यर्थः इवेत्युत्प्रेक्षायां ग्रथितैः= बद्धैः इवेत्युत्प्रेक्षायां पंक्तिभूतैः = पंक्तिस्थितैः अतिद्रुतम् = अतिशीघ्रं द्रवद्भिः = धावद्भिः, कृष्ण०–कृष्णयोः = श्यामवर्णयोः कठिनयोः = कठोरयोः स्कन्धयोः = अंसयोः गुरवः = भारवन्तः लगुडाः = काष्ठदंडाः येषां तैः, गृहीत० – गृहीताः = धृताः सौवर्ण्यः = सुवर्णमय्यः पादपीठ्यः = चरणपीठानि च पर्यंकाः = मंचाश्च करङ्काः = ताम्बूल-पात्राणि च कलशाः = घटाश्च पतद्ग्रहाः = प्रतिग्राहाश्च [ प्रतिग्राहः पतद्ग्रहः इत्यमरः ] निष्ठीवनपात्राणीति यावत् अवग्राहाः = स्नानद्रोण्यश्चेति-शंकरः [ वस्तुतः अत्र अवगाहेति पाठेन भाव्यम् ] यैस्तैः, प्रत्या० – प्रत्यासन्नः = सन्निहितः यः पार्थिवः = महाराजः तस्य उपकरणानां = सामग्रीणां ग्रहणेन = धारणेन यः गर्वः = अभिमानः तेन दुर्वारैः = वारयितुमशक्यैः सर्वमेव = जनमित्यर्थः बहिः कारयद्भिः निरस्य द्भः जनैः, भूपति० — भूपतेः = राज्ञः भृतकाः = भृतिं दत्त्वा नियुक्ताः ये भारिकाः = भारवाहिकाः तैः महानसस्य = पाकशालायाः उपकरणानि = सामग्रीं वहन्तीति तथोक्तैः, बद्ध० बद्धा = नद्धाः वराहस्य = शूकरस्य वध्रेण = चर्मपट्टया वाध्रीणसाः = खड्गिनः [ खड्गं = शृगम् अस्यास्तीति 'खड्गी वाध्रीणसोऽपि' इति क्षीरस्वामी ] 'वाध्रीणसा यज्ञियाश्छागविशेषाः' इति शङ्करः, लम्ब० — लम्बमानाः = आलम्बमानाः स्कन्धेषु धार्यमाणाः इति यावत् हरिणानां = मृगाणां चटुकाः = पूर्वभागाः ( शं० ) चटकानां = पक्षिविशेषाणां जूटाः समूहाश्च तैः जटिलैः = युक्तैः, शिशु० — शिशवः = शावकरूपाः ये शशकाः = शशाश्च शाकानां = हरितकानां पत्राणि च वेत्राग्राणि = वंशाकुराः ( शं ) च तेषां संग्रहः = समूहं संगृह्णन्ति = धारयन्तीति तथोक्तैः शुक्ल० — शुक्लेन = धवलेन कर्पटेन = वस्त्रेण प्रावृतानि = आच्छादितानि मुखानि येषां तानि च एकदेशे = एकभागे दत्ता = अंकितेत्यर्थः आर्द्रा = अभिनवा या मुद्रा = चिह्नविशेषः तथा गुप्तः = सुरक्षितः गोरसः दुग्धं दधि च येषु तानि च भाण्डानि = पात्राणि येषां तैः, तलक० – तलकः = अग्नि-

**टिप्पणी—आग्रहारिक**—अग्रहार ब्राह्मणों को दान में दी जाने वाली भूमि को कहते हैं। पूर्ववर्ती राजाओं ने कभी ब्राह्मणों को भूमि दान दी होगी, लेकिन बाद वे वे मर मरा गए होंगे और उनकी कर-मुक्त भूमि गांव के धूर्तों ने अपने अधिकार में कर ली होगी वे जाल्म—धूर्त-अग्रहारिक कहलाते हैं। हम अग्रहार से सामान्य ग्राम को भी ले सकते हैं, अग्रहारों के जाल्म आग्रहारिक जाल्म हुए।

**हिन्दी**–कपड़े से ढके मुंह के एवं एक तरफ ताजी-ताजी लगी मोहर से सुरक्षित दूध-दही के भांडों वाले और लोहे की अंगीठी, तसले, मांस सेकने की साइयां, तामे की पतेलियां, कढ़ाई तथा सांकरे मुंह के बर्तन ढोनेवाले नौकरों द्वारा सामने के लोग हटाये जा रहे थे, जहां कहीं–'कष्ट हमें हो रहा है। जब कुछ मिलने का समय आयगा तो और ही लुच्चे टपक टपक पड़ेंगे' इस तरह बोलते हुए, दुष्ट नौकरों द्वारा कुलक्रमागत युवा सेवक तंग किये जा रहे थे जहां कहीं राजा को देखने की उत्सुकता के कारण दोनों तरफ से गाँवों के लोग जल्दी जल्दी दौड़े आये हुए थे, जहां मार्ग में पड़ने वाले ग्रामों से निकले हुए, ब्राह्मणों की जमीन हड़पने वाले ऐसे लुच्चों द्वारा धूल उड़ायी जा रही थी, जिनमें आगे-आगे ग्राम के बूढ़े अधिकारी जल-कलश उठाए हुए थे, जो दही गुड़, खाण्ड और फूलों की कंडियां भेंट लिए हुए थे, ( नजराने के रूप मे ) धन से पेटियां भरे हुए थे, जल्दी-जल्दी आगे बढ़ रहे थे, क्रुद्ध हुए उग्र दण्डधारी राजपुरुषों द्वारा दूर भगाए गए भी, लड़खड़ाते हुए भी और गिरते-पड़ते हुए भी राजा पर दृष्टि लगाए हुए थे, पहले के प्रान्तीय अधिकारियों की झूठमूठ की ही बुराइयां बता रहे थे, सैकड़ों पिछले कर्मचारियों की सराहना कर रहे थे, और पुराने चाटों ( १ धूर्तों ) के अपराध कहते जा रहे थे, जहां कहीं एकान्त में जा रहे अश्वारोही सैन्य द्वारा आशंकित आगामी

१. 'नियुक्तैः खेटने खेटचेटकैः'

यमानधूलिपटलम्, क्वचिदेकान्तप्रवृत्ताश्ववारचक्र¹चर्व्यमाणागामिगौडविमृग्यमाणसस्यसंरक्षणम्, अपरैराविष्टपरिपालकपुरुषपरितुष्टैः 'धर्मः प्रत्यक्षो देवः' इति स्तुतीरातन्वद्भिरपरैर्लूयमाननिष्पन्नसस्यप्रकटितविषादैः क्षेत्रशुचा सकुटुम्बैरेव निर्गतैः प्ररूढप्राणच्छेदैः परितापत्याजितभयैः 'क्व राजा कुतो राजा कीदृशो वा राजा' इति प्रारब्धनरनाथनिन्दम्, शशकैश्च पदे पदे प्रजविप्रचण्डदण्डपाणिपेटकानुबद्धैर्गिरिगुडकैरिव हन्यमानैरितस्ततः सञ्चरद्भिरपरैर्युगपत्परापतितमहाजनप्रस्तैस्तिलशो विलुप्यमानैरनेकजन्तुजङ्घान्तरालनिःसरणकुशलिभिः कुटिलिकाव्यंसितसादिबहुश्वभिः पतल्लोष्टलगुडकोणकुठारकोलकुद्दालखनित्रदात्र²यष्टिभिरपि निःसरद्भिरायुषो बलात्कृतकलकलम्, अन्यत्र सङ्घशो घासिकैर्बुसधूलीधूसरितघासजालजालकितजघ-

टीका—शकटिका लोहचुल्लीति यावत् च पातकः=अपूपादिकर्णस्थानम् च तापिका=काकपालिका यत्र तैलादिना भक्ष्याः पच्यन्ते च हस्तकः=शूल मांसभजनसाधनमिति यावत् च ताम्रचरुकः=ताम्रनिर्मित तण्डुलादिपाचनपात्रं च कटहा:=भाजनपात्र च संवटाः=संकुचितमुखाः पिटकाः=भाण्डानि च तेषां भारिकैः=भारवाहैः, समुत्०—समुत्सार्यमाणाः=निरस्यमाना पुरावर्तिनः=अग्रस्थिताः=जनाः लोकाः यस्मिन् तम्, क्लेशः=कष्टम् अस्माकं भवतीति शेषः फलकाले=पुरस्कारप्राप्तसमयं अन्ये एव विटाः=धूर्ताः समुपस्थास्यन्ते=उपस्थिताः भविष्यन्तीति मुखरैः=कथयद्भिः पदे पदे=प्रतिपदं दुर्बलाना बलीवर्दानां=वृषभाणां स्खलन=पतने नियुक्तैः=स्थापितैः अर्थात् स्खलित्वा स्खलित्वा चलतां वृषभाणाम् अवेक्षणे नियुक्तैः शङ्करस्तु स्खलने=प्रेरणे इत्याह तत्तु न विचारसहम्, खलचेटकैः=दुष्टभृत्यैः खेद्यमानः=खेदं प्राप्यमाणः असावभक्तः=अविभक्तः निखिलः इत्यर्थः कुल०—पुत्रलोकः=कुलपरम्परागतसेवकजनः यस्मिन् तम्, नरपति०—नरपतेः=राज्ञः हर्षवर्धनस्य दर्शने यत् कुतूहलम्=औत्सुक्यमित्यर्थः तस्मात् उभयतः=कटकस्य उभाभ्यां पार्श्वाभ्या प्रजाविताः=प्रकृष्टः जवः=वेगः सञ्जातः एषामिति प्रधाविताः=प्रद्रुताः ग्रामयकाः ग्रामे भवाः इति (ग्राम + ठकञ्) ग्राम्याः इत्यर्थः जनपदाः=जनाः यस्मिन् तम्, मार्ग०—मार्गे=यात्रापथे ये ग्रामाः तेभ्यः निर्गतैः=निःसृतैः अग्रहारकाश्च ते जाल्माः=धूर्ताश्च तैः उद्धूयमानधूलिपटम् इत्यनेन सम्बद्ध्यताम्, पुरः—पुरःसराः=अग्रगामिनः जरन्तः=वृद्धाः ये महत्तराः=ग्रामाधिकृताः तैः उत्तम्भिताः=हस्ते उत्थापिताः अम्भःकुम्भाः=जलपूर्णाः मंगलकलशाः यषु (जाल्मैः इत्यस्य विशेषणम्), उपा०—उपायनीकृताः राज्ञे उपहृताः दध्नः, गुडस्य च खण्डस्य=फाणितस्य च कुसुमानां च करण्डाः=करण्डः यैः तैः, घनेन घटिताः=पूर्णाः इत्यर्थः पेटकाः=समुद्रकाः येषां तैः सरभस=सवगं समुपसर्पद्भिः उपगच्छद्भिः प्रकुपि०—प्रकुपिताः=क्रुद्धाः प्रचण्डाः=भयप्रदाः ये दण्डिनः=दण्डधारिणो राजपुरुषाः तैः यत् वित्रासन=भयोत्पादन तेन विद्रुतैः=पलायितैः, स्खलद्भिः पादैः विषमीभवद्भिः पतद्भिः=स्रंसमानैः नरेन्द्रे=राज्ञि हर्षवर्धने निहिता=दत्ता दृष्टिः यैः तैः असतः=अवर्तमानान् काल्पनिकानित्यर्थः पूर्वेषां=पूर्ववर्तिनां भोगपतीना=प्रान्तीयाधिकारिणां दोषान्=त्रुटीः उद्भावयद्भिः=प्रकाशयद्भिः, अतिक्रान्ताः=भूतकालीनाः अतीता इत्यर्थः ये युक्तकाः=आयत्ताः अधिकारिणः 'आयुक्ताः' इत्यपि पाठः साधुरेव, तेषां शतानि शंसद्भिः=

हिरनी-गौडेन्द्र (के आक्रमण) से धान्य की रक्षा के लिए प्रार्थना की जा रही थी, कहीं (राजा की) आज्ञा प्राप्त कर रक्षक राजपुरुषों से प्रसन्न हुए अन्य लोगों द्वारा—'राजा साक्षात् धर्म है' इस प्रकार स्तुतियाँ की जा रही थीं, कहीं (सेनाएँ) काट जा रहे पके धान के कारण विषाद व्यक्त किये, खेत के शोक से सकुटुम्ब ही आए हुए, (विनाधान के) प्राणनाश का खतरा रखे और दुःख द्वारा (राजे का) भय छुड़वाए अन्यों द्वारा—'कहाँ है राजा ? कहाँ का राजा ? कैसा राजा ? इस तरह राजा की निन्दा की जा रही थी, जहाँ पद-पद पर कुछ ऐसे खरगोशों द्वारा, जिनका हाथों में भयंकर डंडे लिये, दौड़ती हुई भीड़ द्वारा पीछा किया जा रहा था, जो (खेतों में) मिट्टी के ढेलों की तरह पीटे जा रहे थे और इधर-उधर घूम-फिर रहे थे, और (कुछ) अन्यों (खरगोशों) द्वारा, जिन पर एक साथ ही टूट पड़े बड़े-बड़े लोगों ने धावा बोल दिया था और जिनकी बोटा-बाटी हो रही थी, तथा (कुछ) अन्यों द्वारा, जो अनेक जानवरों के पैरों के तले से निकल भागने में चतुर थे, टेढ़ा-मेढ़ा मुड़कर घुड़सवारों के बहुत से कुत्तों को भी झाँसा दे बैठे थे और पत्थरों लकड़ियों, बाजे बजाने के डंडों, कुल्हाड़ियों, कीलों, फावड़ों, गैंतियों, दरांतियों और लाठियों के पड़ते रहते भी आयु (शेष रहने) के कारण (बचकर) निकल रहे थे, हो-हल्ला किया हुआ था, दूसरी जगह बहुत से घसियारों द्वारा

१. 'चर्व्यमाण' २. यष्टिवृष्टिभिरपि'

**नैश्च पुराणपर्याणैकदेशदोलायमानदात्रैश्च शीर्णोर्णाशकलशिथिलमलिनमलकुथैश्च प्रभुप्रसादीकृतपाटितपटच्चरचलच्चोलकधारिभिश्च धावमानैरुद्धूयमानधूलिपटलम्, क्वचिद्वेकान्तप्रवृत्ताश्ववारचक्रचर्व्यमाणागामिगौडविग्रहम्, क्वचित्पाङ्कुलप्रदेशपूरणा-**

टीका—प्रशंसद्भिः चिरन्तनाः प्राचीना इत्यर्थः ये चाटाः = धूर्ताः ( श० ) वस्तुतः चाट-शब्दः पारिभाषिकः प्रतीयते, पूर्वमपि बाणेन चाटभट-शब्दः बहुशः प्रयुक्तः, ग्रामाणां दानपट्टेषु 'अचाटभटप्रवेश्यः' इति लभ्यते, तेषां अपराधान्=दोषान् अभिदधानैः = प्रतिपादयद्भिः ( जाल्मैः ) उद्धूयमानम्=उत्थाप्यमान धूलि-पटलं यस्मिन् तम् एकान्ते०—एकान्ते = सेनायाः एकभागे प्रवृत्ताः ये अश्ववाराः=सादिनः तेषां चक्रेण=समूहेन चर्व्यमाणः=चिन्त्यमानः मनसि कल्प्यमानः इत्यर्थः ( काणैः ) आगामी = आगच्छन् आक्रमिष्यन्निति यावत् गौडः = गौडेन्द्रः तस्मात् मृग्यमाणं = प्रार्थ्यमानमित्यर्थः सस्यानां = धान्यानां संरक्षणं = रक्षा यस्मिन् तम्, अर्थात् अश्वारोहिसैनिकानां एकदल गौडाक्रमणं शंकतेस्म, अतः ग्रामीणाः तस्मात् स्वसस्यसंरक्षणार्थं सैनिकान् प्रार्थयन्ते स्म, अथवा चर्व्यमाणं = भक्ष्यमाणम्, आगामिगौडेन्द्रेण स्वसेनायै अन्विष्यमाणं सस्यसंरक्षणं संरक्षितसस्यमित्यर्थः स्कन्धावारस्य अश्ववाराः भक्षयन्ति स्मेति भावः, अत्र 'चर्च्यमाण' पाठः साधीयान्, चर्च्यमानः = चर्चाविषयीक्रियमाणः-प्रतिपाद्यमानः इति यावत्, अपरैः—आदिष्टाः = राज्ञा आज्ञप्ताः परिपालकाः=संरक्षकाः ये पुरुषाः=राजकर्मचारिणः तैः परितुष्टैः = सन्तुष्टैः अपरैः = अन्यैः जनैः देवः = महाराजः प्रत्यक्षो धर्मः = प्रत्यक्ष-धर्मावतारः इति स्तुतीः = प्रशंसाः आतन्वद्भिः = कुर्वद्भिः अत्र ग्रन्थकारः क्रियापद विस्मृतवान् इति ध्येयम्, लूय०—लूयमानं = सेनायाः कृते छिद्यमानं निष्पन्न=पक्वं यत् सस्य = धान्य तेन प्रकटितः = प्रकाशितः विषादः=खेदः यैः तैः क्षेत्राणां = निःसस्यीकृतभूमीनां शुचा = शोकेन सकुटुम्बैः = सपरिवारैः निर्गतैः = ग्रामात् निःसृतैः, प्ररूढः = उत्पन्नः प्राणच्छेदः=सस्याभावे प्राणविनाशः येषां तैः परितापेन=दुःखेन त्याजितं = त्यक्तुं प्रेरितं भय येषां तैः प्रारब्धकुत्सा नरनाथस्य = राज्ञः निन्दा यत्र तम्, शशकैः—शशकैः=शशैः 'कृत-कलकलम्' इत्यन्वयः पदे-पदे = प्रतिपदं प्रजविनः=द्रुतगामिनश्च ते प्रचण्डाः - भयङ्कराः दण्डाः = लगुडाः पाणौ=हस्ते येषां ते च ते लोकाः तेषां पटलेन = समूहेन अनुबद्धैः=अनुगतैः गिरीणां = पर्वतानां गुडकाः = पिण्डाः तैः इवत्युत्प्रेक्षायां हन्यमानैः = ताड्यमानैः, क्षेत्रेषु मृत्पिण्डाः अपि बीजवपनात् पूर्वं भूमेः समीकरणाय दण्डैः आहन्यन्ते, सञ्चरद्भिः = भ्रमद्भिः अपरैः = अन्यैः शशकैः युगपत्०—युगपत् = समकालमेव परिपतिताः = परितः कृताक्रमणाः इत्यर्थः ये महाजनाः = अनेकलोकाः तैः ग्रस्तैः=अभिभूतैस्तिलशः=तिल-तिलरूपेण विलुप्यमानैः=लोपं नाशमिति यावत् प्राप्यमाणैः अनेक०—अनेके ये जन्तवः = पशवः अश्वादयः तेषां जघयोः अन्तरालात् = अभ्यन्तरात् निःसरणे = निर्गमने कुशलिभिः = चतुरैः ( शशकैः ) अत्र कुशलैः इत्येव साधीयान् अथवा कुशल = कल्याणमेषामस्तीति मत्वर्थीयेन इन्प्रत्ययेन समाधेयम्, कुटिलि० कुटिलिका = वक्रगमनं तं व्यंसिताः=प्रतारिताः सादिनाम्=अश्ववाराणां बहवः श्वानः = सारमेयाः यैस्तैः, पतत्०—पतन्त्यः = उपरि प्रक्षिप्यमाणाः इत्यर्थः लोष्ठानि = प्रस्तराश्च लगुडाः=दण्डाश्च कोणाः=वादनदण्डाश्च कुठाराः = परशवश्च कीलाः=शङ्कवश्च कुदालाः=भूदारणशस्त्रविशेषाः खनित्राणि = खननसाधनविशेषाश्च दात्राणि = लवित्राणि च यष्टयः=काष्ठानि चेति यष्टयः येषु तैः अपि आयुषः = जीवनकालस्य बलात् = प्रभावात् निःसरद्भिः=निर्गच्छद्भिः कृतः कलकलः = कोलाहलः यस्मिन् तम्, अन्यत्र संघशः = बहुशः घासिकैः=घासप्रबन्धे नियुक्तैः धूलिपटलम् इत्यनेन सम्बध्यते, बुसं=तुषः तस्य धूल्या = रजसा धूसरितानि=धूसरवर्णितानि च घासस्य जालेन = समूहेन जालकितानि=सञ्जातजालानि आवृतानीत्यर्थः जघनानि = कटिपुरोभागाः येषां तैः, पुराण०—पुराणस्य = जीर्णस्य पर्याणस्य = पल्ययनस्य एकदेशात् = एकभागात् दोलायमानानि = लम्बमानानि दात्राणि = लवित्राणि येषां तैः, शीर्णः०—शीर्ण. = जीर्णः ऊर्णा-शकलैः=ऊर्णाखण्डैः शिथिलाः = श्लथाः विगलिताः इति यावत् मलिनाः =

हिन्दी—जिनकी जांघे भूसे की धूल से मैली और घास-समूह से भरी पड़ी थी, जो पुराने पलानों के एक भाग में दरांतियाँ लटकाये हुए थे, जिनके कम्बल जीर्ण-शीर्ण ऊन के टुकड़ों से ढीले-ढाले और मैले बने हुए थे और जो ( पहले कभी ) स्वामी द्वारा अनुग्रह-रूप में दिया हुआ ( किन्तु अब ) फटा चिथड़ा बना, लटकता हुआ कंचुक ( जाकट ) पहने हुए थे—धूलि उड़ाई जा रही थी कहीं एकान्त में चला रहे अश्वारोहियों के दल द्वारा गौड़ेन्द्र के साथ आगामी युद्ध के विषय में विचार छिड़ रहा था, कहीं कीचड़ भरे स्थान को भरने की आशा ( मिलने ) के कारण व्यस्त हुए लोगों

देशाकुलसकललोकलूयमानतृणपूलकम्, क्वचित्तलवर्तिवेत्रिवेत्रवित्रास्यमानशाखिशिखरगतविक्रोशद्विवादिब्राह्मणम्, क्वचित्कु[1]-लुण्ठकपाशविवेष्टयमानग्रामीणकग्रामाकृष्टकौलेयकम्, क्वचिदन्योन्यविभ[2]वस्पर्शोद्धुरराजपुत्रवाह्यमानवाजिसङ्घट्टमण्डितम्, अनेकवृत्तान्ततया कौतुकजननम्, प्रलयजलधिमिव जगद्ग्रासग्रहणाय प्रवृत्तम्, पातालमिव महाभोगिनां गुप्तये समुत्पादितम्, कैलासमिव परमेश्वरवसतये सृष्टम्, दृश्यमानसकलप्राणिपर्यायं चतुर्युगसर्गकोशमिव प्रजापतीनाम्, क्लेशबहुलमपि तपःकरणमिव क्रम[3]कारणं कल्याणानाम्, एवं च वीक्षमाणः कटकं जगाम।

---

टीका–मलदूषिताः कुथाः=कम्बलाः मलकुथा मलपट्टीछविरित्यर्थः अंसोपरि वासः इत्यन्ये' इति शङ्करः येषां तैः, प्रभु०—प्रभुणा=स्वामिना कदापि प्रसादीकृतः दत्तः इदानीं तु पाटितः=जीर्णशीर्णः पटच्चरे=जीर्ण-वस्त्रे [ पटच्चरं जीर्णवस्त्रमित्यमरः ] चलन्=लम्बमानश्च यः चोलकः=कंचुकः तं धारयन्तीति तथोक्तैः, धाटमानैः=प्रद्रवद्भिः उद्धूयमान=उत्थाप्यमानं धूलिपटलं=धूलिसमूहः यस्मिन् तम्, क्वचित्—एकान्ते प्रवृत्तः=प्रचलितः अश्ववाराणां= सादिनां चक्रेण=समूहेन चर्व्यमाणः=चिन्त्यमानः इत्यर्थः आगामी=भविष्यत्कालीनः इत्यर्थः गौडेन=गौड़ेन्द्रेण विग्रहः =युद्धम् यस्मिन् तम्, पङ्किल०—पंकिलस्य=पङ्कयुक्तस्य प्रदेशस्य=स्थानस्य पूरणाय=भरणाय यः आदेशः=आज्ञा तेन आकुलैः=व्यग्रैः सकलैः लोकैः=जनैः लूयमानाः=छिद्यमानाः=तृणानां पूलकाः यस्मिन् तम्, तल०—तले= मूले वर्तन्ते इति वर्तिनः वृक्षमूलस्थिताः ये वेत्रिणः = वेत्रधारिणो राजपुरुषाः तेषां वेत्रैः = वेत्रदण्डैः वित्रास्य-मानाः = भयं प्राप्यमाणाः ये शाखिनां=वृक्षाणां शिखरेषु=अग्रेषु गताः=स्थिताः विक्रोशन्तः=शब्दायमानाः गालि चोच्चारयन्तः विवादिनः=कलहकारिणः ब्राह्मणाः यस्मिन् तम्, कुलुण्ठ०—कुलुण्ठकाः=शुनां बन्धन-लगुडाः इति शङ्करः तेषु ये पाशाः रज्जवः तेषु विवेष्टयमानाः=आवध्यमानाः ग्रामीणकानां=ग्राम्याणां=ग्रामेण=दलेन आकृष्टाश्च कौलेयकाः=कुक्कुराः=[ 'कौलेयकः कुक्कुरो मृगवंशनः' इत्यमरः ] यस्मिन् तम्, अन्योन्य०–अन्योन्यस्य=परस्परस्य यः विभवः=वैभवम् तेन या स्पर्धा=अहमहमिकात उद्धुरैः=उद्धतैः राजपुत्रैः वाह्यमानाः=चाल्यमानाः ये वाजिनः= अश्वाः तेषां संघट्टेन=समाघातेन मण्डितं=शोभितम्, अनेके वृत्तान्ताः=घटनाः यत्र तस्य भाव तत्ता तया कौतुकस्य =लोककुतूहलस्य जननं=जनकम्, प्रलय० जगतः=संसारस्य ग्रासेन=कवलेन आत्मनि लयेनेत्यर्थः प्रलयकालेहि समुद्रः जगत् आत्मनि लयं नयतीतिपुराणवार्ता, ग्रहणाय प्रवृत्तम् जलनिधिं=समुद्रम् इव जगतः ग्रासः=आत्मसाक्षात्करणं ग्रहणं=स्वहस्ते च धारणञ्च तस्मै प्रवृत्तम्=व्यापृतम् पाताल०-महान्तः=विशालाश्च ते भोगिनः सर्पाः तेषां गुप्तये=

टिप्पणी– क्वचिदेकान्त०—इस समास का एक भाग पीछे भी आया हुआ है। यह लिपिकार का दोष है। दोनों जगह 'उद्धूयमानधूलिपटलम्' होने से वह भ्रम में पड़ गया। पहले स्थान में उचित मूलपाठ, धूलिपटलम् विमृग्यमाणस्य संरक्षणम्' यह प्रतीत होता है। प्रकृत में 'चर्व्यमाण' के स्थान में 'चर्च्यमान' पाठ में अधिक स्वारस्य है यह हम पीछे बता आए हैं।

हिन्दी–द्वारा घास के पूले काटे जा रहे थे, वृक्षों के ऊपर चढ़े झगड़ालू ब्राह्मण गाली-गलौज दे रहे थे, कहीं ग्रामीणों के दलों द्वारा डंडों पर लगी रस्सियों से कुत्ते लपेटे और खींचे जा रहे थे जो (स्कन्धावार) कहीं एक दूसरे के साथ होड लगाने में उद्धत बने राजपुत्रों द्वारा दौड़ाये जा रहे घोड़ों की टक्करों में शोभित था, जो अनेक प्रकार की घटनाओं से कुतूहल-जनक बना हुआ था, जो जगत् को ग्रास रूप में लीलने के लिये प्रवृत्त प्रलयकाल के समुद्र की तरह जगत को ग्रास ( अधीनीकरण ) और ग्रहण ( धारण ) करने के लिये चल पड़ा था, जो बड़े-बड़े भोगियों ( सर्पों ) की रक्षा हेतु निर्मित पाताल की तरह वड़े-बड़े भोगियों ( राजों ) की रक्षा हेतु संगठित किया गया था, जो परमेश्वर ( महा-देव ) के निवास के लिए निर्मित कैलास की तरह परमेश्वर [ महाराजाधिराज हर्षवर्धन ] की स्थिति के लिये व्यवित किया गया था, जो दिखाई पड़ रहे सभी प्राणियों के पर्याय [ उत्पत्ति-क्रम ] वाले, प्रजापतियों के चारों युगों के सृष्टि कोश की तरह देखने में आ रहे [ अश्व, गज, नर आदि ] सभी प्राणियों का पर्याय [ चारों तरफ से गमन अथवा सैनिक क्रमबद्धता ] रखे हुए था और जो तप अनुष्ठान की तरह ( बाद में ) क्रमशः कल्याणों ( धन-सम्पदाओं ) का कारण था, इस प्रकार निरीक्षण करता हुआ हर्षवर्धन शिविर में चला गया।

---

१. 'कुलुण्डकपाशविवेष्ट' २. 'विभाव' ३. 'कारिणम्'

आसन्नवर्तिनां च तत्रभवताम्, 'मान्धात्रा प्रवर्तिताः पन्थानो दिग्विजयाय। अप्रतिहतरथरंहसा रघुणा लघुनैव कालेनाकारि ककुभां प्रसाधनम्। शरासनद्वितीयः करदीचकार चक्रं क्रमागतभुजबलाभिजनधनमदावलिप्तानां भूभुजां पाण्डुः। पाण्डवः सव्यसाची चीनविषयमतिक्रम्य राजसूयसम्पदे क्रुध्यद्गन्धर्वधनुष्कोटिटांकारकूजितकुञ्जं हेमकूटपर्वतं पराजैष्ट। सङ्कल्पान्तरितो विजयस्तरस्विनाम्। सहिमर्हिमवद्व्यवहितोऽप्युवाह बाहुबलव्यतिकरकातरः करं कौरवेश्वरस्य किङ्कर इवाकृती द्रुमः।

---

टीका-संरक्षणाय समुत्पादितं = रचितम् पातालम् इव, पातालं हि सर्पाणामधिवास-स्थानम्, महान्तः ये भोगिनः = नृपाः अथवा ग्रामाध्यक्षाः ( 'भोगी भुजङ्गमेऽपि स्याद् ग्रामपात्रे नृपे पुमान्' इति मेदिनी ) गुहाये समुत्पादितं सम्राड्हर्षवर्धनेन संघटितमित्यर्थः, कैलास०—परमेश्वरस्य = शिवस्य वसतये = निवासाय सृष्टं = रचितं कैलासम् इव, शिवो हि कैलासे वसति, परमेश्वरस्य महाराजाधिराजस्य हर्षवर्धनस्य वसतये = स्थितये सृष्टं = व्यवस्थापितम् दृश्य०—दृश्यमानः = दृष्टिपथमागच्छन् सकलानां = सर्वेषां प्राणिनां = जीवानां पर्यायः क्रमः यस्मिन् तम् अर्थात् यत्र क्रमशः उत्पद्यमानं निखिलं जीव-जगत् दृश्यते, प्रजापतीनां = ब्रह्मादीनां चतुर्णां युगानां = कृतयुगादीनाम्, सर्गस्य = सृष्टेः कोशम् = संग्रहम् इव वस्तुतः चतुर्युगशब्देन कृतयुगमेव ग्राह्यं, जगत्सृष्टिसमये कृतयुगस्यैवारम्भात्, दृश्यमानः सकलप्राणिनां = नरगजाश्वादीनां पर्यायः = परितः आयः = आगमनं अथवा सैनिकक्रमबद्धता यस्मिन् तम्, क्लेश०-क्लेशः = कष्टं बहुलः = बहुः यस्मिन् तथाभूतं कल्याणानां = भद्राणां सम्पदादीनामित्यर्थः क्रमेण कारणं तपःकरणं = तपोऽनुष्ठानम् इव, अर्थात् यथा तपस्यानुष्ठाने पूर्वं क्लेशो भवति परमन्ते सुखं मिलति तथैव स्कन्धावारः क्लेशबहुलोऽपि सन् शत्रुदेशान् विजित्य पश्चात् क्रमशः सुखसम्पत्तिमापादयति। उपरि सर्वत्र श्लिष्टोपमालङ्कारः। वीक्षमाणः = पश्यन् कटकं = शिविरं जगाम।

आसन्नवर्तिनां'''' पार्थिवकुमाराणाम् इत्येवं प्रायान् आलापान् शृण्वन्नेव आससाद आवासं ( हर्ष० ) इत्यस्ति वाक्यम्। आसन्नवर्तिनां = सन्निहितानाम् तत्रभवतां = मान्यानां एतद्द्वयं 'कुमाराणाम्' इत्यस्य विशेषणम्, किन्तु शंकरः तत्र भवता इति पाठं कृत्वा तं मान्धात्रा इत्यनेन संबध्नाति वयमपि एतत् उचितं मन्यामहे, पूज्यत्वं मान्धातरि एव संगच्छते नतु पार्थिव-कुमारेषु, मान्धात्रा = एतदाह्वयराजविशेषेण दिशां विजयाय पन्थानः = मार्गाः प्रवर्तिता = प्रचालिताः दिग्विजय-दृष्टान्तः स्थापितः इत्यर्थः। अप्रतिहतम् = अनिरुद्धं रथस्य रंहः = वेगो यस्य तेन रघुणा = दिलीपपुत्रेण लघुना = स्वल्पेन एव कालेन ककुभां = दिशां प्रसादनम् = 'शुद्धीकरणम् शत्रुरहितीकरणमित्यर्थः = अत्र प्रसाधनम् इति पाठः साधीयान्, प्रसाधनम् = अधीनीकरणम्, अकारि = कृतम्। शरासनं = धनुः द्वितीयः = सहायः यस्य सः पाण्डुः = पाण्डवानां पिता क्रमागतानां कुलपरम्पराप्राप्तानां भुजयोः बलं च अभिजनः कुलीनता च धनं च तेषां मदेन = अभिमानेन अवलिप्तानां = दृप्तानां भूभुजां = राज्ञां चक्रं = मण्डलं चकारेति। सव्यसाची = सव्येन = वामेन हस्तेनापि सचति = सन्दधाति बाणमिति ( णिन् ) पाण्डवः = अर्जुनः यथाह स्वयम् अर्जुनः—( 'उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे। तेन देव-मनुष्येषु सव्यसाचीति मां विदुः' महाभा०-विरा० ४४।१९ ) चीनविषयं = चीनदेशम् अतिक्रम्य = उल्लंघ्य विजित्येत्यर्थः राजसूयाय राजसूयाख्ययज्ञविशेषाय सम्पदे = सम्पदर्थम्, जगति निजप्रभुत्वस्य अक्षुण्णसत्तास्थापनार्थं सम्राड्भिः राजसूयाः क्रियन्ते स्म, क्रुध्यन्तः = कुप्यन्तः ये गन्धर्वाः = देवयोनिविशेषाः तेषां धनुषां = चापानां कोटीनां = प्रान्तानां टांकारेण = टांकारध्वनिना कूजिताः = गुञ्जिताः कुञ्जाः = लतागृहाणि यस्मिन् त हेमकूटनामानं पर्वतं पराजैष्ट = पराजितवान् हेमकूटविषये बाणः कादम्बर्यामिदमाह—'इतश्च नातिदूरे तस्यास्माद् भारतवर्षाद् उत्तरेणानन्तरे किंपुरुषनाम्नि वर्षे वर्ष-पर्वतो हेमकूटो नाम'। तरः = बलम् एषामस्तीति तथोक्तानां बलवतामित्यर्थः

हिन्दी—'मान्धाता ने दिग्विजय के मार्ग खोले'। बेरोक-टोक रथ-वेग वाले रघु ने थोड़े समय के भीतर दिशाओं को साफ किया। धनुष मात्र साथ लिये पाण्डु ने कुलक्रमागत भुज-बल कुलीनता और धन के मद में चूर हुए राजमण्डल को कर देने वाला बनाया।' दायें-बायें दोनों हाथों से धनुष चलाने वाला पाण्डव ( अर्जुन ) चीन देश को लाँघ कर राजसूय यज्ञ के लिये धन हेतु क्रुद्ध हो रहे गान्धर्वों की धनुष-कोटियों की टंकार से गुंजित कुंजों वाला हेमकूट पर्वत से जीत गया था'। बलवानों की विजय में इच्छामात्र का व्यवधान हुआ करता है। हिम से परिपूर्ण हिमाद्रि पर्वत से व्यवहित ( संरक्षित ) होता हुआ भी दुर्बलद्रुम भुजशौर्य की बात से भयभीत हुआ सेवक की तरह दुर्योधन को कर

नातिजिगीषवः खलु पूर्वे येनाल्प एव भूभागे भूयांसो भगवत्तदन्तवक्त्रक्राथकर्णकौरवशिशुपालसाल्वजरासन्धसिन्धुराजप्रभृतयोऽभवन्भूपतयः। सन्तुष्टो राजा युधिष्ठिरो यो ह्यसहत समीप एव धनञ्जयजयजनितजगत्कम्पः किंपुरुषाणां राज्यम्। अलसश्चण्डको यो न प्राविक्षत्क्ष्मां जित्वा स्त्रीराज्यम्। ह्रसीय एवान्तरं तुषारगिरिगन्धमादनयोः। उत्साहिनः किष्कुस्तुरुष्कविषयः, पारसीकदेशः प्रादेशः, शशपदं शकस्थानम्, अदृश्यमानप्रतिप्रहारे पारियात्रे यात्रैव शिथिला, शौर्यशुल्कः सुलभो दक्षिणापथः, दक्षिणार्णवकल्लोलानिलचलितचन्दनलतासौरभसुन्दरीकृतदरीमन्दिराद्दर्दुरादद्रेर्नेदीयसि मलयो मलयलग्न एव च महेन्द्रः।' इत्येवंप्रायानुद्योगद्योतकानामालापान्पार्थिवकुमाराणां बाहुशालिनां शृण्वन्नेवावाससादावासम्। मन्दिरद्वारि चोभयतः सबहुमानं भ्रूलताभ्यां विसर्जितराजलोकः प्रविश्य चावततार बाह्यास्थानमण्डपस्थापितमासनमाचक्राम। प्रास्तसमायोगश्च क्षणमासिष्ट।

---

टीका–विजयः=संकल्पः इच्छा तेन अन्तरितः=व्यवहितः भवतीति शेषः अयं भावः–'विजयः बलवतामिच्छाधीनः, यावत् विजयेच्छा न जागर्ति मनसि तावद् विजयो दूराद् दूरतरः यस्मिन् क्षणे च विजयेच्छा उत्पद्यते तत्कालमेव विजयो बलवतां हस्तस्थितः। सहिमः=हिमपूर्णः यः हिमवान्=हिमाद्रिः तेन व्यवहितः=अन्तरितः अपि बाहुबलस्य=भुजबलस्य व्यतिकरे=सम्पर्के कातरः=भीतः अकृती=अधन्यः दुर्बलः इत्यर्थः द्रुमः=एतदाख्यः किंपुरुषाधीशः [ द्रुमो किंपुरुषेशश्च उपास्ते धनेश्वरम्' इति महाभा० सभा० ३१।३ ] किङ्करः=सेवक इवेत्युपमायां कौरवेश्वरस्य=दुर्योधनस्य करं=राजदेयद्रव्यम् उवाह=दधौ दत्ते स्मेत्यर्थः। पूर्वे=प्राचीनाः भूपाः इत्यर्थः खलु=निश्चयेन न अतिशयेन जेतुमिच्छवः जिगीषवः आसन्निति शेषः अल्पे=लघुनि एवं भूभागे=भूखण्डे भूयांसः=बहवः भगदत्तः=दुर्योधनस्य मित्रं प्राग्ज्योतिषदेशनरेशश्च दन्तवक्रः कौरवपक्षपाती राजविशेषश्च (यः सहदेवेन परास्तः) क्राथः=धृतराष्ट्रस्य पुत्रेषु अन्यतमश्च कर्णश्च कौरवः दुर्योधनश्च शिशुपालश्च एते प्रसिद्धाः एव साल्वः=म्लेच्छराजः दुर्योधनपक्षीयश्च जरासन्धश्च सिन्धुराजः=जयद्रथश्च प्रभृतिः येषां तथाभूताः भूपतयः राजानः अभवन्। युधिष्ठिरः सन्तुष्टः=सन्तोषीत्यर्थः यः धनञ्जयस्य=अर्जुनस्य जयेन कर्तरि षष्ठी अर्जुनकर्तृकविजयेनेत्यर्थः जनितः=उत्पादितः जगतः=संसारस्य कम्पः=वेपथुः (भयकृतः) येन स किंपुरुषाणां=किन्नराणां राज्यम् किंपुरुषवर्षमित्यर्थः समीपे=भारतात् नातिदूरे एव असहत=सोढवान् सन्तोषकारणात् तं न विजितवानितिभावः। चण्डकोशः=राजविशेषः अलसः=अनुद्यमी आसीदिति शेषः यः क्ष्मां=पृथिवीं जित्वा=विजित्य स्त्रीराज्यम्=स्त्रीशासितराज्यम् न प्राविक्षत्=प्रविवेश, महाभारते अश्वमेधपर्वणि स्त्रीराज्योल्लेखोऽस्ति। अत्र 'चण्ड-कोश शब्दे अश्लीलः श्लेषोऽस्ति चण्डौ=प्रबलौ अण्डकोशौ यस्यास्तीति, पूर्णपुंस्त्वसम्पन्नोऽपि न स्त्रीराज्यं प्रविवेश स्वनाम अन्वर्थं न चकारेति धिक्। तुषारगिरिः=हिमाद्रिः गन्धमादनः=वदरीनाथपुर्याः उत्तरेण स्थितः गन्धवृक्षबहुलः पर्वतविशेषश्च तयोः, अतिशयेन ह्रस्वं=लघु अन्तरं=व्यवधानम् दूरत्वमित्यर्थः। उत्साहिनः पुरुषस्य कृते तुरुष्काणां=तुरुकीयाणां विषयः देशः=निष्कुः हस्तमितः इत्यर्थः [ 'किष्कुर्हस्ते-हिन्दी–देता रहा। सच तो यह है कि पुराने (राजे) अधिक विजयेच्छा नहीं रखते थे, तभी तो भगदत्त, दन्तवक्र, क्राथ, कर्ण, दुर्योधन, शिशुपाल, साल्व, जरासन्ध, जयद्रथ आदि थोड़े ही भूभाग के राजे बने रहे। युधिष्ठिर सन्तोषी राजा था जो अर्जुन की विजयों से जगत में हड़कंप उत्पन्न किये हुए (भी) पास ही में किंपुरुषों का राज्य सहता गया। चंडकोष आलसी रहा, जो पृथिवी को जीतकर स्वकीय राज्य में प्रवेश नहीं कर पाया। हिमाचल और गन्धमादन पर्वतों का थोड़ा सा ही तो अन्तर है। उत्साही पुरुष के लिये तुर्कों का देश हाथ-भर है, पारसीक देश बिलस्त-भर एवं शकों का स्थान खरगोश के पैर बराबर है, प्रत्याक्रमण करने वाला कोई न दिखाई देने के कारण पारियात्र पर्वत की यात्रा ही ढीलीढाली है? दक्षिणभारत शौर्य-शुल्क द्वारा सुलभ है, दक्षिण समुद्र की तरंगों की पवन से हिलती हुई चन्दन-लताओं के सौरभ द्वारा सुन्दर बने हुए गुहा-गृहों वाले दर्दुरपर्वत के पास ही मलयपर्वत है और मलय से सटा हुआ ही महेन्द्र पर्वत है' इस प्रकार पास में ही स्थित माननीय भुजवीर्यशाली राजकुमारों की बातें सुनता हुआ हर्ष आवास में पहुँच गया। और गृह के द्वार पर आदर-पूर्वक भ्रू-संकेत से अगल-बगल के राजा लोगों को विदा किये हुए? भीतर प्रवेश करके (हथिनी से) उतर गया और बाहरी सभा-मण्डप में रखे आसन पर बैठ गया। (आज्ञा द्वारा) समायोग (सैनिक परेड) को भंग किये वह थोड़ी देर (वहीं) बैठा रहा।

अथ तत्र प्रतीहारः पृथ्वीपृष्ठप्रतिष्ठापितपाणिपल्लवो विज्ञापितवान्—'देव, प्राग्ज्योतिषेश्वरेण कुमारेण प्रहितो हंसवेगनामा दूतोऽन्तरङ्गस्तोरणमध्यास्ते' इति। राजा तु 'तमाशु प्रवेशय' इति सादरमादिदेश। अथ दक्षतया क्षितिपालादराच्च प्रतीहारः स्वयमेव निरगात्। अनन्तरं च हंसवेगः सविनयमाकृत्यैव नयनानन्दसम्पादनसुभगाभोगभद्रया समुल्लङ्घ्यमानगुणगरिमा प्रभूतप्राभृतभृतां पुरुषाणां समूहेन महतानुगम्यमानः प्रविवेश राजमन्दिरम्। आरादेव पञ्चाङ्गालिङ्गिताङ्गनः

---

टीका—वितस्तौ च' इत्यमरः ], पारसीक = परसियाः इत्याख्यो देशः प्रादेशः = तर्जनीसहिताङ्गुष्ठविस्तारः, शकानां स्थानम् शशस्य = शशकस्य पदं = पदपरिमितमित्यर्थः स्कीथिअनजातीयाः शकाः उच्यन्ते यैः पुरा भारतमाक्रान्तमासीत्। अत्र बाणस्य देशानां दूरत्वमापन्नं न तथा वास्तविकं यथा आनुप्रासिकमिति ध्येयम्। अदृश्यमानः = न दर्शनपथमागच्छन् प्रतिप्रहारः = प्रत्याक्रमणमित्यर्थः यस्मिन्, अर्थात् यत्र न कोऽपि तादृशः यः प्रत्याक्रमणं कुर्यात् पारियात्रः = सप्तकुलपर्वतेषु अन्यतमः यो विन्ध्याचलस्य पश्चिमे पर्वते तस्मिन् यात्रा अभियानम् एव शिथिला = व्यर्थेत्यर्थः प्रतिद्वन्द्विनोऽभावात् शौर्यं = वीरता शुल्कं पाणौ यत्र तथाभूतः दक्षिणापथः = दक्षिणभारतम् सुलभः = सुखेन लब्धुं योग्योस्तीति शेषः, दक्षिणा०—दक्षिणार्णवस्य = दक्षिणसमुद्रस्य ये कल्लोलाः तरङ्गाः तेषाम् अनिलैः = पवनैः चलिताः = प्रकम्पिताः याः चन्दनलताः तासां सौरभेण = परिमलेन सुन्दरीकृतानि = रम्यीकृतानि दरी-मन्दिराणि = गुहागृहाणि यस्य तथाभूतात् दर्दुरात् = एतदाख्यपर्वतात् नेदीयसि = अतिशयेन अन्तिके मलयः = एतदाख्यः पर्वतः, मलयेन लग्नः = संसक्तः महेन्द्रः = पर्वतविशेषः इति एवं प्रायान् उद्योतकान् = प्रोत्साहकान् आलापान् = वार्तालापान् पार्थिवकुमाराणां = राजपुत्राणां बाहुभ्यां शालन्ते = शोभन्ते इति तथोक्तानां बाहुवीर्याणामित्यर्थः शृण्वन् = आकर्णयन् एव आवासं = निवासस्थानम् आससाद = प्राप। मन्दिरस्य = आवासस्य द्वारि च उभयतः = उभयोः पार्श्वयोः सबहुमानं सादरातिशयं भ्रूलताभ्यां = भ्रूलतासंकेतेनेत्यर्थः विसर्जितः = निवर्तितः राजलोकः = राजमण्डलं येन सः, अवततार = हस्तिन्या अवारुरोह, बाह्ये = आस्थानमण्डपे = सभामंडपे स्थापितं = निहितं आसनम् आचक्राम = अधिष्ठितवान् प्रास्तः = अपास्तः समायोगः = सैनिकसमवायः येन स अर्थात् समायोगमङ्गमादिश्य क्षणम् आशिष्ट ( 'आस् उपवेशने + लुङ् ) = उपविष्टवान्।

प्रतीहारः = दौवारिकः पृथिव्याः पृष्ठे = भूतले इत्यर्थः प्रतिष्ठापितौ = निहितौ पाणी = हस्तौ पल्लवौ इवेत्युपमिततत्पु० येन स विज्ञापितवान् = न्यवेदयत्—'देव, महाराज, प्राग्ज्योतिषाणां = कामरूपदेशस्य ईश्वरेण = नरेशेन कुमारेण = एतन्नामकेन प्रहितः = प्रेषितः अन्तरङ्गः = विश्वस्तः हंसवेगः नाम यस्य स दूतः तोरणं = बहिर्द्वारम् अध्यास्ते = अधितिष्ठति। आशु = शीघ्रं प्रवेशय = प्रवेष्टुं प्रेरय इति सादरम् = आदरपूर्वकम् आदिदेश = आदिष्टवान्। दक्षतया = नैपुण्येन क्षितिपालस्य = राज्ञः तस्मिन् दूते आदरात् च निरगात् = निरगच्छत्। नयना०—नयनयोः यः आनन्दः प्रीतिः तस्य सम्पादने = अनुष्ठाने सुभगः = सुन्दरः यः आभोगः = शरीरस्य विस्तारः परिपूर्णता अङ्गानां समानानुपातः इति यावत् तेन भद्रया = सौम्यया आकृत्या = आकारेण एव समुल्लंघ्यमानः = अतिक्रम्यमाणः गुणानां गरिमा = गौरवं यस्य सः अयं भावः यत्राकृतिस्तत्र गुणा वसन्तीत्याभाणकानुसारेण गुणाकृत्योः सामानाधिकरण्यं लोके प्रसिद्धम् किन्तु हंसवेगस्य सौम्याकृतिः व्यक्तित्वमिति यावत् गुणानपि अतिशेते स्म; प्रभूतानि = प्रचुराणि प्राभृतानि = उपहारान् बिभ्रति = वहन्तीति तथोक्तानां पुरुषाणां समूहेन = दलेन महता = विपुलेन अनुगम्यमाना = अनुस्रियमाणा सविनयं प्रविवेश = प्रविष्टवान्। आरात् = दूरात् [ 'आराद् दूर-समीपयोः' इत्यमरः ] एव पञ्चभिः अङ्गैः हस्ताभ्यां पादाभ्यां शिरसा च आलि-

हिन्दी—इसके बाद वहाँ भूतल पर कर-पल्लव रखे द्वारपाल ने निवेदन किया—'महाराज, आसाम-नरेश कुमार का भेजा हुआ, हंसवेग नामक विश्वस्त दूत बाहर द्वार पर खड़ा हुआ है।' राजा ने आदरपूर्वक आज्ञा दी—'उसे शीघ्र भिजवाओ'। इसके बाद ( अपनी ) निपुणता से और राजा का ( उसके प्रति ) आदर-भाव होने से द्वारपाल स्वयं ही चला गया। तदनन्तर नयनों को आनन्द देने वाले सुन्दर गठीले शरीर से सौम्य बनी आकृति द्वारा ही अपने गुण-गौरव को अतिक्रमण करता हुआ, बहुत सी भेंटें उठाए हुए लोगों के एक विशाल समूह को अपने पीछे लिये हंसवेग नम्रतापूर्वक राजगृह में प्रविष्ट हुआ। दूर से ही पांचों अंगों द्वारा आंगन को छुए उसने प्रणाम किया। 'आओ, आओ' इस तरह बुलाये गए, आगे दौड़े ( फिर ) पीछे हटे, चरणपीठ पर भाल-लेखा रखे, राजा द्वारा पीठ पर हाथ रखे जाने पर

प्रणाममकरोत् । 'एह्येहि' इति सबहुमानमाहूतश्च प्रधावितोऽपसृतः पादपीठलुठितललाटलेखो न्यस्तहस्तः पृष्ठे पार्थिवेनोपसृत्य भूयो नमश्चक्रे । स्निग्धनरेन्द्रदृष्ट्या निर्दिष्टमविप्रकृष्टं स प्रदेशमध्यास्त । ततो राजा तिरश्चीं तनुमीषदिव दधानश्चामरग्राहिणीमन्तरालवर्तिनीं समुत्सार्य संमुखीनस्तं सप्रश्रयं पप्रच्छ—'हंसवेग, श्रीमान्कच्चित्कुशली कुमारः' इति । स तमन्ववादीत्—'अद्य कुशली येनैवं स्नेहस्नपितया सौहार्दद्रवार्द्रया सगौरवं गिरा पृच्छति देवः' इति ।

स्थित्वा च मुहूर्तमिव पुनः स चतुरम्भोधिभोगभूतिभाजनभूतस्य देवस्य सद्भावगर्भमपहाय हृदयमेकमन्यदनुरूपं प्राभृतमेव दुर्लभं लोके तथाप्यस्मत्स्वामिना सन्देशमशून्यतां नयता पूर्वजोपार्जितं वारुणातपत्रमाभोगाख्यमनुरूपस्थानन्यासेन कृतार्थीकृतमेतत् । अस्य च कुतूहलकृन्ति बहूनि आश्चर्याणि दृश्यन्ते । तथाहि प्रतिदिवसं प्रविशति शैत्यहेतोश्छायायाः किरणसहस्रादेकैकः सोमस्य रश्मिरस्मिन् । यस्मिन्प्रविष्टे प्रध्यानानन्तरं स्वादवो दन्तवीणोपदेशाचार्यश्च्योतन्ति चन्द्रभासामम्भसां मणिशलाकाभ्यो

टीका–गितम्=स्पृष्टमित्यर्थः अङ्गनं=प्रांगणं येन सः दण्डवत् पतितः=इति यावत्, प्रणामम् अकरोत्=प्रणतवान् । एहि एहि=आगच्छ आगच्छ बाहुना मानेन=आदरेण सहितं यथा स्यात्तथा 'आहूतः'=आकारितः प्रधावितः=प्रद्रुतः अग्रे गतः इत्यर्थः अनन्तरञ्च अपसृतः=किमपि पश्चाद् गतः पादपीठे=सिंहासनस्य चरणपीठिकायां लुठिता=स्थितेत्यर्थः ललाटस्य=भालस्य लेखा=रेखा यस्य सः पार्थिवेन=राज्ञा हर्षेण पृष्ठे न्यस्तः=निहितः हस्तः यस्य स उपसृत्य=उपगम्य भूयः पुनः नमश्चक्रे=अनमत् स्निग्धा=स्नेह-पूर्णा या नरेन्द्रस्य दृष्टिः=नयनं तया निर्दिष्टं=संकेतितम् अविप्रकृष्टम्=अदूरं प्रदेशं=स्थानं सः=हंसवेगः अध्यास्त=उपाविशत् । तनुम्=देहम् ईषदिव=किमपि तिरश्चीं=वक्रां दधानः धारयन् कुर्वन्नित्यर्थः अन्तराले=मध्ये वर्तते इति तथोक्तां चामरग्राहिणीं समुत्सार्य=दूरीकृत्य संमुखीनः=( संमुख+खः ईन ) अभिमुखः तं=हंसवेगम् सप्रश्रयं=प्रश्रयः=शिष्टता आदरः विनयः तेन सहितं यथा स्यात्तथा पप्रच्छ=अपृच्छत् । कच्चित्=आशासे [ 'कच्चित् कामप्रवेदने' इत्यमरः ] तम् अन्ववादीत्=अन्वकथयत्—स्नेहेन स्नपितया=स्नानं कारितया स्निग्धयेत्यर्थः सौहार्दं=सुहृदः भावः मित्रता प्रेमेति यावत् एव द्रवः=रसः तेन आर्द्रया=सिक्तया सगौरवं=गौरवं गरिमा तेन सहितं यथा स्यात्तथा गिरा=वाण्या देवः=महाराजः भवानित्यर्थः पृच्छति ।

मुहूर्तम् इव=किञ्चित्कालं स्थित्वा सः हंसवेगः—'चतुर्णाम् अम्भोधीनां=सागराणां या भोगस्य=उपभोगस्य भूतिः=ऐश्वर्यं तस्याः भाजनभूतस्य=पात्ररूपस्य देवस्य=महाराजस्य सद्भावः=सौहार्दं गर्भे=अन्तः यस्य तत् एकं हृदयम् अपहाय=त्यक्त्वा अन्यत् अनुरूपं=योग्यम् प्राभृतम्=उपायनम् एव लोके दुर्लभं=दुष्प्राप्यम्, तथापि अस्माकं स्वामिना=कामरूपनरेशेन सन्देशं=वाचिकम् अशून्यतां नयता=अरिक्तीकुर्वता पूर्णतां प्रापयतेति यावत् पूर्वजैः पूर्वपुरुषैः उपार्जितं=लब्धम् आभोगः आख्या=नाम यस्य तत् वारुणं=वरुणदेवतासकाशात् प्राप्तम् आतपत्रं=छत्रम् अनुरूपं=योग्यम् स्थानं=पात्र तत्र न्यासेन=निधानेन तत्कृते समर्पणेनेत्यर्थः एतत् छत्रं कृतार्थीकृतम्=सफलीकृतम्, धन्यतां नीतम् जगत्प्रभुत्वचिह्नभूतस्य अस्यातपत्रस्य भवान् एव समुचितं पात्रमितिभावः । अस्य=आतपत्रस्य कुतूहलं=कौतुकं कुर्वन्तीति ( क्विप् ) तथोक्तानि । प्रतिदिवसं=दिवसे दिवसे छायायाः=अनातपस्य शैत्यस्य=शीतलत्वस्य हेतोः=कारणात् अस्य छायायै शैत्यं प्रदातुमित्यर्थः सोमस्य=चन्द्रस्य किरणानां=रश्मीनां सहस्रात् एकः एकः रश्मिः अस्मिन् छत्रे प्रविशति । यस्मिन्=रश्मौ प्रविष्टे सति प्रध्यानस्य=चिन्तनस्य अनन्तरम् अर्थात् यदाऽस्यातपत्रस्य स्वामी ध्यानं

हिन्दी–उसने आगे बढ़ कर फिर प्रणाम किया । राजा की स्नेह-भरी दृष्टि द्वारा निर्दिष्ट, समीपवर्ती स्थान पर वह बैठ गया । तदनन्तर राजा ने शरीर कुछ टेढ़ा करके बीच में व्यवधान बनी चामरग्राहिणी को हटाकर संमुख हो शिष्टतापूर्वक उसे पूछा—'हंसवेग ! श्रीमान् कुमार कुशल तो हैं ?' उसने उत्तर दिया—'आज कुशल हैं जब इस तरह स्नेह-स्नान सौहार्दरस-भीनी वाणी से गौरव के साथ महाराज पूछ रहे हैं' ।

थोड़ी देर ठहरकर वह फिर—चारों समुद्रों के भोगैश्वर्य के पात्र-भूत महाराज के लिए सद्भाव-पूर्ण हृदय को छोड़ अन्य अनुरूप उपहार संसार में दुर्लभ है, तथापि सन्देश खाली न जाने देते हुए ( हमारे ) स्वामी ने पूर्वजों द्वारा उपार्जित आभोग नाम का यह वारुण आतपत्र अनुरूपस्थान को सौंप कर धन्य बना दिया है । कुतूहल उत्पन्न करने वाले इसके बहुत से आश्चर्य देखने में आते हैं,—जैसे छाया की शीतलता हेतु चन्द्रमा की सहस्रकिरणों में से एक-एक इसमें प्रतिदिन प्रवेश करती है जिसके प्रविष्ट होते ही ध्यान करने के बाद इसकी मणिमय डंडियों से चन्द्र कान्ति-सदृश जल की दन्तवीणा ( दांत खटखटाने ) की शिक्षा की आचार्य-भूत मधुर, स्वच्छ धारायें इच्छानुसार चूने लगती हैं ।

यावदिच्छमच्छा धाराः । प्रचेता इव यश्चतुर्णामर्णवानामधिपतिर्भूतो भावी वा तमिदमनुगृह्णाति छायया नेतरम् । इदं च न सप्तार्चिर्दहति, न पृषदश्वो हरति, नोदकमार्द्रयति न रजांसि मलिनयन्ति, न जरा जर्जरयति । एतत्तावदनुगृह्णातु दृशा देवः सन्देशमपि विस्रब्धं श्रोष्यति ।' इत्येवमभिधाय विवृत्यात्मीयं पुरुषमभ्यधात्—'उत्तिष्ठ दर्शय देवस्य' इति ।

स वचनानन्तरमुत्थाय पुमानूर्ध्वीचकार तद्धौतदुकूलकल्पिताच्च निचोलकादकोषीत् । आकृष्यमाण एव च यस्मिन्नतिसित-महसि सरभसमहासीव हरेण, रसातलादुदलासीव शेषफणिफणाफलकमण्डलेन, अस्थायीव चक्रीभूयान्तरिक्षे क्षीरोदेन, अघटीव गगनाङ्गने गोष्ठीबन्धः शारदेन बलाहकव्यूहेन, विश्रान्तमिव विततपक्षतिना वियति पितामहविमानहंसयूथेन, अत्रिनेत्रनिर्गतस्य धवलधाममण्डलमनोहरो दृष्ट इव जनेन जन्मदिवसः कुमुदबन्धोः, प्रत्यक्षीकृत इवोद्गमनक्षणो नारायणनाभिपुण्डरीकस्य,

---

टीका–करोति इच्छति च, मणिमय्यः शलाकाः = मणिशलाकाः ताभ्यः स्वादवः = मुखावहाः दन्तानां या वीणा = शैत्याति शयेन परस्पर-संघट्टात् खटखटात्कारः तस्याः उपदेशे = शिक्षायाम् आचार्याः गुरवः दन्त-खटखटात्कारं कारयन्तः इत्यर्थः चन्द्रभासाम् = चन्द्रस्य इव भाः येषां तथाभूतानाम् अम्भसां = जलानाम् अच्छाः = स्वच्छाः धाराः यावदिच्छम् = यावती इच्छा तावत्यः धाराः इति [ 'यावदवधारणे' पा० २।१।८ अव्ययीभा० ) यावदिच्छम् = यथेच्छमित्यर्थः यथा स्यात्तथा श्च्योतन्ति = स्रवन्ति । 'प्रचेताः = वरुणः [ 'प्रचेता वरुणः पाशी' इत्यमरः ] इवेत्युपमायां यः चतुर्णाम् अर्णवानां = समुद्राणाम् अधिपतिः = स्वामी भूतः = जातः भावी = भविष्यन् वा तम् छायया अनुगृह्णाति = अनुकम्पते न इतरम् = अन्यम् । सप्तार्चिः = अग्निः पृषदश्वः = गन्धवहः [ 'पृषदश्वो गन्धवहः' इत्यमरः ] हरति = नयति; उदकं = जलम् = आर्द्रयति = विलन्नीकरोति रजांसि = धूलयः मलिनयन्ति = मलिनीकुर्वन्ति, जरा = वृद्धावस्था जर्जरयति = जीर्णं करोति । अनुगृह्णातु = अनुकम्पताम् दृशा = अवलोकने देवः = महाराजः, विस्रब्धं = गुप्तं रहसि इति यावत् यथा स्यात्तथा श्रोष्यति = आकर्णयिष्यति' इति एवम् अभिधाय = कथयित्वा विवृत्य = मुख परावृत्यत्यर्थ. अभ्यधात् = अकथयत् ।

पुमान् = पुरुषः तत् = छत्रम् ऊर्ध्वीचकार = ऊर्ध्वीकृतवान् धौतं = श्वेतं यत् दुकूलं = चीनांशुकं तेन कल्पितात् = रचितात् निचोलकात् = प्रच्छदपटात् आवरणपटादिति यावत् ('निचोलः प्रच्छदपटः' इत्यमरः) अकोषीत् = बहिः निस्सारितवान् । अतिशयेन सितं = शुभ्रं महः = कान्तिः यस्य तस्मिन् । यस्मिन् = आतपत्रे आकृष्यमाणे = प्रच्छदपटात् बहिः निष्कास्यमाने सति हरेण = महादेवेन सरभसं = सवेगं यथा स्यात्तथा अहासि (√हस् भावे लुङ्) - हसितम् इवेत्युत्प्रेक्षायाम्, महादेवस्य अट्टहासः कविजगति श्वेतरूपेण वर्ण्यते, शेषफणिनः शेषनागस्य फणा-फलकानां = फणापट्टानां मण्डलेन = समूहेन रसातलात् = पातालात् उदलासि = उल्लासितम् इवेत्युत्प्रेक्षायाम्, क्षीरोदेन = क्षीरसागरेण चक्रीभूय = मण्डलाकारं भूत्वा अन्तरिक्षे = गगने अस्थायि = स्थितम् इवेत्युत्प्रेक्षायाम्, शारदेन = शरदः अयम् ( अण् ) तेन शरत्कालीनेन

टिप्पणी—अत्रिनेत्रनिर्गतस्य—चन्द्रमा की उत्पत्ति अत्रि के नेत्र से बताई गई है, देखिये हरिवंशपु० - नेत्राभ्यां वारि सुस्राव दशधा द्योतयद्दिशः । तं गर्भं विधिना हृष्टा दश देव्यो दधुस्तदा ॥ समेत्य धारयामासुर्न च ताः समशक्नुवन् । स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः । पपात भासयंल्लोकान् शीतांशुः सर्वभावनः ॥ कालिदास ने भी लिखा है—अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः ( रघु० २।७५ ) ।

हिन्दी–और जो (व्यक्ति वरुण की तरह चारों समुद्रों का स्वामी रहा हो अथवा होनेवाला हो उसे यह छाया से अनुगृहीत करता है, दूसरे को नहीं । न इसे आग जलाती है, न वायु इसका हरण करता है, न जल इसे गीला करता है, न धूल मैला करती है, न वृद्धावस्था इसे जीर्ण करती है । इसे महाराज जरा अवलोकन द्वारा अनुगृहीत करें, संदेश भी एकान्त में सुनेंगे' इस तरह कह कर घूम के उसने अपने आदमी से कहा–'उठो महाराज को (छत्र) दिखाओ ।'

कहने के बाद ही उठकर उस व्यक्ति ने ( छत्र ) उठाया और श्वेत रेशमीवस्त्र के बने आवरण से उसे बाहर निकाला अतिश्वेत कान्ति वाले जिसके बाहर निकालते ही ऐसा लगा मानो महादेव ने जोर का अट्टहास किया हो मानो पाताल से शेषनाग के फणा-फलकों का समूह ऊपर उठ आया हो, मानो क्षीरसागर मण्डलाकार होकर गगन में स्थित हो गया हो, मानो शरद के मेघ-समूह ने गगन के प्रांगण में सभा आयोजित की हो, मानो ब्रह्मा के वाहन-भूत हंस-समूह ने पंख फैलाकर आकाश में विश्राम लिया हो, मानो अत्रिकी आँख से उत्पन्न चन्द्रमा का श्वेत तेज मण्डल से सुन्दर बना हुआ जन्मदिवस लोगों ने देख लिया हो, मानो विष्णु के नाभिकमल की उत्पत्ति का कारण प्रत्यक्ष कर लिया हो, मानो आँखों को

आहितेव कौमुदीप्रदोषदर्शनानन्दतृप्तिरक्षणाम्, उदमाङ्क्षीदिव मन्दाकिनीपुलिनमण्डलं महदम्बरोदरे, परिवर्तित इव दिवसः पौर्णमासीनिशया, मन्दमन्दमिन्दूदयसन्देहे[1]दूयमानमानसैर्विघटितं विघटमानचञ्चुच्युतमृणालकोटिभिरासन्नकमलिनीचक्रवाकमिथुनैः, शरज्जलधरपटलाशङ्कासङ्कोचितकेकारवमूकमुखपुटैः पराङ्मुखीभूतं भवनशिखण्डिमण्डलैः, प्रबुद्धमाबद्धचन्द्रानन्दोद्दामोद्दलद्दलपुटाट्टहासविशदं कुमुदषण्डैः।

चित्रीयमाणचेताश्च सराजको राजा दण्डानुसाराधिरोहिण्या दृष्ट्या सादरमैक्षिष्ट तत्तिलकमिव त्रिभुवनस्य, शैशवमिव श्वेतद्वीपस्य, अंशावतारमिव शरदिन्दोः, हृदयमिव धर्मस्य, निवेशमिव शशिलोकस्य, दन्तमण्ड[2]लकद्युतिधवलं मुखमिव चक्रवर्तित्वस्य, मौक्तिकजालपरिकरजितं सीमन्तचक्रमिव दिवः, बहलज्योत्स्नाशुक्लोदरमन्दवमिव परिवेशवलयम्, शौक्ल्याप-

टीका–बलाहकानां=मेघानां ['अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' इत्यमरः] व्यूहेन=समूहेन गोष्ठीबन्धः=सभायाः आयोजनम् अघटि=घटितम् कृतमित्यर्थः इव, वितता=विस्तृता पक्षतिः=पक्षमूलं यस्य तेन पितामहस्य=ब्रह्मणः विमानानां=वाहनभूतानां हंसानां यूथेन=समूहेन वियति=गगने विश्रान्तम्=विश्रामः कृत इव, अत्रेः=एतन्नामकस्य ऋषेः मुखात् निर्गतस्य=निःसृतस्य कुमुदबन्धोः=चन्द्रस्य चन्द्रो हि कुमुदानां रात्रौ विकासकरणात् कुमुदबन्धुरुच्यते, धवलं=शुभ्रं यद् धाममण्डलं=तेजोमण्डलं तेन मनोहरः=रम्यः जन्मदिवसः इव जनेन=लोकैः दृष्टः इव, नारायणस्य विष्णोः, नाभेः=नाभिदेशस्य पुण्डरीकस्य=कमलस्य उद्गमनस्य=उत्पत्तेः क्षणः=समयः प्रत्यक्षीकृतः=दृष्टः इव, अक्ष्णां=लोकानां चक्षुषां कौमुदी=चन्द्रिका तद्युक्तः प्रदोषः=सायंकालः ( मध्यमपदलो० ) तस्य दर्शनेन यः आनन्दः=प्रहर्षः तस्य तृप्तिः=परिपूर्तिः आहिता=जनिता इव, अम्बरस्य=आकाशस्य उदरे=अभ्यन्तरे महत्=विपुलं मन्दाकिन्याः=स्वर्गङ्गायाः पुलिनस्य=सैकतस्य सिकतापूर्णतीरप्रदेशस्येति यावत् मण्डलं=वृत्तं उदमांक्षीत् ( उत्+√मस्ज्+लुङ् ) उन्मग्नोऽभवत् इव दिवसः दिनम् पौर्णमास्याः निशया=रात्र्या परिवर्तितः=परिणतः इव उपरि सर्वत्रोत्प्रेक्षा मन्द०—इन्दोः=चन्द्रस्य उदयस्य=उद्गमस्य सन्देहेन=आशंकया दूयमानं=दुःखीभवत् मानस=मनः येषां तैः, विघटमानाभ्यः=विश्लिष्यमाणाभ्यः उद्घाटिताभ्यः इत्यर्थः चञ्चुभ्यः=मुखेभ्यः च्युताः=पतिताः मृणालस्य=बिसस्य कोटयः=अग्राणि येषां तैः, आसन्नाः=सन्निहिताः याः कमलिन्यः=कमलवनानि कमलसरांसि तासां चक्रवाकाणां=मिथुनैः=द्वन्द्वैः मन्दमन्दं=शनैः शनैः विघटितं=वियुक्तम्, अत्र भ्रान्तिमान् अलङ्कारः, शरद्०—शरदः=शरत्कालस्य जलधर-पटलस्य=मेघसमूहस्य आशंकया=भ्रमेण संकोचितम्=संकोचं प्रापितं मुद्रितमित्यर्थः केका-रवेण=केकाशब्देन मूकं=वाणीशून्यं मुखपटं येषां तैः भवनस्य=गृहस्य शिखण्डिनां=मयूराणां मण्डलैः=समूहैः पराङ्मुखीभूतम्=मुखं नीचैः कृतमित्यर्थः, शरत्काले हि मेघाभावे मयूराः मूका आकाशाच्च पराङ्मुखा भवन्ति, अत्रापि भ्रान्तिमान्, प्रबुद्ध०—कुमुदानां=रात्रिकमलानां षण्डैः=समूहैः आबद्धः=जनितः चन्द्रात्=चन्द्रदर्शनात् यः आनन्दः=प्रहर्षः तेन उद्दामं=भृशमित्यर्थः उद्दलत्=उन्मीलत् यद् दलपुटं=पत्रपुटं एव अट्टहासः=महाहासः तेन विशदं=शुभ्रं यथा स्यात्तथा प्रबुद्धम्=विकसितम्; अत्रापि भ्रान्तिमान् सः च रूपकेण संकीर्यते।

हिन्दी–ज्योत्स्नापूर्ण सायंकाल के दर्शन से आनन्द की तृप्ति मिल गई हो, मानो मंदाकिनी के रेतीले तीर का एक विशाल गोल टुकड़ा आकाश में ऊपर उठ आया हो और मानो दिन पौर्णमासी की रात में परिवर्तित हो गया हो, चन्द्रोदय के भ्रम से मन में दुःखी हो रहे, खुलते हुए चोंचों से गिरे हुए मृणालों के अग्रभागों वाले समीपस्थ कमलवनों के चक्रवाकों के जोड़े धीरे-धीरे विछुड़ बैठे; शरत्कालीन मेघपटल की आशंका से बन्द हुए पड़े, क्रेंकार-ध्वनि से मूक बने मुख-पुट वाले घर के मयूर-समूह ने ( आकाश से ) मुंह फेर लिया और चन्द्रमा ( को देखने ) से उत्पन्न हुए आनन्द से खूब खिल रही पुटाकार पंखुड़ियों के अट्टहास से श्वेत हो कुमुद समूह जाग पड़ा।

राजाओं सहित मन में आश्चर्य करते हुए हर्षवर्धन ने ( छत्र के ) डंडे से लेकर ( ऊपर तक ) चढ़ती हुई दृष्टि से आदर-पूर्वक वह तीनों लोकों में अद्भुत महान् छत्र देखा, जो ऐसा लग रहा था मानो तीनों भुवनों का तिलक हो, मानो श्वेत द्वीप का शैशव हो, मानो शरद के चाँद का आंशिक अवतार हो, मानो धैर्य का हृदय हो, मानो चन्द्रलोक का स्थान हो, मानो दन्त-पंक्तियों की कान्ति से सफेद बना हुआ चक्रवर्तित्व का मुख हो, मानो द्यु को मोतियों की

१. 'ह्रयमान' २. 'मण्डलधवलं'

हसितशङ्खश्रीकं श्रवणमण्डलमिव निश्चलतां गतमैरावतस्य, श्वेतगङ्गावर्तपाण्डुरं पदमिव त्रिभुवनवन्दनीयं त्रिविक्रमस्य, प्रचेतसश्चूडामणिमरीचिशिखाभिरिव श्लिष्टाभिर्मानसबिसतन्तुमयीभिश्चामरिकावलीभिर्विरचितपरिवेशम्, उपरि चक्रवर्तिलक्ष्मीनूपुरस्वनश्रवणदोहदनिश्चलेनेव लक्ष्मणा विततपत्रेण हंसेन सनाथीकृतशिखरम्, स्पर्शवता च प्रभावस्तम्भितेन मन्दाकिनीमृणालेन मुकुलितफणेन वासुकिनेव नीतेन दण्डतां द्योतमानम्, धवलिम्ना क्षालयदिव नक्षत्रपथम्, प्रभाप्रवाहप्रथिम्ना प्रावृण्वदिव दिवसम्, समुच्छ्रायेणाधःकुर्वदिव दिवम्, उपरिस्थितमिव सर्वमङ्गलानाम्, श्वेतमच्छपमिव श्रियः, स्तबकमिव ब्रह्मस्तम्भस्य, नाभिमण्डलमिव ज्योत्स्नायाः, विशदहासमिव कीर्तेः, फेनराशिमिव खड्गधाराजलानाम्, यशःपटलमिव शौर्यशालितायाः, त्रैलोक्याद्भुतं महच्छत्रम् ।

---

टीका—चित्रीयमाणं चित्रम्=आश्चर्यं करोतीति [ 'चित्र क्यच्' 'नमोवरिवश्चित्रङः क्यच्' पा० ३।१।१९ ] विस्मयमानमिति यावत चेतः=मनः यस्य सः राजभिः=नृपैः सहितः राजा=हर्षवर्धनः दण्डस्य=आतपत्रदण्डस्य अनुसारेण=क्रमशः दण्डमनुसृत्येत्यर्थः अधिरोहति=उपरि पटपर्यन्तं गच्छतीति तथोक्तया दृष्ट्या=चक्षुषा सादरं=आदरेण सह ऐक्षिष्ट=अवलोकितवान् तत् महत् छत्रमित्युत्तरेण अन्वयः, त्रिभुवनस्य=त्रिलोकस्य तिलकम्=ललाटे कस्तूरिकादिना शोभार्थं चिह्नम् इव, श्वेतद्वीपस्य=द्वीपविशेषस्य यत्र सर्वमेव श्वेतमस्ति, महाभारतानुसारेण—'आलोकयन्नुत्तरपश्चिमेन ददर्श चाप्यद्भुतमुक्तरूपम् । क्षीरोदधेर्योत्तरतो हि द्वीपः श्वेतः स नाम्ना प्रथितो विशालः ( शा० प० ३३६।९ ) शैशवम्=बाल्यम् इव, शरद.=शरदृतो. इन्दोः=चन्द्रस्य अंशावतारम्=आंशिकम् अवतारम् इव, धर्मस्य =सत्कर्मानुष्ठानस्य हृदयम् इव धर्मस्य श्वेतरूपेण वर्णनात् शशिलोकस्य=चन्द्रलोकस्य निवेशम्=आवास-स्थानम् इव, चक्रवर्तित्वस्य=सार्वभौमत्वस्य महाराजाधिराजत्वस्येति यावत् दन्तानां=दशनानां मण्डलस्य=समूहस्य द्युत्या=कान्त्या धवलं=श्वेतं मुखं=आननम् इव, दिवः=द्युलोकस्य मौक्तिकानां जालस्य=समूहस्य परिकरेण=परिवेष्टनेन ( सं० ) सितं=श्वेतं सीमान्तस्य केश-मार्गस्य द्विधा विभक्तायाः केशपंक्त्याः इति यावत् चक्रं=मण्डलम् इव, स्त्रीभिः सीमन्ते मौक्तिकावली-ग्रथितं भूषणं धार्यते छत्रं परितः लम्बमान मौक्तिकजालम् । द्युनायिकायाः मुक्तावली-ग्रथितभूषणमिव प्रतीयते स्मेति भावः, बहुला=प्रभूता या ज्योत्स्ना=चन्द्रिका तया शुक्लम् उदरम्=अभ्यन्तरम् यस्य तत् ऐन्दवम् इन्दोः इदम् [ अण् ] चान्द्रमित्यर्थः परिवेशस्य=परिधेः वलयम्=मण्डलम् इव, ऐरावतस्य=इन्द्रस्य हस्तिनः शौक्ल्येन=शुक्लस्य भावेन श्वेतिम्नेति यावत् अपहसिता=तिरस्कृता शंखस्य श्रीः=कान्तिः येन तत् निश्चलतां=स्थिरतां गत=प्राप्तं निश्चलीभूतमित्यर्थः श्रवणस्य=कर्णस्य मण्डलं=वृत्तम् इव, ऐरावतो हि श्वेतो भवतीति ध्येयम्, त्रिविक्रमस्य=त्रयो विक्रमाः=पादप्रक्षेपाः यस्य तस्य विष्णोरित्यर्थः वामनावतारधारिणा विष्णुना द्वाभ्यां विक्रमाभ्यां भुवं द्यावाश्च अन्तरित्य तृतीयः असुरराजस्य बलेः शिरसि निहितः इति पुराणवार्ता अनुसन्धेया, श्वेता या गंगा तस्याः आवर्तन=जलभ्रमणेन ['स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः] पाण्डुरं=श्वेतं त्रिभुवनस्य=लोकत्रयस्य वन्दनीयम्=प्रणमनीयं पद=चरणम् इव, गंगा विष्णुपादाद्विनिर्गतेत्यत्र विष्णुपु० प्राह -'वामपादाम्बुजांगुष्ठे नखस्रोतोविनिर्गता । विष्णोर्बिभर्ति यां भक्त्या शिरसाहर्निशं ध्रुवः ।। ( २।८ ), प्रचेत०—प्रचेतसः=वरुणस्य चूडामणेः=शिरोरत्नस्य मरीचीनां=

हिन्दी—लड़ गूंथी रहने से श्वेत बनी माँग की पंक्ति हो, मानो चन्द्रमा का घनी चाँदनी से श्वेत बने भीतरी भागवाला परिवेश का घेरा हो, मानो सफेदी से शख की कान्ति का उपहास करने वाला, निश्चल बना हुआ ऐरावत के कान का घेरा हो, मानो विष्णु भगवान् का श्वेत गंगा के जल-भ्रमर से धवल बना हुआ, तीनों लोकों का बन्दनीय चरण हो, जिसकी परिधि ( घेरा ) लटकी हुई मानसरोवर के मृणाल तन्तु-रूप छोटी-छोटी चामरियों से वरुण के शिरोरत्न की किरणों की नोकों से—जैसे बनी हुई थी, जिसके अग्रभाग पर तना पंख फैलाये हंस का चिह्न ऐसा लग रहा था मानो (जीवित हंस) चक्रवर्ती की लक्ष्मी के नूपुरों की झंकार सुनने की इच्छा से निश्चल हुआ बैठा हो जो संकुचितपन वाले डंडे के रूप में परिणत शेषनाग से—जैसे कोमल स्पर्श वाले ( वरुण की ) शक्ति से दृढ़ बनाये गये मन्दाकिनी के मृणाल (दण्ड) से चमक रहा था, जो सफेदी से मानो नक्षत्र-मार्ग ( गगन ) धो रहा था, कान्ति-प्रवाह के प्रसार से मानो दिन को आच्छादित कर रहा था, जो मानो सभी मंगलों के ऊपर स्थित था, मानो ब्रह्मा-रूपी तने का फूलों का गुच्छा था, मानो चाँदनी का नाभि-मण्डल था, मानो कीर्ति का निर्मल हास था, मानो खड्ग की धार के जलों का फेन समूह था, और मानो शौर्यशालिता का यश-समूह था ।

दृष्टे च तस्मिन्राजा प्रथमं शेषमपि प्राभृतं प्रकाशयांचक्रुः क्रमेण कार्माः। तद्यथा परार्ध्यरत्नांशुशोणीकृतदिग्भागान् भगदत्तप्रभृतिख्यातपार्थिवपरागतानाहृतलक्षणानलङ्कारान्, प्रभालेपिनां च चूडामणीनां समुत्कर्षान्, क्षीरोदधेर्धवलताहेतूनिव हारान्, अनेकरागरुचिरवेत्रकरण्डकुण्डलीकृतानि शरच्चन्द्रमरीचिरुञ्चि शौचक्षमाणि क्षौमाणि कुशलशिल्पिलोकोल्लिखितानां

---

टीका–किरणानां शिखाभिः=कोटिभिः इव श्लिष्टाभिः=संसक्ताभिः बिसस्य=मृणालस्य तन्तवः=सूत्राणि एव० मणयः ताभिः चमरिकाणां लघुचमराणाम् आवलीभिः=पंक्तिभिः विरचितः=विनिर्मितः परिवेशः=परिधिः यस्य तत्, चक्र० ---चक्रवर्तिनः=सार्वभौमस्य या लक्ष्मीः=श्रीः तस्याः नूपुरयोः=मञ्जीरयोः स्वनस्य=रवस्य श्रवणे=आकर्णने यः दोहदः=इच्छा तेन निश्चलेन स्थिरेण इव लक्ष्मणा=चिह्नेन वितते=विस्तृते पत्रे=पक्षौ यस्य तेन=हंसेन सनाथीकृतं=युक्तं शिखरं=अग्रं यस्य तत् छत्रस्योपरि हंसस्य आकृतिः चिह्निता आसीत्, कविः कल्पयति स जीवितहंसः लक्ष्मीनूपुररवश्रवणोत्सुक्येन निश्चलस्तिष्ठतीति स्पर्शवता=मृदुस्पर्शेन अथवा सुखस्पर्शेन प्रभावेण=वरुणनकस्या स्तम्भितेन=दृढीकृतेनेत्यर्थः मन्दाकिन्याः=स्वर्गंगायाः मृणालेन=बिसेन, मुकुलिता=संकुचिता फणा यस्य तेन दण्डतां =दण्डत्व नीतेन=प्रापितेन वासुकिना=शेषनागेन इव द्योतमानं=दीप्यमानम् वासुकिः हि श्वेतो भवतीति स्मर्तव्यं धवलिम्ना=श्वैत्येन नक्षत्राणां=तारकाणां पन्थानम्=मार्गम् गगनमित्यर्थः क्षालयत्=प्रक्षालितं कुर्वत् इव, प्रभायाः =कान्त्याः प्रवाहस्य प्राथिम्ना=पृथुत्वेन विस्तारेणेत्यर्थः दिवसं प्रावृण्वत्=आच्छादयत् इव, समुच्छ्रायेण=औन्नत्येन दिवं=द्युलोकम् अधः कुर्वन्=नीचैः कुर्वाणम् इव सर्वेषां मंगलानां=श्रेयसाम् उपरि स्थितम् इव अतिमङ्गलकारीत्यर्थः श्रियः=राजलक्ष्म्याः श्वेतमण्डपम्=धवलगृहम् इव, ब्रह्मा=विधाता एव स्तम्भः=वृक्षस्कन्धः तस्य स्तवकं=पुष्पगुच्छकम् अर्थात् संसारस्य उत्तमांशम् इव, ज्योत्स्नायाः=चन्द्रिकायाः नाभिमण्डलं=नाभिवृत्तम् इव, नाभिर्हि गोलाकारा भवति अथवा नाभिः रथचक्रस्य पिण्डी ततो यथा अराः निस्सरन्ति तथैव छत्रात् प्रभा निस्सरतिस्म, कीर्तेः=यशसः विशद धवल हासम् इव हासस्य कविजगति धवलत्वात् खड्गस्य धारा=अग्रम् एव धारा=नदी तस्याः जलानाम् फेनस्य पिण्डीरस्य राशि=समूहम् इव, शौर्यशालितायाः=वीर्यवत्त्वस्य यशःपटलं=कीर्तिसमूहम् इवेति उपरि सर्वत्र उत्प्रेक्षा ज्ञेया सा च खड्गधाराजलानाम् इत्यत्र रूपकेण कीर्तेः इत्यत्र च समासोक्त्या संकीर्यते, त्रैलोक्ये=त्रिभुवने अद्भुतम्= आश्चर्यकरम्।

प्रथमं राज्ञा=हर्षेण तस्मिन्=छत्रे दृष्टे सति, कार्माः=कर्मचारिणः ('स कार्मः कर्मशीलो यः' इत्यमरः) शेषम् =अवशिष्टम् अपि प्राभृतम् उपहारम् क्रमेण क्रमशः प्रकाशयाञ्चक्रुः=उद्घाट्य प्रदर्शयामासुः तद् यथा–परा०– परार्ध्यानि=वरेण्यानि उत्कृष्टानीति यावत् [ 'मुख्यवर्य–वरेण्याश्च········। परार्ध्याग्रप्राग्रहर–प्राग्र्या' इत्यमरः ] यानि रत्नानि तेषां अंशुभिः=किरणैः शोणीकृताः=रक्तवर्णीकृताः दिग्भागाः=दिक्प्रदेशाः यैः=तथाभूतान्, भगदत्तः प्राग्ज्योतिषाधिपतिः=दुर्योधन-पक्षपाती महाभारतकालिकः राजविशेषः प्रभृतिः येषां ते ख्याताः=प्रसिद्धाः ये पार्थिवाः= नृपाः तेभ्यः परागतान्=आगतान् कुलपरम्पराप्राप्तानिति यावत् आहृतानि=उद्घोषितानि लक्षणानि येषां तान् प्रसिद्धान् इति यावत् [ 'गुणैः प्रतीते तु कृतलक्षणाहृतलक्षणौ' इत्यमरः ] अलंकारान् प्रकाशयाञ्चक्रुः इत्यनेनान्वयः, प्रभया=कान्त्या लिम्पन्ति=लेपं कुर्वन्तीति तथोक्तानां चूडामणीनां=शिरोरत्नानां समुत्कर्षान्=अतिशयान् उत्कृष्टचूडामणीनित्यर्थः क्षीरोदधेः=क्षीरसागरस्य धवलतायाः=श्वैत्यस्य हेतून्=कारणीभूतान् इवेत्युत्प्रेक्षायाम् हारान्= मौक्तिकस्रजः, मौक्तिकानि समुद्रे जायन्ते, तत्कारणादेव क्षीरसमुद्रः श्वेतीभूत इति कविकल्पना, अनेक० - अनेकैः= नानारागैः=वर्णैः रुचिराः=भासुराः ये वेत्रस्य करण्डाः=पेटिकाः तेषु कुण्डलीकृतानि=गोलाकारेण सम्पुटीकृतानि, शरदः=शरदृतोः चन्द्रस्य मरीचिवत्=किरणवत् रोचन्ते=भासन्ते इति (क्विप्) तथोक्तानि शौचे=जनस्य शुद्धीकरणे

हिन्दी—राजा द्वारा पहले उसके देख लिये जाने पर कर्मचारियों ने क्रमशः शेष उपहार भी दिखाए, जैसे उत्कृष्ट रत्नों की किरणों द्वारा दिग्-भागों को लाल बनाये, भगदत्त आदि प्रसिद्ध राजाओं से (कुलक्रम से) आए हुए, गुणों में विख्यात अलंकार, कान्ति से (सभी वस्तुओं को) लिप देने वाली उत्कृष्ट जाति की चूड़ामणियाँ, क्षीरसागर की सफेदी का कारण बने हुए–जैसे मोतियों के हार, अनेक रंगों से सुन्दर बने हुए, बेंत के सन्दूकों में गोल लपेटकर रखे शरत्कालीन चन्द्रमा की किरणों के समान चमकदार रेशमी कपड़े और सुनिपुण शिल्पी लोगों द्वारा की

च शुक्तिशङ्खगल्वर्कप्रमुखानां पानभाजनानां निचयान्, निचोलकरक्षितरुचां च रुचिरकाञ्चनपत्रभङ्गभङ्गुराणामतिबन्धुरपरिवेशानां कार्दरङ्गचर्मणां सम्भारान्, भूर्जत्वक्कोमलाः स्पर्शवतीः जातीपट्टिकाः, चित्रपटानां च म्रदीयसां समूरुकोपधानादीन्विकारान्, प्रियङ्गुप्रसवपिङ्गलत्वञ्चि चासनानि वेत्रमयान्यगुरुवल्कलकल्पितसञ्चयानि च सुभाषितभाञ्जि पुस्तकानि, परिणतपाटलपटोलत्विषि च तरुणहारीतहरिन्ति क्षीरक्षारीणि च पूगानां पल्लवलम्बीनि सरसानि फलानि, सहकारलतारसानां च कृष्णागुरुतैलस्य च [1]कुपितकपिकपोलकपिलकापोतिकापलाशकोशीकवचिताङ्गीः स्थवीयसीर्वैणवीर्नाडीश्च, पट्टसूत्रप्रसेवकार्पितांश्च भिन्नाञ्जन[2]कृष्णस्य कृष्णागुरुणो गुरुपरितापमुषश्च गोशीर्षचन्दनस्य तुषारशिलाशकलशिशिरस्वच्छसितस्य च

---

टीका—क्षमाणि = समर्थानि क्षौमाणि = क्षुमाविकारभूतानि वस्त्राणि अंशुकानीति यावत्. कुशल०—कुशलः = दक्षः यः शिल्पिलोकः = शिल्पिजनः तेन उल्लिखितानाम् = उत्कीर्णानाम् शुक्तयः = मुक्तास्फोटाः शंखाः = कम्बवः गल्वर्काः = स्फटिकाश्च प्रमुखाः = मुख्याः येषां तेषां तन्निर्मितानामित्यर्थः पानभाजनानां = पानपात्राणां निचयान् = निवहान्, निचोल०—निचोलकैः = आवरणैः पिधानैरिति यावत् रक्षिता = सञ्चिता स्थिरीकृतेति यावत् रुक् = कान्तिः येषां तेषाम् रुचिराः = भ्राजिष्णवः ये कनकपत्राणां = सुवर्णपत्राणां भङ्गाः = आकृतयः तैः भङ्गुराणां = कुञ्चितानां तरङ्गायमाणानामिति यावत् अतिबन्धुरः = अतिसुन्दरः परिवेशः = परिधिः प्रान्तभागः इत्यर्थः येषां तेषां कार्दरङ्गस्य = एतदाख्यदेशविशेषस्य चर्मणां = शस्त्रप्रहारनिवारकचर्मफलकानां सम्भारान् = समूहान्, भूर्जः = वृक्षविशेषः तस्य या त्वक् = वल्कल तद्वत् कोमलाः = सुकुमाराः स्पर्शवतीः सुखस्पर्शाः जातीपट्टिकाः = श्रेष्ठानि जघन-प्रवनानि इति शंकरः जघनवस्त्राणीत्यर्थः, चित्रयुक्ताः पटाः चित्रपटाः ( मध्यमपदलो० ) तेषाम् म्रदीयसाम् = अतिशयेन मृदूनां समूरुकः = मृगविशेषः [ 'समूरुश्चेति हरिणा अमी अजिनयोनयः' इत्यमरः ] तस्य तच्चर्मणामित्यर्थः उपधानम् = उपबर्हः आदिः येषां तान् विकारान् = तन्निर्मितवस्तूनीत्यर्थः, अत्र चित्रपटानां च म्रदीयसां समूरुकचर्मणामुप०' इति साधीयान्, प्रियङ्गुः = लताविशेषः तस्या यः प्रसवः = फलं तद्वत् पिङ्गला = पीता त्वक् येषान्तानि च आसनानि वेत्रमयानि = वेत्रनिर्मितानीत्यर्थः, अगुरु०—अगुरुः वृक्षविशेषः तस्य वल्कलैः = त्वग्भिः कल्पितः = रचितः सञ्चयः = पत्राणि येषां तानि सुभाषितानि = सूक्तीः भजन्तीति तथोक्तानि पुस्तकानि = ग्रन्थान् परिणत०—परिणतः = पक्वः अत एव पाटलः = पीतरक्तः यः पटोलः = कर्कटी-विशेषः तद्वत् त्विट् = कान्तिः येषां तानि, तरुणः = युवा यः हारीतः = हरितवर्णपक्षिविशेषः तद्वत् हरिन्ति = हरितानि च पल्लवेषु = पत्रेषु लम्बन्ते इति तथोक्तानि पल्लवयुक्तानीत्यर्थः क्षीरं = दुग्धं निर्यासमिति यावत् क्षरन्ति = स्रवन्तीति तथोक्तानि, सरसानि = रसयुक्तानि न तु शुष्कानि = पूगानां फलविशेषाणां फलानि, सहकारलतायाः अतिसौरभाम्रवृक्षस्य [ 'आम्रश्चूतो रसालोऽसौ सहकारोऽति सौरभः' इत्यमरः ] रसानां = द्रवाणां कृष्णस्य श्यामवर्णस्य अगुरुणः = सुगन्धितवृक्षविशेषस्य तैलस्य च कुपित०—कुपितः = क्रुद्धः यः कपिः = वानरः तस्य कपोलवत् = गण्डस्थलवत् कपिलानि = पीतानि यानि कपोतिकायाः = ओषधिविशेषस्य पलाशानि = पत्राणि तेषां कोशीभिः = कोषैः आवेष्टनैरिति यावत् कवचितानि = आच्छादितानि अङ्गानि = अवयवाः यासां ताः, स्थवीयसीः = अतिशयेन स्थूलाः [ स्थूल + ईयसुन्, ललोपः गुणोऽवादेशश्च ] वैणवीः = वेणोः इमाः वंशमयीः इति यावत् नाडीः = नलिकाः, सर्वाणि 'प्रकाशयांचक्रुः' इत्यस्य कर्माणीति न विस्मर्तव्यम्, पट्ट०—पट्टसूत्राणाम् = अतसी-तन्तूनां प्रसेवकेषु = स्यूतेषु [ 'स्यूत-प्रसेवौ' इत्यमरः ] अन्नादिभरणार्थं निर्मितेषु, वस्त्रभाण्डेष्विति

हिन्दी—हुई नक्काशी वाले सीप, शंख एवं स्फटिक आदि के बने पान-पात्रों के समूह, आवरणों (के भीतर रखे रहने) से सुरक्षित कान्तिवाली सोने के पत्तरों की सुन्दर रचनाओं से उन्नतावनत, अतिमनोहर परिधि ( किनारे ) वाली कार्दरंग देश की बनी ढालों की कतारें, भूर्ज की छाल के समान कोमल सुख-स्पर्शवाले जघनवस्त्र, चित्रांकित मृदु वस्त्र तथा मृगछाला की बनी तकिया आदि वस्तुयें, प्रियंगु-फल की-सी पीली कान्ति वाले बेंत के बने आसन, अगरु वृक्ष की छाल से बने पत्रों वाली, सुभाषित-भरी पुस्तकें, पक कर लाल-पीले परवल की सी कान्ति वाली, युवा हरियल पक्षी के समान हरी, दूध टपकाती पत्तों से लटकी रसीली सुपारियाँ, सुगन्धित आम्रवृक्षों के रसों और अगुरु के तैल से भरी, कुपित हुए वानर के गाल की तरह लाल-पीले कपोतिका के पत्तों के आवरणों से सभी अंगों में ढकी, मोटी-मोटी बाँस की नालियाँ पटसन के बोरों में रखे, पीसे हुए सुरमे की तरह काले कृष्णगुरु, महान् सन्ताप को हरने वाले गोशीर्ष नामक

---

१. 'तैलस्य च कपोतकपिल०'   २. 'वर्णस्य'

कर्पूरस्य कस्तूरिकाकोशकानां च पक्वफलजूटजटिलानां च कक्कोलपल्लवानां लवङ्गपुष्पमञ्जरीणां जातीफलस्तबकानां च राशीन्, अतिमधुरमधुरसामोदनिर्हारिणीश्चोल्लककलशीः सितासितस्य च चामरजातस्य निचयान्, अवलम्बमानतूलिकालाबुकांश्च लिखिता[1]नालेख्यफलकसम्पुटान्, कुतूहलकृन्ति कनकशृङ्खलानियमितग्रीवाणां किन्नराणां च वनमानुषाणां च जीवञ्जीवकानां च जलमानुषाणां च मिथुनानि, परिमलामोदितककुभश्च कस्तूरिकाकुरङ्गान्, गेहपरिसरणपरिचिताश्च चमरीः, चामीकररसचित्रवेत्रपञ्जरान्तर्गतांश्च बहुसुभाषितजल्पाकजिह्वांश्च[2] शुकशारिकाप्रभृतीन्पक्षिणः प्रवालपञ्जरगतांश्च चकोरान्, जलहस्तिनामुदग्रकुम्भमुक्ताफलदामदन्तुराणि च दन्तकाण्डकुण्डलानि।

टीका–यावत्, अर्पितान् = निहितान् 'राशीन् इत्यनेनान्वयः' भिन्नं = पिष्टं यत् अञ्जनं = नेत्ररञ्जनं तद्वत् कृष्णस्य = कृष्णवर्णस्य अगुरुणः, सर्वेऽपि षष्ठ्यन्ताः 'राशीन्' इत्यनेन सम्बध्यन्ते, गुरुः = महान् यः परितापः = दाहः तं मुष्णाति = हरतीति तथोक्तस्य गोशीर्षचन्दनस्य = अतिसुरभि-चन्दनविशेषस्य [ 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यमरः, 'तैलपर्णगोशीर्षौ गिरी आकरौ अस्येति क्षीरस्वामी ] तुषारस्य = हिमस्य या शिला तस्याः शकलवत् = खण्डवत् शिशिरस्य = शीतस्य च स्वच्छस्य = निर्मलस्य च सितस्य = श्वेतस्य च कर्पूरस्य = घनसारस्य कस्तूरिकायाः = मृगमदस्य कोशकानां = नाभीनाम्, पक्वानि यानि फलानि तेषां जूटैः = समूहैः जटिलानां = पूर्णानामित्यर्थः कक्कोलस्य = सुरभिफलविशेषस्य पल्लवानां = किसलयानाम्, लवंगपुष्पस्य मञ्जरीणां = वल्लरीणाम्, जातीफलस्य स्तबकानां = गुच्छानां च राशीन् = समूहान्. अतिम०—अतिशयेन मधुरः यः मधुरसस्य = मदिरारसस्य आमोदः परिमलः = तेन निर्हारिणीः = समाकर्षिणः [ 'समाकर्षी तु निर्हारी' इत्यमरः ] सुगन्धिता इत्यर्थः, उल्लकस्य = सुगन्धिफलविशेषरसस्य, आसवभेदस्य इत्यन्ये इति शंकरः, कलशीः = लघुकलशान्; सितस्य = श्वेतस्य असितस्य = श्यामस्य च चामरजातस्य चामरसमूहस्य निचयान् = निवहान्. अवल०—अवलम्बमानानि = दोलायमानानि तूलिकाः = वर्तिकाः च अलाबुकानि = तुम्ब्यः [ 'स्यात्तुम्ब्यलाबूरुभे समे' इत्यमरः [ रञ्जकद्रव्यस्थापनार्थम् अलाबुकानि पात्ररूपेण प्रयुज्यन्ते च येभ्यः लिखितान् = चित्रितान् चित्रयुक्तानित्यर्थः आलेख्यफलकानां = चित्रपट्टानां सम्पुटान् = सम्पुटिकाः पिटकानिति यावत्. कुतूहल० कुतूहलं = कौतुकं कुर्वन्तीति तथोक्तानि कनकस्य = सुवर्णस्य शृंखलया = रज्ज्वा नियमिता = बद्धा ग्रीवा = गलप्रदेशः येषां तेषां किन्नराणां = किम्पुरुषाणां देवयोनिविशेषाणामितियावत्, वनमानुषाणां = वनमनुष्याणां, जीवञ्जीवकानां = पक्षिविशेषाणां अमरस्तु चकोराणां [ 'जीवंजीवश्चकोरः स्यात् ] जलमानुषाणां = सलिलान्तर्वासिनरविशेषाणां च मिथुनानि = युगलानि, परिमलेन = सौगन्ध्येन आमोदिताः = सुगन्धीकृताः ककुभः = दिशाः यैः तान् कस्तूरिकाकुरङ्गान् = कस्तूरीमृगान् गेहे = गृहे यत् परिसरणं = परिचरणं तत्र परिचिताः = अभ्यस्ताः चमरीः = चमरगाः, चामीकरस्य = सुवर्णस्य रसेन = द्रवेण चित्राणि = रंजितानि यानि वेत्रस्य पञ्जराणि = पिंजराणि तेषाम् अन्तः = अभ्यन्तरे गतान् = स्थितान् बहुभिः = सुभाषितैः = सूक्तिभिः जल्पाका [जल्प + षाकन्] वाचाला [ 'स्याज्जल्पाकस्तु वाचालः' इत्यमरः ] जिह्वा येषां तान् शुकः = कीरः, शारिकापक्षिविशेषः 'मैना' इति प्रसिद्धा प्रभृतिः येषान्तान् पक्षिणः = विहगान्, प्रवालस्य = विद्रुमस्य पञ्जरे गतान् चकोरान्, जलहस्तिनां = सलिल-गजानाम् उदग्राणि = विशालानि यानि कुम्भेभ्यः मस्तकेभ्यः = मुक्ताफलानि = मौक्तिकानि तेषां दामभिः = पंक्तिभिः दन्तुराणि = उन्नतावनतानि दण्ड-काण्डस्य = काण्डसदृशदण्डस्य कुण्डलानि = कर्णाभरणानि, हस्तिनां कुम्भेषु मौक्तिकानि जायन्ते इति हि जनश्रुतिः यथोक्तमपि—द्विप०—भुजग-शुक्ति-शंखाभ्रवेणु-सूकरप्रसूतानि मुक्ताफलानि।

हिन्दी–चन्दन, हिम के विशालखंड के समान शीत, स्वच्छ और श्वेत कपूर की कोशियाँ, पके हुए फलों से भरपूर कंकोल के पल्लवों लौंग के फूलों की मंजरियों और जायफल के गुच्छों के दरों के ढेर, मदिरा-रस के अतिमधुर सौरभ से सुगन्धित उल्लक ( मदिरा-विशेष ) की कलशियों और श्वेत तथा काले चामर-समूहों के ढेर, चित्र बनाने की कूचियाँ और तुमड़ी की रंगदानियाँ लटकाए चित्र-युक्त चित्र-पटों की पेटियाँ, कुतूहल उत्पन्न कर देने वाले, सोने की जंजीर से ग्रीवा में बंधे किन्नरों, वनमानुषों जीवञ्जीवक पक्षियों एवं जल-मानुषों के जोड़े, सुगन्धिसे दिशाओं को महकाये कस्तूरी-मृग, घर में विचरण करने से अभ्यस्त हुई चमर-गायें, सोने के पानों से चित्रित बेंत के पिंजरों में बंधे बहुत से सुभाषितों से मुखरित जिह्वावाले तोता मैना आदि पक्षी, मूँगों के पिंजरों के भीतर रखे हुए चकोर और जल-हस्तियों के कुम्भस्थलों से निकले हुए मोतियों की पंक्तियों से उन्नतावनत, दाँत के बने कुण्डल।

१. 'लिखितानेकलेख्य०' २. 'जिह्वांश्च जाती = कौशिकशुक'

राजा तु छत्रदर्शनात्प्रहृष्टहृदयः प्रथमप्रयाणे शोभननिमित्तमिति मनसा जग्राह। हंसवेगं च प्रीयमाणो बभाषे—'भद्र, सकलरत्नधाम्नः परमेश्वरशिरोधारणार्हस्यास्य महातपत्रस्य महार्णवादिव कुमुदबान्धवस्य कुमारात्लाभो न विस्मयाय। बालविद्याः खलु महतामुपकृतयः' इति। अपनीते च तस्मात्प्रदेशात्प्राभृतसम्भारे क्षणमिव स्थित्वा 'हंसवेग, विश्रम्यताम्' इति प्रतीहारभवनं विसर्जयांबभूव। स्वयमप्युत्थाय स्नात्वा मङ्गलाकाङ्क्षी प्राङ्मुखः प्राविशदाभोगस्य छायाम्।

अथ विशत एवास्य छायाजन्मना जडिम्ना चूडामणितामनीयतेव शशिबिम्बमम्बुबिन्दुमुचश्चुचुम्बुरिव चन्द्रकान्तमणयो ललाटतटं कर्पूररेणव इव व्यलीयन्त लोचनयुगले गलत्तुहिनकणनिकरकृतनीहारा हारा इवाबध्यन्त हरिचन्दनरसासारेणेवापाति

टीका-राजा=हर्षवर्धनः छत्रस्य दर्शनात्=अवलोकनात् प्रहृष्टं=प्रसन्नं हृदयं यस्य सः प्रथमे प्रयाणे=युद्ध-यात्रायाम् शोभनं=शुभं निमित्तं=लक्षणम् इति मनसा जग्राह=स्वीकृतवान्। प्रीयमाणः=प्रसन्नो भवन् बभाषे=अवदत्—सकलानि यानि रत्नानि तेषां धाम=आकरः तस्मात् रत्नाकरादित्यर्थः महार्णवात्=समुद्रात् परमेश्वरस्य=महादेवस्य शिरसि=मूर्ध्नि धारणस्य=स्थापनस्य अर्हस्य=योग्यस्य कुमुदबान्धवस्य=चन्द्रस्य लाभः इव, महादेवः हालाहलभक्षणकृतदाहोपशमनाय शिरसि चन्द्रमसं धत्ते, सकलरत्नानां धाम्नः=आश्रयात् कुमारात् एतन्नामकनृपात् परमेश्वरस्य=सम्राजः शिरसि धारणस्य अर्हस्य=योग्यस्य महातपत्रस्य महाछत्रस्य लाभः=प्राप्तिः न विस्मयाय=न ममाश्चर्यं करोतीति भावः, अत्र श्लिष्टोपमा। खलु यतः उपकृतयः=उपकाराः महतां=महापुरुषाणां बाल-विद्याः बाल्यावस्थायां गृहीताः विद्यायाः पाठाः अर्थात् परोपकरणं महान्तः प्रथमपाठत्वेन गृह्णन्ति अतः तत्कृतः परोपकारः न मे विस्मयाय भवति। प्राभृतानां=उपहाराणां सम्भारे=राशौ उपनीते=अपसारिते भाण्डारे प्रापिते इत्यर्थः विश्रम्यताम्=विश्रामः क्रियताम्, प्रतीहारस्य=दौवारिकस्य भवनं=गृहं विसर्जयांबभूव=विसर्जितवान्। मंगलं=कल्याणं निर्विघ्नयुद्धयात्रासमाप्तिमिति यावत् कांक्षति=इच्छतीति तथोक्तः प्राक्=पूर्वदिशायां मुखं यस्य स आभोगस्य=एतदाख्यच्छत्रस्य छायाम् प्राविशत्=प्रविष्टवान्।

विशतः=प्रवेशं कुर्वतः एव अस्य=हर्षस्य छायायाः जन्म यस्य तेन छायाजनितेनेत्यर्थः जडस्य भावः जडिमा=शैत्यं तेन शशिनः=चन्द्रस्य बिम्बं=मण्डलं चूडामणितां=शिरोरत्नत्वम् अनीयत=प्रापितम् अभवत् इव, अर्थात् छत्रस्य छायायाः अधः स्थितः हर्षः एवम् अनुभवति स्म यथा चन्द्रबिम्बं तस्य शिरसि चूडामणित्वेन स्थितमस्ति, सोऽतिशैत्यम् अनुभूतवानिति यावत् एवमुत्तरत्रापि व्याख्येयम्, अम्बुनः=जलस्य बिन्दून् मुञ्चन्ति=क्षरन्तीति (क्विप्) तथोक्ताः चन्द्रकान्तमणयः ललाट-तलं=भालतल चुचुम्बुः=चुम्बितवन्तः इव लोचनयोः=नयनयोः युगले द्वये कर्पूरस्य=घनसारस्य रेणवः=रजांसि व्यलीयन्त विलीनाः इव गलन्तः=स्रवन्तः ये तुहिनस्य=हिमस्य कणाः=शीकराः तेषां निकरेण=निचयेन कृतः=जनितः नीहारः=अवश्यायः येषां तथाभूता हाराः=मौक्तिकस्रज इव अबध्यन्त=बद्धा अभवन्, उरसि=वक्षसि हरिचन्दनस्य=पीतचन्दनविशेषस्य यः रसः=द्रवः तस्य आसारेण=धारासम्पातेन इव सन्ततम्=अविरतं यथा स्यात्तथा अपाति=पतितम्, कुमुदं=रात्रिकमलम् एव कुमुदमयम् इव हृदयम् अतिशयेन शिशिरं

हिन्दी-छत्र देखने से प्रसन्नचित्त हुए राजा हर्षवर्धन ने प्रथम युद्ध-यात्रा में यह अच्छा शकुन है-यह सोचकर उसे मन से स्वीकार कर लिया। और प्रसन्न होता हुआ वह हंसवेग को बोला—'भद्र, सकल रत्नों के धाम ( आकर-भूत ) महासागर से ( हुए ) परमेश्वर ( महादेव ) के सिर पर धारण योग्य चन्द्रमा के लाभ की तरह सकल रत्नों के धाम ( आश्रय ) कुमार से ( हुए ) परमेश्वर ( सार्वभौम ) के सिर पर धारण योग्य इस महातपत्र के लाभ से आश्चर्य नहीं। कारण यह है कि उपकार महापुरुषों के बचपन के पढ़े पाठ हुआ करते हैं। उस स्थान से उपहारों के ढेर हटा लिये जाने पर, थोड़ी देर ठहरकर—'हंसवेग ! विश्राम करो' यह कहकर उसे प्रतीहार के गृह भेज दिया। स्वयं भी उठकर, नहाकर मङ्गल-कामना करता हुआ वह पूर्व की ओर मुँह किये आभोग की छाया में जा पहुँचा।

इसके बाद उसमें प्रवेश करते ही छाया से उत्पन्न हुई शीतलता के कारण उसे ऐसा प्रतीत हुआ मानो चन्द्रमा उसका चूड़ामणि बन गया हो। मानो पानी के बूँद टपकाते हुए चन्द्रकान्तमणियाँ उसके भाल-तल को चूम बैठी हों, मानो उसके दोनों नयनों में कपूर की धूलियाँ बैठ गई हों, मानो चूते हुए हिमकण-समूह से उत्पन्न हुई ओस वाले मोतियों की मालायें बाँध दी गई हों, मानो हरिचन्दन का रस छाती पर लगातार धारा-रूप में गिर गया हो, मानो अति

सन्ततमुरसि कुसुममयमिव हृदयमभवदतिशिशिरमन्तर्हितहिमशिलेव विलीयमाना व्यलिम्पदङ्गानि। जातविस्मयश्चाकरोन्मनसि एकम् अयं सङ्गतमपहाय कास्त्यन्या प्रतिकौशलिकेति। आहारकाले च हंसवेगाय धवलकर्पटप्रावृतधौतनालिकेरपरिगृहीतं विलिप्तशेषं चन्दनमङ्गस्पृष्टे च वाससी शरत्तारकाकारतारमुक्तास्तबकितपदं परिवेशं नाम कटिसूत्रमतिमहार्हपद्मरागालोकलोहितीकृतदिवसं च तरङ्गकं नाम कर्णाभरणं प्रभूतं च भोज्यजातं प्राहिणोत्। एवंप्रायेण च क्रमेण जगाम दिवसः।

ततः कटकस्यबलबहलधूलिधूसरितवपुरंशुमाली मलीमसमङ्गमिव क्षालयितुमपरजलनिधिमवातरत्। आभोगातपत्रप्रदानवार्तामिव निवेदयितुं वरुणाय वारुणीं दिशमयासीत्। मुकुलायमानसकलकमलवना प्रमुख एव बद्धसेवाञ्जलिपुटेव सद्वीपा

---

टीका—शीतम् अभवत्, अन्तर्हिता=अदृश्या हिमस्य=तुषारस्य शिला-फलक इव विलीयमाना=गलन्ती अङ्गानि=अवयवान् व्यलिम्पत्=लिप्तानि अकरोत्, उपरि सर्वत्रोत्प्रेक्षा। जातः=उत्पन्नः विस्मयः=आश्चर्यं न इति न [ जृ+यत् ] ( 'अजर्यं संगतम्' पा० ३।१।१०५ 'नञ्पूर्वात् जीर्यतेः कर्तरि यत् सगतं चेद्विशेष्यम्' सि० कौ० ) अक्षय्यमित्यर्थः संगतं=मैत्रीम् अपहाय=विहाय का अस्ति अन्या प्रतिकौशलिका=कुशलाय=मङ्गलाय हिता इति [ कुशल+ठक्+टाप् ] कौशलिका=उपहारः कोशलिकां प्रति इति प्रतिकौशलिका प्रत्युपहार इति यावत् आहारस्य=भोजनस्य काले=समये च धवलेन=श्वेतेन कर्पटेन=वस्त्रेण प्रावृतम्=आच्छादितं धौतं=सुपरिष्कृतञ्च यत् नालिकेरं=नालिकेरपुटमित्यर्थः तस्मिन् परिगृहीतं=धृतमित्यर्थः विलिप्तात्=स्वशरीरानुलिप्तात् चन्दनात् शेषम्=अवशिष्टं चन्दनम्, राज्ञः विलिप्तावशिष्टचन्दनार्पणम् अनुग्रहस्य मित्रतायाश्च चिह्नमासीत् अंगेन=स्वशरीरेण स्पृष्टे=धृते इत्यर्थः वाससी=वस्त्रद्वयम्, शरदि=शरत्काले ये तारकाः=ज्योतिष्पिण्डाः तेषाम् आकारः इव आकारः यासां ताः ताराः=विशुद्धाः याः मुक्ताः=मौक्तिकानि ताभिः स्तबकितं=संजातस्तबकं प्रथितमित्यर्थः पदम्=स्थानम् आश्रय इत्यर्थः यस्य तम् कटिसूत्रम्=कटिदाम; अतिशयेन महार्हाः=महामूल्याः ये पद्मरागाः=पद्मरागमणयः तेषाम् आलोकेन=दीप्त्या लोहितीकृतः=रक्तवर्णीकृतः दिवसः=दिनं येन तत् कर्णाभरणं=कर्णभूषणं प्रभूतं=प्रचुरं भोज्यजातं=खाद्यसमूहम् प्राहिणोत्=प्रेषितवान्।

कटक०—कटकस्थस्य=शिविरस्थितस्य बलस्य=सैन्यस्य बहला=घना या धूलिः=रजः तेन धूसरितं=धूसरवर्णं वपुः=शरीरं यस्य सः अंशुमाली=सूर्यः मलीमसं=मलिनं [ 'मलीमसं तु मलिनम्' इत्यमरः ] अङ्गम्=शरीरम् इवेत्युत्प्रेक्षायां क्षालयितुं=प्रमार्जयितुम् अपरजलनिधिं=पश्चिमसागरम् अवातरत्=अवतीर्णवान्। आभोग०—आभोगाख्यस्य आतपत्रस्य=छत्रस्य प्रदानस्य वार्तां=समाचारम् इवेत्युत्प्रेक्षायाम् निवेदयितुं=विज्ञापयितुम् वारुणीं=वरुणस्येमाम् ( अण् ) दिशम्=पश्चिमदिशामित्यर्थः अयासीत्=अगच्छत्। मुकुला०—मुकुलायमानानि=सूर्यास्तमयात् मुकुलावस्थां प्राप्नुवन्ति सकलानि कमलानां वनानि यस्यां सा द्वीपैः सहिता सद्वीपा भूः=पृथिवी प्रमुखे युद्धयात्रारम्भे एव भूपतेः=राज्ञः हर्षवर्धनस्य बद्धाः=सेवार्थम् अञ्जलिपुटाः यया तथाभूता इवेत्युत्प्रेक्षायाम् अभूत्=अभवत् मुकुलितानि कमलवनानि प्रयाणारम्भे एव पृथिव्या तत्प्रभुत्वाङ्गीकारस्वरूपं सेवाञ्जलय इति प्रतीयन्ते स्मेति भावः।

हिन्दी—शीतल बना हुआ हृदय कुमुदमय हो उठा हो, और मानो अदृश्य हिमशिला गलती हुई अंगों को लिप गई हो। आश्चर्य चकित हुए उसके मन में विचार उठा 'एक अक्षय मैत्री के सिवा उपहार के बदले में दूसरा उपहार क्या हो सकता है?' और भोजन के समय हंसवेग के लिए उसने सफेद वस्त्र से ढका और नारियल की सुगढ कुण्डी पर रखा ( अपने अंग पर ) लिपने से बचा हुआ चन्दन, ( अपने ) शरीर के छुए दो वस्त्र, शरद के तारों के आकार के से विशुद्ध मोतियों के गुच्छों से गुंथा हुआ कटिसूत्र; अत्यन्त बहुमूल्य पद्मराग मणियों की कान्ति से दिशाओं के लाल बनाए हुए तरङ्गक-नामक कुण्डल और बहुत सी भोजनसामग्री भेजी। प्रायः इस तरह वह दिन क्रमशः व्यतीत हुआ।

तदनन्तर शिविर की सेनाओं की घनी धूलि से धूसरित शरीर वाला सूर्य ( अपने ) मैले अंगों को धोने हेतु मानो पश्चिम सागर पर उतर गया। आभोग-नामक छत्र ( हर्ष को ) दे देने का समाचार वरुण को सूचित करने हेतु जैसे वह वरुण की दिशा ( पश्चिम ) की ओर चल पड़ा। मुकुल-रूप में बन्द हो रहे सकल कमल-वनों वाली पृथिवी द्वीपों सहित मानो ( युद्धयात्रा के ) आरम्भ में ही राजा हर्षवर्धन की सेवा में अञ्जलि-पुट बांधे खड़ी हुई हो। संसार के

---

१. 'अजर्यं'

भूरभूद्भूपतेः । नृपानुराग[1]मय इव निखिलजीवलोकलोकाञ्जलि[2]बन्धबन्धुर्जगज्जग्राह संध्यारागः । गौडापराधशङ्कितेव श्यामतां प्रपेदे दिक्प्राची । प्रचिततिमिरनि[3]वहा निर्वाणान्यनृपप्रतापानलकलापेव कालिमानमतानीन्मेदिनी । मेदिनीशप्रदोषास्थानपुष्पनिकरमिव विकचत[4]गररुचिरमववकरदुडुनिकरमविरलं ककुभः । स्कन्धावारगन्धगजमदामोदधावितस्येव मार्गो वियति विरराज रजःपाण्डुरैरावतस्य । कुपितनृपव्याघ्राघ्रातामुपसृष्टामिव पौरन्दरीं विहाय विहायस्तलमारुरोह रोहिणीरमणः । प्रयाणवार्ता इव मानिनीनां हृदयभेदिन्यो ययुरिन्दुदीधितयो दश दिशः । नवनृपदण्डयात्रात्रासातुरा इव तरलितसत्त्ववृत्तयश्चुक्षुभुः पतयो वाहिनीनाम् । चिन्तेव भूभृतां हृदयानि विवेश गुहाविवराणि विमुक्तसर्वाशा तिमिरसन्ततिः । प्रतिसामन्तचमूनामिव ननाश निद्रा कुमुदवनानाम् ।

---

टीका—नृपा०—नृपे = राजनि हर्षवर्धने यः अनुरागः = प्रीतिः तन्मयः = तद्रूपः इव निखिलः = समग्रः यः जीवलोकः संसारः तस्य लोकानां = जनानां यः अञ्जलिबन्धः = प्रणामावसरे करद्वयसंयोगः तस्य बन्धुः = मित्रं संध्यारागः = सायंकालीन-लालिमा जगत् = संसारं जग्राह = गृहीतवान् अयं भावः लोकवन्दितया सायं-सन्ध्यया सकलं जगत् रागेण (लालिम्ना) आवृतं कृतम् कविकल्पना चात्रेयम् सकलं जगत् नृपं प्रति अनुरागेण [ प्रीत्या, लालिम्ना ] व्याप्तमिवाभवत्, अन्यः सन्ध्यारागः अन्यश्च नृपरागः, अत्र भेदे अभेदातिशयोक्तिमूलकोत्प्रेक्षालङ्कारः । गौडा०—गौडस्य = गौडेन्द्रस्य अपराधात् = राज्य-वर्धनहत्यादोषात् शंकते = बिभेतीति तथोक्ता इवेत्युत्प्रेक्षायां प्राची दिक् = पूर्वदिशा श्यामतां = कृष्णवर्णतां प्रपेदे = प्राप । प्रचित० —प्रचितः = प्रवृद्धः तिमिरस्य निवहः = समूहः यस्याम् सा, निर्वाणः = शान्तः अन्येषां नृपाणां प्रतापः = तेजः एव अनलः = अग्निः तस्य कलापः = समूहः यस्यां सा इवेत्युत्प्रेक्षायां मेदिनी = पृथिवी कालिमानं = श्यामत्वम् अतानीत् = विस्तारितवती तमश्छन्ना जातेत्यर्थः अग्न्युपशमे = कृष्णाङ्गारा एव शिष्यन्ते । मेदिनी० — ककुभः = दिशाः मेदिन्याः = पृथिव्याः ईशः = स्वामी नृपहर्षवर्धनः इत्यर्थः तस्य प्रदोषस्य = सायंसमयस्य यत् आस्थानं = सभामण्डपः तस्मिन् यः पुष्पनिकरः = पुष्पसमूहः सायंकालीनसभायां यत्र तत्र शोभार्थं पुष्पाणि विकीर्यन्ते, तम् इवेत्युपमायाम्, विकचानि = विकसितानि यानि तगराणि = श्वेतपुष्पविशेषाः तैः रुचिरं = रमणीयम्, अन्यत्र, तद्वत् रुचिरम् अविरलं = घनं उडूनां = तारकाणां निकरं = समूहम् अवचकरुः (अव + $\sqrt{कॄ}$ + लिट्) = अवाकिरन्, दिक्षु तारागणः दृष्टिपथमागतः इति भावः । स्कन्धा०—स्कन्धावारस्य = कटकस्य ये गन्धगजाः = उत्कृष्टजातीयहस्तिनः तेषां मदस्य = दानवारिणः आमोदेन

हिन्दी—सभी लोगों द्वारा (प्रणाम हेतु) अंजलि बंधवाने वाला सन्ध्या राग (लाली) जगत में व्याप्त हुआ ऐसा लगता था मानो नृप ( हर्षवर्धन ) के प्रति लोगों का अनुराग ( प्रीति; लाली ) छाया हुआ हो । गौडेन्द्र के अपराध से भीत हुई जैसी पूर्वदिशा काली पड़ गई । अन्धकार-समूह बढ़ आने से पृथिवी ने कालिमा फैला दी मानो उसमें अन्य राजाओं का प्रताप-रूपी-अग्नि-समूह बुझ गया हो । दिशाओं ने विकसित तगर पुष्पों के समान चमकीला घना तारा-समूह ( गगन में ) इस तरह बिखेर दिया जैसे ( विकसित तगर पुष्पों से चमकीला पुष्प-समूह राजा हर्षवर्धन के सायं-कालीन सभामण्डप में बिखेरा जाता है । शिविर के गन्धगजों के मदजल की गन्ध से भागे हुए—जैसे ऐरावत का मार्ग आकाश में धूल से श्वेत हो गया । शार्दूल—जैसे कुपित हर्षवर्धन द्वारा आघ्रात ( आक्रान्त ), उपद्रव-पूर्ण-जैसी पूर्व दिशाओं को छोड़कर रोहिणीरमण ( चन्द्रमा ) इस तरह आकाशतल में चला आया जैसे व्याघ्रराज के द्वारा आघ्रात ( सूँघा हुआ ) उपद्रव पूर्ण स्थान छोड़कर रोहिणीरमण ( वृषभ ) चला जाया करता है । मानिनियों [ अभिमानवती शत्रु-महिलाओं ] के हृदय को चीर देने वाले ( हर्षवर्धन की ) युद्धयात्रा के समाचारों की तरह मानि-नियों ( प्रणयकुपितनायिकाओं ) के हृदय को फोड़ देने वाली चन्द्रमा की किरणें दशों दिशाओं में फैल गईं । नये-नये अभिषिक्त नृप ( हर्षवर्धन ) के समर-प्रयाण से भय खाकर अकुलाये जैसे, इधर-उधर वृत्ति ( विचरण ) से विचलित हुए सत्वों ( जीवों ) वाले वाहिनियों ( नदियों ) के पति ( समुद्र ) क्षुब्ध हो उठे और विचलित सत्व-वृत्ति ( धैर्यभाव ) वाले वाहिनियों ( सेनाओं ) के पति ( सेनानी ) भी क्षुब्ध हो उठे । राजाओं के हृदयों में चिंता इस तरह प्रवेश कर गई जैसे सभी दिशाओं को छोड़कर अन्धकार-समूह गुफाओं के भीतर प्रवेश कर गया । कुमुदवनों की निद्रा [ मुकुलावस्था ] की तरह प्रतिद्वन्द्वी सामन्तों की निद्रा ( नींद ) नष्ट हो गई ।

---

१. 'भूपालानुरागराशिमय' २. 'बद्ध' ३. 'निर्वाहा' ४. 'तगर'

अस्यां च वेलायां विततवितानतलवर्ती नरेन्द्रो 'यात तावत्' इति विसर्ज्यानुजीविनो हंसवेगमादिष्टवान्—'कथय सन्देशम्' इति। प्रणम्य स कथयितुं प्रास्तावीत्—'देव, पुरा महावराहसम्पर्कसम्भूतगर्भया भगवत्या भुवा नरको नाम सूनुरसावि रसातले। वीरस्य यस्याभवन् बाल्य एव पादप्रणामप्रणयिनश्चूडामणयो लोकपालानाम्। यस्य च त्रिभुवनभुजो भुजशौर्यस्य

---

टीका—परिमलेन धावितस्य प्रद्रुतस्य इवेत्युत्प्रेक्षायाम् ऐरावतस्य = इन्द्रहस्तिनः वियति = आकाशे मार्गः रजसा = ऐरावतधावनोत्थधूल्या पाण्डुः = पाण्डुरः विरराज = शुशुभे उदेष्यतः चन्द्रमसः किरणैः द्योतितायां पूर्वदिशि कविः पलायमानैरावतपदधूलिपाण्डुरत्वमुत्प्रेक्षते। कुपित०—कुपितः = क्रुद्धः यः नृपः = हर्षवर्धनः व्याघ्रः = शार्दूलः इवेत्युपमिततत्पु०, अन्यत्र व्याघ्राणां नृप इति नृपव्याघ्रः राजदन्तादिवत् नृपशब्दस्य पूर्वनिपातः तेन आघ्रानाम् = स्पृष्टाम्, अन्यत्र घ्राणविषयीकृताम् अतएव उपसृष्टाम् = सोपद्रवाम् इवेत्युत्प्रेक्षायाम् पौरुष्टुतीम् = पुरु = बहु यथा स्यात्तथा स्तुतः = यज्ञेषु स्तुतिविषयीकृतः इति पुरुष्टुतः = इन्द्रः तस्य इयम् इति पौरुष्टुती ( अण् ) ताम् ऐन्द्रीं पूर्वदिशामितियावत् विहाय = त्यक्त्वा रोहिणी = नक्षत्रविशेषः तस्या रमणः = पतिः चन्द्रः इत्यर्थः अथ च रोहिणी = कपिला गौः [ 'अर्जुन्यघ्ना रोहिणी स्यादुत्तमा गोषु नैचिकी' इत्यमरः] तस्या रमणः = पतिः वृष इत्यर्थः विहायसः = आकाशस्य तलम् आरुरोह = अरूढवान्, चन्द्रः पूर्वदिशमपहाय गगनमारूढः स पूर्वदिशि उपद्रवमिवापश्यत्, गौडराज्यं खलु पूर्वदिशि वर्तते, तत्र च कुपितो हर्षवर्धन आक्रमणमकरोदित्युपद्रवकारणम् सादृश्यं चात्र यथा वृषभः व्याघ्र-गन्धम् आघ्राय तं देशं विहायान्यत्र पलायते। अत्रोपमोत्प्रेक्षयोः संकरः। प्रयाण०—मानिनीनां = स्वपतिवीरत्वविषयकाभिमानवतीनां शत्रुमहिलानां हृदयं भिन्दन्ति = छिन्दन्तीति तथोक्ताः हर्षस्य प्रयाणवार्ताः = युद्धयात्रासमाचाराः इवेति श्लिष्टोपमायाम् तत्पतीनां हर्षस्याग्रे स्थातुमशक्यत्वात् मानिनीनां = प्रणयकुपितानां नायिकानां हृदयभेदिन्यः इन्दोः = चन्द्रस्य दीधितयः = किरणाः दश दिशः ययुः = व्याप्तवन्तः इत्यर्थः चन्द्रकिरणान् दृष्ट्वा मानिन्यः हृदयकाठोर्यं त्यजन्त्यः पतिषु अनुकूला जायन्ते तेषामुद्दीपकत्वात्। नव०—नवः = सद्यः अभिषिक्तः यः नृपः = राजा हर्षवर्धनः तस्य या दण्ड-यात्रा = समर-प्रयाणं तस्याः त्रासेन = भयेन आतुराः = आकुलाः इवेत्युत्प्रेक्षायां तरलिताः = विचलिताः सत्त्वानां = प्राणिनां वृत्तयः = वर्तनानि सञ्चरणानीत्यर्थः येषु ते वाहिनीनां = नदीनां पतयः = स्वामिनः समुद्रा इति यावत् चुक्षुभुः = क्षोभमवापुः, चन्द्रोदये समुद्रस्य क्षोभः स्वाभाविकः किन्तु अत्र हर्षयुद्धयात्रात्रासादिव समुद्राः क्षुब्धाः इति कवेरुत्प्रेक्षा, अत्र शब्दशक्त्या तरलिता सत्त्वस्य = धैर्यस्य वृत्तिः = भावः येषां ते वाहिनीनां = सेनानां पतयः चुक्षुभुः इत्यर्थो बोध्यते, हर्षप्रयाणवार्तामाकर्ण्य शत्रुसेनापतीनां धैर्यं लुप्तमित्यर्थः, अतएव तुल्ययोगितालंकारो व्यङ्ग्यः। चिन्तेव०—भूभृताम् = प्रतिद्वन्द्विभूपानां हृदयानि चिन्ता इवेत्युपमायाम् विमुक्ताः = परित्यक्ताः सर्वाः आशाः = दिशः यया तथाभूता तिमिरसन्ततिः = अन्धकारसमूहः गुहानां = कन्दराणां विवराणि = अभ्यन्तराणि विवेश = प्राविशत् अर्थात् अन्धकारः क्वापि दृष्टिपथं नागच्छत्। प्रति०—प्रतिसामन्तानां = प्रतिद्वन्द्विभूपालानां चक्षुषां = नयनानाम् निद्रा = सुप्तिः इवेत्युपमायाम् कुमुदवनानां = कुमुदाकराणां निद्रा = संकोचः ननाश = नष्टा।

वेलायां = समये वितत = उपरि विस्तृतं यत् वितानम् = उल्लोचः तस्य तले = अधः वर्तते इति तथोक्तः तत्र स्थितः इत्यर्थः नरेन्द्रः = राजा हर्षवर्धनः यात = अपसरत तावत् = इदानीम् इति उक्त्वा अनुजीविनः = भृत्यान् विसर्ज्य अपसार्येत्यर्थः आदिष्टवान् = आदिदेश प्रस्तावीत् = आरेभे।

टिप्पणी—नरक—इसका उल्लेख ग्रन्थकार पहले भी कर आया है। वराहावतारधारी विष्णु के सम्पर्क से पृथिवी को गर्भ ठहर गया था। वही नरकासुर हुआ, जिसे इन्द्र के अनुरोध पर कृष्ण ने मार दिया था, देखिए विष्णु पु०—यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना। त्वत्स्पर्शसम्भवः पुत्रस्तदायं मय्यजायत [ ५।२९।२३ ]। नरक प्राग्ज्योतिष का राजा था।

हिन्दी—और इस समय ऊपर फैले हुए चँदोवे के नीचे स्थित नरेन्द्र हर्षवर्धन ने—'इस समय जाओ' यह कहकर नौकर-चाकरों को विदा करके हंसवेग को आज्ञा दी—'सन्देश कहो'। प्रणाम करके वह कहने लगा—'महाराज, महावराह के साथ संसर्ग से गर्भधारण किये हुए पृथिवी ने पाताल में नरक नाम के पुत्र को जन्म दिया था, बाल्यावस्था में ही जिस वीर के चरणों को प्रणाम करने में लोकपालों की चूडामणियाँ अनुरक्त रहा करती थीं; तीनों लोकों का भोग करने वाले

भवनकमलिनीचक्रवाकीकोपकुटिलकटाक्षेक्षितोऽपि भयचकितावरुणपरिवर्तितरथो नाज्ञया विना रविरस्तमवाजीत् । यस्य चारुणस्य बहिर्वृत्ति हृदयमिदमातपत्रमहार्षीत् । महात्मनस्तस्यान्वये भगदत्तपुष्पदत्तवज्रदत्तप्रभृतिषु व्यतीतेषु बहुषु मेरुपमेषु महत्सु महीपालेषु प्रपौत्रो महाराजभूतिवर्मणः पौत्रश्चन्द्रमुखवर्मणः पुत्रो देवस्य कैलासस्थिरस्थितेः स्थितिवर्मणः सुस्थिरवर्मा नाम महाराजाधिराजो जज्ञे तेजसां राशिर्मृगाङ्क इति [1]यं जना जगुः । योऽयम[2]ग्रजेनेवाजायत सहैवाहंकारेण । यश्च बाल एव प्रीत्या द्विजातीनप्रीत्या चारातीन्समग्रान्प्रतिग्रहानग्राहयत् । यत्र चातिदुर्लभं लवणालयसम्भूतायाः परं माधुर्यमभूल्लक्ष्म्याः । तथा च यो वाहिनीनाथानां शङ्खाञ्जहार न रत्नानि, पृथिव्याः स्थैर्यं जग्राह न करम्, अवनिभृतां गौरवमाचख न कठोरत्वम् ।

टीका-महावराहस्य = वराहावतारधारिणः विष्णोरित्यर्थः सम्पर्केण = संसर्गेण सम्भृतः = स्थितः इत्यर्थः गर्भः यस्याः तया भगवत्या = देव्या भुवा = पृथिव्या सूनुः = पुत्रः रसा-तले = पाताले असावि = प्रसूतः । बाल्ये = बल्यावस्थायामेव लोकपालानां = दिगीशानाम् इन्द्रादीनां चूडामणयः = शिरोरत्नानि पादयोः यः प्रणामः तस्य प्रणयिनः = अनुरागिणः अभवन् । त्रिभुवनं = लोकत्रयं भुङ्क्ते इति॰ भुक् [ क्विप् ] तस्य भुजयोः शौण्डः = प्रवीणः तस्य, भवनस्य कमलिनीनां = कमलवनानां चक्रवाकीभिः = चक्रवाकवधूभिः कोपेन = क्रोधेन कुटिलैः = वक्रैः कटाक्षः = अपाङ्गदर्शनैः ईक्षितः = दृष्टः, सूर्यास्तमये चक्रवाक्यः स्वपतिभ्यो वियुज्यन्ते अतः सूर्यास्तमयमाशंकमानास्ताः सूर्यं सकोपं पश्यन्ति भयेन चकितः = त्रस्तः यः अरुणः = सूर्यसारथिः तेन परिवर्तितः = व्यावर्तितः रथः यस्य सः आज्ञया - आदेशेन बिना रविः = सूर्यः न अस्तम् अवाजीत् = आगच्छत् बहिः वृत्तिः = स्थितिः यस्य तत् हृदयं = प्राणाः इत्यर्थः इदम् आतपत्रम् = आभोगाख्यं छत्रम् अहार्षीत् = जहार । अन्वये = कुले भगदत्तश्च पुष्पदत्तश्च वज्रदत्तश्च प्रभृतयेषां तेषु, मेरुणा उपमा येषां तेषु = सुमेरु-तुल्येषु व्यतीतेषु जातेष्वित्यर्थः, देवस्य = महाराजस्य कैलासवत् स्थिरा = दृढा स्थितिः यस्य तस्य, जज्ञे = जन्म गृहीतवान्, तेजसां = प्रतापानां राशिः = समूहः जगुः = गीतवन्तः । यः सुस्थिरवर्मा अग्रजेन = अग्रोत्पन्नेन ज्यायसा भ्रात्रा इति यावत् अहंकारेण सह अजायत = उत्पन्नोऽभवत् । प्रीत्या = प्रसन्नतया द्विजातीन् = ब्राह्मणान् समग्रान् = सकलान् प्रतिग्रहान् = दानानि अप्रीत्या = अप्रसन्नतया अरातीन् = शत्रूंश्चापि प्रतिग्रहान् = सैन्यपृष्ठानि [ 'सैन्यपृष्ठे प्रतिग्रहः' इत्यमरः ] अग्राहयत् = ग्रहीतुं प्रेरयत् अर्थात् तस्याग्रे भीताः अरातयः सैन्यपृष्ठभागम् आश्रयन्ति स्म, अरातीन् रणस्थलात् पलायितुं विवशान् अकरोदिति यावत्, अत्र प्रकृतयोः ब्राह्मणारात्योः प्रतिग्रहग्राहणैकधर्माभिसम्बन्धात् तुल्ययोगिता, यत्र यस्मिन् स्थिरवर्मणि लवणालयः = लवणसमुद्रः तस्मात् सम्भूतायाः = उत्पन्नायाः लक्ष्म्याः = श्रियः परम् = अत्यधिकं माधुर्यं = मधुरत्वम् अभूत् अत्र लवणसमुद्रोत्पन्नलक्ष्म्यां माधुर्यमिति विरोधः माधुर्यं = सौन्दर्यम् इति समाधानम् । वाहिनी-नाथानां = सेनापतीनां समुद्राणाञ्चेति व्यंग्यार्थः शंखान् = कम्बून् जहार = हृतवान् शंखान् आध्माय युद्धाह्वानं कुर्वतः

टिप्पणी—अग्रजेन—मानो स्थिरवर्मा और अहंकार साथ-साथ यमल उत्पन्न हुए हों। अहंकार पूर्व उत्पन्न हुआ और स्थिरवर्मा पश्चात् । अहंकार उसका बड़ा भाई था । भाव यह निकला कि वह जन्म से ही अभिमानी था । उसकी दृष्टि में प्रत्येक वस्तु अहंकार के बाद आती थी ।

हिन्दी—जिस भुजशौर्य-प्रवीण की आज्ञा के बिना सूर्य—जिसका रथ अरुण मोड़ दिया करता था—अस्त नहीं होता था भले ही गृह-कमलिनियों की चक्रवाकियाँ उसे कोप-भरे कुटिल कटाक्षों से क्यों न देखती रहें [ कि वह छिप रहा है ] और जिसने वरुण का बाह्य हृदय-रूप यह छत्र हर लिया था । इसी महात्मा के कुल में भगदत्त, पुष्पदत्त, वज्रदत्त इत्यादि बहुत से बड़े-बड़े सुमेरु-तुल्य राजाओं के हो चुकने पर, महाराज भूतिवर्मा का प्रपौत्र, चन्द्रमुखवर्मा का पौत्र और कैलाश की-सी स्थिर स्थिति वाले महाराज स्थितिवर्मा का पुत्र महाराजाधिराज सुस्थिरवर्मा नाम का हुआ जिसे लोग तेज-राशि होने के कारण मृगांक ( नाम से ) गाया करते थे। जो यह अपने अग्रज अहंकार को साथ लेकर ही जन्मा था, और जो बाल्यावस्था में ही प्रसन्नता के साथ ब्राह्मणों को प्रतिग्रह ( दान ) और प्रसन्नता के साथ शत्रुओं को ( भी ) प्रतिग्रह ( सेना का पिछला भाग ) ग्रहण करवाता था, और जो लवण-सागरोत्पन्न लक्ष्मी का अति दुर्लभ परम माधुर्य था, तथा जिसने वाहिनीनाथों ( सेनापतियों ) के शंख ले लिए थे रत्न नहीं, पृथिवी की स्थिरता ग्रहण की थी, कर नहीं और अवनिभृतों ( पर्वतों ) का गौरव ले लिया था, कठोरता नहीं ।

१. 'प्रियं जना' २. 'योऽयमग्रजेनेवा॰'

तस्य च सुगृहीतनाम्नो देवस्य देव्यां श्यामादेव्यां भास्करद्युतिर्भास्करवर्मापरनामा तनयः शन्तनोर्भागीरथ्यां भीष्म इव कुमारः समभवत् । अयमस्य च शैशवादारभ्य सङ्कल्पः स्थेयान्स्थाणुपादारविन्दद्वयादृते नाहमन्यं नमस्कुर्यामिति । ईदृशश्चायं मनोरथस्त्रिभुवनदुर्लभस्त्रयाणामन्यतमेन सम्पद्यते सकलभुवनविजयेन वा मृत्युना वा यदि वा प्रचण्डप्रतापज्वलनजनित-दिग्दाहेन जगत्येकवीरेण देवोपमेन मित्रेण । मैत्री च प्रायः कार्यव्यपेक्षिणी क्षोणीभृताम् । कार्यं च कीदृशं नाम तद्भूवेद्-दुपन्यस्यमानमुपनयेन्मित्रतां देवम् । देवस्य हि यशांसि सञ्चिचीषतो बहिरङ्गभूतानि धनानि । बाहावेव च केवले निषण्णस्य शेषावयवानामपि साहायकसम्पादनमनोरथो निरवकाशः किमुत बाह्यजनस्य । चतुःसागरग्रामग्रहणघस्मरस्य पृथिव्येकदेश-

टीका–शत्रून् पराजित्य समरशंखरहितान् अकरोदितिभावः, न रत्नानि=मणीन्, तस्य रत्नलोभो नासीत्, पृथिव्याः स्थैर्यं =स्थिरत्वं जग्राह=स्वीचकार, न करं=राजदेयद्रव्यम्, अवनिभृतां=पर्वतानाम् गौरवं=गुरुत्वम् महत्त्वमिति यावत् आदत्त=गृहीतवान् न नैष्ठुर्यं=कठोरत्वम्, पर्वते गौरवं कठोरत्वञ्चेति गुणद्वयं भवति सतु गौरवमेव जग्राह न कठोरत्वम्, स कठोरः [ निर्दयः ] नासीदिति भावः अत्र व्यञ्जनया अवनिभृतां=राज्ञां गौरवम्=उच्चस्थितिम् आदत्त, तान् उच्चाधिकारात् वञ्चितान् अकरोत् इत्यर्थः । सुगृहीतं=सुस्मरणीयम् नाम यस्य तस्य प्रातःस्मरणीयस्येत्यर्थः देव्यां=महिष्यां भास्करस्य=सूर्यस्य द्युतिः=दीप्तिः इव द्युतिः यस्य सः. भास्करवर्मा अपरं=द्वितीयं नाम यस्य सः, तनयः पुत्रः शन्तनोः भागीरथ्यां=गंगायां भीष्मः=भीष्मपितामह इवेत्युपमायां कुमार एतन्नामा समभवत्=जातः। शैशवात्=बाल्यात् आरभ्य=प्रभृति स्थेयान्=स्थिरः दृढ़ इति यावत् संकल्पः=प्रतिज्ञा—स्थाणोः=शिवस्य पादार-विन्दाभ्यां=चरणकमलाभ्याम् ऋते=विना न नमस्कुर्यां=प्रणमेयम्' इति । त्रिभुवने=लोकत्रये दुर्लभः=दुष्प्रापः मनोरथः=अभिलाषः वक्ष्यमाणानां त्रयाणां विकल्पानां मध्ये अन्यतमेन=एकतमेन सम्पद्यते=सिद्ध्यति, 'सकल-भुवनानां विजयेन', अयं प्रथमः विकल्पः सर्वजगज्जयी नान्यं नमस्करिष्यति अपि तु नमस्करिष्यते एव, 'मृत्युना' अयं द्वितीयो विकल्पः अर्थात् यदि अहमिदानीम् एव मृतः स्याम् तर्हि कस्याप्यन्यस्याग्रे नमस्कारस्यावसर एव नोदीयेत, यदि वा=अथवा प्रचण्डः=भीषणः यः प्रतापः=तेज एव ज्वलनः=वह्निः तेन जनितः कृतः दिग्दाहः=दिशांदाहः सन्ताप इत्यर्थः येन तेन, जगति एकः=केवलः वीरः तेन अद्वितीयवीरेणेत्यर्थः येन तेन, जगति एकः=केवलः वीरः तेन अद्वितीयवीरेणेत्यर्थः देवैः उपमा यस्य तेन=देवतुल्येन मित्रेण=सुहृदा, अयं तृतीयो विकल्पः । क्षोणीभृतां= भूभृतां मैत्री=सख्यं च प्रायः कार्यं=प्रयोजनं व्यपेक्षते=आकांक्षतीति तथोक्ता भवतीति शेषः । उपन्यस्यमानं=प्रोच्य-मानं देवं=महाराजम् भवन्तमित्यर्थः अस्माकं भूपालस्य=कुमारस्य मित्रताम् उपनयेत्=मैत्रीं कुर्यात् । धनं प्रथमं मित्रता-कारणं भवति किन्तु यशांसि=कीर्तीः सञ्चिचीषितः=सञ्चेतुमिच्छतः देवस्य=भवत इत्यर्थः धनानि बहिरङ्गभूतानि= बाह्यानि निस्साराणि अकिञ्चित्कराणीति यावत्=बाहौ भुजे भुजवीर्ये इत्यर्थः निषण्णस्य=स्थितस्य शेषान् अवय-वानाम्=अङ्गानाम् अपि सहायकस्य=सहायतायाः सम्पादनस्य करणस्य मनोरथः निरवकाशः=अवकाशरहितः व्यर्थं इत्यर्थः किमुत किं वक्तव्यं बाह्यजनस्य=बहिः स्थितस्य जनस्य सैन्यादेरित्यर्थः । चतुः०—चतुःसागराणां=चतुर्णां समुद्राणां यः ग्रामः=समूहः तस्य ग्रहणे=आयत्तीकरणे घस्मरस्य=लोभिनः इत्यर्थः अत्र ग्रामशब्देन इदमपि व्यज्यते हर्षस्याग्रे चतुःसागराः ग्रामा इव तुच्छाः सन्तीति, पृथिव्या एकदेशस्य=एकभागस्य दानस्य उपन्यासेन=प्रस्तावेन का

हिन्दी–उस प्रातः स्मरणीय महाराज का रानी श्यामादेवी में भास्कर की तरह तेजस्वी भास्करवर्मा द्वितीय नाम वाला कुमार-नामक पुत्र हुआ जैसे शन्तनु से भागीरथी में भीष्म हुआ था । इसकी शैशव से लेकर यह दृढ़ प्रतिज्ञा थी कि 'महादेव के दो चरणकमलों को छोड़कर अन्य किसी को प्रणाम न करूं' तीनों लोकों में दुर्लभ यह ऐसा मनोरथ तीनों में से किसी एक ( उपाय ) से ही हो सकता है—या तो सकल भुवनों के विजय से, या मृत्यु से या तो फिर प्रचण्ड प्रतापरूपी आग से दिशाओं को संताप उत्पन्न कर देने वाले संसार में एकमात्र वीर देव-सदृश मित्र से। और राजाओं की मैत्री प्रायः मतलब से हुआ करती है। और मतलब भी कैसा हो कि वह करते ही आपको मित्र बना दे। यश बटोरने की इच्छा रखने वाले आपके सामने धन तो बाहर की चीज ठहरी। केवल अपनी ही भुजा पर निर्भर रहने वाले आपके शेष अंगों तक को भी सहायता करने की इच्छा के लिए अवसर नहीं मिलता तो बाहरी अन्यजनों की बात ही क्या ? चार समुद्रों के समूह को लेने का

१. 'ज्वलनदिग्दाहेन'

दानोपन्यासेनापि का तुष्टिः। अभिरूपकन्याविश्राणनविलोभनमपि लक्ष्मीमुखारविन्ददर्शनदुर्ललितदृष्टेरकिंचित्करम्। एवमघटमानसकलोपायसम्पादितपदार्थेऽस्मिन्प्रार्थनामात्रकमेव केवलमनुरुध्यमानः शृणोतु देवः। प्राग्ज्योतिषेश्वरो हि देवेनैकपिङ्ग इवानङ्गद्विषा, दशरथ इव गोत्रभिदा, धनञ्जय इव पुष्कराक्षेण, वैकर्तन इव दुर्योधनेन, मलयानिल इव माधवेन, अजर्यं सङ्गतमिच्छति। यदि च देवस्यापि मैत्रीयति हृदयमवगच्छति च पर्यायान्तरितं दास्यमनुतिष्ठन्ति सुहृद इति ततः किमास्यते समाज्ञाप्यतामनुभवतु विष्णोर्मन्दरगिरिरिव विकटकेयूरकोटिमणिविघट्टनक्वणितकटकमणिशिलाशकलानि गाढोपगूढानि देवस्य कामरूपाधिपतिः। अस्मिन्नातृप्तेरनवरतविमललावण्यसौभाग्यसुधानिर्झरिणि मुखशशिनि चिराचक्षुषी लालयतु प्राग्ज्योतिषेश्वरश्रीः। नाभिनन्दति चेद्देवः प्रणयमाज्ञापयतु किं कथनीयं मया स्वामिनः' इति।

---

टीका-तुष्टिः=सन्तोषः न कापीति काकुः अभिरूप०—अभिमतं रूपं यस्याः, रूपवतीत्यर्थः [ 'अभिरूपो बुधे रम्ये' इति मेदिनी ] या कन्या तस्याः विश्राणनेन=प्रदानेन विलोभनं=लोभदानम् आकर्षणमित्यर्थः लक्ष्म्याः=श्रियः मुखारविन्दस्य=मुखकमलस्य दर्शनेन दुर्ललिता=दुर्विनीता दुराराध्या दृष्टिः यस्य तस्य अकिंचित्करं=व्यर्थम् लक्ष्म्यपेक्षया कस्या अपि अन्यकन्यया अधिकसुन्दरत्वासम्भवत्वात्। एवम्—अघटमानाः=अनुपपद्यमानाः ये सकलाः=पूर्वोक्ताः उपायाः=साधनानि तैः सम्पादिते=सम्पाद्यमानेत्यर्थः पदार्थे=मैत्रीरूपे अर्थे अनुरुध्यमानः=अनुरोधं प्राप्यमाणः देवः केवलं प्रार्थनामात्रकम्=प्रार्थनामेव शृणोतु। देवेन=भवता सह एकं पिङ्गं=पीतं ( नेत्रं ) यस्य स कुबेर इत्यर्थः कुबेरो हि एकदा उमायां कटाक्षपातमकरोत्, तच्छापाच्च तस्य वामनेत्रं विनष्टं दक्षिणनेत्रं च पीतमभवदिति पुराणवार्ता अनुसन्धेया, अनङ्गः=कामः तस्य द्विषा=शत्रुणा महादेवेनेत्यर्थः दशरथः=रामपिता गोत्रभिदा=इन्द्रेण, धनञ्जयः=अर्जुनः पुष्करवत्=पुण्डरीकवत् अक्षिणी यस्य तेन पुण्डरीकाक्षेण भगवता कृष्णेनेत्यर्थः वैकर्तनः=विकर्तनस्य=सूर्यस्यापत्यं पुमान् कर्ण इत्यर्थः दुर्योधनेन, मलयानिलः=मलयाचलवायुः माधवेन=वसन्तेन इवेति सर्वत्रोपमा, अजर्यम्=अक्षय्यं सङ्गतं=मैत्रीं इच्छति। यदि हृदयं मैत्रीयति=आत्मनः मैत्रीम् इच्छतीति [ मैत्री + क्यच् ] अवगच्छति=बुध्यते च सुहृदः=मित्राणि पर्यायान्तरितम्=पर्यायेण=नामान्तरेण अन्तरितं=प्रच्छन्नं नामान्तरं प्राप्तमित्यर्थः दास्यं=सेवाम् अनुतिष्ठन्ति=कुर्वन्ति अर्थात् मित्रताया उत्तरदायित्वं विपुलं भवति, मित्रस्य कृते मित्रेण अहर्निशं नाना सेवाकार्याणि कर्तव्यानि भवन्ति, ततः=तर्हि किम् आस्यते=स्थीयते, समाज्ञाप्यताम्=आदिश्यताम् अनुभवतु उपभुक्ताम् मन्दरगिरिः=मन्दराचलः इव विष्णोः कामरूपाधिपतिः प्राग्ज्योतिषनरेशः देवस्य=भवतः विकटाः=विशालाः केयूरस्य=अंगदस्य कोटौ=अग्रे ये मणयः तेषां विघट्टनेन=संघर्षेण क्वणितानि=झंकृतानि कटकस्य=कंकणस्य अन्यत्र नितम्बस्य [ 'कटकोऽस्त्री नितम्बोऽद्रेः' इत्यमरः ] मणिशिलानां=रत्नोपलानां शकलानि=खण्डानि येषु तानि समुद्रमन्थनसमये विष्णोः केयूरौ मन्दराचलस्य नितम्बभागौ संघट्टेते स्म विष्णुर्हि शेषं मन्थनरज्जू कृत्य मन्दरस्यं

हिन्दी—लोभ रखने वाले आपको भला पृथिवी का एक भाग देने के प्रस्ताव से क्या सन्तोष होगा ? लक्ष्मी का मुख-कमल देखते रहने से दुराराध्य बने नयनों वाले आपको सुन्दर कन्या देने का प्रलोभन बेकार है। इस प्रकार बनने वाले ( मैत्री-रूप) कार्य में सभी उपायों से सम्भव सिद्ध हो जाने पर अनुरोध है कि महाराज केवल प्रार्थनामात्र सुन लें। प्राग्ज्योतिष-( आसाम ) नरेश आपके साथ ऐसी अक्षय मैत्री चाहते हैं जैसी कुबेर की महादेव के साथ, दशरथ की इन्द्र के साथ, अर्जुन की कृष्ण के साथ, कर्ण की दुर्योधन के साथ और मलयानिल की वसन्त के साथ ( मैत्री ) थी, यदि आपका हृदय भी मैत्री चाहता है और यह समझता है कि मित्र लोग मैत्री का पर्याय-रूप सेवा भी ( मित्र की ) किया करते हैं, तो ( चुप ) क्यों बैठे हैं ? आज्ञा कीजिए कामरूपनरेश आपके गाढ़ आलिंगनों का—जिनमें बाजूबन्द के नोक की विशाल मणियों से टकराने के कारण कटकों ( कड़ों ) के मणिशिला-खण्ड बज उठें—उसी तरह ( आनन्द ) अनुभव करें—जैसे विष्णु के गाढ़ आलिंगनों का ( आनन्द ) अनुभव मन्दराचल ने किया था, जिनमें उसके बाजूबन्द के नोक की विशाल मणियों के टकराने के कारण ( कटकों ) ढलानों की मणिशिलाओं के खण्ड बज उठते थे। प्राग्ज्योतिष की श्री निरन्तर निर्मल लावण्य और सौभाग्य-रूपी अमृत का झरना रखे हुए आपके इस मुखचन्द्र पर देर तक अपनी आँखों को छककर तृप्त करे। यदि आप उनकी प्रीति का स्वागत नहीं करते तो आज्ञा दीजिए कि स्वामी को मैं क्या कहूँ।

विरतवचसि तस्मिन्भूपालः पूर्वोपलब्धैरेव गुरुभिर्गुणैरारोपितबहुमानः कुमारे सुदूरमाभोगातपत्रव्यतिकरेण तु परां कोटिमारोपिते प्रेम्णि लज्जमान इव सादरं जगाद—'हंसवेग, कथमिव तादृशि महात्मनि महाभिजने पुण्यराशौ गुणिनां प्राग्रहरे परोक्षसुहृदि स्निह्यति मद्विधस्यान्यथा स्वप्नेऽपि प्रवर्तेत मनः। सकलजगदुत्तापनपटवोऽपि शिशिरायन्ते त्रिभुवननयनानन्दकरे कमलाकरे करास्तिग्मतेजसः। सुबहुगुणगणक्रीताश्च के वयं सख्यस्य। सज्जनमाधुर्याणामभृतदास्यो दश दिशः। एकान्तावदातोत्तानस्वभावसम्भृतसादृश्यस्य कुमुदस्य कृते केनाभिहितः शिशिररश्मिः। श्रेयांश्च सङ्कल्पः कुमारस्य। स्वयं बाहुशाली मयि च समालम्बितशरासने सुहृदि हरादृते कमन्यं नमस्यति। संवर्धितां मे प्रीतिरमुना सङ्कल्पेन। अवलेपिनि पशावपि केसरिणि बहुमानो हृदयस्य किं पुनः सुहृदि। तत्तथा यतेथा यथा न चिरमियमस्मान्क्लेशयति कुमारदर्शनोत्कण्ठा' इति।

---

टीका—मन्थनदण्डं परिवर्तयतिस्म। परस्पराश्लेषे एतौ अलंकारौ संघट्टन्ते। गाढानि = सान्द्राणि उपगूढानि = आलिंगनानि अस्मिन् आतृप्तेः = तृप्तिपर्यन्तं अनवरतः = सततः विमलं = स्वच्छं लावण्यं = सौन्दर्यं सौभाग्यं = शोभा च एव सुधा = अमृतं तस्य निर्झरः = स्रोतः अस्मिन्नस्तीति तथोक्ते भवतः मुखमेव शशी = चन्द्रः तस्मिन् प्राग्ज्योतिषेश्वरस्य = कामरूपनरेशस्य श्रीः = लक्ष्मीः चिरात् चक्षुषी = स्वनयने लालयतु = पुष्णातु तर्पयत्वित्यर्थः, अर्थात् कुमारः भवत्साक्षात्कार करोतु अत्र रूपकालङ्कारः। चेत् = यदि देवः = भवान् न अभिनन्दति = स्वागतीकरोति प्रणयं तस्य स्नेहं अथवा प्रार्थनाम् स्वामिनः = कामरूपनरेशस्य।

विरतं = समाप्तं वचः = कथनं यस्य तस्मिन् हंसवेगे भूपालः = हर्षवर्धनः पूर्वं यथा स्यात्तथा उपलब्धैः = ज्ञातैः गुरुभिः = महद्भिः गुणैः कुमारे सुदूरम् = भृशम् आरोपितः = जनितः इत्यर्थः बहुः मानः = आदरः यस्मिन् स आभोगाख्यस्य आतपत्रस्य व्यतिरेकेण = सम्बन्धेन प्रेम्णि = स्नेहे परां कोटिं = चरमोत्कर्षम् आरोपिते = प्राप्यमाणे सति जगाद = उवाच—महान् अभिजनः = कुलं यस्य तस्मिन् पुण्यानां राशौ = निचये, प्राग्रहरे = प्रकृष्टम् अग्रं हरतीति तथोक्ते अग्रगण्ये इत्यर्थः परोक्षे सुहृदि = माम् असाक्षात्कृत्य एव मम मित्रभूते स्निह्यति = मयि स्नेहं कुर्वति मद्विधस्य = मत्तुल्यस्य मनः अन्यथा = विपरीतप्रकारेणेत्यर्थः प्रवर्तेत = कार्यं कुर्यात्। सकलस्य जगतः उत्तापने = सन्तापकरणे पटवः = निपुणा अपि तिग्मतेजसः तिग्मं = तीक्ष्णं तेजः यस्य तस्य सूर्यस्येत्यर्थः कराः = किरणाः त्रिभुवनस्य = लोकत्रयस्य नयनानाम् आनन्दकरे = सुखावहे कमलाकरे = कमलवने शिशिरायन्ते = शीतली भवन्ति। सु = सुष्ठु बहूनां गुणानां गणेन = समूहेन क्रीताः = गृहीताः वयं सख्यस्य = सख्युर्भावस्य मैत्र्या इति यावत् के ? न केऽपीति काकुः तद्गुणक्रीताः वयं पूर्वमेव तदीयाः जाताः स्मेति भावः। सज्जनानां माधुर्याणां = मधुराचरणानामित्यर्थः दशदिशः अभृताः = अवैतनिक्यः दास्यः जायन्ते इति शेषः, सत्पुरुषः स्वमधुरस्वभावेन सर्वमपि जगत् आत्मीयीकरोतीति भावः। एकान्ततः = पूर्णतया अवदातः = श्वेतः उत्तानः = ( चन्द्रं प्रति ) ऊर्ध्वीकृतमुखः अन्यत्र उपरि गगने ततः यः स्वभावः = प्रकृतिः तेन सम्भृतं = प्राप्तमित्यर्थः सादृश्यं येन तस्य कुमुदस्य = रात्रिकमलस्य कृते केन जनेन शिशिररश्मिः = चन्द्रः अभिहितः उक्त. त्वं कुमुदस्य मित्रमिति, चन्द्रकुमुदयोः परस्परगुणसादृश्येन मैत्री स्वतः जाता, अतः गुणसादृश्येन कुमारो मे मित्रमिति भावः। श्रेयान् =

हिन्दी—उसके अपना कथन समाप्त कर देने पर पहले से जाने हुए महान् गुणों के कारण कुमार के प्रति अच्छी तरह महान् आदर-भाव रखे हुए महाराज हर्षवर्धन आभोगनामक छत्र के सम्बन्ध से तो प्रेम के पराकाष्ठा पर पहुंच जाने पर लजाता हुआ—जैसा आदर-पूर्वक बोला—वैसे-जैसे महात्मा महाकुलीन, पुण्यराशि-प्राणियों के अग्रणी, परोक्षमित्र, स्नेही के प्रति मुझ-जैसे का मन स्वप्न में भी किस तरह अन्यथा प्रवृत्त हो सकता है ? सकल जगत को तपाने में समर्थ होती हुई भी सूर्य-किरणें त्रिभुवनों की आँखों को आनन्द देने वाले कमलवन के प्रति ठंडी हो जाया करती हैं। बहुत से गुणों द्वारा अच्छी तरह खरीदे हुए हम मित्रता के योग्य कौन होते हैं ? सज्जनों के मधुर स्वभाव की दशों दिशायें बिना वेतन की दासियाँ होती हैं। पूर्णतः श्वेत और उत्तान स्वभाव के कारण सादृश्य रखे हुए कुमुदों के लिए [ मित्रता हेतु ] किसने चन्द्रमा को कहा ? कुमार की प्रतिज्ञा स्तुत्य है। स्वयं भुजवीर्यशाली वह, मुझ मित्र के धनुष उठाये रहते किस दूसरे को सिर झुकाएगा ? इस प्रतिज्ञा ने [ उसके प्रति ] मेरी प्रीति को बढ़ावा दिया है। पशु होते हुए अभिमानी सिंह के प्रति मेरे हृदय में बड़ा मान है, मित्र की तो बात ही क्या ? इसलिए तुम ऐसा प्रयत्न करो कि जिससे कुमार को देखने की यह उत्कण्ठा अधिक देर तक हमें न सताये'।

हंसवेगस्तु विज्ञापयाम्बभूव—'देव, किमपरमिदानीं क्लेशयत्यभिजातमभिहितं देवेन। सेवाभीरवो हि सन्तः, तत्रापि विशेषेणायमहङ्कारधनो वैष्णवो वंशः। आस्तां तावदस्मत्स्वामिवंशः। पश्यतु देवः पुरुषस्य हि सेवां प्रति दुर्जनन्येवातिवृद्धया दुर्गत्या वाभिमुखीक्रियमाणस्य, कुटुम्बिन्येवासन्तुष्टया तृष्णया वा प्रेर्यमाणस्य, दुरपत्यैरिव यौवनजनितैर्नानाभिलाषैरसत्संकल्पैर्वाकुलीक्रियमाणस्य, जरत्कुमारीमिव परमार्गणयोग्यामतिमहतीं या अवस्थां पश्यतः, स्वगृहे दुर्बन्धुभिरिव दुःस्थितैः समग्रैर्ग्रहैर्वा ग्राह्यमाणस्याभियोगं, पुरातनैरतिदुस्त्यजैर्भृत्यैरिव मलिनैः कर्मभिर्वानुबध्यमानस्य, सकलशरीरसन्तापकरं कार्ती-

---

टीका–अतिशयेन प्रशस्यः संकल्पः=शिवातिरिक्ताप्रणमनप्रतिज्ञा। बाहुशाली=भुजवीर्यशाली समालम्बितम्=समाश्रितं शरासनं=धनुः येन तस्मिन् मयि=धनुः सुहृदि=मित्रे तिष्ठति सति हरात्=शिवात् ऋते=विना नमस्यति=नमस्करिष्यति। संवर्धिता=वृद्धिं प्रापिता प्रीतिः=स्नेहः। अवलेपः=अभिमानः अस्यास्तीति तथोक्ते पशौ अपि केसरिणि =सिंहे मे हृदयस्य बहुमानः=अत्यादरः किं पुनः=वार्तैव का सुहृदि=मित्रे। वर्तय=यत्नं कुरु, क्लेशयति= क्लिश्नाति कुमारस्य दर्शने उत्कण्ठा=औत्सुक्यम्।

विज्ञापयाम्बभूव=निवेदितवान्-किम् अपरम्=अन्यत् क्लेशयति न किमपीति काकुः, अभिजातम्=उपयुक्तम् यथा स्यात्तथा अभिहितं=कथितम्। सन्तः=सज्जनाः सेवातः भीरवः=पराधीनत्वाद्भीताः भवन्तीति शेषः अयम् अहंकारः अभिमानः एव धनं यस्य सः अभिमानपरायणः इत्यर्थः विष्णोः=महावराहावतारधारिणः नारायणस्य अयम् इति [ अण् ] वैष्णवः वंशः, कुमारो हि विष्णूत्पन्ननरकवंशीयः। आस्तां तावत् दूरे तिष्ठतु, स्वामिनः=कुमारस्य वंशः। पुरुषस्य हि सेवां प्रति······अभिमुखीक्रियमाणस्य·······राजकुलं संप्रवेष्टुं कृतचित्तस्य ···· किं प्रायश्चित्तम्···· कीदृशं जीवितम् इत्यादि मुख्यवाक्यमस्ति। दुर्जन॰—अतिवृद्धया=अत्यवस्थां प्राप्तया दुर्जनन्या=दुर्मात्रा इवेत्युपमायाम् अतिवृद्धया=अतिशयेन वृद्धया=वृद्धिं प्राप्तया दुर्गत्या=दुःस्थित्या सेवाम्=राजभृत्यतां प्रति अभिमुखीक्रियमाणस्य= प्रवणीक्रियमाणस्य पुरुषस्य अत्र अनुबध्यमानस्य इत्येतत्पर्यन्तं वा शब्देन सेवावृत्त्या वैकल्पिककारणानि प्रतिपादितानीति ध्येयम्, असन्तुष्टया सन्तोषं न प्राप्तया कुटुम्बिन्या=गृहिण्या इव असन्तुष्टया=अतृप्तया तृष्णया=धनलिप्सया प्रेर्यमाणस्य=प्रवर्त्यमानस्य असन्तुष्टा खलु भार्या अधिकाधिकम् अर्जितुं पतिं प्रेरयति, तृष्णापि न कदापि पूर्यते, सर्वेऽपि षष्ठ्यन्ताः अस्मिन् महालम्बे वाक्ये पुरुषस्य इत्यनेन सम्बध्यन्ते इति ध्येयम्; दुरः॰ यौवनेन=तरुणावस्थया जनितैः=उत्पादितैः नानाभिलाषैः=विविधाभिलषितैः दुरपत्यैः=दुष्टसन्तानैः यौवनजनितैः नानाभिलाषैः असत्संकल्पैः=दुर्विचारैः आकुलीक्रियमाणस्य=व्याकुलतां प्राप्यमाणस्य विविधेच्छापूर्णं यौवनं हि नरं सेवार्थं प्रणुदति, जरत्॰—परैः=अन्यपुरुषैः मार्गणं=विवाहार्थं याचनमित्यर्थः तस्य योग्याम् अतिमहतीं जरन्तीं=अधिकवयोवस्थां प्राप्ता या कुमारी=कन्या ताम् इव परेषां=अन्येषां धनस्वामिनामित्यर्थः मार्गणस्य=याचनस्य योग्याम् धनस्वाम्यादिषु प्रार्थनां कृत्वा लभ्यामिति यावत् अतिमहतीम् उन्नताम् अवस्थां=स्थितिं पश्यतः=अवलोकयतः अंगमानस्येत्यर्थः, स्वगृहे॰—स्वगृहे दुःस्थितैः=दुर्गतैः समग्रैः=सकलैः बन्धुभिः=बान्धवैः इव स्वगृहे=स्वस्थाने 'मेषवृश्चिकयोर्भौमः'

हिन्दी–हंसवेग ने निवेदन किया–'महाराज और दूसरी बात अब क्या सताएगी? आपने उचित ही कहा है। सज्जन लोग सेवा से भय खाते हैं। तिस पर भी विशेषतः अहंकार का धनी वैष्णववंश' इस समय हमारे स्वामी के वंश की बात तो जाने ही दीजिए। आप पुरुष को ही देखें, जो नौकरी की ओर अतिवृद्ध (बूढ़ी) कुमाता की तरह अतिवृद्ध (बढ़ी हुई) दुरवस्था द्वारा धकेला जाता है, (धनाभाव के कारण) असन्तुष्ट गृहिणी की तरह असन्तुष्ट (अतृप्त) तृष्णा द्वारा प्रेरित किया जाता है, यौवन के उत्पन्न, तरह-तरह की इच्छायें रखे हुए कुसन्तानों की तरह यौवन के उठे हुए, नाना चाहनाओं से भरे कुविचारों द्वारा आकुल किया जाता है, जो दूसरों द्वारा मार्गण-[ चाही जाने योग्य ] खूब बड़ी प्रौढ़ कुमारी की तरह दूसरों के आगे मार्गण-[ प्रार्थना ] योग्य उन्नत स्थिति देखना चाहता है, जो अपने गृह (घर) बुरी दशा में पड़े हुए सभी दुष्ट बन्धुओं की तरह अपने गृह (स्थान) में (अन्य पाप ग्रहों के साथ) बुरी स्थिति में पड़े हुए सभी ग्रहों द्वारा (नौकरी के) प्रयत्न में लगाये जाते हैं, जिसके पीछे पुरातन (चिर काल के) किसी तरह न छोड़े जाने योग्य मैले कुचैले भृत्यों की तरह पुरातन (पूर्व जन्म के), किसी तरह न छोड़े जाने योग्य (अवश्यमेव भोक्तव्य) बुरे कर्म लगे रहते हैं जो सारे शरीर को संताप (क्लेश) देने वाले राज दरबार में (सेवा हेतु)

ग्निमिव दुष्कृतिनः कृतचित्तस्य संप्रवेष्टुं राजकुलम्, उपहतसकलेन्द्रियशक्तेरिव निष्पन्दं हृदयगतविषयग्रामग्रहणाभिलाषस्य, प्रथममेव तोरणतले वन्दनमालाकिसलयस्येव शुष्यतो द्वाररक्षिभिनिरुद्धस्य, पीडितस्य प्रविशतो द्वारे हरिणस्येवापरैर्हन्यमानस्य, करिकर्मचर्मपुटस्येव मुहुर्मुहुः प्रतिहारमण्डलकरप्रहारैर्निरस्यमानस्य, निधिपादपप्ररोहस्येव द्रविणाभिलाषादधोमुखीभवतः, दूरममार्गणस्याप्यतिविप्रकृष्टविवृत्तविसर्जितस्योद्वेगं व्रजतः, अकष्टकस्यापि चरणतललग्नस्याकृष्य क्षेपीयः क्षिप्य-

टीका—इत्यादि—ज्योतिःशास्त्रानुसारेण स्व-स्व-भावे इति यावत्, स्वस्थाने स्थिता हि ग्रहाः बलवन्तो भवन्ति, दुःस्थितैः =ग्रहान्तरैः सह दुष्फलकारकैः ग्रहैः=सूर्यमङ्गलादिभिः अभियोगः 'आभिमुख्येन उद्यमः अभियोगः' इति क्षीरस्वामी तं प्राप्यमाणस्य=प्राप्यमाणस्य पुरा०—पुरातनैः=चिरादागतैः अतिशयेन दुस्त्यजैः=त्यक्तुमयोग्यैः मलिनैः भृत्यैः=सेवकैः इव पुरातनैः=पूर्वजन्मनि कृतैः अतिदुस्त्यजैः=अवश्यं भोक्तव्यैरित्यर्थः मलिनैः=अनवदातैः पापात्मकैरित्यर्थः कर्मभिः अनुवर्त्यमानस्य=अनुगम्यमानस्य, सेवावृत्तिः पापकर्मणामेव फलमिति भावः, सकल०—सकलशरीरस्य सन्तापम्=दाहम् अन्यत्र क्लेशं करोतीति तथोक्तं कारीषाग्निम्=करीषं=शुष्कगोमयं तस्य समूहः कारीषम् तस्य अग्निम् इव राजकुलम् सेवार्थं राजद्वारं संप्रवेष्टुं कृतं चित्तं येन तस्य कृतसंकल्पस्येत्यर्थः दुष्कृतिनः=महापापिनः, कृतजघन्यकर्मा हि करीषाग्निद्वारा शनैः-शनैः आत्मदाहदण्डं लभते, सेवाऽपि एतादृशो दण्डः इति भावः, उपरि सर्वत्र मालारूपा श्लिष्टोपमा, उपहत०—उपहता=विनष्टा सकलानाम् इन्द्रियाणां शक्तिः=भोगसामर्थ्यं यस्य तस्य इव हृदयगतः=हृदयस्थितः विषयाणां=उपभोगवस्तूनां ग्रहणस्य=प्राप्तेः अभिलाषः यस्य तस्य सेवको हि व्यर्थमेव विचारयति सेवायां प्रविष्टोऽहं सर्वसुखानि अनुभविष्यामीति भावः, प्रथम०— प्रथमम् एव=आरम्भे एव तोरणस्य=बहिर्द्वारस्य तले=अधः शुष्यतः=शुष्कीभवतः वन्दनमालायाः=मङ्गलार्थं बहिर्द्वारे बद्धायाः मालायाः [ 'मङ्गलस्रक् तोरणोर्ध्वे भवेद् वन्दनमालिका' इति क्षीरस्वामी ] किशलयस्य=पल्लवस्य इव द्वाररक्षिभिः=द्वारपालैः निरुद्धस्य=निवारितस्य, राजसेवायां प्रविविक्षुः चिरं द्वारिनिरुद्धः वन्दनमालापल्लववत् शुष्यतीति भावः, पीडित०—पीडितस्य=कष्टं प्रापितस्य कथमपि द्वारे=राजद्वारे प्रविशतः=प्रवेशं कुर्वतः हरिणस्य=मृगस्य इव अपरैः=अन्यैः जनैः हन्यमानस्य=आहन्यमानस्य, करि०—करिकर्मणे=करिणां=हस्तिनां कर्मणे=युद्धाभ्यासाय यत् चर्मपुटं=चर्मनिर्मित-कृत्रिमगजः इत्यर्थः तस्य इव प्रतिहारेण=प्रतिसंहारेण वेष्टनेनेति यावत् मण्डलं=मण्डलाकारः यस्य तथा भूतस्य करस्य=शुण्डादण्डस्य प्रहारैः, सेवकपक्षे तु प्रतिहारमण्डले=द्वारपालसमूहे कराभ्यां=हस्ताभ्यां प्रहारैः चपेटिकाभिरित्यर्थः निरस्यमानस्य=निराक्रियमाणस्य, अत्र श्लिष्टोपमा, निधि०—निधिः=निधानं द्रविणमिति यावत् तस्योपरि जातस्य पादपस्य=वृक्षस्य प्ररोहस्य=अंकुरस्य इव यस्य वृक्षस्याधः निधिस्तिष्ठति तस्य शाखाः पत्राणि चाधोमुखीभवन्तीति चतुर्थोच्छ्वासस्य 'निधिस्तरुविकारेणेत्यादि-तृतीयश्लोके द्रष्टव्यम्, द्रविणस्य अभिलाषात् सेवकोऽपि अधोमुखीभवति शिरो नमयतीत्यर्थः। दूर०—अमार्गणस्य=

हिन्दी—प्रवेश करने को इस तरह मन में निश्चय किये रहता है जैसे सारे शरीर को संताप [ दाह ] पहुँचाने वाली उपलों की आग में प्रवेश करने को कोई महापापी, जिसकी सभी इन्द्रियों की क्षीण पड़ी हुई शक्तिवाले व्यक्ति की तरह हृदय के भीतर विषय-समूह भोगने की चाहना बनी रहती है, जो आरम्भ में ही ड्योढ़ी के नीचे द्वार-रक्षकों द्वारा रोका जाता हुआ इस तरह सूखता ( झूरता ) रहता है जैसे ड्योढ़ी के नीचे बन्दनवार का किसलय सूखता ( मुर्झाता ) है, जो पीड़ायें झेले (किसी तरह) ड्योढ़ी के भीतर प्रवेश करता हुआ हिरण की तरह औरों द्वारा पीटा जाता है, जो मोड़कर मंडलाकार बनी सूँड़ों द्वारा बार-बार पीछे हटाये जाते हुए युद्धाभ्यास हेतु बनाये चमड़े के नकली हाथी की तरह द्वारपाल-गणों द्वारा कर-प्रहारों से बार-बार पीछे हटाया जाता है, जो खजाने के ऊपर उगे वृक्ष के अंकुर की तरह धनाभिलाषा के कारण नीचे मुँह किये हुए रहता है, जो मार्गण ( याचक ) न होता हुआ भी बड़े दूर के नीच पुरुषों ( भंगी आदि ) द्वारा पहले लौटाया और पीछे बाहर किया जाता हुआ बड़ा उद्विग्न बना रहता [ मार्गण ( बाण ) न होता हुआ भी खूब दूर कानों तक पहले खींचा पीछे छोड़ा जाता हुआ बड़ी द्रुत गति से जाता है ] जो कंटक ( दुःखदायक व्यक्ति ) न होता हुआ भी पैरों तले लगा ( पाद प्रणत ) हुआ खींचकर अत्यधिक बाहर निकाल दिया जाता है [ कंटक काँटा ] न होता हुआ भी चरणतल में लगा ( चुभा ) हुआ ( चिमटी को ) खींचकर अतिशीघ्र

१. प्ररोहदारुमयदेहस्येव द्रविणा'

मार्गणस्य, अमकरकेतोरप्यकालोपसर्पणप्रकुपितेश्वरदृष्टिदग्धस्य प्रलयमुपगच्छतः, कपेरिव कोपनिर्भर्त्सितस्याप्यभिन्नमुखरागस्य, ब्रह्मघ्न इव प्रतिदिवसवन्दनोद्घृष्टशिरःकपालस्य स्पर्शरहितस्याशुभकर्माणि निर्वहतः, त्रिशङ्कोरिवोभयलोकभ्रष्टस्य नक्तंदिनमवाक्शिरसस्तिष्ठतः, वाजिन इव कवलदानेन मुखबाह्यमात्मानं विदधानस्य, अनशनशायिन इव हृदयस्थापितजीवनाशस्य शरीरं

---

टीका—मार्गयति = याचते इति मार्गणः = याचकः न मार्गणः तस्य [ अथ च मार्गणः = बाणः अमार्गणः अबाणः तस्यापि सतः ] अतिविप्र०—कष्टैः = अतिदूरगतैः प्राकृतैः इति शंकरः आदौ विवृत्तः = परावर्तितः पश्चात् च विसर्जितः = दूरीकृतः तस्य अतएव दूरम् भृशं यथा स्यात्तथा उद्वेगम् = मन्युं व्रजतः = गच्छतः उद्विज्यमानस्येत्यर्थः [ अथ च अति-विप्रकृष्टं = अतिदूरं कर्णपर्यन्तमित्यर्थः आदौ विवृत्तः = आकृष्टः पश्चाच्च विसर्जितः = त्यक्तः तस्य उद्वेगः = उत्कृष्टः वेगः यस्मिन् कर्मणि यथा स्यात्तथा दूरं = दूरप्रदेशम् व्रजतः ] अकण्ट०—अकण्टकस्य = अदुःखदायकस्य [ कण्टको लोकोपद्रवकारी' इति शब्दकल्पद्रुमः ] चरणतले = पादतले सेवाप्राप्त्यर्थं लग्नस्य = पतितस्येत्यर्थः आकृष्य करेणादाय क्षेपः = अतिशयेन क्षिप्रम् यथा स्यात्तथा क्षिप्यमाणस्य = बहिः क्रियमाणस्य, [ अथ च कण्टकः = शल्यम् तद्भिन्नस्यापि सतः चरणतले लग्नस्य = अन्तः प्रविष्टस्य आकृष्य = सन्दंशादिद्वारा उद्धृत्य क्षिप्यमाणस्य ] अमक०—मकरकेतुः शृंगारीति संकरः स न भवतीति अर्थात् कामविषयकभावैः शून्यः केवलम् सेवाप्राप्तिविषयकविचारलीन इति यावत् तस्य अपि अकाले = असमये यत् उपसर्पणम् = राज्ञः पार्श्वे सेवाप्राप्त्यर्थमागमनं तेन प्रकुपितः = क्रुद्धः यः ईश्वरः = राजा तस्य दृष्ट्या = अवलोकनेन दग्धस्य = संतापितस्य अतएव प्रलयम् अदृश्यता पलायनमित्यर्थः शंकरानुसारेण प्रलयः = प्रकृष्टो लयः मित्यादिः संश्लिष्टत्वम् उपगच्छतः [ अथ च मकरकेतुः = कामदेवः तद्भिन्नस्यापि सतः अकालोपसरणे = समाधिस्थितिसमये उपसर्पणेन प्रकुपितस्य ईश्वरस्य = शिवस्य दृष्ट्या = तृतीयनयनेन दग्धस्य भस्मीकृतस्य, अतएव प्रलयं = विनाशं उपगच्छतः ] उपरि सर्वत्र कारणं विना कार्योत्पत्तेः विभावना, अपरोऽयं व्यञ्जकः, व्यञ्जका चोपमा, अतएव अलंकारेण अलंकारध्वनिः, कपेः = वानरस्य इव कोपेन = क्रोधेन प्रभुणा निर्भर्त्सितस्य = अवज्ञातस्य अपि न भिन्नः = विगतः मुखस्य रागः = लालिमा यस्य तस्य, स्वामिकृततिरस्कारेऽपि सेवकोऽन्तर्गतदुःखं सगोप्य मुखवर्णं न विकृतिं दर्शयतीति भावः, ब्रह्म = ब्राह्मणं हन्तीति तथोक्तः तस्य ब्रह्महत्याकर्तुरित्यर्थः इव प्रतिदिवसं वन्दनेन = प्रणमनेन उद्घृष्टं = पुनः पुनः स्पृष्टं शिरसः कपालं = कर्परं यस्य येन वा तस्य स्पर्शः = सुखैः रहितस्य सेवकोहि सुखोपभोगवर्जितो भवति अन्यत्र स्पर्शरहितस्य = अस्पृष्टस्य ब्रह्मघातिनः अस्पृश्यत्वात् अशुभानि = हीनानि कर्माणि = कार्याणि निर्वहतः = कुर्वतः उभयत्र समानम् प्रायश्चित्तस्वरूपं ब्रह्महा हतस्य

**टिप्पणी—त्रिशंकु**—त्रिशंकु सत्यवादी हरिश्चन्द्र का पिता था उसके मन में कल्पना हुई कि सदेह स्वर्ग चला जाऊँ। उसने अपने कुलपुरोहित वसिष्ठ से कहा, लेकिन उन्होंने उसकी बात असम्भव बताई। फिर वह वसिष्ठ के पुत्रों के पास गया। उन्होंने भी इनकार कर दिया। अन्त में विश्वामित्र के पास गया। विश्वामित्र ने यज्ञ कराया और सदेह स्वर्ग जाने को कह दिया। त्रिशंकु स्वर्ग जा ही रहा था कि इन्द्र ने ऊपर आने से रोक दिया और नीचे ढकेल दिया। विश्वामित्र बोले खबरदार नीचे आया तो, बेचारा अभी तक दोनों लोकों के बीच लटक ही रहा है। आजकल नीचे मुँह किये वह एक नक्षत्र के रूप में है। बाण ने कादम्बरी में भी इसका उल्लेख कर रखा है—'सुरलोकमारोहतस्त्रिशंकोरिव कुपितशतमखहुंकारनिपातिता राजलक्ष्मीः।'

**हिन्दी**—बाहर निकाला जाता है, जो मकरकेतु (कामयुक्त) न होता हुआ भी असमय पर आने से कुपित हुए ईश्वर (राजा) की दृष्टि से दग्ध ( संतापित ) हुआ कहीं गायब हो जाता है [ मकरकेतु ( कामदेव ) न होता हुआ भी असमय पर आने से कुपित हुए ईश्वर ( महादेव ) के नेत्र से भस्म हुआ विनाश को प्राप्त हो जाता है ], जो क्रोध से फटकारा हुआ भी वानर की तरह मुख की लाली यथावत् बनाये रखता है जो ब्राह्मण के हत्यारे की तरह प्रतिदिन वन्दना करते रहने से सिर के कपाल को घिसे, स्पर्शरहित ( अस्पृश्य, सुखवंचित ) हुआ हीन कर्मों को करता रहता है, जो त्रिशंकु की तरह दोनों लोकों से भ्रष्ट हुआ रातदिन नीचे मुँह किये खड़ा रहता है, जो ग्रास के कारण अपने को मुख-बाह्य ( आराम से ) ले जाने योग्य बने घोड़े की तरह ग्रास के कारण अपने को सुख-बाह्य [ सुखों से बाहर अर्थात् सुखरहित ] बनाता रहता है, जो हृदय में जीवनाश ( जीवन-समाप्ति ) रखे हुए आमरण-व्रत पर बैठे हुए व्यक्ति की तरह हृदय में जीव-

**क्षपयतः, शुन इव निजदारपराङ्मुखस्य जघन्यकर्मलग्नमात्मानं ताडयतः, प्रेतस्येवानुचितभूमिवीयमानान्नपिण्डस्य, बलिभुज इव जिह्वालौल्योपयुक्तपुरुषवर्चसो वृथा विहितायुषो जीवतः, श्मशानपादपानिव पिशाचस्य दग्धभूत्या परुषीकृतान्राजवल्लभानुपसर्पतः, विपरीतजिह्वाजनितमाधुर्यैरोष्ठमात्रप्रकटितरागैं राजशुकालापैः शिशोरिव मुग्धविलोभ्यमानस्य, वेतालस्येव**

---

**टीका**-ब्राह्मणस्य शिरः कपालं स्वशिरसा नमति समाजबहिष्कृतश्च भूत्वा भिन्नसाधनैः वृत्तिं करोति यथोक्तं याज्ञवल्क्येन —'शिरः कपाली ध्वजवान् भिक्षाशी कर्म वेदयन् । ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्' सेवकोऽपि प्रतिदिनं स्वशिरोनमयन् वसति; सेवा ब्रह्महत्याप्रायश्चित्तमिवास्तीति भावः, त्रिशंकोः=त्रिशंकुः=सूर्यवंशीयो राजविशेषः हरिश्चन्द्रस्य पिता उभयलोकाभ्यां=स्वर्गमर्त्यलोकाभ्यां भ्रष्टस्य=च्युतस्य नक्तंदिनं=दिवारात्रं अर्वाक्=नीचैः शिरः यस्य तस्य तिष्ठतः। त्रिशंकुवत् सेवकोऽपि न इहलोके सुखं भुङ्क्ते न चापि पुण्यानि अकृत्वा परलोके सुखमर्हति, उभयतो भ्रष्टः स्वप्रभोरग्रे नित्यं नतशिरा भवति, **वाजिन०** - वाजिनः=अश्वस्य इव कवलस्य=घासग्रासस्य अन्यत्र अन्नस्य वशेन=कारणेनेत्यर्थः आत्मानं=स्वं सुखेन=सुखपूर्वकं वाह्यं=वहनीयम् अन्यत्र सुखात् बाह्यं=बहिर्भूतं वञ्चितमित्यर्थः अत्र वन्बयोः भिन्नत्वेपि 'यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा' इति नियमेन न श्लेषहानिः, **अनशन०**—अनशनेन=उपवासेन शेते इति तयोक्तस्य कृतामरणव्रतस्येत्यर्थः इव हृदये स्थापितः=निश्चितः जीवस्य=जीवनस्य नाशः समाप्तिर्येन तस्य अन्यत्र हृदये स्थापिता धृता जीवस्य=आजीविकायाः आशा येन तस्य शरीरं क्षपयतः=क्षीणं कुर्वतः **शुन०** शुनः=सारमेयस्य इव निजाः या दाराः=भार्या [ दारशब्दो नित्यबहुवचनान्तः ] तेभ्यः पराङ्मुखस्य=विमुखस्य, सेवकस्य पार्श्वे भार्यया सह वार्तादिकरणस्य समय एव न मिलति, श्वपक्षे महान् अश्लीलोऽर्थः, पाठकाः स्वयमुन्नयन्तु, जघन्ये=अधमे कर्मणि लग्नम्=संसक्तम्, श्वपक्षे जघने भवं जघन्यं कर्म सुखमित्यर्थः तस्मिन् लग्नम् आत्मानं ताडयतः =भर्त्संयतः इत्यर्थः, **प्रेत०**—प्रेतस्य=मृतकस्य अनुचितायां=भूमौ स्थाने एकत्र मलिने अन्यत्र नदीतीरादौ दीयमानः अन्नपिण्डः=भोजनम् अन्यत्र यवादिगोलकः यस्मै तस्य सेवकोहि यत्रकुत्रचिदशुद्धस्थाने भुङ्क्ते, प्रेतानामपि नदीतीरादिषु जीवितावस्थायां न कदापि भुक्तमासीत् अथवा अनुचितम्=चितायाः पश्चात् **बलि०**—बलिं भुङ्क्ते इति तयोक्तस्य काकस्येत्यर्थः इव जिह्वायाः=रसनायाः लौल्येन=लोलुपतया उपयुक्तं=प्रयुक्तं व्ययीकृतं समापितमित्यर्थः पुरुषवर्चः=पौरुषं तेजः येन तस्य अन्यत्र जिह्वालौल्येन उपयुक्तं=भुक्तं पुरुषस्य मनुष्यस्य वर्चः=पुरीषं येन तस्य [ 'तेजः-पुरीषयोर्वर्चः' इत्यमरः ।] वृथा=व्यर्थं विहितं=कृतम् आयुः=जीवनकालो यस्य तस्य जीवतः=जीवनं धारयतः, उभयत्र समानम्, काकोहि अतिदीर्घं जीवति यथोक्तम्—'काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते' किन्तु काकपक्षे शंकरः 'विहितायुषः' पदम् एवं विगृह्णाति—'विभ्यः=पक्षिभ्यः हितम् आयुर्यस्य तस्य' अर्थात् यस्य जीवनं पक्षिभ्य एव हितकरम्, **श्मशान०**—दग्धानां=चितासु प्रज्वालितानां शवानां भूत्या=भस्मना परुषीकृतान्=रूक्षीकृतान् श्मशानस्य=शवदाहस्थानस्य पादपान्=वृक्षान् उपसर्पतः=उपगच्छतः पिशाचस्य=नीचयोनिविशेषस्य इव, पिशाचा हि श्मशानवृक्षेषु वसन्तीति जनविश्वासः, दग्धा=हता जघन्येत्यर्थः या भूतिः=सम्पत् [ 'भूतिर्भस्मनि सम्पदि' इत्यमरः ] तया परुषीकृतान्=कठोरहृदयीकृतान् राजवल्लभान्=राज्ञः प्रियसेवकान् उपगच्छतः, **विपरीत०**-विपरीता=हृदयाद् भिन्नेत्यर्थः या

**हिन्दी**-नाश ( आजीविका की आशा ) रखे शरीर क्षीण करता रहता है, जो अपनी स्त्री से पराङ्मुख ( विपरीतमुख ) हो जघन्य-कर्म ( मैथुन ) में लगे हुए कुत्ते की तरह अपनी स्त्री से पराङ्मुख [ मुँह फेरे ] जघन्य-कर्म [ सेवा के नीच कामों ] में लगा हुआ अपने को पीटता रहता है, जिसे अनुचित [ अयोग्य ] भूमि पर ( खाने को ) अन्न का टुकड़ा इस तरह दिया जाता है जैसे प्रेत को अनुचित ( चिता के पीछे की भूमि पर ) अन्नपिंड देते हैं, जो जीभ के चटोरेपन के कारण पुरुष-वर्च ( मनुष्य की विष्ठा ) खाने वाले वृथा आयु गँवाये जी रहे की तरह जीभ के चटोरेपन के कारण पुरुष वर्च ( पौरुष तेज ) खोए वृथा आयु गँवाए जीता है, जो दग्धभूति ( जले हुए मुर्दों की राख ) से सूखे बने पड़े मरघट के वृक्षों के पास जाने वाले पिशाच की तरह दग्धभूति [ मुई सम्पत्ति ] से ( हृदय में ) कठोर बने हुए राजा के प्रिय कारिन्दों के पास जाता रहता है, जो विपरीत जिह्वा [ पीछे मुड़ी हुई जीभ ] से माधुर्य उत्पन्न किये केवल मात्र ओंठ में ही राग [ लाली ] दिखाते हुए तोतों के समान विपरीत जिह्वा [ हृदय से विपरीत वाणी ] से माधुर्य उत्पन्न किये, केवलमात्र ओंठ [ वाणी ] में ही राग ( प्रीति ) दिखाने वाले राजाओं के वार्तालापों द्वारा बच्चे की तरह मुग्ध बनाया और लुभाया जाता है, जो नरेन्द्र ( झाड़खण्डी ) के प्रभाव में पड़े हुए बेताल की तरह नरेन्द्र [ राजा ] के

नरेन्द्रप्रभावाविष्टस्य न किंचिन्नाचरतः, चित्रधनुष इवालीकगुणाध्यारोपणैकक्रियानित्यनम्रस्य निर्वाणतेजसः, संमार्जनीसमुपार्जितरजसोऽवकरकूटस्येव निर्माल्यवाहिनः, कफविकारिण इव दिने दिने कटुकैरुद्वेज्यमानस्य, सौगतस्येवार्थशून्यविज्ञप्तिजनितवैराग्यस्य काषायाण्यभिलषतः, निशास्वपि मातृबलिपिण्डस्येव दिक्षु विक्षिप्यमाणस्य, अशौचगतस्येव कुशयनजनितसमधिक-

टीका-जिह्वा = वाणी तया जनितम् = उत्पादितं माधुर्यं = मधुरत्वं यैः राज्ञां मुखमात्रे माधुर्यमस्ति [ मधुतिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ] अन्यत्र विपरीता = पश्चात्परिवृत्ता जिह्वा = जिह्वेन्द्रियम् येषां तैः शुकानां जिह्वा स्वभावतः परिवृत्ता भवति, ओष्ठमात्रे = ओष्ठे एव प्रकटितः रागः एकत्र प्रीतिः अन्यत्र रक्तत्वं येषां तैः राजानः शुकाः = कीरा इवेत्युपमिततत्पु० तेषाम् आलापैः = वचनैः शिशोः = बालकस्य इव मुग्धस्य = मोहं प्राप्तस्य मूढीकृतस्येत्यर्थः विलोभ्यमानस्य = लोभं प्राप्यमाणस्य च, वेताल० नरेन्द्रस्य = गारुडिकस्य मन्त्रज्ञस्येति यावत् प्रभावेन आविष्टस्य = आक्रान्तस्य तद्वशीभूतस्येत्यर्थः वेतालस्य = भूतविशेषस्य इव नरेन्द्रस्य राज्ञः प्रभावाक्रान्तस्य सेवकस्य न किंचित् न आचरतः = यत् किमपि स्यात् तत्सर्वं कुर्वतः, चित्र०—चित्ररूपं धनुः चित्रधनुः तस्य इव अलीकं = मिथ्या यत् गुणस्य = प्रत्यञ्चायाः अध्यारोपणं संयोजनम् एव एका क्रिया तस्या नित्यं नम्रस्य = नतस्य चित्रे हि धनुः अवास्तवरूपेण नित्यमेव ज्यारूढं नतं च भवति, अत एव निर्वाणं = शान्तं तेजः सामर्थ्यं यस्य तस्य, सेवकपक्षे अलीकाः = कल्पिताः अवास्तवा इत्यर्थः ये गुणाः दयादाक्षिण्यादयः तेषाम् अध्यारोपणम् = स्वामिनि स्थापनम् एव एका क्रिया तस्यां नित्यनम्रस्य, सेवकोहि स्वामिमनोरञ्जनहेतोः तस्मिन् नानागुणान् कल्पयित्वा नित्य तत्प्रणतो भवतीति भावः अत एव तस्य तेजः [ प्रभावः ] समाप्तं भवति, संमार्ज०—शोधन्या समुपार्जितं = प्राप्तं रजः = धूलिः येन तस्य प्रकोष्ठानां रजोमार्जनसमये रजः तच्छरीरे लगति, अन्यत्र संमार्जन्या समुपार्जितम् = एकत्रितं रजः यत्र तस्य अवकरस्य = अपस्करस्य संकरस्येति यावत् कूटः = समूहः तस्य [ संमार्जनी शोधनी स्यात् संकरोऽवकरस्तथा ॥ क्षिप्ते' इत्यमरः ] निर्माल्यम् = उपभुक्तं द्रव्यम् वस्त्रादिकम् अन्यत्र देवोच्छिष्टं द्रव्यं पुष्पादिकं वहतीति तथोक्तस्य, सेवकोहि स्वामिनः उपभुक्तपूर्वं भोजनवस्त्रादि प्राप्नोति, अवकरकूटेऽपि देवोपभुक्तं पुष्पादिकं प्रक्षिप्यते, कफ०—कफस्य विकारः = रोगः अस्यास्तीति तथोक्तस्य कफरोगिण इत्यर्थः इव कटुकैः = स्वामिनः कटुभिः (कठोरैः) शब्दैरित्यर्थः अन्यत्र कटुकैः = कटुरसवद्भिः पदार्थैः उद्वेज्यमानस्य = उद्विग्नीक्रियमाणस्य, सौगत० – सुगतः = बुद्धः तस्यानुयायी सौगतः बौद्ध इत्यर्थः तस्य इव अर्थेन = धनेन शून्या रहिता या विज्ञप्तिः = स्वामिनोऽर्थे प्रार्थना तया जनितं = कृतं वैराग्यं = निर्वेदः नैराश्यमिति यावत् यस्य तस्य अन्यत्र अर्थशून्या = बाह्यवस्तुशून्या विज्ञप्तिः = विज्ञानं तया जनितमिति पूर्ववद् योज्यम्, बौद्धाः हि विज्ञानवादिनो भवन्ति, तेषां सिद्धान्ते घटपटादिकं विज्ञानस्यैवाकारविषयः घटपटादीनामवास्तवत्वात्, द्वितीयोच्छ्वासेऽपि बाण. प्राह—न जिनस्येवार्थवादशून्यानि दर्शनानि, काषायाणि = काषायरञ्जितवस्त्राणि अभिलषतः = इच्छतः, निशा० – निशासु = रात्रिषु अपि मातृभ्यः = दिव्यमातृभ्यः [ 'ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा। कौबेरीत्यपि कौमारी सप्तैता मातरः स्मृताः' इति हलायुधः ] बलिपिण्डस्य = उपहाररूपान्नस्य इव दिक्षु = दिशासु विक्षिप्य प्रेष्यमाणस्य अन्यत्र प्रदीयमानस्य, मातृभ्यो रात्रावेव बलिपिण्डाः प्रदीयन्ते, सेवकोऽपि दिनस्य तु वार्तैव का रात्रावपि यत्र कुत्रापि कार्ये प्रेष्यते, अशौच० —

हिन्दी-प्रभाव में पड़ा हुआ वह ऐसा कुछ नहीं जो न करे, जो झूठे गुण [ प्रत्यञ्चा, डोरी ] के अध्यारोपण [ चढ़ाने ] की एकमात्र क्रिया में हमेशा के लिए झुके पड़े, [ प्रहार की ] शक्ति से रहित चित्रके धनुष की तरह झूठे गुणों (वीरत्वादि) के अध्यारोपण [ कल्पित करने ] की एकमात्र क्रिया में हमेशा ( सिर से ) झुके, अपना तेज खोये रहता है जो झाड़ से समेटे धूलवाले, निर्माल्य [देवताओं पर चढ़ाकर पीछे बेकार बने फूलों] को रखे कूड़े-करकट के ढेर की तरह झाड़ लगाने से धूलि भरा, निर्माल्य [ स्वामी के पहने फेंके वस्त्रादि ] पहनता है, जो प्रतिदिन कटुकों ( कड़वी चीजों ) से तंग आए हुए कफ रोगी की तरह प्रतिदिन कटुकों ( कटुवचनों ) से तंग आया हुआ रहता है, जो अर्थों ( बाह्य वस्तुओं ) की शून्यता वाली विज्ञप्ति ( विज्ञान सिद्धान्त ) के कारण विरक्त हो गेरुआ वस्त्र चाहने वाले बौद्ध की तरह [ धन ] से शून्य विज्ञप्ति ( प्रार्थना ) से विरक्त हो गेरुआ वस्त्र पहनना चाहता है, जो देव मातरों को दिये जाने वाले बलिपिंड की तरह रातों में भी दिशाओं में फेंक दिया जाता है, जो कुशयन ( पृथिवी पर शयन ) से और भी अधिक दुःखी हुए मरणाशौच वाले व्यक्ति की तरह कुशयन ( बुरी शय्या पर सोने ) से और भी अधिक दुःखी होता रहता है, जो पीछे

तरदुःखवृत्तेः, तुलायन्त्रयेव पश्चात्कृतगौरवस्य तोयार्थमपि नमतः, अतिकृपणस्य शिरसा केवलेनासन्तुष्टस्य वचसापि पादौ स्पृशतः, निर्दयवेत्रिवेत्रताडनत्रस्तयेव त्रपया त्यक्तस्य, दैन्यसङ्कोचितहृदयहृदावकाशयेवाहोपुरुषिकया परिवर्जितस्य, कुत्सितकर्माङ्गीकरणकुपितयेवोन्नत्या वियुक्तस्य, धनश्रद्धया क्लेशानुपार्जयतः, स्ववृद्धिबुद्धयावमानं वर्धयतो मूढस्य, सत्यपि विविधकुसुमाधिवाससुरभिणि वने तृष्णाञ्जलिमुपरचयतः, कुलपुत्रस्यापि कृतागस इव भीतभीतस्य समीपमुपसर्पतः, दर्शनीयस्याप्यालेख्यकुसुमस्येव निष्फलजन्मनः, विबुधोऽपि वैधेयस्येवापशब्दमुखस्य, शक्तिमतोऽपि श्वित्रिण इव सङ्कोचितकरयुगलस्य,

---

टीका-अशौचं = मरणाशौचं गतस्य = प्राप्तस्य यथाह मनुः—'दशाहं शावमाशौचं ब्राह्मणस्य विधीयते' इव कु = कुत्सितं यत् शयनं = शय्या तया जनिता = उत्पादिता समधिकतरा = अत्यधिका दुःखवृत्तिः = दुःखभावो यस्य तस्य, सेवकोहि सुशय्यालाभाभावात् अधिकतरं दुःखमेतीतिभावः, अन्यत्र कुः = पृथिवी एव शयनं अन्यत् पूर्ववत्, मृतशौचे केवलभूमौ अथवा तृण-कटास्तीर्णभूमौ शयन-विधानमस्ति, तद्यथा—'तृण-कटास्तीर्णभूमौ पृथक् शयीरन् न कम्बलास्तीर्णभूमौ' इति। तुला०—तुलायन्त्रस्य = जलघटीयन्त्रस्य इव पश्चात् कृतं वर्जितं गौरवम् = आत्माभिमानो येन तस्य, अन्यत्र पश्चात् कृतं = पृष्ठतः कृतं गौरवम् = भारवत्त्वं येन तस्य, तोयार्थं = जलार्थमपि नमतः = प्रणमतः अन्यत्र नीचैर्गच्छतः सेवकः विगतात्माभिमानः सन् जलं याचितुम् अपि प्रणमति, घटीयन्त्रमपि भारवतीः जलभरितघटीः पश्चात् दूरे इति यावत् कृत्वा रिक्तघटीभिः सह नीचैः गच्छतीत्याशयः प्रतीयते, उपरि सर्वत्र श्लिष्टोपमा सा च माला रूपा ज्ञेया, अति०—अतिशयेन कृपणस्य = दीनस्य केवलेन शिरसा (पादौ स्पृष्टम्) असन्तुष्टस्य वचसा = वाण्या अपि पादौ स्पृशति अयं भावः शिरसा तु स प्रभोः पादौ प्रणमति एव परन्तु" वचसाऽपि प्रणमति, वाणीद्वाराऽपि तत्स्तुतिः गायति निर्दय०—निर्दयः = कठोरः यः वेत्री = वेत्रदण्डधारी पुरुषः = तेन वेत्रद्वारा ताडनात् = प्रहारात् त्रस्तया = भीतया इव त्रपया = लज्जया व्यक्तस्य = उज्झितस्य निर्लज्जस्येत्यर्थः, दैन्य०—दैन्येन = दीनतया संकोचितं = संकोचं प्रापितं यत् हृदयं तेन हृतः = नीतः अवकाशः = स्थानं यस्याः तया इव आहोपुरुषिकया = अहो पुरुषोऽहमितयस्य भावः आहोपुरुषिका इति (क्षीरस्वामी) [आहोपुरुषिका दर्पाढ्या स्यात् सम्भावनात्मनि' इत्यमरः] आत्माभिमानइत्यर्थः तया परिवर्जितस्य = विरहितस्य, कुत्सित०—कुत्सितानां = गर्हितानां कर्मणां = कार्याणाम् अङ्गीकारेण = करणेनेत्यर्थः कुपितया = क्रुद्धया इव उन्नत्या = उत्कर्षेण अभ्युदयेनेति यावत् वियुक्तस्य = रहितस्य, धनस्य श्रद्धया = सञ्चयविचारेणेत्यर्थः क्लेशान् = कष्टानि उपार्जयतः = प्राप्नुवतः स्ववृद्धि०—स्वस्य = आत्मनः अथवा धनस्य या वृद्धिः = आधिक्यं तस्याः बुद्धया = विचारेण अवमानम् = अपमानम् वर्धयतः = वृद्धिं नयतः मूढस्य = मूर्खस्य, सत्यपि—विविधानि यानि कुसुमानि तेषाम् अधिवासेन = सौगन्ध्येन सुरभिणि = सुगन्धिते वने = कानने सत्यपि तृष्णया = धनलिप्सया अञ्जलिम् उपरचयतः = प्रभूणामग्रे अञ्जलिबन्धनं कुर्वतः, अर्थात् वनगमनं वरं, धनलोभे सेवकत्वं निकृष्टम्, शंकरानुसारेण तृष्णा = मृगतृष्णा मृगमरीचिकेति यावत् तस्यां जलपानार्थम् अञ्जलिबन्धः अत्रार्थे वनशब्दस्य जलार्थोग्राह्यः, अर्थात् कुसुमसुरभिते जले सत्यपि सेवकः मृगतृष्णायाम् अविद्यमानं जलं पातुमिच्छति, वनशब्दे श्लेषः कवेः विवक्षित एव। कुल० कुलपुत्रस्य = उच्चकुलोत्पन्नस्य अपि कृतम् आगः = अपराधः तेन तस्य इव भीतभीतस्य = अतिभीतस्य समीपं = स्वामिनः निकटम् उपसर्पतः = उपगच्छतः

हिन्दी-(नीचे) रखे गौरव (जल-भरे घड़ों के भार) वाले रहँट की तरह पीछे रखे (गिराए) गौरव (आत्मप्रतिष्ठा) वाला जल के लिए भी नीचे झुकता है, जो अति दीन न केवल शिर से ही अपितु वाणी से भी पाँव छूता है (गुणगान करता है), जो निर्दयी वेत्रदण्डधारी पुरुष द्वारा बेत की मार से डरी हुई - जैसी लज्जा द्वारा भी त्यागा हुआ रहता है, जिसको दीनता से सांकरे किये हुए हृदय में स्थान न होने के कारण आत्माभिमान छोड़े हुए रहता है, जो गर्हित कार्यों को अंगीकार करने से कुपित हुई जैसी उन्नति से वियुक्त रहता है, जो धन (कमाने) के विचार से क्लेश कमाता रहता है, जो ऐसा मूढ है कि धन-वृद्धि के विचार से अपमान की वृद्धि करता है, जो नाना पुष्पों के परिमल से सुगन्धित हुए जल के रहते हुए भी मृगतृष्णा में (जलार्थ) अंजलि बाँधता रहता है जो कुलपुत्र होता हुआ भी अपराधी की तरह बड़े डरते-डरते पास में जाता है, जिसका जन्म रूपवान होते हुए भी चित्र में बने पुष्प की तरह व्यर्थ है, जो अपशब्द मुख वाले (मुख से अशिष्ट शब्द प्रयुक्त करने वाले) मूर्ख की तरह (स्वामी के आगे) अपशब्दमुख [गूँगा] बना रहता है, जो बलवान् होता हुआ भी श्वेतकुष्ट के रोगी की तरह अपने दोनों हाथ संकुचित किये रहता है, जो

**समसमुत्कर्षेषु निरग्निपच्यमानस्य, नीचसमीकरणेषु निरुच्छ्वासं म्रियमाणस्य, परिभवैस्तृणीकृतस्य, दुःखानिलेनानिर्वृतेः ज्वलतः, भक्तस्याप्यभक्तस्य, निरूष्मणः सन्तापयतो बन्धून्विमानस्याप्यगतिकस्य, च्युतगौरवस्याप्यधस्ताद्गच्छतः, निःसत्त्वस्यापि महामांसविक्रयं कुर्वतः, निर्मदस्याप्यस्वतन्त्रवृत्तेरयोगिनोऽपि ध्यानवशीकृतात्मनः शय्योत्थायं प्रणमतो दग्धमुण्डस्य गोत्रविदूषकस्य नक्तंदिनं नृत्यतो मनस्विजनं हासयतः, कुलाङ्गारस्य वंशं दहतः, नृपशोः तृणेऽपि लब्धे कन्धरामवनमयतः,**

---

**टीका-दर्श०**-दर्शनीयस्य = सुन्दरस्य अपि आलेख्यकुसुमस्य = चित्ररूपपुष्पस्य इव निष्फलं = व्यर्थं जन्म यस्य तस्य उपरि सर्वत्रोपमा, **विबुधः** –पण्डितस्य अपि वैधेयस्य = मूर्खस्य इव अपशब्दम् = अपगतशब्दं मूकमित्यर्थः मुखं यस्य तस्य पण्डितोऽपि सन् सेवकः प्रभोरग्रे न किञ्चिद् वदति मूक एव तिष्ठति, अन्यत्र अपशब्दाः = अव्याकरणानुसारिणः अथवा अशिष्टाः शब्दाः मुखे यस्य तस्य, अत्र श्लिष्टोपमा-विरोधाभासयोः संकरः यः विद्वान् स कथम् अपशब्दमुखः, अर्थान्तरकरणे विरोधपरिहारः उपयुक्त एव, शक्तिमतः = बलवतः अपि श्वित्रिणः = श्वेतकुष्टरोगिणः इवेत्युपमायाम् संकोचितं करयुगलं यस्य तस्य, **सम०**—समानां = स्वसमकक्षभृत्यानां समुत्कर्षेषु = पदोन्नतिषु निर्गतः अग्निः यस्मिन् कर्मणि यथा स्यात्तथा विनाग्निमित्यर्थः पच्यमानस्य = दह्यमानस्य ईर्ष्याहेतोरिति शेषः, अत्र विभावना; **नीच०**—नीचानां = स्वापेक्षया निम्नकक्षाणां भृत्यानां समीकरणेषु = स्वसमानकक्षायां प्रापणेषु निरुच्छ्वासं = उच्छ्वासरहितं यथा स्यात्तथा म्रियमाणस्य = मृत्युं गच्छतः, परिभवैः = अनादरैः तृणीकृतस्य = तृणवत् तुच्छतां नीतस्य दुःखम् एव अनिलः = वायुः तेन अनिर्वृत्तेः = न निर्वृत्तिः = सुखं यस्य तस्य-ज्वलतः = दह्यमानस्य च, अत्र दुःखानलेति पाठः साधीयान्, भक्तस्य = स्वामिनि अनुरक्तस्य अपि अभक्तस्य अननुरक्तस्य इति विरोधः अभक्तस्य = न भक्तं = भोजनार्थमन्नं यस्य तस्य [ 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः' इत्यमरः ] इति परिहारः निर् = न ऊष्मा = उष्णता ताप इति यावत् यस्मिन् तस्य अत्र 'अपि' शब्दोऽध्याहार्यः बन्धून् = बान्धवान् सन्तापयतः = दहतः, निस्तापः कथं तापयेत् इति विरोधः निरूष्मणः = पौरुषतेजोरहितस्य सन्तापयतः = दुःखमुत्पादयतः इति परिहारः, विमानस्य = व्योमयानस्य अपि अगतिकस्य = गतिरहितस्येति विरोधः विगतः मानः = गौरवं यस्य तस्य अगतिकस्य = निरुपायस्येति तत्परिहारः च्युतं = भ्रष्टं गतमित्यर्थः गौरवं = गुरुत्वं यस्य तस्य अपि अधस्तात् = नीचैः गच्छतः गुरुत्वगुणरहितो नीचैः गच्छतीति विरोधः च्युतं गौरवं = गर्वः यस्य अधस्तात् गच्छतः = नीचत्वं प्राप्नुवतः इति परिहारः निःसत्त्वस्य = सत्त्वम् = सत्ता तद्रहितस्य अपि महामांसस्य = नरमांसस्य विक्रयं कुर्वतः असन् खलु कथं विक्रयं कुर्यादिति विरोधः, [ सत्त्वं = धनम् इति शब्दरत्नावली ]

**हिन्दी**-अपने समकक्षों की पदोन्नति पर बिना आग के जलता रहता है, जो नीचे के लोगों को अपने समकक्ष बना दिए जाने पर दम घुट कर मर जाता है, जो अपमानों के कारण तिनका-जैसा माना हुआ रहता है, जो दुःख की आँधी से ( कभी ) चैन नहीं पाता, जलता ही रहता है, ( जो स्वामी का ) भक्त होता हुआ भी अभक्त है—नहीं, नहीं भक्त होता हुआ अभक्त ( बिना खाए ) रहता है, जो ऊष्मा ( गर्मी = सन्ताप ) से रहित होता हुआ भी बन्धुओं को सन्ताप ( गर्मी ) देता है—नहीं, नहीं जो ऊष्मा ( तेजी ) से रहित होता हुआ बन्धुओं को सन्ताप ( दुःख ) देता है, जो विमान ( वायुयान ) होता हुआ भी अगतिक ( गतिहीन ) है—नहीं, नहीं जो विमान ( विगतमान = मानरहित ) होता हुआ अगतिक ( निस्सहाय ) है, जो गौरव ( भारीपन ) रहित होता हुआ भी नीचे को जाता है—नहीं, नहीं जो गौरव ( आत्माभिमान ) रहित होता हुआ अधोगति को प्राप्त होता है, जो सत्त्व ( सत्ता ) से रहित होता हुआ भी नर-मांस बेचता है—नहीं, नहीं जो सत्त्व ( धन ) से रहित होता हुआ नरमांस ( अपना मांस = देह ) बेचता है, जो निर्मद ( नशों से रहित ) होता हुआ भी स्वतन्त्रवृत्ति ( स्थिति ) में नहीं रहता—नहीं, नहीं जो निर्मद ( अभिमान-रहित ) हुआ स्वतन्त्रवृत्ति ( आजीविका ) वाला नहीं होता, जो अयोगी ( योगरहित ) होता हुआ भी ध्यान ( योग ) से आत्मा को वश में किए रहता है--नहीं, नहीं जो अयोगी ( धनयोगरहित ) होता हुआ ध्यान ( धनार्जन-चिन्तन ) से आत्मा को ( दूसरों के ) वशीभूत किए रहता है, जो ( धूप में ) सिर जलाए ऐसा दग्धमुण्ड व्यक्ति है जो शय्या से उठते ही प्रणाम किया करता है, जो कुल का विदूषक ( कलंकित करने वाला ) ऐसा विदूषक ( मसखरा ) है जो रात-दिन ( स्वामी के आगे ) नाचता हुआ विद्वान् लोगों का परिहास-पात्र बनता है, जो वंश रूपी वंश ( बाँस ) को फूंक देने वाला कुलांगार है, जो ऐसा नरपशु है जो तिनका मिलने पर भी गर्दन झुका देता है और जो पेट भरना

जठरपरिपूरणमात्रप्रयोजनजन्मनो मांसपिण्डस्य गर्भरोगस्य मातुः, अपुण्यानां कर्मणामाचरणान्मृतकस्य किं प्रायश्चित्तम्, का प्रतिपत्तिक्रिया, क्व गतस्य शान्तिः, कीदृशं जीवितम्, कः पुरुषाभिमानः, किंनामानो विलासाः, कीदृशी भोगश्रद्धा, प्रबलपङ्क इव सर्वमधस्तान्नयति दारुणो दासशब्दः। धिक्तदुच्छ्वसितमुपयातु[1] तद्धनं निधनमभवनिर्भूतेरस्तु तस्याः नमो भगवद्भ्यस्तेभ्यः सुखेभ्यस्तस्यायमञ्जलिरैश्वर्यस्य तिष्ठतु दूर एव सा श्रीः शिवं सपरिच्छदः करोतु यदर्थमुत्तमाङ्गं गां गमिष्यति[2]। मुखप्रियरतः क्लीबः पूतिमांसमयः कृमिरगण्यमानो नरकः, पादरजोधूसरोत्तमाङ्गो जङ्गमः पादपीठः, पुंस्को-

टीका—तद्रहितस्य महामांसस्य=स्वमांसस्य सेवार्थं स्वशरीरस्येति यावत् विक्रयं कुर्वतः=पराधीनीकुर्वतः निर्मदस्य=मदः =मदिराप्रभावः तद्रहितस्य अपि अस्वतन्त्रा=पराधीना वृत्तिः=स्थितिर्यस्य, मदरहितो हि आत्मनि स्वतन्त्रो भवति, न पराधीनः इति विरोधः मदः=अभिमानः तद्रहितस्य अस्वतन्त्रवृत्तेः स्वामिनोऽधीनत्वात्, अयोगिनः=योगरहितस्य अपि ध्यानेन वशीकृतः=अधीनीकृतः आत्मा=मनः येन तस्य, 'योगश्चित्तवृत्तिनिरोधः' तेन विना आत्मवशीभाव इति विरोधः, योगः=दैवयोगः तद्रहितस्य विपरीतदैववतः इत्यर्थः अथवा योगः=धनसंयोगः तद्रहितस्य निर्धनस्येत्यर्थः ध्यानेन=द्रव्यार्जनचिन्तनेन वशीकृतः आत्मा येन तस्येति परिहारः, उपरि सर्वत्रविरोधाभासालङ्कारः दग्धमुण्डस्य= दग्धं मुण्डं=शिरः येन तस्य आतपे गमनात् अथ च दग्धमुण्डः=यति विशेषः इति शंकरः शय्यायाः उत्थाय इति [ शय्या उत् + $\sqrt{}$स्था + णमुल् 'अपादाने परीप्सायाम्' पा० ३।४।५२ 'परीप्सा त्वरा। शय्योत्थायं धावति' सि० कौ० ] शय्यातः उत्थाय एव सेवकः प्रभुं प्रणमति दग्धमुण्डाख्यो यतिरपि तथैव करोति, अत्रौपम्यं गम्यम्, गोत्रं=कुलं विशेषेण दूषयति सेवकवृत्त्या दूषितं करोतीति तथोक्तस्य अथ च विदूषकस्य=नायकस्य नर्मसुहृदः नक्तं दिनं=दिवारात्रं नृत्यतः=स्वामिनोऽग्रे नृत्यं कुर्वतः मनस्विजनं=धीरलोकान् स्वहीनसेवकवृत्त्या हासयतः=हसितुं प्रेरयतः, कुलस्य अंगारस्य=अग्निकणस्य वंशं=कुलं एव वंशं=वेणुं दहतः, अत्र श्लिष्टपरम्परितरूपकम्, ना=नरः एव पशुः तस्य तृणे=तृणसदृशतुच्छवस्तुन्यपि लब्धे प्राप्ते कन्धराम्=ग्रीवाम् अवनमयतः नम्रीकुर्वतः जठरस्य=निजोदरस्य परिपूरणं= भरणं एव पूरणमात्रं प्रयोजनं यस्य तथाभूतं जन्म यस्य तस्य मांसपिण्डस्य=मांसगोलकस्य मातुः गर्भरोगस्य=गर्भस्थिति-विकारविशेषस्य, अर्थात् मातुः जातः स मनुष्यो न, प्रत्युत अजागलस्तनवत् गर्भात् विकाररूपो मांसपिण्डोऽस्ति, अपुण्यानां =पापानां कर्मणाम् आचरणात् पूर्वजन्मनि अनुष्ठानात् मृतकस्य=सेवकस्य किं प्रायश्चित्तम्? न किमपीति काकुः प्रतिपत्तिः=गौरवम् अथवा प्रबोधः तस्यै क्रिया अर्थात् तस्मिन् गौरवम् आधातुं अथवा तस्य प्रबोधाय किं कार्यं करणी-यम्? जीवितं=जीवनम् पुरुषाभिमानः=पुरुषोचितगर्वः? किं नामानः=कानि नामानि येषां ते विलासाः= आनन्दलीलाः, भोगेषु=आनन्दोपभोगेषु श्रद्धाः=विश्वासः, प्रबलः=गहनः पङ्कः=कर्दमः इवेत्युपमायाम् सर्वम् अधस्तात्=नीचैः दारुणः=दुःसहः। उच्छ्वसितम्=जीवनमित्यर्थः, तद् धनं=सेवावृत्तिलब्धं धनं निधनं=विनाशम् उपयातु=गच्छतु तस्याः=सेवकलब्धायाः भूतेः=सम्पत्तेः अभवनिः=न भवनम् अभवनिः [न + $\sqrt{}$भू + अनिः 'आक्रोशे नञ्यनि' पा० ३।३।११२ 'अनि उपमेदे अनिः स्यादाक्रोशे। अजीवनिस्ते शठ भूयात्। सि० कौ०], तेभ्यः= सेवावृत्तिलभ्येभ्यः, ऐश्वर्यस्य=वैभवस्य कृते अञ्जलिः=नमस्कारः इत्यर्थः, श्रीः=लक्ष्मीः धनसम्पत्तिरित्यर्थः परि-च्छदः=वस्त्राभूषादयुपकरणम्, उत्तमाङ्गम्=शिरः गां=पृथिवीं गमिष्यसि=नीचैर्भविष्यतीत्यर्थः। ( यदि ) मुख-प्रियरतः क्लीब...सेवकोऽपि मर्त्यमध्ये गण्यते (तर्हि) राजिलोऽपि वा भोगी पुलाकोऽपि वा कलमः भवेत् इत्यस्ति वाक्य-

हिन्दी—मात्र जन्म का प्रयोजन मानने वाला माता के गर्भ के रोग रूप में निकला मांस का लोथड़ा है (पूर्व जन्म के) पाप-कर्मों के कारण सेवक का क्या प्रायश्चित्त है? उसे उबारने की कौन-सी क्रिया है? कहाँ जा कर उसे शान्ति मिले? कैसा जीवन है? कैसा पुरुषाभिमान है? क्या उसके विलास होंगे? सुखोपभोग में कैसा विश्वास है? असह्य दास शब्द सघन कीचड़ की तरह सभी को नीचे ले जाता है। धिक्कार है ऐसे जीवन को, उस धन का सत्यानाश हो, उस ऐश्वर्य का बेड़ा गर्क, उन सुखों को नमस्कार, उस वैभव को हाथ ही जोड़ें, वह लक्ष्मी दूर ही रहे, वे हाथी-घोड़े, साज-सज्जा कल्याण करें, जिनके लिए शिर पृथिवी की ओर झुकता है। ( यदि ) बेचारा सेवक भी—जो मुखप्रियरत [ मुख में ही प्रिय अनुराग रखे, वाणी में ही प्रिय सम्भोग रखे ] हिजड़ा है, दुर्गन्ध भरे मांस का कीड़ा है, गिनती में न आने वाला नरक ( कुत्सित नर ) अतिविस्तृत नरक ( दोजख ) है, चरण-धूलि से सिर मैला किए चलता फिरता

१. 'उपयातु निधनं धनम्' २. 'गमिष्यत्यशापानुग्रहक्षमस्तपस्वीमुख—'

पिकः काकुक्वणितेषु, शिखी सुखकरकेकासु, स्थूलकूर्मः क्रोडकषणेषु, श्वा नीचचाटुकरणेषु, वेणुर्मूर्च्छनासु, वेश्याकायः करणबन्धक्लेशेषु, पलालं सत्त्वशालिषु, कृकलासः शिरोविडम्बनासु, जाहक आत्मसङ्कोचनेषु, प्रतिपादकः पादसंवाहनासु, कन्दुकः करतलताडनेषु, वीणादण्डः कोणाभिघातेषु, वराकः सेवकोऽपि मर्त्यमध्ये राजिलोऽपि वा भोगी पुलाकोऽपि वा कलमः। वरं क्षणमपि कृता मानवता[2] मानवता न मतो ममतस्त्रैलोक्याधिराज्योपभोगोऽपि मनस्विनः। तदेवमभिनन्दितास्मदीयप्रणयो देवोऽपि दिवसैः कतिपयैरेव परागतः प्राग्ज्योतिषेश्वर इति करोतु चेतसि' इत्युक्त्वा तूष्णीमभूदविरतमेव नमस्कृत्य निरगमच्च।

---

टीका–योजना। मुखे प्रियं रतम् अनुरागः यस्य सः अर्थात् सेवकस्य स्वामिनि प्रेम केवलं मौखिकमस्ति न तु हार्दिकम्, अथवा शंकरानुसारेण मुखे=आरम्भे एव रतं=मोहनं यस्य, अन्यत्र मुखे=वक्त्रे रतं=सुरतं यस्य तथाभूतः क्लीबः=नपुंसकः तस्य हि अशक्तत्वात् वाचि एव सुरतं न योनौ, पूति=दुर्गन्धि यत् मांसम् तदेवेति तन्मयः अथवा तदुत्पन्नः कृमिः=कीटः अगण्यमानः=गणयितुमयोग्यः तुच्छः इत्यर्थः नरकः=कुत्सितः नरः (कुत्सितार्थे कन्) अथ च अगण्यम्=अमेयं मानं परिमाणं यस्य सः अतिविस्तृत इत्यर्थः नरकः=निरयः, पादयोः रजसा=धूल्या धूसरं=मलिनं उत्तमाङ्गं शिरः अन्यत्र उपरितनो भागो यस्य सः, सेवकस्य शिरः स्वामिनः चरणरजसा धूसरीभवति जंगमः=चरिष्णुः चलनशीलः इति यावत् पादपीठः=चरणपीठः सोऽपि लोकानां चरणरजसा धूसरो जायते, काकुः=कण्ठध्वनिभेदः [ 'भिन्नः कण्ठध्वनिर्धीरैः काकुरित्यभिधीयते' इति विश्वनाथः ] तस्य क्वणितेषु=वचनेषु पुंस्कोकिलः=परपुष्टः सेवको हि प्रभूणामग्रे समयानुसारेण स्वकण्ठध्वनिं परिवर्तयति मधुरं च वक्ति, सुखकरीषु=आनन्ददायिकासु केकासु=वाणीषु [ 'केका वाणी मयूरस्य' इत्यमरः ] शिखी=मयूरः, क्रोडस्य=वक्षसः [ 'न ना क्रोडं भुजान्तरम्' इत्यमरः ] कषणेषु=घर्षणेषु अर्थात् कठिनश्रमकरणे स्थूलकूर्मः=महाकच्छपः, कच्छपोऽपि भूमौ स्ववक्षसः घर्षन् गच्छति, अत्र 'स्थूलकूर्मः' इति साधीयान् पाठः नीचेषु चाटुकरणेषु=प्रियमधुरकथनेषु [ 'अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्या विकत्थनम्' इति क्षीरस्वामी ] मूर्च्छनासु=स्वराणाम् आरोहावरोहक्रमेषु वेणुः=मुरली, करणम्=शरीरं तस्य बन्धस्य=बन्धनस्य क्लेशेषु=कष्टेषु सेवको हि स्वामिनः तत्तत्कर्मसु बद्धशरीरतया क्लेशान् अनुभवति, अन्यत्र करणानि कामशास्त्रोक्ताः सम्भोगासनविशेषा तेषु बन्धः=देहस्य स्थापना तस्य क्लेशेषु वेश्यायाः=वारविलासिन्याः कायः=शरीरम् सत्त्वं=बलं तेन शालन्ते=शोभन्ते इति तथोक्ते पौरुषबलपूर्णेष्वित्यर्थः अत्र सत्त्वस्य शालिषु=धान्येष्वित्यर्थोऽपि व्यज्यते, पलालं=सस्यशून्यधान्यनालः अर्थात् यथा धान्येषु पलालं अप्रयोजनं तद्वत् सेवकः शिरसः विडम्बनासु=अनुकरणेषु सञ्चालनेष्वित्यर्थः—कृकलासः=कृकं=शिरोग्रीवं लासयतीति तथोक्तः सरटः सोऽपि समये समये स्वशिर उन्नमयति, आत्मनः=स्वशरीरस्येत्यर्थः संकोचनेषु=सम्पीडनेषु जाहकः=घोंघाख्यो जीवविशेषः [ 'जाहको घोङ्गमार्जार-खट्वा-कारण्डिकासु च' इति मेदिनी ] सेवकोऽपि स्वामिनोऽग्रे भयाद्विना स्वाङ्गानि संकोचयति, पादयोः=स्वामिनः चरणयोः संवाहनासु=मर्दनेषु अथ च धारणेषु प्रतिपादकः=चरणपीठः अथ च खट्वायाः उन्नायकः 'पाता' इति प्रसिद्धः,

हिन्दी–चरणपीठ है, समयानुसार वाणी बदलता हुआ नर-कोकिल है, कर्णप्रिय शब्द बोलने में मयूर है, छाती घसीट कर चलने में स्थूल कछुआ है, नीच चाटुकारिता करने में कुत्ता है, स्वर को ऊँचा-नीचा करने में बाँसुरी है, शरीर को बन्धन में डालने के क्लेशों में वेश्या की काया है, सत्त्वशालियों में पुआल (फूस) है, शिर हिलाने में गिरगिट है, अपना शरीर संकुचित करने में घोंघा कीड़ा है, (स्वामी के) पैर धारण करने में चरणपीठ है, करतल प्रहार (खाने में) गेंद है, एवं डण्डे के आघातों में वीणा है—मनुष्यों के मध्य (में गिना जाता) है तो दुमुहाँ साँप भी फणिधर है अथवा कंगनी भी बासमती चावल है। आत्माभिमान वाले की क्षण भर भी दिखाई मानवता अच्छी; महात्मता को शिर झुका कर त्रैलोक्य का साम्राज्योपभोग भी अभीष्ट नहीं। इसलिए हमारी प्रार्थना स्वीकार किए हुए महाराज कुछ ही दिनों में आसामनरेश को आया हुआ निश्चित समझें, यह कह कर हंसवेग चुप हो गया और नमस्कार करके बाहर चला गया।

---

१. 'कृकलासः ......संकोचनेषु' इत्येतत् 'नीचचाटुकरणेषु' इत्यस्यानन्तरम्  २. 'मानवताम्'

राजापि रजनीं तां कुमारदर्शनौत्सुक्यस्वीकृतहृदयः समनैषीत्। आत्मार्पणं हि महताममूलमन्त्रमयं वशीकरणम्। प्रभाते च प्रभूतं प्रतिप्राभृतं प्रधानप्रतिदूताधिष्ठितं दत्त्वा हंसवेगं प्राहिणोत्। आत्मनापि ततः प्रभृति प्रयाणकैरनवरतैरभ्यमित्रं प्रावर्तत। कदाचित्तु राज्यवर्धनभुजबलोपार्जितमशेषं मालवराजसाधनमादायागतं समीप एवावासितं लेखहारकाद्भण्डिमश्रृणोत्। श्रुत्वा चाभिनवीभूतभ्रातृशोकहुताशनः कातरहृदयो बभूव मूर्च्छान्धकारमिव विवेशातिष्ठच्च समुत्सृष्टसकलव्यापारः प्रतीहारनिवारणनिभृतनिःशब्दपरिजने निजमन्दिरे सराजकपरिवारस्तदागमनमुदीक्षमाणो मुहूर्तम्।

---

टीका—करतलेन ताडनेषु = आघातेषु कन्दुकः = गेन्दुकः सेवकः स्वामिनः चपेटां गृह्णाति, कोणः = दण्डः अथ च वीणावादनदण्डः [ 'कोणोवीणादि-वादनं' इत्यमरः ] तेन अभिघातेषु = ताडनेषु वीणादण्डः = वाद्यविशेषः, उपरि सर्वत्र रूपकम् क्वचित् श्लिष्टं क्वचित् साधारणम्, एतादृशः वराकः = दीनः सेवकः अपि मर्त्यानां = मनुष्याणां मध्ये अस्तीति शेषः गण्यते इति यावत्, तर्हि राजिलः = डुण्डुभः . [ 'समौ राजिलडुण्डुभौ' इत्यमरः ] [ 'निर्विशेषोहि द्विमुखो' इति क्षीरस्वामी ] अपि भोगी = फणी नाग इति यावत्, पुलाकः = तुच्छधान्यम् [ 'स्यात्पुलाक-स्तुच्छधान्ये' इत्यमरः ] कलमः = शालिः [ 'शालयः कलमाद्याश्च' इत्यमरः ] मानः = आत्माभिमानः अस्तीति तथोक्तेन क्षणमपि = एकक्षणस्यापि कृते कृता = प्रदर्शिता इत्यर्थः मानवता पौरुषं = पुरुषोचितं कर्म इत्यर्थः वरम् = उचितं तथोक्तं—'क्षणं प्रज्वलितो वह्निः न तु धूमायितं चिरात्,' अत्र मानवता मानवता इत्यत्र यमकं, न तु मनस्विनः = महामनसः नमतः = अन्यान् प्रति शिरो नमयतः त्रैलोक्यस्य त्रिभुवनस्य = राज्यस्य उपभोगः = सुखास्वादः मतः = अभिमतः स्वीकृतः इति यावत्। तत् = तस्मात् शिवं विहाय कस्याप्यन्यस्याग्रे अस्माकं स्वामिनः कुमारस्य शिरोऽनमनसंकल्पादित्यर्थः अभिनन्दितः = स्वागतीकृत इति यावत् अस्मदीयः = आस्माकीनः प्रणयः = प्रार्थना येन तथोक्तः देवः = भवान् अपि कतिपयैः = कतिभिश्चित् प्राग्ज्योतिषेश्वरः = कामरूपनरेशः कुमारः परागतः = अत्रागत इति चेतसि करोतु = निश्चिनोतु इति उक्त्वा = कथयित्वा तूष्णीं अभूत् = मौनमाकलयामास नमस्कृत्य = प्रणम्य च निर्जगाम = निरगच्छत्।

राजा = हर्षवर्धनः तां रजनीं = रात्रिं कुमारस्य दर्शने यत् औत्सुक्यं = कुतूहलं तेन स्वीकृतं = गृहीतं यस्य स समनैषीत् = अत्ययापयत्। आत्मनः = स्वस्य अर्पणं सर्वात्मना समर्पणमिति यावत् महतां = महापुरुषाणां अमूलमन्त्रमयं = न मूलानि = शिफाश्च मन्त्रश्च एव इत्यमूल०—वशीकरणं अर्थात् विना वृक्षमूलादिकं मन्त्रं कुमारः राज्ञः वशीभूतः, कुमारस्य सर्वात्मना सर्वार्पणं हर्षवर्धनं परमप्रसन्नमकरोदिति भावः। प्रभूतं = प्रचुरं प्रतिप्राभृतं = प्राभृतस्य स्थाने प्राभृतं प्रधानेन प्रतिदूतेन = स्वदूतेनेत्यर्थः अधिष्ठितं = कृताधिष्ठानाम् दत्त्वा प्राहिणोत् = स्वदेशं प्रेषितवान्। आत्मना अपि = स्वयमपि च ततः प्रभृति = तदारभ्य अनवरतैः = निरन्तरैः प्रमाणकैः ( स्वार्थे कः ) यात्राभिः अभ्यमित्रम् = अमित्रं = शत्रुं गौडेन्द्रमित्यर्थः—अभिलक्ष्य इति ( अव्ययी० ) प्रावर्तत = प्रवृत्तः। राज्यवर्धनस्य भुजबलेन = बाहुशौर्येण उपार्जितं = प्राप्तम् अशेषं = निखिलं मालवराजस्य साधनं = सैन्यं हस्त्यादि आदाय = गृहीत्वा आगतम् आवासितम् = कृतावासम् भण्डिम् = हर्षवर्धनस्य मातुलपुत्रं लेखहारकात् = पत्रवाहकात् दूतात् अश्रृणोत् = श्रुतवान्। अभिनवीभूतः = नूतनतां प्राप्तः भ्रातुः राज्यवर्धनस्य शोकहुताशनः = शोकाग्निः यस्य, कातरं = विह्वलं हृदयं च यस्य स बभूव = जातः,

हिन्दी- राजा ने भी कुमार को देखने की उत्सुकता हृदय में रखे हुए वह रात काटी। कारण यह है कि आत्मसमर्पण विना जड़ी-बूटी व मन्त्र के बड़े लोगों को वश में कर लेता है। और प्रातःकाल अपने प्रधान के समकक्ष दूत के संरक्षण में बदले में बहुत सा उपहार देकर हंसवेग को विदा किया। स्वयं भी हर्षवर्धन ने तब से लेकर शत्रु के विरुद्ध युद्ध यात्रा निरन्तर जारी रखी। एक दिन वह राज्यवर्धन के भुज-शौर्य से अर्जित मालवाधीश के सारा सैन्य ( हस्तिगजादि ) लेकर आये और पास में ही डेरा डाले हुए भंडि के विषय में पत्रवाहक से सुन बैठा और सुनकर भाई की शोकाग्नि के पुनः ताजा हो जाने से हृदय में विह्वल हुआ मूर्छा के अन्धकार में जैसे प्रवेश कर गया और सब काम-धन्धा छोड़, अनुयायी राजाओं सहित उसके आगमन की प्रतीक्षा करता हुआ अपने मन्दिर में थोड़ी देर बैठा रहा—जहाँ प्रतीहार के रोक देने पर सभी नौकर चाकर निश्चल और चुपचाप हो रखे थे।

अथ भण्डिरेकेनैव वाजिना कतिपयकुलपुत्रपरिवृतो मलिनवासा रिपुशरशल्यपूरितेन निखातबहुलोहकीलकपरिकररक्षित-स्फुटनेनेव हृदयेन, हृदयलग्नैः स्वामिसत्कृतैरिव श्मश्रुभिः शुचं समुपदर्शयन्, दूरीकृतव्यायामशिथिलभुजदण्डदोलायमान-मङ्गलवलयैकशेषालङ्कृतिः, अनादरोपयुक्तताम्बूलविरलरागेण शोकदहनदह्यमानस्य हृदयस्याङ्गारेणेव दीर्घनिश्वासवेगनिर्ग-तेनाधरेण शुष्यता, स्वामिविरहविधृतजीवितापराधलज्जयेव बाष्पवारिपटलेन पटेनेव प्रावृतवदनः, विशन्निव दुर्बलीभूतैः स्वाङ्गैरपत्रपयाङ्गैः, वमन्निव च व्यर्थीभूतभुजोष्माणमायतैर्निश्वसितैः, पातकीव, अपराधीव, द्रोहीव, मुषित इव, छलित इव, यूथपतिपतनविक्लव इव वेगदण्डवारणः, सूर्यास्तमयनिःश्रीक इव कमलाकरः, दुर्योधननिधनदुर्मना इव द्रौणिः, अपहृत-रत्न इव सागरो राजद्वारमाजगाम। अवतीर्य च तुरङ्गमादवनतमुखो विवेश राजमन्दिरम्। दूरादेव च विमुक्ताक्रन्दः पपात पादयोः।

---

टीका–मूर्छाया:=मोहस्य अन्धकारम् इव विवेश=प्रविष्टः समुत्सृष्टा:=त्यक्ताः सकलाः व्यापाराः=कार्याणि येन सः, राज्ञां समूहः राजकम् एव परिवारः अनुयायिवर्गः तेन सहितः प्रतीहारस्य=दौवारिकस्य निवारणेन=प्रतिषेधेन निभृतः=निश्चलः निःशब्दः=तूष्णींभूतश्च परिजनः=भृत्यवर्गः यस्मिन् तस्मिन् निजमन्दिरे=स्वस्थाने तस्य=भण्डेः आगमनम्. उदीक्षमाणः=प्रतीक्षमाणः मुहूर्तं किञ्चित्कालम् अतिष्ठत्=स्थितः।

अथ भण्डिः एकेनैव वाजिना''''''"राजद्वारमाजगामेत्यस्ति वाक्यम्। वाजिना=अश्वेन कतिपयैः=कतिभिश्चित् कुलपुत्रैः=कुलीनयुवकैः परिवृतः=परिगतः मलिनानि वासांसि=वस्त्राणि यस्य सः रिपूणां=शत्रूणां शराणां=बाणानां शल्यैः=अग्रैः पूरितेन भरितेन, निखाताः=निष्ठापिताः बहवः ये लोहकीलकाः=लोहशंकवः तेषां परिकरेण=समूहेन रक्षितं=निवारितमित्यर्थः स्फुटनं=स्फोटः यस्य तेन इवेत्युत्प्रेक्षायां हृदयेन अत्रोपलक्षणे तृतीया तेनोपलक्षितः युक्त इत्यर्थः, हृदये=वक्षसि लग्नैः=गतैः वक्षःपर्यन्तलम्बैः इत्यर्थः शुचि क्षौराभावात् श्मश्रुभिः=कूर्चैः हृदये=हृदि लग्नैः=स्थितैः स्वामिनः=राज्यवर्धनस्येत्यर्थः सत्कृतैः=सत्कारैः (भावे क्तः) इवेत्युत्प्रेक्षायां, स्वामिना भण्डेः ये सत्काराः कृताः ये च हृदयस्थिता आसन् ते इव अश्रूणि प्रदीयन्ते स्मेति भावः शुचं=शोकं समुपदर्शयन्=प्रकटयन्, दूरी०—दूरीकृतः=शोककारणात् परित्यक्तः यः व्यायामः=अङ्गसञ्चालनश्रमः तेन शिथिले=विश्लथे क्षीणे इत्यर्थः भुजदण्डे=दण्डाकारभुजे दोलायमानं=दोलावत् उपरि नीचैश्च गच्छत् मङ्गलवलयं=मंगलरूपकंकणं एव एका=केवला शेषालंकृतिः अवशिष्टभूषणम् यस्य सः, अनाद०—अनादरेण=अनवधानेन उपयुक्तं=भुक्तं यत् ताम्बूलं तेन विरलः=स्वल्पः रागः=लौहित्यं यस्य तेन शुष्यता=शुष्कीभवता अधरेण=अधरोष्ठेन शोकः एव दहनः=वह्निः तेन दह्यमानस्य

हिन्दी–इसके बाद अकेले घोड़े से भण्डि राजद्वार पर पहुंच गया—जो कुछेक कुलपुत्रों से घिरा हुआ था, जिसके कपड़े मैले हुए पड़े थे और हृदय शत्रुओं के बाणों के शल्यों से भरा हुआ ऐसा लग रहा था मानो ठोकी हुई लोहे की कीलों के समूह द्वारा वह फटने से रोक दिया गया हो, जो हृदय-लग्न [छाती तक पहुंचे] दाढ़ी के बालों से हृदय-लग्न (हृदयस्थित) स्वामी के सत्कारों से जैसे शोक व्यक्त कर रहा था और व्यायाम छोड़ देने के कारण दुर्बल हुए पड़े भुजदण्ड पर ऊपर-नीचे जाता हुआ मंगल-कंकण ही एकमात्र अलंकार रखे हुए था, जिसका उपेक्षा भाव से चबाये पान से हल्का लाल बना और सूखता जा रहा अधरोष्ठ ऐसा प्रतीत हो रहा था मानो शोकाग्नि दग्ध हो रहा और विश्वास के वेग से बाहर निकला आया हृदय का अंगारा हो जो स्वामी के निधन पर जीवित रहने के अपराध की लज्जा के कारण मानो अश्रुजल-समूह से वस्त्र-से-जैसे मुंह ढके हुए था, दुर्बल बने हुए अंगों से लज्जा से मानो अपने शरीर में प्रवेश कर रहा था, लम्बी-लम्बी आहों से व्यर्थ हुई पड़ी भुजोष्मा का मानो वमन कर रहा था, जो पापी-जैसा, अपराधी-जैसा, द्रोही-जैसा, लुटा हुआ-जैसा, ठगा हुआ-जैसा और यूथ-पति के निधन के कारण दुःखित हुआ तरुण हस्ती-जैसा प्रतीत हो रहा था, जो सूर्यास्त हो जाने पर श्रीविहीन हुए कमलवन के सदृश, दुर्योधन के निधन पर व्यथित हुए अश्वत्थामा के समान और निकाल लिए गए रत्नवाले सागर के तुल्य था, घोड़े से उतरकर मुख नीचे किए वह राजमन्दिर में प्रविष्ट हुआ। और दूर से ही रोता-चिल्लाता पैरों पर गिर पड़ा।

अवनिपतिरपि दृष्ट्वा तमुत्थाय विरलैः पदैः प्रत्युद्गम्योत्थाप्य च गाढमुपगुह्य कण्ठे करुणमतिचिरं रुरोद। शिथिलीभूतमन्युवेगश्च पुरेव पुनरागत्य निजासने निषसाद। प्रथमप्रक्षालितमुखे च भण्डौ मुखमक्षालयत्। समतिक्रान्ते च कियत्यपि काले भ्रातृमरणवृत्तान्तमप्राक्षीत्। अथाकथयच्च यथावृत्तमखिलं भण्डिः। अथ नरपतिस्तमुवाच—'राज्यश्रीव्यतिकरः क्व' इति। स पुनरवादीत्—'देव, देवभूयं गते देवे राज्यवर्धने गुप्तनाम्ना च गृहीते कुशस्थले देवी राज्यश्रीः परिभ्रश्य बन्धनाद्विन्ध्याटवीं सपरिवारा प्रविष्टेति लोकतो वार्तामशृणवम्। अन्वेष्टारस्तु तां प्रति प्रभूताः प्रहिता जना नाद्यापि निवर्तन्ते' इति। तदाकर्ण्य भूपतिरब्रवीत्—'किमन्यैरनुपदिभिः यत्र सा तत्र परित्यक्तान्यकृत्यः स्वयमहं यास्यामि। भवानपि कटकमादाय प्रवर्ततां गौडाभिमुखम्।' इत्युक्त्वा चोत्थाय स्नानभुवमगात्। कारितशोकश्मश्रुवपनकर्मणा च महाप्रतीहारभवनस्नातेन शारीरिकवसनकुसुमाङ्गरागालङ्कारप्रेषणप्रकटितप्रसादेन भण्डिना सार्धमभुक्त निनाय च तेनैव सह वासरम्।

---

टीका–दाहं प्राप्यमाणस्य हृदयस्य दीर्घः यः निश्वासः=निश्वसितं तस्य वेगेन निर्गतेन=बहिरागतेन अङ्गारेण कृष्णवर्णेन इवेत्युत्प्रेक्षायाम् उपलक्षितः [ उपलक्षणे तृ० ] स्वामि०--स्वामिनः=राज्यवर्धनस्य विरहे=मरणे इत्यर्थः विधृतम्=धारितं जीवितं=जीवनम् एव अपराधः तेन यत् वैलक्ष्यं=लज्जा तस्मात् इव, बाष्पवारिणः=अश्रुजलस्य पटलेन=समूहेन पटेन=वस्त्रेण इव प्रावृतम्=आच्छादितं वदनं=मुखं येन सः; अत्र हेतूत्प्रेक्षाजात्युत्प्रेक्षयोः संकरः, दुर्बलीभूतैः=कृशैः अंगैः=अवयवैः अपत्रपया=लज्जया स्वाङ्गं=स्वशरीरं विशन्=प्रविशन् इव तस्य शरीरं दुर्बलत्वात् संकुचितमभवदिति भावः, आयतैः=दीर्घैः निश्वसितैः=निश्वासैः व्यर्थीभूतः=निरर्थकतां गतः भुजयोः यः ऊष्मा=तेजः शौर्यमित्यर्थः तम् वमन्=उद्गिरन् इव, पातकी=पापी, मुषितः=लुण्ठितः छलितः=विप्रलब्धः उपरि सर्वत्रोत्प्रेक्षा, यूथस्य=दलस्य पत्युः=स्वामिनः पतनेन=मरणेनेत्यर्थः विषण्णः=दुःखितः वेगदण्डवारणः=तरुणहस्ती इति शङ्करः, सूर्यस्य अस्तमयेन=अस्तेन निर्गता श्रीः=शोभा यस्य स हृतश्रीक इत्यर्थः कमलाकरः=कमलवनम् इव, अत्र सूर्यः राज्यवर्धनः कमला च लक्ष्मी इत्यप्यर्थो व्यज्यते, दुर्योधनस्य निधनेन=मृत्युना दुर्मनाः=दुःखितमनाः द्रौणिः=द्रोणस्य अपत्यं पुमान् अश्वत्थामेत्यर्थः, अपहृतानि=निस्सारितानि रत्नानि=मणयः यस्मात् तथाभूतः सागरः=समुद्र इव राजद्वारम् आजगाम=आगच्छत् [ भण्डिरिति ]। उपरि सर्वत्रोपमालंकारः। तुरंगमात्=अश्वात् अवतीर्य=अवतीर्णो भूत्वा अवनतं=निम्नं मुखं यस्य स राजमन्दिरं=राजगृहं विवेश=प्रविष्टवान्। विमुक्तः=व्यक्तः कृतः इत्यर्थः, आक्रन्दः=उच्चैः रोदनं येन स हर्षस्य पादयोः=चरणयोः पपात=पतितवान्।

अवनिपतिः=राजा हर्षवर्धनः तं दृष्ट्वा अवलोक्य उत्थाय=उत्थितो भूत्वा विरलैः=स्वल्पैः पदैः=पादप्रक्षेपैः प्रत्युद्गम्य=स्वागतरूपेण अग्रे गत्वा उत्थाप्य=उन्नमय्य भण्डिमिति शेषः गाढं=निविडं यथा स्यात्तथा उपगुह्य=आश्लिष्य कण्ठे=गले अतिचिरं=दीर्घकालपर्यन्तं करुणं=दीनं यथा स्यात्तथा रुरोद=रुदितवान्, शिथिलीभूतः=

हिन्दी–राजा भी उसको देखकर, उठकर, कुछ कदम आगे बढ़कर उठाकर खूब गले लगाकर चिरकाल तक करुण क्रन्दन करता रहा। और शोक का आवेग-मन्द पड़ने पर पहले की तरह फिर आकर अपने आसन पर बैठ गया। पहले भण्डि के अपना मुंह धो लेने पर मुंह धोया। और कुछ समय बीतने पर वह भाई की मृत्यु का वृत्तान्त पूछ बैठा। भण्डि ने भी जैसा हुआ था, सब कह दिया। इसके बाद राजा ने उसे पूछा—'राज्यश्री का क्या हाल है'? वह फिर बोला—'महाराजा देव राज्यवर्धन के देव-सायुज्य प्राप्त कर लेने पर गुप्त नामक किसी व्यक्ति द्वारा कान्यकुब्ज के हथिया लेने पर राज्यश्री बन्धन से छूट कर परिवार सहित विन्ध्याटवी में प्रवेश कर गई—यह बात मैंने लोगों से सुनी। उसके ढूंढने वाले बहुत से भेज रखे हैं पर अभी तक कोई वापस नहीं आ रहा है। और यह सुनकर राजा बोला—'अन्य ढूंढने वाले से क्या? जहां वह है, वहां स्वयं मैं सब काम छोड़े हुए जाऊंगा। आप भी सेना लेकर गौड़ देश की ओर जाइए' यह कह कर और उठकर स्नानागार में चला गया। शोक में बढ़ी हुई दाढ़ी का क्षौर कर्म कराये, महाप्रतीहार के भवन में स्नान किये और अपने शरीर के वस्त्र, कुसुम, अंगराग तथा अलंकार भेज कर अनुगृहीत किये हुए भंडि के साथ भोजन किया और उसी के साथ दिन बिताया।

---

१. 'कालकलाकलापे'

अथापरेद्युरुषस्येव भण्डिर्भूपालमुपसृत्य व्यज्ञापयत्—'पश्यतु देवः श्रीराज्यवर्धनभुजबलार्जितं साधनं सपरिबर्हं मालवराजस्य' इति । नरपतिना च 'एवं क्रियताम्' इत्यभ्यनुज्ञातो दर्शयाम्बभूव । तद्यथा—अनवरतगलितमदमदिरामोदमुखरमधुकरजूटजटिलकरटपट्टार्द्रानुद्गलितगण्डशैलानिव जङ्गमान् गम्भीरगर्जितरवाञ्जलधरानिव महीमवतीर्णानुत्फुल्लसप्तच्छदवनामोदमुचः शरद्दिवसानिव पुञ्जीभूताननेकसहस्रसंख्यान्करिणः, चारुचामीकरचित्रचामरमण्डलमनोहरांश्च हरिणरंहसो

---

टीका—स्वल्पतां गतः मन्योः = दुःखस्य वेगः = आवेगः यस्य सः, पुरा इव = पूर्ववत् निषसाद = निषण्णः । भण्डो प्रथमम् प्रक्षालितं येन तस्मिन् सति मुखं = स्वमुखम् अक्षालयत् = प्रमार्जयत् । यथावृत्तं = यथाघटितम् । राज्यश्रियः व्यतिकरः = वृत्तमित्यर्थः । अवादीत् = अकथयत्–'देवभूयं = देवस्य भावं देवत्वमिति यावत् गते-प्राप्ते स्वर्गते इत्यर्थः गुप्तः नाम यस्य तेन नृपविशेषेण कुशस्थले = कान्यकुब्जे गृहीते = आत्माधीनीकृते बन्धनात् = कारागारात् परिभ्रश्य = च्युत्वा उन्मुक्ता भूत्वेत्यर्थः सपरिवारा = सपरिजना लोकतः = लोकेभ्यः वार्ता = समाचारम् अशृणवम् = श्रुतवान् । अन्वेष्टारः = अनुसन्धातारः प्रभूताः = बहवः प्रहिताः = प्रेषिताः, निवर्तन्ते = प्रत्यागच्छन्ति । आकर्ण्य = श्रुत्वा अब्रवीत् = 'अवदत्'–अनुपदिभिः = अन्वेष्टृभिः [ 'अन्वेष्टानुपदी समौ' इति क्षीर० ] परित्यक्तम् अन्यकृत्यम् = अन्यकार्यं येन तथाभूतोऽहं यास्यामि = गमिष्यामि । कटकं = शिबिरं सैन्यमित्यर्थः आदाय गृहीत्वा गौडाभिमुखं = गौडदेशं प्रति प्रवर्तताम् = गच्छतु । स्नानभुवं स्नानस्थानम् अगात् = अगच्छत् । कारितं = कृतं प्रेरितं शोक-श्मश्रूणां = शोककारणात् प्रवृद्धकूर्चानां वपनकर्म = क्षौरकर्म येन तेन, महाप्रतीहारस्य = सर्वोच्चदौवारिकस्य भवने = गृहे स्नातेन = कृतस्नानेन, शारीरिक = स्वशरीरसम्बन्धि स्वधार्यमितियावत् वसनं = वस्त्रं च, कुसुमानि = पुष्पाणि च अङ्गरागः = अङ्गलेपनद्रव्यञ्च अलंकाराश्च तेषां प्रेषणेन = प्रेरणेन प्रकटितः = अभिव्यक्तः प्रसादः = अनुग्रहः यस्मिन् तेन सार्धं = सह अभुङ्क्त = भोजनमकरोत् वासरं = दिनं च निनाय = यापितवान् ।

अपरेद्युः = अन्यस्मिन् दिने उषसि = उषः काले एव उपसृत्य = उपगम्य व्यज्ञापयत् = न्यवेदयत्—राज्यवर्धनस्य भुजबलेन = भुजशौर्येण अर्जितं = प्राप्तं मालवराजस्य परिबर्हः = परिच्छदः छत्रचामरादिः तेन सहितं साधनं = सैन्यं [ हस्त्यश्वादिकं ] पश्यतु नरपतिना = हर्षवर्धनेन, अभ्यनुज्ञातः = अनुमतः दर्शयाम्बभूव = अदर्शयत् । तद् यथा = उदाहरणार्थम् अनव० —अनवरतं = निरन्तरम् यथा स्यात्तथा गलितः = स्रुतः यः मदः = दानवारि मदिरा इवेत्युपमितततपु० तस्याः आमोदेन = परिमलेन मुखराणां = शब्दायमानानां मधुकराणां = भ्रमराणां यः जूटः = समूहः तेन जटिलः = घनः इत्यर्थः करटः = कपोलः पट्टः = फलकम् इवेत्युपमिततत्पु० तेन पंकिलः = पंकयुक्तः आर्द्रः इत्यर्थः गण्डः = कुम्भस्थलं येषां तान् गण्डशैलान् = च्युतान् शैलोपलान् इव [ 'गण्डशैलास्तु च्युताः स्थूलोपलाः गिरेः' इत्यमरः ] च्युताः = भूकम्पादिना गलिताः [ इति क्षीर० ] जंगमान् = गतिशीलान् गम्भीर० —गम्भीरः = गभीरः गर्जितः—रवः = गर्जन-शब्दः येषां तान् [ जलधरान् ] गभीरगर्जितवत् रवः येषां तान् [ करिणः ] जलधरान् = मेघान् इव महीं = पृथिवीम् अवतीर्णान् = आगतानित्यर्थः उत्फुल्ल० —उत्फुल्लानि = विकसितानि यानि सप्तच्छदस्य = सप्तपर्णस्य वनानि = अरण्यानि तेषाम् आमोदं = परिमलं मुञ्चन्ति = त्यजन्तीति तथोक्तान् पुञ्जीभूतान् = राशीभूतान् शरदः = शरदृतोः दिवसान् इवेति सबैनोत्प्रेक्षा अनेकसहस्राणि संख्या येषां तान् करिणः = हस्तिनः, चारु० —चारूणि चामीकरेण = सुवर्णेन चित्राणि = चित्रितानि प्रान्तेषु सुवर्णपत्रभंगालंकृतानीत्यर्थः यानि चामराणि तेषां मण्डलेन = समूहेन मनोहरान् = रम्यान् हरिणवत् =

हिन्दी—इसके बाद दूसरे दिन भण्डि ने राजा के पास आकर निवेदन किया—'आप श्रीराज्यवर्धन द्वारा अपने भुजबल से उपार्जित, साज-समान सहित मालवराज का सैन्य देखिए'। महाराज की—'अच्छा दिखाओ' इस तरह अनुमति प्राप्त किये उसने दिखाया, उदाहरणार्थ जैसे—निरन्तर चू रहे मदिरा—जैसे मद की गन्ध से शब्द करते हुए भ्रमर-समूह से भरे कपोल-फलकों से गीले बने कुम्भ स्थलों वाले हजारों हाथी जो पहाड़ से टूटकर गिरे-पड़े चलते फिरते टीले—जैसे गम्भीर गर्जना-रव करने वाले ( आकाश से ) नीचे भू पर उतरे जलधर—जैसे और खिले हुए सप्तपर्ण की गन्ध छोड़ने वाले, ढेरों इकट्ठे पड़े शरद के-से दिन प्रतीत हो रहे थे, सुन्दर सोने की चित्रकारियों वाली चँवरियों के समूह से

हरीन्, बालातपविसरवर्षिणां च किरणैरनेकेन्द्रायुधीकृतदशदिशामलङ्काराणां विशेषान्, विस्मयकृतः स्मरोन्मादितमालवीकुचपरिमलदुर्ललितांश्च निजज्योत्स्नापूरप्लावितदिगन्तानपि तारान्हारान्, उडुपतिपादसञ्चयशुचीनि निजयशांसीव बालव्यजनानि, जातरूपमयनालं च निवासपुण्डरीकमिव श्रियः श्वेतातपत्रम्, अप्सरस इव बहुसमररससाहसानुरागावतीर्णा वारविलासिनीः, सिंहासनशयनासन्दीप्रभृतीनि राज्योपकरणानि, कालायसनिगडनिश्चलीकृतचरणयुगलं च सकलं मालवराजलोकमशेषांश्च ससंख्यालेख्यपत्रान् सालङ्कारापीडपीडान्[1] कोषकलशान्। अथालोच्य तत्सर्वमवनिपालः स्वीकर्तुं यथाधिकारमादिक्षदध्यक्षान्। अन्यस्मिन्नहनि हयैः स्वसारमन्वेष्टुमुपचचार विन्ध्याटवीमवाप च परिमितैरेव प्रयाणकैस्ताम्।

अथ प्रविशन्नूरादेव दह्यमानषष्टिकपुलविसरविसारिविभावसूनां धन्यधान्यबीजधानीनां धूमेन धूसरिमाणमावधानैः,

---

टीका–मृगवत् वेगो येषां तान् हरीन् = अश्वान् बाला०–बालातपस्य = अरुणोदयस्य विसरं = राशिं वर्षन्तीति तथोक्तानाम् किरणैः अनेकानि इन्द्रायुधानि = इन्द्रधनूंषि यासु ताः इत्यनेकेन्द्रायुधाः तत्कृताः दशदिशः यैः तेषाम् अलंकाराणां विशेषान् विशिष्टालंकारानित्यर्थः, विस्मय० विस्मयम् आश्चर्यं कुर्वन्ति = जनयन्तीति तथोक्तान् अद्भुतानित्यर्थः स्मरेण = कामेन उन्मादिताः उन्मादं प्रापिताः याः मालव्यः = मालवदेशस्य कामिन्यः तासां कुचयोः = स्तनयोः परिमलेन = स्तनलिप्तस्य चन्दनस्य सौरभेण दुर्ललितान् = दुर्विनीतान्, निजया ज्योत्स्नया = प्रभयेत्यर्थः प्लाविताः = पूरिताः दिगन्ताः = दिक्प्रान्तभागाः यैस्तान् अपि तारान् = तारकान्; प्लावितदिगन्ताः ताराः इति विरोधः ताराणां क्षुद्रप्रकाशत्वे दिगन्तप्लावनासम्भवात् तारान् शुद्धजातीयान् इति तत्परिहारः अत एवात्र विरोधाभासालंकारः, उडु०—उडूनां = नक्षत्राणां पतिः = नाथः चन्द्रः इत्यर्थः तस्य पदानां = किरणानां सञ्चयवत् = समूहवत् शुचीनि = शुभ्राणि निजानि = स्वकीयानि हर्षवर्धनस्येति यावत् यशांसि = कीर्तयः इवेत्युपमायां बालव्यजनानि = चामराणि, जात०—जातरूपमयं = सुवर्णमयं नालं = काण्डः दण्डश्च यस्य श्रियः = लक्ष्म्याः निवासपुण्डरीकं निवासकमलं इवेत्युत्प्रेक्षायाम् अप्स०—बहूनि समररसेन = युद्धरागेण ( क्रियमाणानि ) यानि साहसानि = साहसिककार्याणि तेषु: यः अनुरागः = आसक्तिः तेन अवतीर्णाः = स्वर्गात् भूमौ आगताः अप्सरसः = देवाङ्गनाः इवेत्युत्प्रेक्षायां वारविलासिनीः = वाराङ्गनाः, अप्सरसो हि वीरोचितकर्माणि रोचयन्त्यः युद्धहतान् वीरान् स्वर्गे स्वागतीकुर्वन्ति, सिंहासनम् = राजसिंहासनं शयनं = पर्यङ्कः आसन्दी = पीठिका प्रभृतिः येषां तानि राज्योपकरणानि = राजोचितवस्तूनि, काला०—कालायसस्य = लोहस्य निगडेन = शृंखलया निश्चलीकृतं = गतिहीनीकृतं सकलं मालवदेशस्य राजलोकं = राजजनम्, अशेषान् = निखिलान् ससंख्यानि संख्यायुक्तानि लेख्यपत्राणि = लेखपट्टाः येषु तान् अलङ्काराणां = आपीडानां मालानां पीडया = भारजनित-कष्टेनेत्यर्थः सह वर्तमानान् कोषस्य = निधेः कलशान् = घटान्। आलोच्य = निरीक्ष्य अवनिपालः = हर्षः स्वीकर्तुं = ग्रहीतुं यथाधिकारम् = अधिकारानुसारेण अध्यक्षान् तत्तद्वस्तूनां मुख्याधिकारिपुरुषान् आदिक्षत् = आदिशत्। अहनि = दिने हयैः = अश्वैः स्वसारं =

हिन्दी–अभिराम बने हुए मृगों की-सी तेज़ी वाले घोड़े, अरुणोदय-समूह बरसानेवाले किरणों द्वारा दशों दिशाओं में अनेक इन्द्रधनुषों को चित्रित किए विशेष आभूषण, अद्भुत काम द्वारा उन्मत्त बनाई हुई मालवदेश की कामिनियों के कुचों के परिमल से दुर्ललित, अपनी ज्योत्स्ना की बाढ़ से दिगन्तों को आप्लावित किये हुए असली मोतियों के हार, चन्द्रमा के किरण-समूह-जैसे शुभ्र अपने ही यश के समान चामर, सोने का डंडा लगा लक्ष्मी का निवास-कमल-जैसा श्वेत छत्र, वीररस के किये जाने वाले अनेक साहसिक कार्यों के प्रति अनुराग होने के कारण नीचे ( भूमि पर ) उतरी अप्सरायें-जैसी प्रतीत हो रहीं वारांगनायें, सिंहासन, पलंग कुर्सी आदि राज्य का समान दोनों पैरों में लोहे की जंजीरों से जकड़े हुए मालव के सारे राजे लोग और खजाने में भरे-पड़े सभी कलशों जिनके साथ संख्या वाले पट्टे ( चिटें ) लगे हुए थे, और जो आभूषणों की मालाओं (के भार) से पीड़ित थे। इसके बाद उन सब का निरीक्षण करके राजा ने अधिकारानुसार उन-उन अध्यक्षों को उन्हें स्वीकार करने की आज्ञा दी। और दूसरे दिन घोड़ों से बहिन को ढूंढने हेतु चल पड़ा और गिने ही प्रयाणों ( पड़ावों ) के बाद उस विन्ध्याटवी में जा पहुँचा।

इसके बाद ( वहाँ ) प्रवेश करते ही उसने दूर से ही एक जंगली गाँव देखा—जहाँ ऐसे वनप्रदेश चमक रहे थे, जो जल रहे षष्ठिक धान के भूसे के ढेरों में फैली हुई आग वाले धान के खलिहानों के धूएँ से मलिन हो रहे थे, जहाँ

---

१. 'सालंकारपेक्षपीडान्'

शुष्कशाखासञ्चयरचितगोवाटवेष्टितविकटवटैः, व्यापादितवत्सरूपकरोषरचित[1]व्याघ्रयन्त्रैः, [2]अयन्त्रितवनपालहठह्रियमाणपरग्रामीणकाष्ठिककुठारैः, गहनतरुषण्डनिर्मितचामुण्डामण्डपैर्वनप्रदेशैः प्रकाश्यमानम्, अटवीप्रायप्रान्ततया कुटुम्बभरणाकुलैः कुद्दालप्रायकृषिभिः कृषीवलैरबलीवर्दैरबलाङ्गिरुच्चभागभाषितेन भज्यमानभूरि[3]शालिखलक्षेत्रखण्डलकम्, अल्पावकाशैश्च [4]काशिलैः कालायसैरिव कृष्णमृत्तिकाकठिनैः स्थानस्थानस्थापितस्थाणूत्थितस्थूलपल्लवैः दुरुपगमश्यामाकप्रकाण्डनिरलम्बु-

---

टीका-भगिनीं राज्यश्रियमित्यर्थः अन्वेष्टुम् = मार्गयितुं उरुबाल = प्रतर्थे परिमितैः=अल्पसंख्यकैः एव प्रयाणकैः= यात्राभिः तां विन्ध्याटवीं अवाप = प्राप्तवान् ।

प्रविशन् = विन्ध्याटव्यां प्रवेशं कुर्वन् दूरादेव — वनग्रामकं ददर्श तत्रैव च अवसत् इत्यस्ति वाक्यं। दह्य०— दह्यमानैः इत्येतानि तृतीयान्तानि 'वनप्रदेशैः' इत्यस्य विशेषणानि, दह्य०—दह्यमानः=प्लुष्यमाणः यः षष्टिकस्य= षष्टिदिनाभ्यन्तरपच्यमानधान्यविशेषस्य [ 'षष्ठिका षष्ठिरात्रेण पच्यन्ते' पा० ५।१।९० ] बुसः = कडङ्गरः [ 'कडङ्गरो बुसं क्लीबे' इत्यमरः ] तस्य विसरेषु = निचयेषु विसारी = विसरणशीलः प्रसृत इत्यर्थः विभावसुः= अग्निः यासु तासां वन्यस्य=अरण्यजस्य धान्यस्य बीजधानीनां = आगाराणां खलानामिति यावत् धूमेन धूसरिमाणं= धूसरत्वम् आदधानैः = धूसरीक्रियमाणैः, शुष्क०—शुष्काणां शाखानां = विटपानां सञ्चयेन = समूहेन रचितानि = निर्मितानि यानि गोवाटानि = गोष्ठानि गोशालाः इति यावत् तैः वेष्टिताः = परिवृताः विकटाः = विशालाः वटाः = वटवृक्षाः येषु तैः, व्यापा०—व्यापादिता = व्याघ्रादि-हिंस्रपशुभिः मारिताः ये वत्सरूपकाः=वत्सेव रूपं येषां ते स्ववत्सतुल्यगोवत्साः इत्यर्थः तैः यः रोषः = क्रोधः तेन उपरचितानि=प्रकल्पितानि व्याघ्रयन्त्राणि = व्याघ्रग्रहणार्थं कूटयन्त्राणि येषु तैः, अयन्त्रि०—अनियन्त्रिताः = निरर्गलाः ये वनपालाः = वनरक्षकाः तैः हठेन = बलात् ह्रियमाणाः= आच्छिद्यमानाः परग्रामीणानां = ग्रामान्तरीयाणां काष्ठिकानां = काष्ठच्छिदां कुठाराः परशवः येषु तैः, गहन०—गहने = घने तरूणां = वृक्षाणां षण्डे = समूहे निर्मितः चामुण्डायाः = काल्याः मण्डपः=गृहम् येषु तैः वनप्रदेशैः=अरण्यभागैः प्रकाश्यमानम्=भासमानमित्यर्थः, अटवी०—अटवी = अरण्यम् तत्प्रायः = तद्बहुलः प्रान्तः यस्य तस्य भावः तत्ता तया कुटुम्बस्य भरणे = पालनपोषणे आकुलैः = चिन्तितैः ( कृषीवलैः ) कुद्दालः=खननसाधनविशेषः तत्प्राया कृषिः = कर्षणं येषां तैः- तेषां पार्श्वे हलानि वृषभाश्च नासन्निति भावः अबलीवर्दैः=वृषरहितैः अबलङ्गिः = अबलवद्भिः प्रतिलिपिकारस्य प्रमादात् अत्र वकारः च्युतः प्रतीयते, ( कृषीवलैः ) उच्चः भागो यस्य तथाभूतेन भाषितेन=भाषणेन अत्र भागपदमधिकमिति विभावयन्तु सुधियः उच्चस्वरपूर्वकमित्यर्थः भज्यमानानि भूरीणि = बहूनि शालेः = धान्यस्य खलस्य= शालिनिस्तुषीकरणस्थलस्य च क्षेत्राणां खण्डलकानि=लघुखण्डानि यस्मिन् तम् ( वनग्रामकं ) अल्पा०—अल्पः = लघुः अवकाशः = आयामः येषां तैः अनायतैरित्यर्थः एतानि तृतीयान्तानि 'केदारैः' इत्यस्य विशेषणानि काशिलैः = काशः घासविशेषः एषामस्तीति ( काशहुलच् मतुबर्थे ) तथोक्तैः, काशबहुलैरित्यर्थः कालायसेन लोहेन इवेत्युपमायां कृष्णमृत्तिकया = श्यामवर्णमृदा कठिनैः = कठोरैः, स्थान-स्थानेषु स्थापिताः ये स्थाणवः=शाखापत्रहीनतरुस्कन्धाः तेभ्यः उत्थिताः= प्रस्फुटिताः पल्लवाः = किसलयाः येषु तैः, दुरुप०—दुरुपगमा = दुःखेन गन्तुम् योग्या श्यामाकस्य = तुच्छधान्यविशे-

हिन्दी-विशाल बड़ के पेड़ सूखी टहनियों के ढेर से बनाये हुए गायों के बाड़ों से घिरे हुए थे, मारे हुए अपने बच्चे-जैसे बछड़ों के क्रोध के कारण बाघों ( को पकड़ने ) के लिए कूट यन्त्र बनाए हुए थे, उद्दण्ड वनरक्षकों द्वारा दूसरे गाँव के लकड़हारों की कुल्हाड़ियाँ बलपूर्वक छीनी जा रही थीं और पेड़ों के घने झुरमुटों में चामुण्डा ( काली ) का मण्डप बनाया हुआ था, जिस ( जंगली गाँव ) में जंगली प्रांत के होने के कारण अपने परिवार के पालन-पोषण में व्यग्र, बिना बैलों वाले, प्रायः कुदाली से ही खेती करने वाले दुर्बल किसानों द्वारा जोर-जोर बोलकर धान और खलिहान के खेतों के छोटे-छोटे टुकड़े विभक्त किये जा रहे थे, जिस ( जंगली गाँव ) में विरले विरले ऐसे छोटे खेत थे जहाँ कास भरा हुआ था, लोहे की तरह सख्त काली मिट्टी थी स्थान-स्थान में गाड़े वृक्षों के ठूँठों में से मोटे मोटे पल्लव उग आये थे, श्यामाक ( साँवा ) घना जमा होने के कारण बीच में से जाना कठिन बना हुआ था, लाजवन्ती खूब फैली हुई थी

---

१. 'रोषाविष्टगोपालकल्पितव्याघ्र' २. 'यन्त्रित' ३. 'भूरिखिलक्षेत्र' ४. 'काशिकैः'

सबहुलैरविरहितकोकिलाक्षक्षुपैर्विरलविरलैः केदारैः कृच्छ्रकृष्यमाणैर्नातिप्रभूतप्रवृत्तगतागताप्रहतभुवमुपक्षेत्रमुपरचितैरुच्चैर्मञ्चैश्च सूच्यमानश्वापदोपद्रवम्, दिशि दिशि च प्रतिमार्गं द्रुमकृतानां पथिकपादप्रस्फोटनधूलिधूसरैर्नवपल्लवैर्लाञ्छितच्छायानाम्, अटवीसुलभसालकुसुमस्तबकाञ्चितनवखातकूपिकोपकण्ठप्रतिष्ठितनागस्फुटानामच्छिद्रकटकल्पितकुटीरकाणाम्, कुटिलकीटवेणीवेष्ट्यमानशक्तुशारशरावश्रेणीश्रितानामध्वगजनजग्धजम्बूफलास्थिशबलसमीपभुवामुद्धूलितधूलीकदम्बस्तबकप्रकरपुल-

---

टीका–यस्य प्ररूढ़िः=वृद्धिः प्रभूतोत्पत्तिरित्यर्थः येषु तैः अर्थात् प्रभूतश्यामाकोत्पत्तिकारणात् यत्र गमनं कठिनमासीत्, अलम्बुसः=सकण्टको लज्जाशीलो गुल्मविशेषः लाजवन्तीति भाषायां प्रसिद्धः बहुलः=प्रचुरः यत्र तैः अविरहितः= न विरहितः शून्यः इत्यर्थः कोकिलाक्षः=इक्षुरः तालमखानेति प्रसिद्धः [ 'कोकिलाक्षेक्षुरिक्षुराः' इत्यमरः] तस्य क्षुपः= गुल्मः [ 'ह्रस्वशाखाशिफः क्षुपः' इत्यमरः ] येषु तैः विरलैः विरलैः=न बहुलैरित्यर्थः कृच्छ्रेण=काठिन्येन कृष्यमाणैः =खन्यमानैः केदारैः=क्षेत्रैः उपलक्षितं वनग्रामकमित्यस्य विशे० नाति०—न अति प्रभूतं=अल्पधिकं यथा स्यात्तथा प्रवृत्तं यद् गतागतं=गमनञ्च आगतञ्च तयोः समाहारः तेन अप्रहता:=न क्षुण्णा भूः=भूमिः यस्मिन् तम्, उपक्षे०—क्षेत्राणां समीपे इत्युपक्षेत्रम् ( अव्ययी० ) उपरचितैः=निर्मितैः उच्चैः=उन्नतैः मञ्चैः = मण्डपविशेषैः सूच्यमानः=ज्ञाप्यमानः श्वापदानां=हिंस्रपशूनां उपद्रवः=उपप्लवः उत्पातः इति यावत् यस्मिन् तं, दिशि दिशि च ……… अटवीप्रवेशप्रपाणां शैत्येन त्याजयन्निव ग्रैष्ममुष्माणम् इत्यस्ति वनग्रामकस्य विशे,० सर्वेऽपि षष्ठयन्ता, 'प्रपाणां' इत्यस्य विशेषकाः, प्रतिमार्गं=मार्गे मार्गे द्रुमकृतानां=द्रुमैः वृक्षैः कृतानां द्रुमशाखानिर्मितानां अथवा द्रुमेषु=द्रुमाधः कृतानां पथिक०–पथिकानां=पान्थानाम् पादयोः प्रस्फोटनस्य=प्रोञ्छनस्य धूल्या=रजसा धूसरैः=मलिनैः नवपल्लवैः नवकिसलयैः लाञ्छिता=चिह्निता छाया यासां तासां भग्नपादाभ्यां गच्छतां पथिकानां पादयोः या धूलिः लगति स्म तां ते पल्लवैः प्रोञ्छन्ति स्म पल्लवांश्च प्रपासु क्षिपन्ति स्मेतिभावः, कादम्बर्यामपि कविना एवं वर्णितं – 'विश्रान्तकार्पटिकप्रस्फोटितचरणधूलिधूसरकिसलयलाञ्छितोपकण्ठैः' अटवी०—अटव्यां=वने सुलभानि=सुप्रापाणि यानि सालस्य=वृक्षविशेषस्य कुसुमानि=पुष्पाणि तेषां स्तबकैः=गुच्छैः अञ्चिता=चिह्निता मण्डितेत्यर्थः या नवखाता= नवनिर्मिता कूपिका=लघुकूपः तस्याः उपकण्ठे=समीपे प्रतिष्ठिताः=स्थिताः नागस्फुटाः=कण्टकयुक्ताः गुल्मविशेषाः नागफनीतिप्रसिद्धाः यासु तासां, अच्छिद्र०–अच्छिद्रैः=छिद्ररहितैः निरन्ध्र०–गुम्फितैरित्यर्थः कटैः=आस्तरणैः कल्पितं=रचितं कुटीरकम्=कुटी यासु तासां- कुटिल० -कुटिला=वक्रा कीटानां=वन्यमक्षिकाणां या वेणी=पंक्तिः तया वेष्ट्यमाना=आच्छाद्यमाना शक्तुभिः=भक्षितावशिष्टैः गोधूमचूर्णैः शारा=चिह्निता या शरावाणां=मृत्पात्राणां श्रेणी तया आश्रितानां=युक्तानामित्यर्थः, अध्वग०—अध्वगजनेन=पथिकलोकेन जग्धानि=भक्षितानि यानि जम्बूफलानि तेषां अस्थिभिः=बीजैरित्यर्थः शबलाः=कर्बुराः चित्राः इति यावत् समीपस्य भुवः=भूमयः यासां तासां उद्धूलि०—उद्धूलिताः=उद्धतधूलयः विकीर्णपरागाः इति यावत् ये धूली-कदम्बाः=कदम्बविशेषाः [ 'धूली कदम्बो नीपे स्यात् तीनिशे वरुणद्रुमे' इति मेदिनी ] तेषां स्तबकानां=गुच्छानां प्रकरेण=समूहेन पुलकिनीनां–सञ्जातपुलका-

हिन्दी–तालमखानों के झाड़ों का अभाव न था, और जो (खेत) मुश्किल से जोते जा रहे थे, जिस (जंगली गाँव) में बहुत अधिक यातायात न होने के कारण भूमि अक्षुण्ण पड़ी हुई थी और खेतों के पास बनाये हुए ऊँचे-ऊँचे मचानों से हिंसक जानवरों के उपद्रवों का अनुमान हो जाया करता था, जिस ( जंगली गाँव ) में वन-प्रवेश के स्थान पर दिशा-दिशा में प्रत्येक मार्ग में पेड़ों के नीचे बनाए हुए, शीतलता से ग्रीष्म ताप मिटाते हुए ऐसे प्याऊ ( खुले हुए ) थे जहाँ छाया में बटोहियों द्वारा अपने पैरों की झाड़ी हुई धूलि से मैले बने हुए पत्ते पड़े रहते थे, नई-नई खोदी हुई कुइयाँ वन-सुलभ सालवृक्ष के फूलों के गुच्छों से मण्डित थीं और उनके समीप नागफनी के झाड़ रखे हुए थे, घनी चटाइयों की कुटी बनी हुई थी, ( पथिकों द्वारा खाये ) सत्तुओं से धब्बे वाले बने शिकोरे वन-मक्खियों की टेढ़ी-मेढ़ी पंक्ति से आच्छादित हो रहे थे, पथिकों द्वारा खाये हुए जामुनों की गुठलियों से पास की जमीन रंग-बिरंगी बनी हुई थी, पराग उड़ाए हुए धूली-कदम्ब के गुच्छों के ढेर रोमाञ्च जैसे प्रतीत हो रहे थे, लकड़ी की घड़ौंचियों के

१. 'वनपल्लवैः'

ष्ठिनीनाम्, कण्टकितकर्करीचक्राक्रान्तकाष्ठमञ्चिकामुषिततृषाम्, तिम्यत्तलशीतलसिकतिलकलशीशमितश्रमाणामाश्यानशैवल-श्यामलितालिञ्जरजायमानजलजडिम्नामुदकुम्भाकृष्टपाटलशर्कराशकलशिशिरीकृतदिशाम्, घटमुखघटितकटहारपाटलापुष्प-पुटानाम्, शीकरपुलकितपल्लवपूलीपाल्यमानशोष्यसरसशिशुसहकारफलजूटीजटिल[1]स्थाणूनाम्, विश्राम्यत्कार्पटिकपेटकपरि-पाटीपीयमानपयसामटवीप्रवेशप्रपाणां शैत्येन त्याजयन्तमिव ग्रैष्ममुष्माणं क्वचिदन्यत्र ग्राहयन्तमिवाङ्गारीयदारुसंग्रहदाहिभिः व्योकारैः, सर्वतश्च प्रातिवेश्यविषयवासिना समासन्नग्राम[2]गृहस्थापितस्थविरपरिपाल्यमानपाथेयस्थगितेन कृतदारुणदास्या-

टीका-नामिवेतिगम्योत्प्रेक्षा, कण्टकि० – कण्टकितं=जलकणैः सञ्जातकण्टकम् रोमांचितमिवेति भावः यत् कर्करीणां= कलशीनां चक्रम् = समूहः नेन आक्रान्ताः = अधिष्ठिताः सनाथाः इति यावत् या काष्ठमञ्चिकाः = काष्ठनिर्मिताः लघु-मञ्चाः काष्ठपीठाः इति यावत् ताभिः मुषिता = अपनीता तृषा=पिपासा लोकानामिति शेषः यासु तासां, अर्थात् कलशीनां बहिर्मार्गे क्षुद्रजलकणसमूहः रोमांच इव प्रतीयते स्म, ताः दृष्ट्वैव तृषा अपगच्छति स्म, तिम्यत्० – तिम्यत् आर्द्रं तलम् यासां तथाभूताः शीतलाः याः सिकतलाः=सिकतामय्यः बालुकानिर्मिताः इति यावत् कलश्यः=घटयः ताभिः शमितः=शमम् उपनीतः श्रमः=क्लमः यासु तासां, आश्यान० – आश्यानः=ईषत् शुष्कः यः शैवलः= शैवालः जलीयघासविशेषः इत्यर्थः तेन श्यामलिताः=श्यामीभूताः ये अलिञ्जराः=महामृद्घटाः तैः जायमाना जलस्य जडिमा=शैत्यं यासु तासां, उदकुम्भ० – उदकुम्भेभ्यः=जलघटेभ्यः आकृष्टानि=बहिर्निस्सारितानि तानि पाटल-शर्करायाः=श्वेतरक्तबालुकायाः शकलानि=खण्डानि तैः [ वायुना उड्डायितैः सद्भिः ] शिशिरीकृताः=शीतलीकृताः, दिशः यासु तासां घट० – घटानां=जलकुम्भानां=मुखेषु=अग्रेषु उपरितनभागेष्वित्यर्थः घटितानि=रचितानि कटहारेण=तृणनिर्मितेन दम्भा पाटलापुष्पाणां=पाटलानां=पुष्पविशेषाणां पुटानि=आच्छादनानि यासु तासां, शीकर० – शीकरैः=जलकणैः पुलकिताः=रोमाञ्चिताः इवेति गम्योत्प्रेक्षा, ये पल्लवाः=किसलयाः तेषां पूल्या= गुच्छेन पाल्यमानाः=रक्ष्यमाणाः शोष्याः=शोषणयोग्याः मृदुला इति यावत् ये सरसाः=रसपूर्णाः शिशवः=बालाः लघवः इत्यर्थः सहकाराः=आम्रवृक्षाः तेषां फलानां या जूटी=गुच्छकः तया जटिलाः=युक्ताः स्थाणवः=स्तम्भाः यासां तासां, यत्र आम्रबालतरूणां महती रक्षा क्रियते स्मेति भावः. विश्रा० – विश्राम्यन्तः=विश्रामं कुर्वन्तः ये कार्पटिकाः =कर्पटेन=कषायवसनेन चरन्तीति तथोक्ताः तीर्थसेविनः इत्यर्थः तेषां ये पेटिकाः=समूहाः तेषां परिपाटिभिः= पंक्तिभिः पीयमानं=पानविषयीक्रियमाणं पयः=जलं यासु तासां अटव्यां=अरण्ये प्रवेशे=प्रवेशारम्भे प्रपाणां=पानीय-शालिकानां [ 'प्रपा पानीयशालिका' इत्यमरः] शैत्येन=शीतलतया ग्रैष्मम्=ग्रीष्मस्यायम् ग्रैष्मः ( अण् ) तम् उष्माणं =तापं त्याजयन्तम् = त्यक्तुम् प्रेरयन्तं इवेत्युत्प्रेक्षायां [ वनग्रामकं इत्यस्य विशे०, ग्राह० – अङ्गारेभ्यः हितानि अङ्गारीयाणि अङ्गारोपयोगीनीति यावत् यानि दारूणि=काष्ठानि तेषां संग्रहान्=राशीन् दहन्तीति तथोक्तैः व्योकारैः =लोहकारैः ( 'व्योकारो लोहकारकः' इत्यमरः' ) ग्रैष्मं उष्माणमिति पूर्वतोऽनुवृत्तं ग्राहयन्तम्=ग्रहीतुम् प्रेरयन्तम् इवेत्युत्प्रेक्षायां ( वनग्रामकं ) सर्वतश्च ...... व्याप्तदिगन्तरं इति अति दीर्घं विशेषणमस्ति। प्राति० – प्रतिवेशस्यायं

हिन्दी–ऊपर रखी ( बाहर रिसते जलकणों से ) रोमांचित हुई-जैसी जल-कलशियाँ ( पथिकों की ) प्यास हर लेती थीं, गीले तल भाग वाली रेतीली ठंडी भूज्यफरियाँ थकावट शांत कर देती थीं, कुछ सूखे हुए शैवाल से काले बने हुए मटके जल की ठंडक ला देते थे, जल-कुम्भों से बाहर निकली लाल बालू की कङ्कड़ियाँ दिशाओं को शीतल कर देती थीं, घड़ों के मुँहों पर घास की डोर से बँधे पाटला-पुष्पों के दोने ( ढकनों के रूप में ) धर रखे थे, जल-कणों से रोमां-चित हुए जैसे पल्लवों द्वारा बचाए जा रहे, सूखनेवाले, सरस सहकार के पौधों के फलों के गुच्छों से खम्भे भरे हुए थे और विश्राम लेते हुए यात्री दलों की पंक्तियों द्वारा जल पिया जा रहा था जहाँ कहीं दूसरी ओर, अंगारे के काम आने वाली लकड़ियों के ढेर जलाते हुए लोहारों द्वारा ग्रीष्म की तपन का आभास कराया जा रहा था, जो (जंगली गाँव)

1. 'स्थूणानाम्

2. 'ग्रामगृहस्थगृह०—'

यामयोग्याङ्गाभ्यङ्गेन स्कन्धाध्यासितकठोरकुठारकण्ठलम्बमानप्रातराशपुटेन पाटच्चरप्रत्यवायप्रतिपन्नपटच्चरेण कालवेत्रकत्रिगुणव्रततिवलयपाशप्रथितग्रीवाप्रथितैः पत्रवीटावृतमुखैः पीतकुटैरूढवारिणा पुरःसरबलद्बलीवर्दयुगसरेण नैकटिककुटुम्बिकलोकेन काष्ठसंग्रहार्थमटवीं प्रविशता, श्वापदव्यधनव्यवधानबहलीसमारोपितकुटीकृतकूटपाशैश्च गृहीतमृगतन्तुतन्त्रीजालवलयवागुरैः बहिर्व्याधैर्विचरद्भिः, अंसावसक्तवीतंसव्यालम्बमानबालपाशिकैश्च संगृहीतग्राहककक्करकपिञ्जलादिपञ्जरकैः शाकुनिकैः सञ्चरद्भिः, च्युत¹लासकलेशलिप्तलताबधूलट्वालम्पटानां च पेटकैः पाशिकशिशूनामटद्भिः, तृणस्तम्बान्तरिततित्तिरि-

टीका—प्रातिवेश्यः यः विषयः = प्रदेशः तत्र वसतीति तथोक्तेन एतत् अन्यानि च तृतीयांतविशेषणानि० 'लोकेन' इत्यनेन सम्बध्यन्ते, समा०—समासन्नाः = प्रत्यासन्नाः ये ग्रामगृहाः तेषु स्थापितैः = निहितैः स्थविरैः = वृद्धैः परिपाल्यमानेन = रक्ष्यमाणेन पाथेयेन = पथि साधु इति ( पथिन् + ढक् ) पाथेयं = पथि भोजनं अन्नमिति भावः तेन स्थगितेन = अन्तरितेन परिगतेनेत्यर्थः ( ० लोकेन ) कृत०—कृतः दारुणः = कठोरः दारुषु = काष्ठेषु व्यायामः = श्रमः तस्य योग्यः अर्थात् काष्ठच्छेदनश्रमस्य समुचितः अङ्गेषु = अवयवेषु अभ्यङ्गः = तैलमर्दनं येन, अभ्यङ्गोहि श्रमापनोदी भवति, स्कन्धा०—स्कन्धम् = अंसं अध्यासितः = अधिष्ठितः कठोरः कुठारः = परशुः यस्य स च कण्ठे = गले लम्बमानं = दोलायमानं प्रातराशस्य = प्रातर्भोजनस्य पुटं = पोट्ली यस्य स च तेन पाट०—पाटच्चराणां प्रत्यवायेन = बाधया भयेनेति यावत् प्रतिपन्नम् धृतं पटच्चरम् जीर्णवस्त्रं येन तेन [ 'पटच्चरं जीर्णवस्त्रम्' इत्यमरः ] काल०—कालवेत्रकस्य = श्यामवर्णवेत्रस्य यः त्रिगुणः = त्रिगुणितः व्रततिवलयस्य = लतामण्डपस्य पाशः = रज्जुः तेन ग्रथिता = बद्धा या ग्रीवा = गलप्रदेशः तस्यां प्रथितैः बद्धैः पत्रवीटया = पत्रगुच्छकेन आवृतं = आच्छादितं मुखं = मुखभागः येषां तैः पीतकूटैः जलपात्रविशेषैः ऊढं = नीतं वारि = जलं येन तेन, पुर०—पुरः सरौ = अग्रगौ वलन्तौ = चलन्तौ यौ बलीवर्दौ = वृषभौ तयोः युगेन द्वयेन सरति = गच्छतीति तथोक्तेन, काष्ठानां संग्रहार्थं = सञ्चयनार्थं अटवीं = विन्ध्याटवीं प्रविशता = प्रवेशं कुर्वता निकटे भवः नैकटिक० — सन्निहितः यः कुटुम्बिकलोकः = कृषीवल-परिवारजनः तेन, ( व्याप्तदिगन्तरमित्युक्तेनान्वयः ) श्वापदः०—श्वापदानां = हिंसकपशूनां यत् व्यधनं = बाणद्वारावेधनं तदर्थं यानि व्यवधानानि = आवरणानि तिरस्करिण्यः इति यावत् तेषां या बहली = राशिः इत्यर्थः प्रतीयते तस्यां समारोपिताः = स्थापिताः कुटीकृताः = आकुञ्चिताः कूटपाशाः कूटवागुराः यैः तैः ( व्याधैः इत्यस्य विशे०, गृहीत०—गृहीतानि = धृतानि मृगाणां = पशूनां तन्तवः = स्नायवः इति यावत् पाशानां नवीकरणार्थम्, तन्त्र्यः = वीणाश्च मृगाणाम् मोहनार्थम्, जाल वलयानि = जालमण्डलानि च वागुराः पाशाश्च यैः तैः, बहिः वनग्रामकादिति शेषः विचरद्भिः = भ्रमद्भिः (व्याप्तदिगन्तरम् ), अंसा०—अंसे = स्कन्धे अवसक्तः = स्थितः इत्यर्थः यः वीतंसः = पशुपक्षिबन्धनोपकरणं [ 'वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्' इत्यमरः ] तेन सह व्यालम्बमानाः = इतस्ततो भ्रमन्तः बालपाशिकाः = बालाः पाशिकाः = शिशुव्याधाः ( क्रमेण ) येषां तैः अथवा अंसावसक्तवीतंसेभ्यः व्यालम्बमानाः = दोलायमानाः बालपाशिकाः = लघुरज्जवः येषां तैः ( शाकुनिकैः ) संगृही०—संगृहीताः ग्राहकः = श्येनश्च क्रकरः = क्रकणश्च [ 'क्रकणक्रकरौसमौ' इत्यमरः ] कपि-

हिन्दी–सभी ओर दिग्विभागों में ऐसे निकटवर्ती गृहस्थ लोगों से व्याप्त था जो पड़ोसी प्रदेशों के निवासी थे, जिनके पास ( पर्याप्त ) पाथेय अन्न रहता था, जिसकी देखभाल समीपवर्ती ग्राम-गृहों में रखे वृद्ध पुरुषों द्वारा की जाती थी, जो अंगों में लकड़ी ( काटने के ) के कठोर श्रम योग्य तेल-मर्दन किये हुए थे, गले पर सुबह के कलेवे की पोटली लटक रही थी, जिन्होंने चोरों, हिंसक पशुओं के बेधने के लिए ( बनाई ) टट्टियों के समूह के मध्य टेढ़े-मेढ़े कूटपाश धर रखे थे, और जो जानवरों की तातों की डोरियाँ, वीणा, वर्तुलाकार जाल और फाँसने की रस्सी लिए हुए थे, जिस जंगली गाँव ) के बाहर ऐसे चिड़ीमार भी घूम रहे थे, जिनके कन्धों पर वीतंस के साथ-साथ छोटी-छोटी रस्सियाँ लटक रही थीं और जिन्होंने बाज, तीतर टिटिहरी आदि के पिंजरे इकट्ठे कर रखे थे, पड़े हुए लासा के अंस से लिप्त लता पर ( फँस जाने वाली ) गौरैयों के लोभी चिड़ीमारों के लड़के इधर-उधर घूम रहे थे और

१. 'संचरद्भिश्च्युतच्युत'

तरलायमानकौलेयककुलचाटुकारैश्च विहगमृगयां मृगयुयुवभिः क्रीडद्भिः, परिणतचक्रवाककण्ठकषायरुचां शीधव्यानां वल्कलानां कलापान्, नातिचिरोद्धृतानां च धातुत्विषां धातकीकुसुमानां गोणीरगणिताः पिचव्यानां चातसीगणपट्टमूलकानां पुष्कलान्सम्भारान्, भारांश्च मधुनो माक्षिकस्य मयूराङ्गजस्याक्लिष्टमधूच्छिष्टचक्रमालानां लम्बमानलामज्जक[1]जूटजटानामपत्वचां खदिरकाष्ठानां कुष्ठस्य कठोरकेशरिसटाभारबभ्रुणश्च रोध्रस्य भूयसो भारकान् लोकेनादाय व्रजता प्रविचितविविधवनफलपूरितपिटकमस्तकाभिश्चाभ्यर्णग्रामगत्वरीभिस्त्वरमाणाभिर्विक्रयचिन्ताव्यग्राभिर्ग्रामेयिकाभिर्व्याप्तविगन्तरम्, इतस्ततश्च युक्तशूरशकुरशाक्वराणां पुराणपांसूत्किरकरीषकूटवाहिनीनां घूर्णतघूलिधूसर[2]सैरिकंसरोषस्वरसार्यमाणानां संक्रीडच्चटुलचक्रचीत्का-

टीका–ञ्जल:=टिटिहरी-नामकंपक्षिविशेषश्च आदि: येषां तेषां पञ्जरका:=पिञ्जराणि यैः तैः सञ्चरद्भिः=भ्रमद्भिः शाकुनिकैः=शाकुनान्=पक्षिणः हन्तीति तथोक्तैः [ व्याप्तदि० ] च्युत०–च्युतेः=पतितः यः लासकस्य=सूपस्य यूषस्येतियावत् लेशः=अंशः तेन लिप्ता=कृतलेपा या लता तस्यां याः वघूलट्वाः=गौरैयाख्यपक्षिविशेषाणां वध्वः चटकाः इति [ कांवेलः ] तासु लम्पटानाम्=तल्लोभिनामित्यर्थः पाशिकानां=व्याधानां शिशूनाम् अटद्भिः=संचरद्भिः पेटकैः=समूहैः ( व्याप्तदिग० ) तृण०–तृणानां=घासानां स्तम्बैः=गुल्मैः निचयैरितियावत् अन्तरिताः=व्यवहिताः ये तित्तिरयः तेन तरलायमानम्=अधीरमित्यर्थः यत् कौलेयकानां=कुक्कुराणां कुलं=समूहः तस्य चाटुकारैः=प्रशंसकैः मधुरस्वरेण=सान्त्वयद्भिरित्यर्थः विहगानां=पक्षिणां मृगयाम्=आखेटं क्रीडद्भिः=कुर्वद्भिरित्यर्थः मृगयवः=व्याधाश्च ते युवानःत्तैः तरुणव्याधैरिति यावत् ( व्याप्तदिग० ); परिणत०–परिणतः=प्रौढः यः चक्रवाकः तस्य कण्ठवत्=गलप्रदेशवत् कषायः=रक्तवर्णा रुक्=रुचिः कान्तिरित्यर्थः येषां तेषां शीधव्यानां शीधुः=सुरा तस्मै हितानां तदुपयोगिनाम् इत्यर्थः• दक्षाणां वल्कलानां=त्वचानाम् कलापान्=समूहान् एवम् अन्यानि च द्वितीयान्तानि 'आदाय' इत्यस्य कर्माणि सन्ति, नाति०–न अतिचिरं यथा स्यात्तथा उद्धृतानाम्=उच्चितानां धातुः=गैरिकादिः तस्य त्विट्=कान्तिः इव त्विट् येषां तेषां धातक्याः कुसुमानाम् अगणिताः असंख्याः गोणीः शणादिगुणनिर्मित–धान्यादिवहनार्थाधारविशेषान्, पिचव्यानां =पिचुः=कार्पासतूलः तस्मै साधु इति पिचव्यः=कार्पासः तेषाम् अतस्याः=क्षुमायाः ('अतसीस्यादुमा क्षुमा' इत्यमरः) गणानां=राशीनां, पट्टानां=सूक्ष्मवस्त्रविशेषाणां मूलकानां=मूलानाम् पुष्कलान्=प्रभूतान् सम्भारान्=निचयान् भारांश्च०—माक्षिकस्य=मक्षिसम्बन्धिनः मधुनः=क्षौद्रस्य भारान्=राशीन् मयूराङ्गजस्य=मयूरपिच्छस्य, अक्लिष्टं =केनापि अस्पृष्टमित्यर्थः यत् मधूच्छिष्टं=सिक्थं तस्य यानि चक्राणि=गोलकाः तेषां मालानां=श्रेणीनाम्, लम्बमाना=दोलायमाना लामज्जकस्य=उशीरस्य [ 'उशीरमस्त्रियाम् । लामज्जकं लघुलयम्' इत्यमरः ] जूटस्य=समूहस्य जटाः=मूलानि येषां तेषाम् ( ०काष्ठानाम् ) उपगतात्वक् येषां तेषां त्वग्रहितानां खदिरस्य=वृक्षविशेषस्य काष्ठानां, कुष्ठस्य=सुगन्धितवृक्षविशेषस्य कठोरः परिणतः वृद्धः इति यावत् यः केशरी=सिंहः तस्य सटाभारवत्=केशरसमूहवत् बभ्रुणः=पिंगलवर्णस्य रोध्रस्य=लोध्रवृक्षस्य भूयसः=बहून् भारान् एव भारकान् आदाय=गृहीत्वा व्रजता=गच्छता

हिन्दी–घासफूस के मध्य छिपे तीतरों ( को पकड़ने ) के लिए अधीर हुए कुत्तों के दल को फुसलाते हुए नवयुवक व्याध पक्षियों का शिकार खेल रहे थे, जो ( जंगली गाँव ) सभी ओर दिग्विभागों में ऐसे लोगों से व्याप्त था जो मदिरा में काम आने वाले वृक्षों के वृद्ध चकवे की गर्दन के समान लाल कांति वाले वल्कलों के ढेर, थोड़ी देर पहले तोड़े हुए ( गेरू आदि ) धातु की कान्ति के से धाइ के फूलों के अनगिनत गुणों ( बोरे ), कपासों, अलसी के समूहों, पट्टवस्त्रों और मूलियों के विशाल ढेर, मक्खी-शहद के भार, मोरपङ्खों एवं अछूते मोम के चक्कों की मालाओं, ढेरों खसखस की जड़ों को लटकाये, छिलके-उतारे खैर की लकड़ियों, कूठ ( कुष्ठ ) और बूढ़े शेर की सटा की तरह पीले लोध्र के बहुत सारे भार लेकर जा रहे थे और जहाँ बटोरे ए तरह तरह के फलों से भरी टोकरियाँ शिर पर रखे उन्हें बेचने की चिंता में व्यग्र हुई गांव की स्त्रियाँ जल्दी जल्दी पास के गाँव में जा रही थीं जिस ( जंगली गाँव ) में इधर-उधर ऐसे गड्वों की कतारों के चलने फिरने से उपजाऊपन में कमजोर जमीन के सूखे खेतों का संस्कार किया जा रहा था, जिनके जुओं पर तगड़े-नौजवान् बैल जुते हुए थे, जो पुराने और सूखे गोबर के ढेर लेजा रहे थे, जो जुए के डंडों पर बैठे, धूल-भरे किसानों द्वारा क्रोध-पूर्वक हाँके जा रहे थे और जो शब्द करते घूमते हुए पहियों की चीं-चीं से

१. 'लामज्जक भुञ्जजूटक' २. 'सैरिभ'

रिणीनां शकटश्रेणीनां सम्पातैः सम्पाद्यमानदुर्बलोर्वीविरूक्षक्षेत्रसंस्कारम्, आरक्षक्षिप्तक्षिप्रदान्तवाहकदण्डोड्डीयमानहरिणहेलालङ्घिततुङ्गवैणववृतिभिश्च निखातगोरकरङ्कशङ्कुशङ्कितशशकशकलिततुङ्गशुङ्गैः प्रयत्नप्रभृतविशङ्कटविटपैर्वाटैरैक्षवैर्भूमिश्यामायमानोपकण्ठम्, अतिविप्रकृष्टान्तरैर्मरकतस्निग्धस्नुहावाटवेष्ठितैः कार्मुककर्मण्यवंशविटपसङ्कटैः कण्टकितकरञ्जराजिदुष्प्रवेश्यैः उरुबूकवचावङ्गकसुरससूरणशिग्रुग्रन्थिपर्णगवेधुकागर्मुद्गुल्मगहनगृहवाटिकैः, निखातोच्चकाष्ठारोपितकाष्ठालुकलताप्रतानविहितच्छायैः, परिमण्डलबदरीमण्डपकतलनिखातखादिरकीलबद्धवत्सरूपैः ; कथमपि कुक्कुटरटितानुमीयमान-

---

टीका-लोकेन जनैरित्यर्थः (व्याप्तदिग०), प्रविचि०-प्रविचितानि=सगृहीतानि यानि विविधानि वनस्य फलानि तैः पूरिताः =भरिताः पिटकाः=पेटका मस्तके यासां ताभिः, अभ्यर्णाः=सन्निहिताः ये ग्रामाः तेषु गत्वरीभिः=गन्त्रीभिः त्वरमाणाभिः=त्वरां कुर्वतीभिः विक्रयस्य=विपणनस्य चिन्तया व्यग्राभिः=आकुलाभिः ग्रामेयिकाभिः=ग्राममहिलाभिः व्याप्तं=पूर्णं दिगन्तरं यस्य तम् (वनग्रामकम्), इत० -इतस्ततश्च·····०क्षेत्रसंस्कारम् इत्यस्ति विशेष०; युक्ताः=युगव्यापृताः शूराः=बलवन्तः शकुराः = तरुणाः इति शं० शक्वराः = बलीवर्दाः यासु तासाम् [ श्रेणीनाम् इत्यस्य विशेष० ] पुराण०- पुराणान्=पांसूत्करान्=धूलिराशीन् करीषस्य=शुष्कगोमयमस्य कूटान्=निचयान् वहन्तीति तथोक्तानाम्, धुर्गत०—धुरि=युगदण्डे गताः=स्थिताः इत्यर्थः धूल्या=रजसा धूसराः मलिनाश्च ये सैरिकाः=सीरं=हलं वहन्तीति ( सीर+ठक् ) हालिका इत्यर्थः तैः सरोषं=रोषेण सहितं यथा स्यात्तथा सार्यमाणानां=चाल्यमानानां, संक्रीडः—संक्रीडन्ति = शब्दं कुर्वन्ति चटुलानि=चञ्चलानि यानि चक्राणि रथाङ्गानि तैः चीत्कारिणीनाम्=चीत्कारध्वनियुक्तानां शकटानां=श्रेणीनां सम्पातैः=गमनैः सम्पाद्यमानः=क्रियमाणः दुर्बलायाः उर्वरत्वशक्तिक्षीणायाः उर्व्याः=पृथिव्याः विरूक्षाणां = कठोराणां क्षेत्राणां संस्कारः=शोधन परिष्करणमितियावत् यस्मिन् तम् ( वनग्रा० ) आरक्ष० —आरक्षार्थं= रक्षार्थं शस्यानामिति शेषः क्षिप्तः=प्रक्षिप्तः क्षिप्रः=त्वरितः दान्तस्य=कृतदमनस्य दमनद्वारा स्ववशीकृतस्येति यावत् बलीवर्दस्य वाहकस्य=सञ्चालकस्य यः दण्डः तेन उड्डीयमानैः उत्प्लुत्य=त्वरितं पलायमानैः हरिणैः=मृगैः हेलया= लीलया लंघिता=उल्लंघिता अतिक्रान्ता तुङ्गा=उच्चा वैणवी=वेणुनिर्मिता वृतिः=क्षेत्रावरणं प्राचीरमिति यावत् येषां तैः [ वाटैः इत्यस्य विशेष० ], निखात०—निखातः=निष्ठापितः गोरस्य=महिषविशेषस्य करङ्कः=कङ्कालः यस्मिन् तथाभूतः यः शङ्कुः=शूलः स्थूणेति यावत् तस्मात् शंकितैः=भीतैः शशकैः=शशैः शकलिताः=खण्डिताः तुङ्गाः =उपरितनाः शुङ्गाः=अग्रभागाः येषां तैः, प्रयत्न०—प्रयत्नेन प्रभृताः=पोषिताः विशङ्कटाः=विशालाः ( 'विशंकटं पृथुबृहत् विशालं पृथुलं महत्' इत्यमरः ] विटपाः=शाखाः येषां तैः ऐक्षवैः=इक्षोः इमाः इति ऐक्षवाः ( अण् ) तैः वाटैः=वाटिकाभिः श्यामायमानं=हरितायमानमित्यर्थः उपकण्ठः=पार्श्वभूमिः यस्य तम् ( वनग्राम० ) अति०—अतिविप्रकृष्टम्=अतिदूरम् अन्तरम्=व्यवधान येषां तैः एतत् अन्यानि च तृतीयान्तानि 'गृहैः' इत्यस्य विशेषणानि, मरक०- मरकतवत्=मरकतमणिवत् स्निग्धैः=मसृणैः स्नुहायाः=सुधावृक्षस्य यथोक्तम् -'स्नुक्स्नुहा च सुधावृक्षः गुभो निस्त्रिंशपत्रकः। समन्तदुग्धी गण्डोरी सेहुण्डो वज्रकन्दकः' इति, वाटैः=वृतिभिः वेष्ठितैः=परिगतैः, कार्मु=कार्मुकं धनुः तस्य कर्मणि साधुः इति० कर्मण्यः य वंशः=वेणुः तस्य विटपैः=शाखाभिः संकटैः=आकीर्णैः पूर्णैरित्यर्थः, कण्ट०-कण्ट-

हिन्दी–मुखरित हो रहे थे, जिस (जंगली गाँव) की पार्श्वभूमि गन्ने के ऐसे बहुत से खेतों से काली-हरी हो रही थी, जिनकी बाँस की बनी ऊँची बाड़ को रक्षा के लिए शीघ्र फेंके, सधे हुए बैल को हाँकने के डंडे से हिरन खेल ही खेल में उड़ते हुए ( जैसे ) लाँघ जाया करते थे, जिनके ऊपर के अंकुरों को भैंस के गारे हुए कंकाल वाले खम्भे से डरे हुए खरगोश कुतर देते थे और जिनकी शाखाओं का पोषण यत्न-पूर्वक किया जाता था, जिस ( जंगली गाँव ) में अरण्य के गृहस्थियों के ऐसे घर थे, जो बहुत दूर-दूर फासले पर स्थित थे, मरकत मणि के समान चिकने सेहुड़ की बाड़ों से घिरे हुए थे, धनुष के काम में आने वाले बाँस की शाखाओं से भरे हुए थे, कटिदार करंज की कतारों से दुर्गम थे और जहाँ की गृहवाटिकायें एरंड, वचा, हरीतकी, तुलसी; सूरणकन्द, सुहाँजना, ग्रन्थिपर्ण-कन्द, गवेधुक, अन्न और गर्मुत लता के झाड़ों से सघन थीं, जहाँ जमीन में गाड़ी हुई ऊँची लकड़ियों पर चढ़ाई लौकी की बेल के झाड़ से छाया हो रखी थी, जहाँ स्थान-स्थान पर बेर के झुण्डों के पास खैर की कीलें ठोंक कर उनमें बछड़े बाँधे गये थे, किसी प्रकार मुर्गे की बांग सुन कर लोग बिहान होने का अनुमान कर रहे थे। जहाँ आँगन के अगस्ति

संनिवेशैरङ्ग[1]नागस्तिस्तम्भतलविरचितक्षिप्रपक्षिपूपिकावापिकैर्विकीर्णबदरपाटलपटलैः, वेणु[2]पोटदलनलशरमयवृतिविहितभित्तिभिः, किंशुकरोचनारचितमण्डलमण्डपबल्वजबद्धाङ्गारराशिभिः, शाल्मलिफलतूलसञ्चयबहुलैः, संनिहितनलशालिशालूकखण्डकुमुदबीजवेणुतण्डुलैः, सङ्गृहीतमालबीजैः, भस्ममलिनम्लानकाश्मर्यकूटव्यापृतकटैराश्यानराजादनमदनफलस्फीतैर्मधूका-

टीका-कित:=सञ्जात-कण्टकाः ये करञ्जाः नक्तमालापरपर्यायाः वृक्षविशेषाः तेषाम् राजिभिः=पंक्तिभिः दुष्प्रवेश्यैः=दुःखेन प्रवेष्टुं योग्यैः, उरु०—उरुबूकः=एरण्डः [ 'एरण्डः उरुबुकश्चेत्यमरः' ] वचा उग्रगन्धा च वङ्गकः=हरीतकविशेषश्च सुरसा=तुलसी च सूरणः कन्दविशेषश्च शीग्रुः=सोभाञ्जनश्च ग्रन्थिपर्णः=मुस्ताकारः सुगन्धिकन्दविशेषश्च गवेधुका=तृणधान्यविशेषश्च गर्मुत्=लता विशेषश्चेति० गर्मुतः तेषां गुल्मैः=स्तम्बैः गहना=घना प्रवेष्टुमशक्येत्यर्थः गृहवाटिका येषां तैः, निखात० - निखातानि=भूमौ निष्ठापितानि यानि उच्चानि काष्ठानि=दारूणि तेषु आरोपितः स्थापितः यः काष्ठालु-लतायाः=अलाबू-वल्ल्याः प्रतानः=विस्तारः तेन विहिता=कृता छाया=अनातपः येषु तैः, परि०—परितः=मण्डले=गोलाकारं यत् बदरीमण्डपम्=बदरीवृक्षस्य मण्डपम् तस्य तले=अधस्तात् निखातेषु=भूमौ निष्ठापितेषु खादिरेषु=खदिरवृक्षनिर्मितेषु कीलेषु=शंकुषु स्थूणा स्वति यावत् बद्धाः वत्सरूपा, वत्सस्येव रूपं येषां ते स्ववत्सतुल्याः वत्साः, शंकरस्तु स्वल्पाः वत्साः इति वत्सरूपाः येषु तैः, कुक्कुट०—कथमपि=केनाऽपि प्रकारेण कुक्कुटानां=चरणायुधानां रटितेन=कूजितेन अनुमीयमानः=सूच्यमानः=सन्निवेशः स्थितिर्येषां तैः, अङ्गना०-अङ्गने=प्राङ्गणे अगस्ते=अगस्तिवृक्षस्य स्तम्बस्य=वितानस्य तले=अधस्तात् विरचितः क्षिप्रपक्षिपूपिका दुरूहोऽत्र शब्दार्थः=क्षिप्रा=त्वरिता ( ? ) पक्षिपूपिका=पक्षिणां कृते पूपिकादिभक्षणार्थंभाण्डविशेषः च आवापिका=जलपानार्थंजलाशयश्च येषु तैः इत्यर्थः प्रतिभाति, काणेमहोदयस्तु क्षिप्रपदस्थाने क्षिप्तपदम् प्रस्तौति 'क्षिप्तपक्षिभ्यः पूपिका ( मिष्टान्नविशेषः ) यासु तथाभूता आवापिका येषु' इति व्याचष्टे, विकी०—विकीर्णानि=प्रक्षिप्तानि बदराणां=बदरीफलानां पाटलानि=रक्तानि पटलानि=समूहाः येषु तैः वेणु०—वेणोः=वंशस्य पोटानां=शकलानां दल=राशिश्च नलश्च शरश्च=घासविशेषौ एवेति० मयी या वृत्तिः=वेष्टनं तेन विहिता=रचिता भित्तिः=कुड्यं येषां तैः किंशुक० - किंशुकानि=पलाशवृक्षकुसुमानि रोचना=माङ्गलिकद्रव्यविशेषः ताभिः रचितं मण्डलं=वृत्तं येषु तथाभूताः मण्डपाः यत्र तैश्च बल्वजैः एतदाख्य-घासविशेषैः बद्धः अङ्गाराणां राशिः यत्र तथाभूतैश्च अस्मिन्नर्थे नास्ति स्वारस्यम् अतएव काणे-कॉवल-महोदयमतानुसारेण अत्र 'किंशुकरोचनाविरचितमण्डनैः बल्वज०' इति पाठपरिवर्तनं कार्यम् शाल्म० --शाल्मलेः=वृक्षविशेषस्य फलानां=बीजानां तूलस्य=कार्पासस्य सञ्चयाः=राशयः तैः बहुलैः=पूर्णैरित्यर्थः संनि०—संनिहितानि=समीपे स्थितानि नलशालयः=शालिविशेषाः शालूकं=कमलानां कन्दश्च [ शालूकमेषां ( उत्पलादीनां ) कन्दः स्यात्' इत्यमरः ] खण्डः=शर्करा च कुमुदानां बीजानि वेणवः=वंशाश्च तण्डुलाः=निष्तुषधान्यानि यत्र तैः, संगृहीतानि=संचितानि मालबीजानि=अत्र 'तमालबीजानि' इति पठनीयम् यत्र तैः, भस्म०—भस्मना मलिनाः म्लानैः=शुष्कैरित्यर्थः काश्मीर्यस्य=ओषधिविशेषस्य कूटैः=समूहैः व्यापृताः पूर्णाः कटाः=तृणरचितास्तरणानि येषु तैः, आश्यान०—आश्यानानि ईषच्छुष्काणि राजादनः=कपीष्टाख्यः वृक्षविशेषः मदनः=वृक्षविशेषश्च तयोः यानि फलानि तैः स्फीतैः=

हिन्दी-वृक्ष के झाड़ के नीचे पक्षियों के चारे का पात्र तथा पानी पीने का चौबच्चा बनाया हुआ था, जहाँ लाल लाल बेरों के ढेर बिखरे हुए थे, जहाँ टेसू के फूल और रोचना से मंडन कर रखा था और बल्वज घास से अंगारों का ढेर बाँध रखा था ( ? ) जहाँ सिम्बल डोडों, की रूई के ढेर लगे हुए थे, वन-धान, कमल कन्द, खाँड, कुमुदों के बीज, बाँस और चावल पास में पड़े हुए थे, तमाल-बीज बटोर रखे थे, चटाइयाँ राख से मैली तथा सूख रही काश्मीर्य बूटी के ढेरों से भरी पड़ी थीं, कपिष्ट ( खिरनी ) तथा मदन के अधसूखे फल बड़ी मात्रा में रखे हुए थे, महुए

1. अङ्गनागस्तिस्तम्भ····क्षिप्रपूपिका'    2. 'पोटपटलनलकलितशरमय'

सवमद्यप्रायं:, कुसुम्भकुम्भगण्डकुसूलैरविरहितराजमाषत्रपुषकर्कटिकाकूष्माण्डालाबुबीजैः, पोष्यमाणवनबिडालमालुधाननकुलशालिजातजातकादिभिरटवीकुटुम्बिनां गृहैरुपेतं वनग्रामकं ददर्श तत्रैव[1] चावसदिति ।

इति श्रीबाणभट्टकृतौ[2] हर्षचरिते छत्रलब्धिर्नाम
सप्तम उच्छ्वासः ।

---

टीका-बहुलैः, मधू०—मधूकानाम् = गुडपुष्पाणां ['मधूके तु गुडपुष्पमधुद्रुमो' इत्यमरः] आसवः=क्वाथः मद्यं=मदिरा च प्रायः बाहुल्येन यत्र तैः, कुसुम्भ० -कुसुम्भस्य=महारजनस्य कुम्भाः=घटाः गण्डे=कपोले मुखे इति यावत् यस्य तथाभूतः कुसूलः=धान्यकोष्ठः येषां तैः अर्थात् यत्र कुसुम्भ-कुम्भाः कसूलस्य मुखपर्यन्तं भरिताः आसन्, अविर०—अविरहितानि=अशून्यानि वर्तमानानीत्यर्थः राजमाषाणां=निष्पावाणां च त्रपुषाणां=लाडुकानां च कर्कटिकानाम्=उर्वारूणां च कूष्माण्डानां=कर्कारूणां च अलाबूनां=तुम्बीनां च बीजानि यत्र तैः, पोष्य०—पोष्यमाणः=पाल्यमानाः वनबिडालाः=वन्यमार्जाराश्च मालुधानाः=एतदाख्याः निर्विशेषाः सर्पविशेषाश्च ("मालुधानो मातुलाहिः' इत्यमरः) नकुलाः=अहिशत्रवश्च शालिजाताश्च जातकाश्च आदिः येषां तैः अत्र शालिजाताः जातकाश्च के नाम जन्तव इति ज्ञातुं न शक्यते, अटव्याः=वनस्य कुटुम्बिनां गृहस्थानां गृहैः उपेतं=युक्तं वनग्रामकं=वनस्थितां वसतिं ददर्श=अपश्यत् तत्र एव च अवसत्=स्थितिं चकार ।

॥ श्रीमोहनदेवपंत-विरचितायां हर्षचरितस्य छात्रतोषिणीटीकायां सप्तमोच्छ्वासः समाप्तः ॥

हिन्दी-का आसव और मद्य का बाहुल्य था, कुसुम्भ के घड़े भंडारों के मुख तक भरे पड़े थे, राजमाष, खीरा, ककड़ी, पेठा और लौकी के बीजों से खाली न थे और वन-बिलाव, मालुधान सांप, न्यौले, शालिजात तथा जातक आदि जानवर पाले जा रहे थे, और हर्ष उसी गांव में ठहर गया ।

बाणभट्ट-कृत हर्षचरित का छत्र-लब्धि-नामक सप्तम उच्छ्वास समाप्त ।

---

१. 'तत्रैव च तं दिवसमत्यवाहयत्'

२. '०कृते हर्षचरिते सप्तम' 'इति श्री महाकविचक्रचूडामणि श्रीबाणभट्टविरचिते श्रीहर्षचरिते महाकाव्ये छत्रलब्धिर्नाम सप्तम उच्छ्वासः सम्पूर्णः'

# अष्टम उच्छ्वासः

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि ।
दैवेनापि क्रियते भव्यानां पूर्वसेवेव ॥ १ ॥
विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ॥ २ ॥

अथापरेद्युरुत्थाय पार्थिवस्तस्माद्ग्रामकान्निर्गत्य विवेश विन्ध्याटवीम् । आट च तस्यामितश्चेतश्च सुबहून्दिवसान् । एकदा तु भूपतेर्भ्रमत एवाटविकसामन्तशरभकेतोः सूनुर्व्याघ्रकेतुर्नाम कुतोऽपि कज्जलश्यामलश्यामलतावलयेनाधिललाटमुच्चैः कृत-मौलिबन्धम्, अन्धकारिणीमकारणभुवा भ्रुकुटिभङ्गेन त्रिशाखेन त्रियामामिव साहससहचारिणीं ललाटस्थलीं सदा समुद्व-

टीका—सहसेति—अन्वयः सरलः । सहसा=अकस्मात् मनोरथेन=अभिलषितेन '' '' प्रार्थितानि=अभीष्टानि वस्तूनि=पदार्थान् सम्पादयता=कुर्वता ददमानेनेत्यर्थः देवेन=भाग्येन अपि अन्येषां तु वार्तैव केत्यर्थापत्तिः भव्यानां =कल्याणानां ''फलकल्याणयोर्भव्यम्'' ॥ इति''''''शुक्लिनामिति यावत् पूर्वा=अ या सेवा=शुश्रूषा इवेत्युत्प्रेक्षायाम् क्रियते=विधीयते भाग्यशालिनं लोकास्तु आद्रियन्ते एव विना आश्चर्यमिदं यत् दैवमपि पूर्वमेव तत्सेवामनुतिष्ठति । आर्या वृत्तम् ॥ १ ॥

विद्वदिति—अन्वयः सरलः । विद्वज्जनेन=विपश्चिल्लोकैः सम्पर्कः=संयोगः नष्टः अदर्शनं गतः इष्टः=प्रियः यः यः ज्ञातिः=बन्धुः तस्य दर्शन=साक्षात्कारः एव अभ्युदयः=कल्याणं भवने=गृहे महारत्नानां=महामणीनां लाभः= प्राप्तिश्च कस्य=मनुष्यस्य सुखाय=हर्षाय न भवति अपितु सर्वस्यापि सुखाय भवतीति काकुः । अत्र प्रस्तुतानां=विद्वज्जन-सम्पर्कः=नष्टेष्टजनदर्शनाभ्युदयः—महारत्नलाभानां सुखजनकस्यैकधर्मीति सम्बन्धात् तुल्ययोग्यता । अत्रापि पूर्ववत् आर्या वृत्तम् ॥ २ ॥

अपरेद्युः=अन्यस्मिन् दिने पार्थिवः=राजाहर्षः निर्गत्य=निःसृत्य विवेश=प्रविष्टवान् अटव्यां=विन्ध्याटव्यां इतश्चेतश्च=इतस्ततः स बहून् दिवसान् ( कालात्यन्तसंयोगे द्वितीया ) आटत् ( अट+लिट ) अभ्रमत । एकदा तु भूपतेः भ्रमत एव व्याघ्रकेतुर्नाम कुतोऽपि''''''शवर युवानमादाय जगामित्यस्ति मुख्य वाक्यम् । भूपते राज्ञ हर्षस्य भ्रमतः=अटतः एव अटव्यां=वने भवः आटविकः अटवीप्रदेशस्येत्यर्थः सामन्तः=भूपः शरभकेतु=एतन्नाम्ना तस्य

टिप्पणी—उपर्युक्त दोनों श्लोकों से अष्टम उच्छ्वास के कथानक पर प्रकाश पड़ जाता है । हर्षवर्धन की दिवाकर मित्र के रूप में एक विद्वज्जन से भेंट होती है । फिर वह अपनी बहिन राज्यश्री का पता लगा लेता है, दिवाकर मित्र से एक अद्भुत मौक्तिक हार प्राप्त कर लेता है, भाग्य हर्ष की मनोकामना पूर्ण करके, उसकी पूर्व-सेवा जैसी कर गया है ।

हिन्दी—सहसा मनोभिलषित वस्तुओं को देते हुए भाग्य द्वारा भी भागवानों की पहले ही सेवा जैसी की जाती है ॥ १ ॥

विद्वान लोगों के सम्पर्क, गायब हुए प्रिय बन्धु के साक्षात्कार का अभ्युदय, और घर में महारत्नों की प्राप्ति, किसके सुख के लिए नहीं होते ॥ २ ॥

इसके बाद दूसरे दिन उठकर राजा हर्षवर्धन उस गाँव से निकलकर विन्ध्याटवी में प्रविष्ट हो गये, वहाँ वह इधर-उधर बहुत दिन घूमते रहे एक समय राजा के भ्रमण करते करते ही जंगल के सामन्तशरभकेतु का व्याघ्रकेतु नामक पुत्र एक ऐसे युवा शबर को लेकर कहीं से आ पहुँचा—जिसने काजल की तरह काले रंग की श्यामलता की डोरी से सिर के बाल ऊपर बाँध रखे थे । जो साहसिक कामों में साथ देने वाली अन्धेरी त्रियामा रात्रि जैसी लग रही, बिना कारण चढ़ी तीन सिकुड़न रेखाओं वाली अन्धेरी तेवड़ी से साहसिक कामों का साथ देने वाली

१. अत्र भवनस्थाने भुवने इति पाठः साधयान ।

हन्तम्, अवतंसितैकशुकपक्षकप्रभाहरितायमानेन पिनद्धकाचरकाचमणिकर्णिकेन श्रवणेन शोभमानम्, किंचिच्चुल्लस्य प्रविरलपक्ष्मणश्चक्षुषः सहजेन रागरोचिषा रसायनरसोपयुक्तं तारक्षवं क्षतजमिव क्षरन्तम्, अवनाटनासिकम्, चिपिटाधरम्, चिक्कितचिबुकम्, अहीनहनूत्कटकपोलकूटास्थिपर्यन्तमीषदवाग्रग्रीवाबन्धम्, स्कन्नस्कन्धार्धभागम्, अनवरतकोदण्डकुण्डलीकरणकर्कशव्यायामविस्तारितेनांसलेनोरसा हसन्तमिव तटशिलाप्रथिमानं विन्ध्यगिरेः, अजगरगरीयसा च भुजयुगलेन लघयन्तं तुहिनशैलशालद्रुमाणां द्राघिमाणम्, वराहबालवलितबन्धनाभिर्नागदमनजूटिकावाटिकाभिर्जटिलीकृतपृष्ठे प्रकोष्ठे प्रतिष्ठां गतं गोदन्त-

---

टीका-सूनुः=सुतः व्याघ्रकेतुः कज्जलललाटस्य=भालस्य उपरि इत्यधिललाटम् (अव्ययीभावः) कज्जलवत्=अञ्जनवत् श्यामा=कृष्ण श्यामवर्णाः या श्यामलता=पन्धि यङ्गुः इति क्षीर० तस्याः वलयेन=वलयाकारवेष्ठनेनेत्यर्थः उच्चैः कृतः मौलिबन्धः येन तद् "चूड़ा किरीटकेशाश्च संयता मौलयस्त्रय" इत्यमरः, एतत् अन्यानि च द्वितीयान्तानि पदानि "शबरयुवानम्" इत्यस्य विशेषणानि अन्धकारिणीम् अन्धकारवतीं कृष्णवर्णामित्यर्थः न कारणं यस्मिन् कर्मणि स्यात्तथा ......तथोक्तेन=स्वाभाविकेनेत्यर्थः, तिस्रः शाखा=वलिरेखा यस्मिन् तेन भ्रुकुटि-भङ्गेन=भ्रूभेदेन अन्धकारिणी साहसानां=साहसिककर्मणाम् अथवा साहसेन सहचारिणी सहगामिनीं त्रियायाम्=त्रयो यामा=प्रहराः यस्यां ताम् रात्रिमित्यर्थः इवेत्युत्प्रेक्षायां ललाटस्थली=भालप्रदेशम् उद्वहन्तं=धारयन्तम ललाटस्थली श्यामा त्रिभ्रूभङ्गरेखावती साहसानां च सहचारिणी रात्रिरपि श्यामा साहसिकेन त्रियामा सहचारिणी इत्युत्प्रेक्षागतसाम्यम् । अवतं० अवतंसितः=कर्णाभरणीकृतः एकः शुकस्य=कीरस्य यः पक्षकः=पतत्रं तस्य प्रभया कान्त्या=हरितायमानेन=हरिद्वर्णीकृतेन पिनद्धा=बद्धा काचरा=कपिलवर्णा इति शङ्करः, काचसदृशी इति काचे काचमणेः कर्णिका कुण्डलं यस्मिन् तेन श्रवणेन=कर्णेन शोभमानम्=रोचमानम् । किञ्चित् किञ्चित्=ईषत् चुल्लस्य=क्लिन्नस्य ( स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्ला क्लिन्नेऽक्ष्णि......इत्यमरः ) प्रविरलानि=प्रकर्षेण विरलानि अल्पानीत्यर्थः पक्ष्माणि=रोमाणि यस्मिन् तस्य चक्षुषः=नेत्रस्य सहजेन=स्वाभाविकेन राग-रोचिषा=लौहित्यदीप्त्या रसायनम्=औषधविशेषः तस्य रसाय द्रवाय उपयुक्तं हितं तारक्षवं=तरक्षोः=मृगादनस्य "तरक्षुस्तु मृगादनः इत्यमरः" इदमितिक्षतजं=क्षतात् जातम् रुधिरमित्यर्थः क्षरन्तम्=स्रवन्तम् अवनाय=नता नासिका=घ्राणं यस्य तं अहीनं अहीना=पूर्णेत्यर्थः या हनुकपोलाभ्यां परः चिबुकस्याधोभागः तस्याम् उत्कटौ=उत्थितावित्यर्थः कपोलयोः कूटौ=शिखरभूतौ अस्थिपर्यन्तौ=अस्थिप्रान्तौ यस्य तम् ईषत्=किमपि अवाग्रः=अवनतः ग्रीवाबन्ध यस्य तम् अर्थात् तस्य ग्रीवा किमपि नता आसीत् । स्कन्नः=लम्बमानः स्कन्धस्य=अंसस्य अर्धभागो यस्य तम् अनव०-अनवरतं=सततं यथा स्यात्तथा यत् कोदण्डस्य धनुषः कुण्डलीकरणं=नमनमित्यर्थः तेन कर्कशः कठोरः यः व्यायामः=श्रमः तेन विस्तारितेन=विस्तारं नीतेन अंसलेन=मांसलेन बलवान् "मांसलोऽसलः इत्यमरः" उरसा=वक्षसा विन्ध्यगिरेः=विन्ध्याचलस्य तटेषु=नितम्बेषु उत्सङ्गेष्विति।यावत् या शिलाः=विशालप्रस्तराः तासां प्रथिमानं प्रथुलं हसन्तम्=उपहासास्पदीकुर्वन्तम् इवेत्युत्प्रेक्षायाम् अजगर०-अजगरः=विशाल देहः सर्पविशेषः तद्वत् गरीयसा=दीर्घेण भुजयुगेन=बाहुद्वयेन तुहिनशैलस्य=हिमालयस्य शालवृक्षाणां=एतदाख्यतरूणां द्राघिमाणम्=दीर्घताम् लङ्घयन्तं=लघुकुर्वन्तम् उपहसन्तमिति यावत् बराहस्य = शूकरस्य बालैः=केशैः वलितं=कृतं बन्धनं यासां ताभिः नागदमनः=विषहरः औषधीभेदः तस्य जूटिकानां=लघुमूलानां

हिन्दी-भावस्थली को सदा धारण करता रहता था। जो कर्णाभरण रूप में पहने तोते के पंख की छटा को हरे-हरे एवं पीले स्फटिक का कुण्डल बाँधे कान से शोभित हो रहा था। जो कुछ चिपचिपी बिरली बरौनियों वाली आँख की स्वाभाविक लाल कान्ति से ऐसा लग रहा था मानो रसायन के रस में काम आने वाला लकड़बग्घा का खून टपक रहा हो, जिसकी नाक झुकी हुई थी भरी हुई ठेड़ी के ऊपर कपोलों के उच्च भागों के अस्थिप्रान्त उभरे हुए थे गर्दन कुछ नीचे झुकी हुई थी, और कन्धे का आधा भाग लटका हुआ था जो निरन्तर धनुष के चढ़ाते रहने के कठोर व्यायाम से विस्तीर्ण हुई मांसल छाती के द्वारा विन्ध्याचल की गोद की शिलाओं की चौड़ाई का उपहास जैसा कर रहा था। जो अजगर की तरह दो बड़ी-बड़ी भुजाओं द्वारा हिमालय पर्वत के शाल वृक्षों की लम्बाई को पछाड़ रहा था, जो सूअर के बालों से बँधी नागदमन बूटी की छोटी-छोटी जड़ियों की कलियों से आच्छादित पृष्ठ भागवाली कलाई पर स्थित गोदन्ती मणि से भूषित रांगे का कड़ा धारण कर

मणिचित्रं त्रापुषं वलयं बिभ्राणम्, अतुन्दिलमपि तुण्डिभम्, अहीरमणीचर्मनिर्मितपट्टिकयोश्चित्रचित्रकत्वक्तारकितपरिवारया सङ्कुच्याजिनजालकितया शृङ्गमयमसृणमुष्टिभागभास्वरया पारदरसलेशलिप्तसमस्तमस्तकया कृपाण्या करालितविसङ्कटकटिप्रदेशम्, प्रथमयौवनोल्लिख्यमानमध्यभागभ्रष्टमांसभरिताविव स्थवीयसावूरुदण्डौ दधतम्, अच्छभल्लचर्ममयेन भल्लीप्रायप्रभूतशरभृता शबलशार्दूलचर्मपट्टपीडितेनालिकुलकालकम्बललोम्ना पृष्ठभागभाजा भस्त्राभरणेन पल्लवितमिव कार्श्यमुपदर्शयन्तम्, उत्तरत्रिभागोत्तंसितचाषपिच्छचारुशिखरे खदिरजटानिर्मिते शरप्राणे प्रचुरमयूरपित्तपत्रलताचित्रितत्वचि त्वचिसार-

---

टीका—वटिकाभिः=गुलिकाभिः इति शंकरः जटिलीकृतम् = आच्छादितमित्यर्थः जटायुक्तमिव कृतम् पृष्ठः=पृष्ठभागो यस्य तस्मिन् प्रकोष्ठे=भागे प्रतिष्ठां=स्थितिं गतं स्थितमित्यर्थः गोदन्तः=सर्पभेदः इति शंकरः तस्य मणीनां चित्रम्=अलंकृतमित्यर्थः त्रापुषम्=त्रपुषः=रांगाख्यधातुविशेषस्य विकारः इति [त्रपुजतुनोः षुक् पा० ४।३।१३८] वलयं=कङ्कणं बिभ्राणम्=दधानम् अतुन्दिलम्=तुन्दरहितं अस्थूलोदरमिति यावत् अपि तुण्डिभम्=वृद्धनाभिम् ( 'वृद्धनाभौ तुण्डिलतुण्डिभौ' इत्यमरः ) अहीर० अहीरमाणी=द्विवक्त्रः सर्पविशेष इति''''अत्र अहीरमणिपाठः साधीयान् तस्य चर्मणा=त्वचा निर्मिते=रचिते पट्टिके=पट्टौ तयोः मध्ये चित्रा=विविधवर्णाः या चित्रकस्य=सर्पभेदस्य ( चित्रकच्छायया गन्धतोऽप्यपरसर्पत्रासकः इति शंकरः ) या त्वक् तया तारकितः=सञ्जाततारकः तारावत् चिह्नितः इत्यर्थः परिवारः=कोषः निधानमिति यावत् यस्याः तया कृपाण्या सङ्कुच्यं=सङ्कुचितं यत् अजिनं=मृगचर्म तेन जालकितया=पिहितया मृगचर्मान्तःस्थापितमेत्यर्थः शृङ्गमयः=शृङ्गनिर्मितः मसृणः=स्निग्धः य मुष्ठिभागः=त्सरुभागः तेन भास्वरया=दीप्तया पारदस्य यः रसः=द्रवः तस्य लेशेन=अंशेन लिप्तं समस्तं=निखिलं मस्तकं=शिरः यस्याः तया कृपाण्या=असिपुत्रिकया छुरिकयेति यावत् करालितः=भीषणीकृतः विसङ्कटः = विशालः कटिप्रदेशः=कटिभागो यस्य तम् प्रथमं० प्रथमेन=प्रारम्भिकेण नवेनेति यावत् यौवनेन=तारुण्येन उल्लिख्यमानः=उत्खन्यमानः यः मध्यभागः=कटिप्रदेशः तस्मात् भ्रष्टं=च्युतं यत् मांसं तेन भरितो=पूरितो इवेत्युत्प्रेक्षायाम् स्थवीयसौ=अतिशयेन स्थूलौ ऊरुदण्डौ=दण्डसदृशौ ऊरू दधतम्=बिभ्राणम् अच्छ० अच्छभल्लः=ऋक्षः ('ऋक्षाच्छभल्लभल्लूकाः' इत्यमरः) तस्य चर्म=त्वक् एव चर्ममयम् तेन भल्ल्यः=अर्धचन्द्राकाररूपा बाणविशेषाः तेषां प्रायः=बाहुल्यं येषु तथाभूतान् प्रभूतान्=बहून् शरान्=बाणान् बिभर्त्तीति तथोक्तेन शबलं=चित्रं बिन्दुलाञ्छितमित्यर्थः यत् शार्दूलस्य=व्याघ्रस्य चर्म तस्य पट्टेन=पट्टिकया पीडितेन=दृढीकृतेन अलिकुलवत्=भ्रमरसमूहवत् कालानि=श्यामानि कम्बलस्येव लोमानि=रोमाणि यस्य तेन पृष्ठभागं=पृष्ठदेशं भाजा=भजति=आलम्बयतीति तथोक्तेन भस्त्रा=चर्मनिर्मितं पुटं तूणीरमित्यर्थः=आभरणमिवेत्युपमितसमासः तेन पल्लवितं=सञ्जातपल्लवं इवेत्युत्प्रेक्षायाम् कार्श्यं=कृशताम् अत्र काणेमहोदयानुसारेण कार्ष्ण्यं इति पाठः करणीयः स च साधीयान् उपदर्शयन्तम्=प्रकटयन्तम् स स्वयं श्यामवर्णं आसीत्, श्यामवर्णमेव तूणीरं कम्बलं च दधाति स्म, अतः पृष्टगतं श्यामवर्णतूणीरम् अन्धकारस्य पल्लवितमिव पल्लवमिव प्रतीयतेस्म । कार्श्यं तु नात्र संगतार्थं भवति । उत्तर० उत्तरे=उपरितने-त्रिभागे ( त्रिशब्दोऽत्र पूर्णार्थकः ) तृतीये भागे-उत्तंसितम्=अलंकाररूपे अङ्गदे धृतमित्यर्थः चाषस्य=नीलकण्ठाख्यपक्षिविशेषस्य यत् पिच्छं=पुच्छं तेन चारु=रम्यं शिखरं=उपरितनभागो

हिन्दी—रहा था, जिसकी तोंद निकली होने पर भी नाभि उभरी हुई थी। जिसका विशाल कटि भाग ऐसी कटार ने भीषण बना रखा था जो अहीरमणि नामक साँप के चमड़े की बनी दो पट्टियों के बीच चित्रक सर्प की त्वचा से धब्बेदार बनी हुई म्यान में थी संकुचित मृग चर्म से ढकी हुई थी सींग की चिकनी मूठ से चमक रही थी, और जिसके सारे शिरो भाग पर पारे का पानी चढ़ा हुआ था, जो नये यौवन द्वारा खराद में छिले जा रहे कटि भाग से गिरे हुए मांस से भरे हुए जैसे अधिक स्थूल बने जंघा काण्डों को रख रहा था। जो भालू के चाम के बने प्रचुर बाणों में से अधिकतर भल्लों (अर्धचन्द्राकार बाणों) को रखे, बिन्दु चिह्नित बाघ की चमड़ी के पट्टे से खूब कसे, भ्रमर समूह की तरह काले कम्बल के से रोमों वाले पीठ पर बंधे आभरण जैसे थैले ( तरकस ) से कालिका का पल्लव जैसा निकला हुआ दिख रहा था। जो ऊपर के तीसरे भाग में बाजूबन्द रूप में धारण किये नीलकण्ठ पक्षी के पंख से सुन्दर सिर वाली खैर की शाखा जैसी गठीली प्रखर शक्ति वाली मयूर के पित्त रस से बहुत सारे पत्रभंगों द्वारा चित्रित त्वचा वाली बांस की तरह विशाल

1. अच्छवलचर्मकेन ?

गुरुणि वामस्कन्धाध्यासितधनुषि दोषि लम्बमानेनावाक्शिरसा शितशरकृतैकनलकविवरप्रवेशितेतरजङ्घाजनितस्वस्तिकबन्धेन बन्धूकलोहितरुधिरराजिरञ्जितघ्राणवर्त्मना वपुर्विततिव्यक्तविभाव्यमानकोमलक्रोडरोमशुक्लिम्ना शशेन शिताटनीशिखाग्रथितग्रीवेण च अपावृतचञ्चूत्तानताम्रतालुना तित्तिरिणा वर्णकमुष्टिमिव मृगयाया दर्शयन्तम्, विषमविषदूषितवदनेन च विकर्णेन कृष्णाहिनेव मूलगृहीतेन व्यग्रदक्षिणकराग्रम्, जङ्गममिव गिरितटतमालपादपम्, यन्त्रोल्लिखितमश्मसारस्तम्भमिव भ्रमन्तम्, अञ्जनशिलाच्छेदमिव चलन्तम्, अयःसारमिव विन्ध्यस्य गलन्तम्, [1]पाकलं करिकुलानाम्, कालपाशं कुरङ्गयूथानाम्, धूमकेतुं मृगराजचक्राणाम्, महानवमीमहं महिषमण्डलानाम्, हृदयमिव हिंसायाः, फलमिव पापस्य, कारणमिव

---

टीका—यस्य तस्मिन् एतत् अन्यानि च सप्तम्यन्तानि 'दोषि' इत्यस्य विशेषणानि खदिरस्य = एतदाख्यवृक्षभेदस्य जटानां = तन्तूनां शाखानां वा इव निर्माणं = घटनं यस्य तस्मिन् 'खदिरो हि दुर्भेद्यो वृक्षो भवति' खरः = तीक्ष्णः प्राणः = शक्तिः यस्य तस्मिन् ('शक्तिः पराक्रमः प्राणः' इत्यमरः) प्रचुरा = प्रभूता मयूरस्य पित्तेन = मायुना 'रचिता' पत्रलता = पत्रभङ्गा ताभिः चित्रिता = रञ्जितेत्यर्थः त्वक् यस्य तस्मिन् त्वचिसारः = वंशः तद्वत् गुरूणि = महान्ति वामस्कन्धम् अध्यासितम् = अधिष्ठानं कृतं धनुः यस्य तस्मिन् दोषि = भुजे लम्बमानेन = लोलता एतत् अन्यानि च तृतीयान्तानि शशेन इत्यस्य विशेषणानि अवाक् = अधः शिरः यस्य तेन शित० शितेन = तीक्ष्णेन शरेण = बाणेन कृतम् एकं यत् नलकं = नलाकारमित्यर्थः 'अस्पष्टार्थोऽयंशब्दः' छिद्रं = विवरं तस्मिन् प्रवेशिता = निवेशिता इतरा = अन्या या जङ्घा तया जनितः = कृतः स्वस्तिकबन्धः = योगासनविशेषः यस्मिन् पादौ जुगुलितौ जङ्घान्तराले निक्षिप्येते अयं प्रयोग औपचारिकः यस्य तेन बन्धूकवत् = रक्तपुष्पविशेषवत् लोहिता = रक्तवर्णाः या रुधिरस्य = रक्तस्य राजिः = पङ्क्तिः ( अत्र लोहितरुधिरशब्दयोः पुनरुक्तवदाभासः ) तथा रञ्जितं = चिह्नितमित्यर्थः घ्राणवर्त्म = नासिकामार्गं यस्य तेन वपु० वपुषः = शरीरस्य विततया = विस्तारेण व्यक्तं = स्पष्टं यथा स्यात्तथा विभाव्यमानः = दृश्यमानः कोमलानां = मृदूनां क्रोडस्य = वक्षसः रोम्णां = लोम्नां शुक्लिमा = श्वैत्यं यस्य तेन शशेन = शशकेन शिता० शिते = तीक्ष्णे अटन्या = धनुष्कोट्या शिखायाः = पर्यन्तस्य अग्रे ग्रथिता = बद्धा ग्रीवा = गलभागो यस्य तेन अपाकृता = विवृता या चञ्चुः तया उत्तानं = उपरि स्पष्टतया दृश्यमानमित्यर्थः ताम्रं = ताम्रवर्णं तालु = तालुस्थानं यस्य तेन तित्तिरिणां = तित्तिरिनामकपक्षिविशेषाणां मृगयायाः = आखेटस्य वर्णकमुष्ठिम = मुष्ठिपरिमाणम् अनुलेपनं = अंगरागमित्यर्थः इवेत्युप्रेक्षायाम् दर्शयन्तम् = प्रकटयन्तम् अर्थात् तस्य भुजे स्थितौ शशः तित्तिरिश्च अंगराग इव प्रतीयेते स्म येनासौ मृगयायां स्वशरीरं लिप्तवानासीत्। विष० विषमम् = भीषणं यत् विषं = गरलं तेन दूषितं = दोषयुक्तं वदनं = मुखम् अन्यत्र अग्रभागः यस्य तेन मूलेन = अधोभागेन अन्यत्र मूलेन मन्त्रेण गृहीतेन = धृतेन अन्यत्र वशीकृतेन विकर्णेन = बाणविशेषेण कृष्णाहिना = कृष्णसर्पेण इवेति श्लिष्टोपमायाम् व्यग्रः = व्यापृतः दक्षिणस्य करस्य अग्रम् = अग्रभागो यस्य तम् जङ्गमम् = विचरन्तम् गिरितटस्य = पर्वतनितम्बस्य तमालपादपम् = तमालवृक्षम् इव शबरः तमालतरुश्च श्यामवर्णौ भवतः मन्त्रेण = शाणेन उल्लिखितं = उत्कीर्णं

हिन्दी–भुजा पर लटके हुए खरगोश से जिसका शिर नीचे की ओर था जो तेज बाण से बनाये हुए नलके के आकार के गोल छिद्र में घुसाई हुई दूसरी जङ्घा से स्वस्तिक बन्ध बनाये हुए था। जिसकी नाक गुडहल के समान लाल खून की पंक्ति से रङ्गी हुई थी और शरीर के विस्तार से जिसकी छाती के कोमल बालों की सफेदी साफ दिखाई पड़ रही थी एवं लटके हुए तित्तर पक्षी से जिसकी गर्दन धनुष प्रान्त की आगे की तेज नोक से बँधी हुई थी और उघड़ी हुई चोंच के कारण जिसकी ऊपर की तालु दिखाई पड़ रही थी—मृगया का मुट्ठी भर अंगराग जैसा दिख रहा था जिसके दांये हाथ के अग्र भाग में भीषण विष से दूषित वदन ( मुँह ) वाले मूल ( मूलमन्त्र ) अथवा जड़ी बूटी द्वारा पकड़े गये काले नाग की तरह भीषण विष से दूषित वदन (नोक) वाला मूल (नीचे) से पकड़ा हुआ विकर्ण बाण था जो ऐसा लगता था मानो पहाड़ की ढलान का चलता फिरता तमाल का वृक्ष हो, मानो यन्त्र द्वारा काटे हुए पत्थर का घूमता हुआ ठोस खम्भा हो, मानो अञ्जन शिला का चलता हुआ टुकुड़ा हो अथवा मानो गलता हुआ विन्ध्याचल का लोहसार हो, जो हस्ति दलों का प्राणहर ज्वर, मृग समूहों का मृत्युपाश, मृगराजों के मण्डलों का पुच्छलतारा और भैसों के समूहों का महानवमी उत्सव था, जो हिंसा का हृदय जैसा, पाप का फल जैसा, कलि समय का कारण जैसा और कालरात्रि का प्रणयी जैसा था।

१. 'पालकम्'

कलिकालस्य, कामुकमिव कालरात्रेः, शबरयुवानमादायाजगाम। दूरे च स्थापयित्वा विज्ञापयांबभूव—'देव, सर्वस्यास्य विन्ध्यस्य स्वामी सर्वपल्लीपतीनां प्राग्रहरः शबरसेनापतिर्भूकम्पो नाम। तस्यायं निर्घातनामा स्वस्रीयः सकलस्यास्य विन्ध्यकान्तारारण्यस्य पर्णानामप्यभिज्ञः किमुत प्रदेशानाम्। एनं पृच्छतु देवः योग्योऽयमाज्ञां कर्तुम्।' इति कथिते च निर्घातस्तु क्षितितलनिहितमौलिः प्रणाममकरोदुपनिन्ये च तित्तिरिणा सह शशोपायनम्। अवनिपतिस्तु संमानयन्स्वयमेव तमप्राक्षीत्—अङ्ग, अभिज्ञा यूयमस्य सर्वस्योद्देशस्य। विहारशीलाश्च दिवसेष्वेतेषु भवन्तः। सेनापतेर्वान्यस्य वा तदनुजीविनः कस्यचिदुदाररूपा नार्यागता भवेद्दर्शनगोचरम्' इति।

निर्घातस्तु भूपालालापनप्रसादेनात्मानं बहुमन्यमानः प्रणनाम दर्शितादरं च व्यज्ञापयत् 'देव प्रायेणात्र हरिण्योऽपि नापरिगताः सञ्चरन्ति सेनापतेः कुत एव नार्यो नाप्येवंरूपा काचिदबला। तथापि देवादेशादिदानीमन्वेषणं प्रति प्रतिदिन-

---

टीका—अश्मनः=प्रस्तरस्य सारः=मुद्गरम् स्तम्भम्=स्थूणमिव भ्रमन्तम्=गतिशीलमित्यर्थः अञ्जनस्य=नयनरञ्जकद्रव्यस्य शिलायाः=अश्मनः छेदं=खण्डम् इव चलन्तम् विन्ध्यस्य गिरेः=पर्वतस्य गलन्त=स्रवन्तम् अयसः=लोहस्य सारं=स्थिरांशम् इव सर्वत्रोत्प्रेक्षा करिकुलानां=हस्तिदलानां पाकलं=ज्वरविशेषम् शबरयुवा हि करीणां हन्ता आसीदिति भावः कुरङ्गयूथानां=मृगसमूहानां कालपाशं=मृत्युपाशम् मृगराजानां=सिंहानां चक्राणां=समूहानां धूमकेतुम्=विनाशकरं लम्बपुच्छतारकम् महिषमण्डलानां=सैरिभसमूहानां महानवम्याः=आश्विनशुक्लपक्षस्य नवम्याः तिथेः महम्=उत्सवम् अस्मिन् हि दिवसे दुर्गायै काल्यै च अजानां महिषाणां च बलिर्दीयते उपरि सर्वत्र रूपकम् हिंसाया=विनाशस्य हृदयम् इव अर्थात् तस्मिन् हिंसा स्वपराकाष्ठां प्राप्यतेस्म पापस्य फलमिव=पापं हि श्यामरूपेण वर्ण्यते अत एव स पापपरिणाममिवासीत् कलिकालस्य=कलियुगस्य कारणं=हेतुम् इव कालरात्रेः=प्रलयकालनिशायाः कामुकं=प्रणयिनम् इव उपरि सर्वत्रोत्प्रेक्षा शबरयुवानं=तरुणशबरं आदाय=स्वेन सह आनीय आजगाम=आगच्छत् दूरे च स्थापयित्वा=निधाय स्थितं कृत्वा विज्ञापयामास=निवेदितवान् —सर्वाश्च ताः पल्लयः=क्षुद्रग्रामाः [ 'पल्ल्यल्पग्राम कुटयोः' इति मेदिनी] तासां पतीनाम्=अध्यक्षाणाम् प्राग्रहरः=अग्रणीः निर्घातः नाम यस्य स स्वस्रीयः=स्वसृपुत्रः भागिनेय इत्यर्थः इति यावत् विन्ध्यस्य=विन्ध्याचलस्य ये कान्ताराः=दुर्गमवर्त्माणि ('कान्तारो वर्त्म दुर्गमम्' इत्यमरः) तद् युक्तं यत् अरण्यं=वनम् तस्य पर्णानाम्=पत्राणामपि अभिज्ञः=ज्ञाता किमुत=किं वक्तव्यम् प्रदेशानां=स्थानानाम्। आज्ञां कर्तुं=पालयितुम् क्षितितले=भूतले निहितः=स्थापितः मौलिः=शिरो येन तथाभूतः उपनिन्ये=उपजहार शशोपायनम्=शशरूपप्राभृतम्। अवनिपतिः=राजा हर्षः सम्मानयन्=आद्रियमाणः उपहारम् अप्राक्षीत्=पप्रच्छ। अङ्ग=भो। अभिज्ञाः=परिचिताः उद्देशस्य=प्रदेशस्य। विहारः=विचरणं शीलं येषां ते सेनापतेः=शबरसेनाध्यक्षस्य तस्य अन्यस्य अनुजीविनः=कस्यापि भृत्यस्य वा उदारं महत् रूपं यस्या तथाभूता परमसुन्दरीत्यर्थः। ('उदारो दातृमहतोः' इत्यमरः) नारी=महिला दर्शनगोचरं=दृष्टिविषयं आगता भवेत्=दृष्टा स्यादित्यर्थः।

भूपालस्य=राज्ञो हर्षस्य यः आलपनं=प्रसारः संलापानुग्रहः तेन आत्मानं बहुमन्यमानः=धन्यंमन्यमानः सन्नासीत्

हिन्दी—उसे दूर खड़ा करके उस (व्याघ्रकेतु) ने निवेदन किया—देव! इस सारे ही विन्ध्याचल का स्वामी सभी छोटे-छोटे गाँवों के अध्यक्षों का अग्रणी भूकम्प नामक शबर सेनापति है, उसका यह निर्घात नाम का भान्जा है, जो इस सारे दुर्गम मार्गों वाले विन्ध्यारण्य के पत्ती तक को भी जानता है स्थानों की तो बात दूर रही, आप इसे पूछिये, यह आज्ञा पालन करने योग्य है। इस तरह कहने पर निर्घात ने भूतल पर सिर झुका कर प्रणाम किया और तीतर सहित खरगोश भेंट किया। राजा ने (भेंट का) आदर करते हुए स्वयं ही उसे पूछा—भैया, तुम्हें इस सारे स्थान की जानकारी है। और इन दिनों आप विचरण कर रहे हो। सेनापति अथवा उसके किसी अन्य भृत्य को कोई सुन्दर रूपवाली नारी तो दृष्टिगोचर नही हुई?

निर्घात महाराज द्वारा किये गये वार्तालाप के अनुग्रह से अपने को बड़ा भाग्यशाली मानता हुआ नतमस्तक हो गया और आदर भाव दिखाता हुआ निवेदन करने लगा। महाराज! यहाँ सेनापति के जाने बिना हारिणियाँ तक भी विचरण नहीं किया करती है नारियों की तो बात ही क्या, विशेषतः किसी ऐसी सुन्दर नारी की। तथापि आपकी आज्ञा से अब प्रतिदिन अन्य काम छोड़कर अन्वेषण के लिए प्रयत्न किया जायगा यहाँ से कोई एक कोश ही दूर पर्वत श्रृंखला के

मनन्यकृत्यैः क्रियते यत्नः। इतश्चार्धगव्यूतिमात्र एव मुनिभिर्महिते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपाती प्रभूतान्तेवासिपरिवृतः पाराशरी दिवाकरमित्रनामा गिरिनदीमाश्रित्य प्रतिवसति स यदि विन्देद्वार्ताम्' इति। तच्च श्रुत्वा नरपतिरचिन्तयत्—'श्रूयते हि तत्रभवतः सुगृहीतनाम्नः स्वर्गतस्य ग्रहवर्मणो बालमित्रं मैत्रायणीयस्त्रयीं विहाय ब्राह्मणायनो विद्वानुत्पन्नसमाधिः सौगते मते युवैव काषायाणि गृहीतवानिति। प्रायशश्च जनस्य जनयति सुहृदपि दृष्टो भृशमाश्वासम्। अभिगमनीयाश्च गुणाः सर्वस्य। कस्य न प्रतीक्ष्यो मुनिभावः। भगवती वैधेयेऽपि धर्मगृहिणी गरिमाणमापादयति प्रव्रज्या किं पुनः सकलजनमनोमुषि विदुषि जने। यतो नः कुतूहलि हृदयमभूत्सततमस्य दर्शनं प्रति, प्रासङ्गिकमेवेदमापतितमतिकल्याणं पश्यामः प्रयत्नप्रार्थितदर्शनं जनम्' इति। प्रकाशं चाब्रवीत्—'अङ्ग, समुपदिश तमुद्देशं यत्रास्ते स पिण्डपाती' इति। एवमुक्त्वा च तेनैवोपदिश्यमानवर्त्मा प्रावर्तत गन्तुम्।

---

टीका—मया सह आलापः कृतः इत्यात्मानं श्लाघमानः इति भावः प्रणनाम = प्रणाममकरोत् दर्शितः = प्रकटितः आदरः यथा स्यात्तथा व्यज्ञापयत् = निवेदितवान् अत्र विन्ध्यारण्ये अपरिगता = अज्ञाता: एवंरूपाः = तथोक्तरूपा उदाररूपेति यावत्, अबला = महिला। देवस्य = भवत इत्यर्थः, आदेशात् = आज्ञायाः अन्वेषणं = मार्गणं प्रति न अन्यत् कृत्यः = कार्यं येषां तथाभूतैः अस्माभिः यत्नः क्रियते = करिष्यते इत्यर्थः इतः = अस्मात् स्थानात् गव्यूतेः = क्रोशयुगस्य [ 'गव्यूतिः स्त्री कोशयुगं' इत्यमरः ] अर्धं एवेति अर्धगव्यूतिमात्रं एककोशः इति यावत् तस्मिन् मुनिभिः महिते = पूजिते महीधरमालायाः = पर्वतशृङ्खलायाः मूले = तले रोहति = जायते इति तथोक्ते ( क्विप् ) तस्मिन् महीरुहां = वृक्षाणां षण्डे = समूहे तन्मध्ये इत्यर्थः पिण्डपातः = भिक्षाप्रादनं अस्यास्तीति तथोक्तः = भिक्षाजीवीत्यर्थः प्रभूताः = बहवः ये अन्तेवासिनः = शिष्याः ( 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः ) तैः परिवृतः = परिगतः पाराशरी पाराशर्येण-प्रोक्तं भिक्षुसूत्रमधीते इति पाराशरी भिक्षुविशेषः। ( 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः' पा॰ ४। ३। ११० ) गिरेः = पर्वतस्य नदीम् आश्रित्य = नदीतीरे इत्यर्थः, विन्देत् = लभेत् वार्ताम् = समाचारं अस्याः नार्याः इति शेषः। सुगृहीतनाम्नः = प्रातःस्मरणीयस्य स्वर्गतस्य = स्वर्गं गतस्य परलोकं प्राप्तस्येत्यर्थः बालमित्रं = बाल्यावस्थाया मित्रं = सखा मैत्रायणीयः = मैत्रायणी यजुर्वेदस्य शाखाविशेषः तस्या अयम् त्रयी = वेदत्रयम् [ 'स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी' इत्यमरः ) विहाय = त्यक्त्वा ब्राह्मणायनः = द्विजवरिष्ठः इति शंकरः सौगते = सुगतो = बुद्धः तस्येदं सौगतं मतं तस्मिन् बौद्धमते इत्यर्थः उत्पन्नः समाधिः = ध्यानं यस्य स बुद्धानुयायी भूत्वेति यावत् युवा = तरुणः एव काषायाणि = कषायरक्तानि वसनानि = वस्त्राणि गृहीतवान् = धृतवान्। प्रायशः = प्रायेण सुहृद् = मित्रं दृष्टः = अपि ग्रहवर्मणो मित्रत्वात् दिवाकरमित्रः ममापि मित्रमेवास्ति जनस्य = लोकस्य भृशम् = अत्यधिकं आश्वासम् = समाश्वासनम् जनयति = करोति। न किञ्चित् कुर्वाणोऽपि सुहृद् स्वसाक्षात्कारमात्रेण भृशमाश्वासयतीति भावः गुणाः = दयादाक्षिण्यादयः तद्वन्तो जना इत्यर्थः सर्वस्य जनस्य अभिगमनीयाः = अभिगन्तुं योग्या। भवन्तीति शेषः। मुनिभावः = मुनित्वं कस्य जनस्य प्रतीक्ष्यः = पूज्यः ('पूज्यः प्रतीक्ष्य' इत्यमरः) न, अपितु सर्वस्यैति काकुः। भगवती धर्मस्य-गृहिणी = पत्नी अर्थात् सदाधर्माचरणसम्बद्धा प्रव्रज्या = संन्यासः वैधेये = मूर्खे अपि गरिमाणं = गौरवं प्रतिष्ठामिति यावत्

हिन्दी—नीचे वृक्षों की झुरमुट में मुनिपूजित भिक्षावृत्तिवाले अनेक शिष्यों से घिरे हुए पाराशर्य सम्प्रदाय के दिवाकर मित्र नामक भिक्षु पहाड़ी नदी के किनारे रहते हैं। सम्भवतः उन्हें इस सम्बन्ध में समाचार मिला हो, यह सुनकर राजा ने सोचा सुनते तो हैं कि आदरणीय प्रातःस्मरणीय दिवंगत गृह वर्मा के बचपन के मित्र मैत्रायणी शाखा वाले द्विज वरिष्ठ ये विद्वान् वेदों ( वैदिक धर्म ) को छोड़कर बौद्धमत मे ध्यान लगाये युवावस्था में ही गेरुवा वस्त्र धारण कर बैठे। मित्र दृष्टिगोचर होता हुआ भी प्रायः लोगों में बड़ा आश्वासन उत्पन्न कर देता है। गुणों की ओर सभी बढ़ते हैं मुनित्व किसके लिए पूज्य नहीं। धर्म सहचारिणी भगवती प्रव्रज्या ( संन्यास ) मूर्ख को भी गौरव प्रदान कर देती है। तो सभी लोगों का मन हरण करने वाले विद्वान् व्यक्ति की तो बात ही क्या है, तभी तो हमारा हृदय उनके दर्शन के लिए उत्सुक हो उठा है, यह महान् कल्याण ( का अवसर ) प्रसङ्गवश ही उपस्थित हो पड़ा है। मैं इस जन को देखूंगा। जिसके दर्शन प्रयत्नों से ही प्रार्थना करने पर मिलते हैं। और प्रकट में राजा बोला, भैया उस स्थान को दिखा जहाँ भिक्षु रहते हैं यह कह कर उसके द्वारा बताये गये मार्ग से वह जाने लगा।

अथ क्रमेण गच्छत एव तस्य अनवकेशिनः, कुड्मलितकर्णिकाराः, प्रचुरचम्पकाः, स्फीतफलेग्रहयः, फलभरभरितनमेरवः, नीलदलनलदनारिकेलनिकराः, हरिकेसरसरलपरिकराः, कोरकनिकुरम्बरोमाञ्चितकुरबकराजयः, रक्ताशोकपल्लवलावण्यलिप्यमानदशदिशः, प्रविकसितकेसररजोविसर[1]बध्यमानवासरधूसरिमाणः, स्वरजःसिकतिलतिलकतलाः, प्रविचलितहिङ्गवः, प्रचुरपूगफलाः, प्रसवपूगपिङ्गलप्रियङ्गवः, परागपिञ्जरितमञ्जरीपुञ्ज्यमानमधुपमञ्जुशिञ्जाजनितजनमुदः, मदमलमेचकितमुचुकुन्दस्कन्धकाध्यमाननिःशङ्ककरिकरटकण्डूतयः उड्डीयमाननिःशङ्कचटुलकृष्णसारशावसकलशाद्वलसुभगभूमयः, तमः-

टीका-आपादयति=जनयति अर्थात् मूर्खोऽपि संन्यासी लोके गौरवपात्रं भवति, सकलजनानां मनांसि मुष्णाति=हरतीति तथोक्ते विदुषि=पण्डिते। कुतूहलि=उत्सुकं प्रसङ्गात् भगिनीमार्गणात् आगतं इति प्रासङ्गिकं अतिकल्याणं=प्रभूतं मांगलिकं आपतितम्=घटितम् प्रयत्नेन प्रार्थितम्=याचितम् दर्शनं यस्य तम् जनम्=दिवाकरमित्रं पश्यामः। प्रकाशं=प्रकटं समुपदिश=निर्दिश उद्देशं=स्थानं उपदिश्यमानं=निर्दिश्यमानं वर्त्म=मार्गं यस्मै स प्रावर्तत=प्रवृत्तोऽभवत् अत्र क्रमेण गच्छत एव तस्य पुरस्ताद्दर्शनपथं=अवतेरुः तरवः इत्यस्ति प्रधानवाक्यं। तस्य हर्षस्य=अनवकेशिनः=अवकेशी=अफलः ['वन्ध्योऽफलोऽवकेशी च' इत्यमरः] न अवकेशिनः अनवकेशिनः=फलयुक्ता इत्यर्थः कुड्मलिता=मुकुलिता-कलिकारूपा: इत्यर्थः कर्णिकाराः=पुष्पविशेषाः येषु सौन्दर्यं तु भवति किन्तु गन्धो न जायते येषु ते प्रचुराः=बहवः चम्पकाः=एतदाख्यपुष्पविशेषाः तस्य वृक्षाः=तरवः येषु ते फलानां भरेण=भारेण भरिताः=पूरिताः नमेरवः=वृक्षविशेषाः येषु ते नीलानि दलानि=पत्राणि येषां तथाभूता जलदानां=सुगन्धितघासविशेषाणां नारिकेलानां च=निकराः=निचयाः येषु ते हरि० हरयः=हरितवर्णाः केसराः=नागकेसरा ['चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः' इत्यमरः] सरलाः=देवदारुसजातीयवृक्षविशेषाश्च, परिकरे=परिपार्श्वे येषां ते कोरक० कोरकाणां=मुकुलानां कुरम्बेण=निचयेन रोमाञ्चिताः=पुलकिताः इवेति गम्योत्प्रेक्षा कुरबकाणां=पुष्पवृक्षविशेषाणां राजयः=पङ्क्तयः येषु ते रक्ता० रक्ताशोकस्य=लोहिताशोकवृक्षस्य पल्लवानां=किसलयानां लावण्येन=सौन्दर्येण लिप्यमानाः=लिप्तीक्रियमाणाः दशदिशः येषु ते प्रविक०- प्रविकसिताः=प्रकर्षेण फुल्लिताः ये केशराः=चाम्पेयाः तेषां रजसः=परागस्य विसरेण=प्रसरेण विकिरणेनेत्यर्थः बध्यमानः=रच्यमानः इत्यर्थः वासरस्य=दिवसस्य धूसरिमा=धूसरत्वं येषु ते स्वरजसा=स्वपरागेण सिकतिलं=बालुकामयं तिलकानां तिलकवृक्षाणां तलम्=अधोभागः येषु ते प्रवि०-प्रविचलिताः=प्रकम्पिताः हिङ्गवः=रामठवृक्षाः येषु ते प्रचुराणि=प्रभूतानि पूगानां=सुपारीत्याख्यवृक्षाणां फलानि येषु ते प्रसव० प्रसवानां=पुष्पाणां पूगेन=समूहेन पिङ्गलाः=पिङ्गलवर्णाः प्रियङ्गवः=श्यामलताः येषु ते पराग० परागेण=रेणुना पिञ्जरिता=ईषद्रक्तपीता याः मञ्जर्यः=वल्लर्यः तासु पुञ्ज्यमानाः=समूहरूपेण तिष्ठन्तः ये मधुपाः=भ्रमराः तेषां मञ्जु=मधुरा या शिञ्जा=झङ्कारः तया जनिता=कृता जनानां=लोकानां मुद्=आनन्दः येषु ते मद० मदस्य=दानवारिणः मलेन=दूषणेन लाञ्छनेनेत्यर्थः मेचकिता=श्यामलिता ये मुचुकुन्दा=पुष्पवृक्षभेदा तेषां स्कन्धाः=शाखाश्च कांडं=मूलात् शाखापर्यन्तं भागश्च तैः कषिताः=सूचिताः निःशङ्कानां=निर्भीकाणां करिणां=हस्तिनां करटस्य=गण्डस्थलस्य कण्डूतिः=खर्जूनिवारणार्थं घर्षणं येषु ते उड्डीय० उड्डीयमाना=उच्छ-

हिन्दी-इसके बाद जाते-जाते राजा को क्रमशः सामने के वृक्ष दिखाई दिये जो बिना फलों के नहीं थे। जहाँ कनेरों पर कलियाँ फूट पड़ी थीं। चम्पा प्रचुर मात्रा में खिला था, फल खूब लगे हुए थे। फलों के भार से नमेरु भरे हुए थे। काले पत्तों वाले उशीर (खसखस) और नारियल के ढेर लगे हुए थे, हरे नागकेशर और चीड़ आस-पास में थे। कुरबकों की पंक्तियाँ कलियों के समूह से रोमांचित जैसी हो उठी थी। रक्ताशोकों के पल्लवों के लावण्य से दसों दिशाएँ लिप्त हो रही थी। खूब खिले हुए नागकेशर की पराग बिखरती रहने से दिवस धूसर हो रहा था, तिलकों के तल भाग अपनी रज से रेतीले हो रहे थे, हींग के वृक्ष हिल रहे थे, सुपारी के फल प्रचुर थे, फूलों के ढेर से प्रियंगुलताएँ पीली बनी हुई थी। मञ्जरियों पर पुञ्जरूप से बैठे हुए भ्रमरों की मधुर आवाज लोगों को आनन्दित किये हुई थी। मदजल के मैल से काली पड़ी मुचुकुन्दों की शाखाएँ और तने कह रहे थे कि उनसे हाथियों ने निःशंक हो अपने गण्डस्थल खुजलाए हैं, कृष्णसार मृगों के उछलते-कूदते निःशंक चपल शावकों वाले सभी शाद्वलों की भूमि

1. 'बध्यमानवास....'

कालतमतमालमालामलिनितातपाः, स्तबकदन्तुरितदेवदारवः, तरलताम्बूलीस्तम्बजालकितजम्बूजम्बीरवीरुधः, कुसुमरजोधवलधूलीकदम्बचक्रचुम्बितव्योमानः, बहलमधुमोक्षोक्षितक्षितयः, परिमलघटितघ्राणतृप्तयः, कतिपयदिवसप्रसूतकुक्कुटीकुटीकृतकुटजकोटराः, चटकासञ्चार्यमाणचाटुचाटकैरक्रियमाणचाटवः, सहचरीचारणचञ्चुरचकोरचञ्चवः, निर्भयभूरिभुरण्डभुज्यमानपाककपिलपीलवः, सदाफलकटफलफलविशसननिःशूकशुकशकुन्तशातितशलाटवः, शैलेयसुकुमारशिलातलसुखशयितशशशिशवः, शेफालिकाशिफाविवरविस्रब्धविवर्तमानगोधेरराशयः, निरातङ्कुरङ्कवः, निराकुलनकुलकुलकेलयः, कलकोकिलकुलकवलितकलिकोद्गमाः, सहकारारामरोमन्थायमानचमूरुयूथाः, यथासुखनिषण्णनीलाण्डजमण्डलाः, निर्विकारवृकविलोक्यमानपीतपीतगवय-

---

टीका-लम्ता निःशङ्का=निर्भयाः चटुलाः=चपलाः कृष्णशाराणां=कृष्णसारमृगाणां शावाः=शावकाः येषु तथाभूतानि यानि सकलानि=सर्वाणि शाद्वलानि=हरिततृणमयप्रदेशाः तैः सुभगाः=अभिरम्याः भूमयः=येषु ते तम० तमोवत्=अन्धकारवत् कालतमा=अतिशयेन श्याममवर्णा या तमालानां=तमालाख्यवृक्षाणां माला=राजिः तया मलिनः=व्यवहितः इत्यर्थः आतपः=धर्मं येषु ते स्तबक० स्तबकैः=फलगुच्छैः दन्तुरिताः=उन्नतदन्ताः इव देवदारवः=देवदारुवृक्षाः येषु ते तरल०—तरलाः=दोलायमानाः ताम्बूल्याः=नागवल्ल्याः ये स्तम्बाः=गुल्माः तैः जालकिताः=संग्रथिताः जम्बूनां=जम्बूफलवृक्षाणां जम्बीराणां = जम्बीरफलवृक्षाणां वीरुधः=लताः येषु ते कुसुम० कुसुमानां=पुष्पाणां रजसा=परागेण धवलाः = श्वेताः ये धूलिकदम्बाः = कदम्बवृक्षविशेषाः तेषां चक्रेण =समूहेन चुम्बितं=स्पृष्टमित्यर्थः व्योम=आकाशं येषु ते बहल० बहुलः=प्रभूतः यः मधूनां=मकरन्दानां मोक्षः=पतनमित्यर्थः तेन उक्षिता=सिक्ता क्षितिः=भूमिः येषु ते परि० परिमलेन=सौरभेण घटिता=जनिता घ्राणस्य=घ्राणेन्द्रियस्य तृप्तिः=सन्तुष्टिः यैः ते कतिपयेभ्यः दिवसेभ्यः पूर्वं प्रसूता=कृतप्रसवा या कुक्कुटी=चरणायुधस्त्री तया कुटीकृतः=कुटीरीकृतः नीडं कृत इत्यर्थः कुटजस्य=पुष्पवृक्षविशेषस्य कोटरः क्रोडः येषु ते चटका० चटकाभिः=पक्षिविशेषैः कलविङ्कैरित्यर्थः सञ्चार्यमाणाः=वृक्षात् वृक्षान्तरम् नीयमानाः इत्यर्थः चाचाटाः=कूजन्तः चाटकैराः=चटकापत्यानि अत्र चाटकैरपाठः साधीयान् ('चटकाया ऐरच्' पा० ४।१।१२०) ('चटका कलविङ्कः स्यात् तस्य स्त्री चटका तयोः पुमपत्ये चाटकैरः' इत्यमरः) तैः क्रियमाण चाटुः=प्रियवाक्यं मधुररवः इति यावत् येषु ते सहच० सहचरीणां=स्ववधूनां चारणे-भोजनप्रेरणे मुखं भोजनदाने इत्यर्थः चञ्चुराः=निपुणाः चकोराणां=एतदाख्यपक्षिभेदानां चञ्चवः=मुखानि येषु ते निर्भय०-निर्भयाः भूरयः=प्रभूताः ये भुरण्डाः=पक्षिविशेषाः तैः भुज्यमानानि=भक्ष्यमाणानि पाकेन=परिपक्वतया कपिलानि=ईषद्रक्तानि पीलूनि=फलविशेषाः येषु ते सदा० सदाफलाः=वृक्षविशेषाः कटफलाः=वृक्षविशेषाश्च तेषां फलानां विशसने=विनाशने निःशूकाः=निर्दयाः ये शुकाः=कीररूपाः शकुन्ताः=पक्षिणः अथवा शुकाश्च शकुन्ताश्चैतैः शातितानि = नीचैः पातितानि—शलाटूनि = अपक्वफलानि येषु ते ['आमे फले शलाटुः स्यात्' इत्यमरः] शैलेय० शैलः=पर्वतः तस्येय इति शैलेया या

हिन्दी-अभिराम बनी हुई थी। तम की तरह काली-काली तमाल वृक्षों की पंक्ति से धूप व्यवहित हो गयी थी, देवदारु वृक्ष (फलों के) गुच्छों से दन्तुरित जैसे हो उठते थे, नागवल्ली के हिलते हुए काण्डों से जामुनों और जमीरों की पंक्तियाँ उलझी हुई थीं। कुसुमधूलि से श्वेत बना हुआ धूलिकदम्बों का समूह गगन को चूमे हुए था, बड़ी मात्रा में टपकते हुए मकरन्द से भूमि सिक्त थी, परिमल घ्राणेन्द्रिय को तृप्त किए हुए था, कुछ दिन पूर्व प्रसव की हुई मुर्गी ने कुटज के खोखले को अपना घर बनाया हुआ था, चिड़ियाओं द्वारा इधर-उधर घुमाए जाते हुए चिचयाते अपने बच्चों द्वारा चाटुकारिता (खुशामद) की जा रही थी, चकोरों की चोंचें अपनी सहचरियों को चुगा खिलाने में निपुण थीं, निर्भय हो बहुत से भरुण्ड पक्षी पक कर पीले बने हुए पीलू फलों को खा रहे थे। सदाफलों और कटफलों को नष्ट ध्वस्त करने में निर्दय बने हुए तोतों और अन्य पक्षियों द्वारा कच्चे फल नीचे गिराये हुए थे। खरगोशों के बच्चे पर्वत के कोमल शिलातलों पर आनन्द से सोये पड़े थे। निर्गुण्डी की जड़ों के विवरों में गोधों के बच्चे निःशंक लोट रहे थे। मृग निर्भय थे, नेवलों का समूह बिना घबराये विलास कर रहा था, मधुर बोलती हुई कोयलों का समूह कलियों के अंकुर चट कर गया था। आम्रों के उद्यानों में चमूर जाति के मृगों का झुण्ड जुगाली कर रहा था नीलाण्डज नाम का मृग सुखपूर्वक बैठा हुआ था। चुपचाप (खड़े) भेड़िये द्वारा नील गायें देखी जा रही थीं जिनका

धेनवः, अवप्पहारिसमीपगिरिनितम्बनिर्झरनिनादनिद्रानन्दमन्दायमानकरिकुलकर्णतालदुन्दुभयः, समासन्नकिन्नरीगीतरवरस-मानरुरवः, प्रमुदिततरतरक्षवः क्षतहरितहरिद्राद्रवरज्यमाननववराहपोतपोत्रवलयः, गुञ्जागुञ्जत्कुञ्जजाहकाः, जातीफलक-सुप्तशालिजातकवलयः, वशमकुपितकपिपोतपेटकपाटितपाटलमुखकीटपुटकाः, लकुचलम्पटगोलाङ्गूललङ्घ्यमानलवलयः, बद्ध-बालुकालवालवल्याः, कुटिलकुटावलिर्वालितवेगगिरिनिम्नगास्रोतसः, निबिडशाखाकाण्डलम्बमानकमण्डलवः, सूत्रशिक्यासक्त-

---

टीका-सुकुमारा = कोमला शिला = प्रस्तरः तस्य तले = अधोभागे सुखेन = सुखपूर्वकम् शयिता = निद्राणाः शशानाम् = शशकानाम् शिशवः = शावकाः येषु ते शेफा० शेफालिकायाः = निर्गुण्डया शिफायाः = मूलस्य विवरेषु = कोटरेषु विस्रब्धम् = निश्शङ्कम् यथा स्यात्तथा विवर्तमानाः विलुठन्तः गोधेराणां = गोधिकात्मजानां ( 'त्रयो गौधेर-गोधार-गौधेया गोधिकात्मजा' इत्यमरः ) राशयः = समूहा येषु ते निरा० निरातङ्का = निश्शङ्का रङ्कवः = मृगाः येषु ते निराकु० निराकुलाः = निःशंकाः नकुलानाम् = अहिद्विषाम् केलयः = क्रीडा येषु ते कल० कलं = मधुरं स्वरं यत् कोकिलानां = पिकानां कुलं = समूहः ते कवलिता = ग्रासीकृता भक्षिता इत्यर्थः कलिकानां = कुड्मलानां उद्गमा = प्ररोहा येषु ते सह० सहकाराणां = आम्राणां ये आरामाः = उपवनानि तेषु रोमन्थायमानं = रोमन्थं भक्षितस्य पुनः चर्वण-मित्ति यावत् कुर्वन् चमूरूणां = मृगविशेषाणां यूथं = समूहः येषु ते यथा० सुखमनतिक्रम्येति यथासुखं = सुखपूर्वकं निषण्णम् = स्थितम् नीलाण्डजानां = मृगभेदानां इति शंकरः नीलानां = नीलवर्णानां अण्डजानां = पक्षिणाम् इति कौतेलमहोदयः मण्डलं = समूहः येषु ते निर्विका० निर्विकाराः = विकाररहिताः निश्चला इत्यर्थः ये वृकाः = ईहामृगाः आरण्यश्वानः इति यावत् तैः विलोक्यमानाः = दृश्यमानाः पोतैः = वत्सैः पीताः = कृतस्तन्यपानाः गवयधेनवः = गोसदृशा गवयपदवाच्या पशुविशेषाः येषु ते श्रवण० श्रवणं = श्रोत्रं हरति = आकर्षतीति तथोक्तः श्रोत्रसुखदायकः इत्यर्थः यः सनीडस्य = समीपस्य [ 'समीपे निकटासन्नसंनिकृष्टसनीडवत्' इत्यमरः ] गिरिनितम्बस्य = गिरितटस्य निर्झरः = प्रपातः तस्य निनादेन = झरझरशब्देन ( उत्पन्ना ) या निद्रा तया यः आनन्दः तेन मन्दायमानाः = मन्दीभवन्तः ह्रसन्तः इति यावत् करिकुलानां = गजवृन्दानां कर्णतालाः = कर्णास्फालनानि दुन्दुभयः = इवेत्युपमितत्वम् येषु ते समा० समासन्नाः = सन्निहिताः याः किन्नर्यः = किन्नरस्त्रियः तासां गीतस्य = गानस्य रवेण = ध्वनिना रसमाना = रसं (सुखम्) अनुभवन्तः वस्तुतस्तु चौरादिक रस ( आस्वादने ) धातोः शानचि रसमानाः इत्येव रूपमुचितम्। रुरवः = एतदाख्य-मृगविशेषाः येषु ते अतिशयेन प्रमुदिताः प्रमुदिततराः = हृष्टतरा तरक्षवः = मृगादनाः येषु ते [ 'तरक्षुस्तु मृगादनः' इत्यमरः ] क्षत० क्षता = भग्ना हरिता = ईषत्पीता इत्यर्थः या हरिद्रा = काञ्चनी तस्या द्रवेण = रसेन रज्यमाना = रञ्जितं भवत् नवानां = नूतनानां वराहपोतानां = शूकरशिशूनाम् पोत्रवलयानि = मण्डलकारमुखा-ग्राणि येषु ते ( 'मुखाग्रे क्रोड हलयोः पोत्रं' इत्यमरः ) गुञ्जा० गुञ्जानां = रक्तिकानां कुञ्जेषु = लतागृहेषु गुञ्जन्तः = शब्दायमानाः जाहकाः = गन्धमार्जाराः नकुलसदृगवन्यमार्जारविशेषा इति यावत् येषु ते जाति० जातिफलकेषु = एतदाख्यवृक्षविशेषेषु सुप्तं = निद्रितं शालिघातकानां = प्राणिविशेषाणां वलयं = मण्डलं येषु ते दशन० दशनेन = दंशनेन कुपिता = क्रुद्धाः ये कपिपोतानां = वानरशिशूनां पेटकाः = समूहाः तैः = पाटितः = विनाशितः पाटलमुखानां = पाटल-वर्णानां कीटानां पुटकः = कोटरम् आलयः इत्यर्थः येषु ते लकुच० लकुचेषु = फलविशेषेषु लम्पटा = लुब्धाः तदभिलाषुका इत्यर्थः ये गोलांगूलाः = कृष्णाननवानरविशेषाः तैः लंघ्यमानाः = अतिक्रम्यमाणाः लवलयः = लताविशेषा येषु ते बहूनि =

हिन्दी-स्तनपान उनके बच्चे कर चुके थे। समीपवर्ती पहाड़ी की ढलान के झरने की कर्णप्रिय ध्वनि से उत्पन्न निद्रा के आनन्द में गजयूथों की दुन्दुभि की सी कानों की फड़फड़ाहट मन्द पड़ रही थी। रुरु मृग पास में ही स्थित किन्नरियों की गीतध्वनि का रस ले रहे थे, तेंदुए अति प्रसन्न थे, उखाड़ी हुई हरी हल्दी के रस से सूअरों के नव शावकों के मण्डलाकार मुखाग्र भाग रंगे जा रहे थे, रत्ती की झाड़ियों में मार्जार बोल रहे थे, जायफल के वृक्षों के नीचे शालि-घातक जीवों का दल सोया पड़ा था, डसने से क्रुद्ध हुए वानरों के बच्चों के दल द्वारा लाल मुँह वाले कीड़ों का घर नष्ट-भ्रष्ट किया गया था बड़हर के लोभी लंगूरों द्वारा लवलीलताओं पर उछालें मारी जा रही थी, ( वृक्षों के नीचे ) रेत के थावलों के घेरे बांधे हुए थे। टेढ़े-मेढ़े वृक्षों की पंक्ति से पहाड़ी नदियों के जल प्रवाह का वेग रुक जाता था, शाखाओं के घने काण्डों पर कमण्डलु लटक रहे थे सूत्र के बने छींकों पर धरे खाली भिक्षापात्रों से लता मण्डप

रिक्तभिक्षाकपालपल्लवितलतामण्डपाः, निकटकुटीकृतपाटलमुद्राचैत्यकमूर्तयः, चीवराम्बररागकषायोदककलुषितोद्देशाः, मेघमया इव कृतशिखण्डिकुलकोलाहलाः, वेदमया इवापरिमितशाखाभेदगहनाः, माणिक्यमया इव महानीलतनवः, तिमिरमया इव सकलजननयनमुषः, यामुना इवोर्ध्वीकृतमहाह्रदाः, मरकतमणिश्यामलाः क्रीडापर्वतका इव वसन्तस्य, अञ्जनाचला[1] इव पल्लविताः, तनया इवाटवीजाता विन्ध्यस्य, पातालान्धकारराशय इव भित्त्वा भुवमुत्थिताः, प्रतिप्रवेशका[2] इव वर्षावासराणाम्, अंशावतारा इव कृष्ण[3]रात्रीणाम्, इन्द्रनीलमयाः इव वनदेवतानाम्, पुरस्ताद्दर्शनपथमयतेरुस्तरवः।

टीका—रचितानि इत्यर्थः वालुकया=सिकतया आलवालानां=आवापानां वलयानि=मण्डलानि येषां ते कुटिल० कुटिलाः =वक्राः या कुटानां=वृक्षाणां [ 'अनेकहः कुटः शालः पलाशीद्रुद्रुमागमाः' इत्यमरः ] आवलिः=राजिः तया वलयितः =प्रत्यावर्तितः अथवा रुद्धः वेगः यासाम् तथाभूतानां गिरिनदिकानां=पर्वतीयनदीनां स्रोतांसि=प्रवाहाः येषु ते निविड० निविडेषु=घनेषु शाखानां काण्डेषु=स्कन्देषु लम्बमानाः कमण्डलवः=मुनिजनपात्राणि येषु ते सूत्र० सूत्राणां शिक्येषु=तन्तुनिर्मितकाचेषु आसक्तानि=स्थितानि रिक्तानि=शून्यानि यानि भिक्षाकपालानि भिक्षा-पात्राणि तैः पल्लविताः=सञ्जातपल्लवाः इवेति गम्योत्प्रेक्षा लतामण्डपाः=कुञ्जाः येषु ते निकटा० निकटासु= सन्निहितासु कुटिषु=उटजेषु कृता=रचिता पाटलया=पाटलवर्णया मुद्रया=रचनयेत्यर्थः चैत्यकानां=लघु चैत्यानां स्मारकाणां समाधीनां पवित्रवृक्षाणां मननायेदयर्थः मूर्तयः=आकृतयः येषु ते चीवरा० चीवरान्तराणां=मुनि-वस्त्राणां ['चीवरं मुनिवासः' इति क्षीरस्वामी ) रागेण=लौहित्येन कषायाणि=रक्तानि यानि उदकानि तैः दूषिता= आविला उद्देशा=प्रदेशा येषां ते कृतः शिखण्डीनां=मयूराणां कुलेन=समूहेन कोलाहलः कृतः येषु ते अतएव मेघ-मया=मेघरूपा इव अर्थात् मेघदर्शने मयूराः नृत्यन्ति केकां च कुर्वन्ति तरुगहनेऽपि ते तथैव कुर्वन्ति स्म अतएव तरूणां मेघमयत्वमुत्प्रेक्षितं अपरिमिताः = अनेकाः याः शाखाः विटपाः अन्यत्र भागाः तासां भेदैः विशेषैः गहना =दुर्गमाः अन्यत्र दुरधिगमाः अतएव वेदमया इव महानीलः=महानीलमणिः तन्वां येषां ते अतएव माणिक्यमया= मण्यात्मकाः इव सकलानां=सर्वेषां जनानां=लोकानां नेत्राणि=नयनानि मुष्णन्ति=हरन्ति इति तथोक्ता तिमिरमयाः =अन्धकारात्मकाः इव तरवः सौन्दर्येण लोकनयनानि हरन्ति स्म, तिमिरमपि लोकनयनानि हरति=उपरुणद्धीति अर्थः। यामुना० यमुनायाः इमे इति ( अण् ) ऊर्ध्वीकृताः=उपरि उत्थापिताः महाह्रदाः=जलप्रवाहाः मरकतमणिवत् श्यामलाः=श्यामवर्णाः ( तरवः ) वसन्तस्य मरकतमणिभिः श्यामलाः=क्रीडापर्वतकाः=विहारपर्वताः इव वृक्षा हि विशेषतः वसन्ते पत्रश्यामलाः जायन्ते अञ्जनस्य=नेत्ररञ्जकद्रव्यविशेषस्य अचलाः=पर्वताः पल्लविताः=सञ्जात-पल्लवाः इव अटवी=अरण्यानि तस्यां जाताः=उत्पन्नाः विन्ध्यस्य तनया पुत्राः इव भूवं=पृथिवीं भित्त्वा=पाटयित्वा उत्थिता=उद्गताः पातालस्य अन्धकारस्य राशयः=समूहाः इव वर्षावासराणां=वृष्टिदिनानां=प्रतिप्रवेशकाः=

**टिप्पणी—शाखा**—वेदों के परम्परागत पाठ भेदों को शाखा कहते हैं। वे कितनी ही हैं। ऋग्वेद की इक्कीस शाखाएँ हैं। जिनमें मुख्य शाकल और बाष्कल हैं। यजुर्वेद की एक सौ, सामवेद की एक हजार और अथर्ववेद की दो शाखाएँ हैं। इनका महाभाष्य में उल्लेख आया है। 'एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधा अथर्वणो वेदाः।'

**हिन्दी**—पल्लवित हुए जैसे लग रहे थे, समीपवर्ती कुटियों में ( दीवारों पर ) लाल मुद्रा से चैत्यों की मूर्तियाँ बनी हुई थीं। और मुनि लोगों के कपड़ों के रङ्ग से लाल बने हुए जलों द्वारा स्थान दूषित हो रहे थे जो ( वृक्ष ) मयूर समूह द्वारा किए हुए कोलाहल से भरे ऐसे लग रहे थे मानों मेघमय हों, अपरिमित शाखाओं ( टहनियों ) के भेदों से गहन ( दुर्बोध ) बने ( वेद रूप हो ) महानील ( बड़े काले ) ( तनु ) ( आकृति ) वाले ऐसे लगते थे मानों महानील ( मणि विशेष ) को तनु के भीतर रखे माणिक्यमय हों, सभी लोगों के नयनों को हर लेने वाले मानों अन्धकार रूप हों, ऊपर उठाए हुए मानों यमुना के महाजल प्रवाह हों, मरकतमणि के समान काले ऐसे लग रहे थे मानों वसन्त के मरकत मणियों से काले बने हुए क्रीड़ा पर्वत हों, अञ्जन के पर्वत मानों पल्लवयुक्त हो उठे हों, अटवी से उत्पन्न मानों विन्ध्य के पुत्र हों, पृथिवी को फोड़कर ऊपर उठे मानों पाताल के अन्धकारों के ढेर हों। वर्षा के दिनों के मानों पड़ोसी हों, कृष्णपक्ष की रात्रि के मानों आंशिक अवतार हों और वन देवताओं के मानों इन्द्रनील मणियों के पहलू हों।

१. अञ्जनाचलमया इव। २. प्रतिवेशिका। ३. कृष्णार्धरात्रीणाम्।

ततो नरपतेरभवन्मनस्यदूरवर्तिना खलु भवितव्यं भदन्तेनेति । अवतीर्य च गिरिसरिति समुपस्पृश्य युगपद्विश्रामसमयसमुन्मुक्तहेषाघोषबधिरीकृताटवीगहनामस्मिन्नेव प्रदेशे स्थापयित्वा वाजिसेनामवलम्ब्य च तपस्विजनदर्शनोचितं विनयं हृदयेन दक्षिणेन च हस्तेन माधवगुप्तमंसे विरलैरेव राजभिरनुगम्यमानश्चरणाभ्यामेव प्रावर्तत गन्तुम् ।

अथ तेषां तरूणां मध्ये नानादेशीयैः स्थानस्थानेषु स्थाणूनाश्रितैः शिलातलेषूपविष्टैर्लताभवनान्यध्यावसद्भिररण्यानीनिकुञ्जेषु निलीनैर्विटपच्छायासु निषण्णैस्तरुमूलानि निषेवमाणैर्वीतरागैराहतैर्मस्करिभिः श्वेतपटैः पाण्डुरभिक्षुभिर्भागवतैर्वर्णिभिः केशलुञ्चनैः कापिलैर्जैनैर्लोकायतिकैः काणादैरौपनिषदैरैश्वरकारणिकैः कारन्धमिभिर्धर्मशास्त्रिभिः पौराणिकैः साप्त-

---

टीका-अस्पष्टार्थोऽयं ॰ब्दः । अस्य वाच्यार्थः प्रतिहारः इत्यस्ति । वैज्ञानिकानां कथनमस्ति तरवः वृष्टिम् आनयन्तीति । शंकरस्तु अत्र प्रतिप्रसवकाः इति पाठं दत्वा प्रतिच्छन्दकाः [प्रतिबिम्बा=प्रतिमूर्तयः] इति व्याचष्टे । कॉवेलस्तु" प्रतिवेशिकाः ( =प्रतिवेशिनः ) इति पाठं दत्ते । कृष्णरात्रीणां =कृष्णपक्षनिशानाम् अंशावताराः=आंशिकावतारा इव इन्द्रनीलमयाः =इन्द्रनीलमण्यात्मकाः प्रासादाः=हर्म्याणि इवेति उपरि सर्वत्रोत्प्रेक्षा क्वचित् श्लिष्टा काचित् साधारणा पुरस्तात्=अग्रतः दर्शनपथं=दृष्टिगोचरताम् अवतेरुः=अवगताः तरवः=वृक्षाः । मनसि अभवत्=विचारः उत्थितः अदूरवर्तिना समीपेन भदन्तेन=मान्यबौद्धभिक्षुणा भवितव्यं=भाव्यम् अवतीर्य अश्वात् गिरिसरिति पर्वतनद्यां समुपस्पृश्य=आचम्य युगपत्=समकालं यः विश्रामस्य समयः तेन समुन्मुक्तः=मुखात् निस्सारितः कृतः इत्यर्थः यः हेषारवः=हिनहिनत्कारः तेन बधिरीकृतं=बधिरत्वं नीतम् अटव्याः=वनस्य गहनं=कठिनं दुर्गमं स्थानमित्यर्थः यया ताम् वाजि-सेनाम्=अश्वसैन्यम् अस्मिन् एव प्रदेशे स्थापयित्वा=स्थितां कृत्वा हृदयेन=मनसा तपस्विजनस्य=मुनिलोकस्य दर्शनस्य उचितम् विनयं=नम्रताम् अवलम्ब्य=आश्रित्य दक्षिणेन हस्तेन=च माधवगुप्तं=कनीयांसं मालवकुमारम् अंसे=स्कन्धे विरले=अल्पे एव राजभिः अनुगम्यमान.=अनुस्रियमाणः गन्तुं प्रावर्तत=प्रारभत् ।

अथ [ तेषां तरूणां मध्ये-दिवाकरमित्रमद्राक्षीत् इत्यस्ति मुख्यवाक्यम् ] नानादेशीयैः=नानादेशानामित्यर्थः एतत् अन्यानि च तृतीयानि आवेद्यमानम् इत्यनेन सम्बध्यन्ते स्थाणून्=स्तम्भान् आश्रितैः=स्थाणूनाश्रित्य स्थितैरित्यर्थः शिलातलेषु=प्रस्तरफलकेषु उपविष्टैः=स्थितैः लताभवनानि=लतागृहाणि अध्यासद्भिः=अधिवसद्भिः अरण्यान्याः=महारण्यस्य ['महारण्यमरण्यानी' इत्यमरः] निकुञ्जेषु=लतामण्डपेषु निलीनैः=स्थितैः विटपानां=शाखानां छायासु=अनातपेषु निषण्णैः=स्थितैः तरूणां=वृक्षाणां मूलानि निषेवमाणैः=आश्रयद्भिः वीतः=अपगतः रागः=कामः येषां तथाभूतैः अर्हतैः=जैनदार्शनिकैः=तीर्थङ्करैरित्यर्थः अथवा वीतरागैः अर्हतैः=इतिपृथक् योजनीयम् । मस्करिभिः=[ भिक्षुः परिव्राट् कर्मन्दी पाराशर्य:.........मस्करी इत्यमरः ] श्वेतः पटः येषां तैः श्वेताम्बर जैनैः पाण्डुरभिक्षुभिः=व्यक्तकषायैः बौद्धभिक्षुभिः इति शंकरः । भागवतैः=विष्णुभक्तैः वर्णिभिः=ब्रह्मचारिभिः ['वर्णिनो ब्रह्मचारिणः' इत्यमरः] केशान् लुञ्चन्तीति केशलुञ्चकाः=लुञ्चितकेशाः दिगम्बरजैनाः यथोक्तम्-'लुञ्चिता पिच्छिकाहस्ताः पाणिपात्राः दिगम्बराः' इति कापिलैः=सांख्यमतप्रवर्तककपिलमुनेः अनुयायिभिः जैनैः लोकायतिकैः=लोकायतं शास्त्रं येषाम् अस्तीति तथोक्तैः

हिन्दी-तदन्तर राजा ने सोचा कि आदरणीय बौद्ध भिक्षु सचमुच अब बहुत दूर नहीं होने चाहिए [ थोड़ा सा ] उतरकर पहाड़ी नदी में कुल्ला आदि करके, एक साथ रुक जाने का अवसर आने से की गई हिनहिनाहट की ध्वनि द्वारा अटवी के गहन प्रदेशों को बहरा बनाये हुए अश्व सेना को इसी स्थान में खड़ा करके हृदय से तपस्वी जनों के दर्शन के उचित विनयभाव अपनाकर और दांये हाथ से माधवगुप्त का कन्धा पकड़कर पीछे-पीछे आ रहे इने गिने राजाओं के साथ हर्ष पैदल ही जाने लगा ।

इसके बाद राजा ने उन वृक्षों के बीच दिवाकर को देखा जिनका दूर से ही उन लोगों को पता लग रहा था, जो उनके शिष्य बने हुए थे नाना देशों से आये हुए थे स्थान स्थान में खम्भों का सहारा लिए हुए थे शिलातलों पर बैठे हुए थे शाखाओं की छाया में स्थित थे—वृक्षों की जड़ों का आश्रय ले रहे थे ( कुछ ) वीतराग तीर्थङ्कर थे ( कुछ ) भिक्षु, और श्वेताम्बर जैन थे ( कुछ ) श्वेतवसन धारी बौद्ध भिक्षु; वैष्णव, ब्रह्मचारी, लुञ्चित केशों वाले, कपिल मतानुयायी, जैन, चार्वाक, वैशेषिक, वेदान्ती, नैयायिक, धर्मशास्त्री, पौराणिक, यज्ञवादी, मीमांसक, शैव, वैयाकरण, नारद के पञ्चरात्र

तान्त्रवैः शैवैः शाब्दैः पाञ्चरात्रिकैरन्यैश्च स्वान्स्वान्सिद्धान्ताञ्शृण्वद्भिरभियुक्तैश्चिन्तयद्भिश्च प्रत्युच्चरद्भिश्च संशयानैश्च निश्चिन्वद्भिश्च व्युत्पादयद्भिश्च विवदमानैश्चाभ्यस्यद्भिश्च व्याचक्षाणैश्च शिष्यतां प्रतिपन्नैर्दूरादेवावेद्यमानम्, अतिविनीतैः कपिभिरपि चैत्यकर्म कुर्वाणैस्त्रिसरणपरैः परमोपासकैः शुकैरपि शाक्यशासनकुशलैः कोशं समुपदिशद्भिः शिक्षापदोपदेशदोषोपशमशालिनीभिः शारिकाभिरपि धर्मदेशनां दर्शयन्तीभिरनवरतश्रवणगृहीतालोकैः कौशिकैरपि बोधिसत्त्वजातकानि जपद्भिर्वातिसौगतशीलशीतलस्वभावैः शार्दूलैरप्यमांसाशिभिरुपास्यमानम्, आसनोपान्तोपविष्टविस्रब्धानेककेसरिशावकतया मुनिपरमेश्वरमकृत्रिम इव सिंहासने निषण्णम्, उपशममिव पिबद्भिर्वनहरिणैर्जिह्वालताभिरुपलिह्यमानपादपल्लवम्, वामकरतल-

---

टीका-अनात्मवादिभिः=चार्वाकमतानुयायिभिः नास्तिकैरिति यावत् काणादैः=कणादानुगामिभिः वैशेषिकैरित्यर्थः औपनिषदैः=उपनिषत्सिद्धान्तिभिः वेदान्तिभिरित्यर्थः ऐश्वरकारणैः=ईश्वरः जगतः कारणं ये मन्यन्ते तैः गौतममतानुयायिभिः नैयायिकैरितियावत् कारन्धमिभिः=धातुवादिभिः रसायनवादिभिरिति यावत् [ 'कारन्धमी कांस्यकारे धातुवादरतेऽपि च' इति मेदिनी] धर्मशास्त्रिभिः=मन्वादिधर्मशास्त्रानुयायिभिः पौराणिकैः=पुराणानि अधीते वेत्ति वेति (पुराण + ठक्) पुराणवादिभिः—सप्ततन्तुः=यज्ञः 'सप्ततन्तुर्मखः यज्ञः क्रतुः' इत्यमरः ) सप्तभिश्छन्दोभिस्तन्यते ( इति क्षीरस्वामी ) स एव·······येषामस्तीति सप्ततन्तवः तैः=यज्ञवादिभिः शाब्दैः=शब्दशास्त्रं व्याकरणमित्यर्थः अधीयते विन्दन्तीति वा तथोक्तैः वैयाकरणैरित्यर्थः पाञ्चरात्रिकैः=पञ्चरात्रः नारदप्रवर्तितः पञ्चरात्रसिद्धान्तः तमनुगच्छन्तीति पाञ्चरात्रिकाः तैः अन्यैः=अन्यसिद्धान्तानुयायिभिश्च युक्तैः=अभिनिविष्टैः शृण्वद्भिः=आकर्णयद्भिः चिन्तयद्भिः=विचारयद्भिः प्रत्युत्तरद्भिः=कथयद्भिः संशयानैः=संशयं कुर्वद्भिः निश्चिन्वद्भिः=निर्णयद्भिः व्युत्पादयद्भिः=व्युत्पादनं कुर्वद्भिः विवदमानैः=विवादं कुर्वद्भिः अभ्यसद्भिः=अभ्यावृत्तिं कुर्वद्भिः व्याचक्षाणैः=व्याख्यां कुर्वद्भिः शिष्यतां=शिष्यत्वं छात्रत्वमित्यर्थः प्रतिपन्नैः=प्राप्तैः दूरादेव आवेद्यमानम्=सूच्यमानम् ज्ञाप्यमानमित्यर्थः कपिभिः=वानरैः एतत् अन्यानि च तृतीयान्तानि उपास्यमानमित्यन्तेन सम्बध्यन्ते चैत्येषु=मठादिषु कर्म=सेवाबन्दनादिकं कुर्वाणैः=कुर्वद्भिः त्रिसरणम्=त्रिशरणम् ( पाल्यां त्रिसरणम् ) परं प्रधानं येषां तैः परमोपासकैः=परमनिष्ठावद्भिः शाक्यस्य=बुद्धस्य शासनं=उपदेशः तस्मिन् निपुणैः=कुशलैः कोशम्=वसुबन्धुकृतं बौद्धसिद्धान्तम् इति शंकरः समुपदिशद्भिः=शिक्षयद्भिः शिक्षा० शिक्षापदानां=भिक्षूणां कृते जीवननियामकानां शुकैः=कीरैः अपि दशादेशानां उपदेशेन यः दोषाणां=पापानां उपशमः=उपरमः तेन शालन्ते=शोभन्ते इति तथोक्ताभिः शारिकाभि=मैनापदवाच्यपक्षिभिः अपि धर्मस्य देशनां=शिक्षां दर्शयन्तीभिः

**टिप्पणी—पाञ्चरात्रिक**—महाभारत के अनुसार नारद पञ्चरात्र मत के प्रवर्तक थे जिसे उन्होंने नारायण से प्राप्त किया था (देखिए शान्तिपर्व ३४०-११२) ( 'सांख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् । नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः" ) रात्र ज्ञान को कहते हैं जो पांच प्रकार का है । "रात्रं तु ज्ञानं वचनं ज्ञानं पञ्चविधं स्मृतम् । पञ्चरात्रमितिख्यातम्" । **त्रिसरण**—शुद्ध शब्द त्रिशरण है । बौद्ध मत में बुद्ध, धर्म और संघ ये तीन शरण कहे गये हैं । इन्हें लेकर तीन बार कहा जाता है । "बुद्धं शरणं गच्छामि" "धम्मं शरणं गच्छामि" "संघं शरणं गच्छामि" ।

**हिन्दी**-सिद्धान्तवाले एवं अन्य अपने-अपने सिद्धान्तों के पोषक थे, जो अपने-अपने सिद्धान्तों का श्रवण कर रहे थे, उन पर विचार कर रहे थे, पढ़ रहे थे, संशय कर रहे थे, निर्णय ले रहे थे, व्युत्पादन कर रहे थे, विवाद कर रहे थे, बारम्बार अभ्यास में लगे हुए थे और व्याख्या कर रहे थे । जिन ( दिवाकरमित्र ) की आराधना चैत्यों का काम करते हुए अति विनम्र वानर तक भी, तीन शरणों का ( नाम बोलने ) में लगे हुए परम उपासक बुद्ध के उपदेशों में दक्ष, वसुबन्धु कृत कोश का उपदेश करते हुए तोते तक भी, ( दश ) शिक्षा पदों ( सिक्खापदों ) के उपदेश द्वारा ( रागादि दोषों ) का उपशमन कर देने वाले धर्मोपदेश करती हुई मैना तक भी, निरन्तर सुनते रहने से ( आलोक ) प्रकाश अथवा ज्ञान प्राप्त किये हुए बोधिसत्त्व ( बुद्ध ) की जातक कथाओं को जपते हुए उल्लू तक भी, बुद्ध प्रतिपादित ( दश ) शीलों से स्वभाव को शीतल बनाये हुए निरामिष भोजी व्याघ्र तक भी कर रहे थे । जो ( दिवाकरमित्र ) मुनियों के ईश्वर ( अधिराज ) थे और सिंहों के बच्चों के निर्भय हो पास बैठे रहने के कारण ऐसे लग रहे थे मानो असली सिंहासन पर बैठे हुए हों । जिनके चरण किसलयों को लता जैसी जिह्वाओं से चाटते हुए वन मृग ऐसे लग रहे थे मानो शमभाव को पान कर रहे

निविष्टेन नीवारमश्नता पारावतपोतेन कर्णोत्पलेनेव प्रियां मैत्रीं प्रसादयन्तम्, इतरकरकिसलयनखमयूखलेखाभिर्जनितजन-व्यामोहम् उद्ग्रीवं मयूरं मरकतमणिकरकमिव वारिधाराभिः पूरयन्तम्, इतस्ततः पिपीलकश्रेणीनां श्यामाकतण्डुलकणान्स्वय-मेव किरन्तम्, अरुणेन चीवरपटलेन म्रदीयसा संवीतम् बहलबालातपानुलिप्तमिव पौरन्दरं दिग्भागमुल्लिखितपद्मरागप्रभा-प्रतिमया रक्तावदातया देहप्रभया पाटलीकृतानां काषायग्रहणमिव दिशामप्युपदिशन्तम्, अनौद्धत्यादधोमुखेन मन्दमुकुलितकुमु-

---

टीका–धर्मोपदेशं कुर्वतीभिरित्यर्थः अनव० अनवरतं = निरन्तरं यत् श्रवणं = जातकावाद आकर्णनं तेन गृहीतः आलोकः = प्रकाशः (ज्ञानं) यैः तैः कौशिकैः = उलूकैः अपि बोधिसत्त्वस्य = बुद्धस्य जातकानि = पूर्वजन्मीयकथाः जपद्भिः = कथयद्भि-रित्यर्थः जातः = उत्पन्नः सौगतैः = सुगतो बुद्धः तस्य इमानि इति सौगतानि = बुद्धप्रतिपादितानि इत्यर्थः यानि शीलानि = आचरणानि नैतिकनियमाः इति यावत् तैः शीतलः = अनुष्णः शान्तस्वभावः = प्रकृतिः येषां तैः अमांसाशिभिः शार्दूलैः = व्याघ्रैः अपि उपास्यमानम् = सेव्यमानम् 'उपरि सर्वत्र कैमुतिकन्यायेन अर्थापत्तिः अलंकारः' आसन्नो० आसनस्य उपान्ते = समीपे उपविश्य = स्थिता विस्रब्धाः = निश्शंकाः अनेके केशरिणां = सिंहानां शावकाः = शिशवः यस्य तस्य भावः तत्ता तया मुनीनां परमेश्वरम् = श्रेष्ठम् मुनीन्द्रमित्यर्थः अकृत्रिमे = स्वाभाविके सिंहानां आसने निषण्णम् = स्थितम् अयं भावः ईश्वरः (सम्राट्) यस्मिन् सिंहासने तिष्ठति तत् कृत्रिमं भवति अर्थात् तस्मिन् सिंहस्य केवलम् आकृतिरेव चित्रिता भवति किन्तु एष मुनीश्वरस्तु अकृत्रिमे सिंहासने ( सिंहस्थाने ) तिष्ठति अत एव व्यतिरेकः उपश० उपशमम् = शान्ति पिबद्भिः = पानविषयीकुर्वद्भिः इव जिह्वा लता इवेत्युपमितसमासः ताभिः उपलिह्यमानाः = आस्वाद्यमानाः पादपल्लवाः = चरण-किसलयाः यस्य तम् हरिणाः तस्य पादाभ्यां मानसिकशान्ति पिबन्ति स्मेति कविकल्पना वाम० वामे करतले = निविष्टेन = स्थितेन नीवारं = तृणधान्यम् ( 'तृणधान्यानि नीवाराः' इत्यमरः ) अश्नता = भक्षयता कर्णोत्पलेन = कर्णादुगलितेन कर्णाभरणरूपेण धृतेन उत्पलेन = नीलकमलेन इवेत्युपमायां पारावतस्य = कपोतस्य पोतेन = शावकेन प्रियां = दयिताम् इष्टां मैत्रीम् अपकारिण्यां प्रीतिः इति शंकरः भूतमात्रे सद्भावनेत्यर्थः तां प्रसादयन्तम् = आराधयन्तम् प्रियाशब्देनात्र इदमपि व्यज्यते यद् असौ पारावतपोतेन कर्णोत्पलेनेव ( उत्प्रेक्षा ) स्वप्रियतमां ( प्रणयकुपितां ) मैत्रीम् प्रसादयति-स्मेति। इतर० इतरेण = द्वितीयेन दक्षिणेनेत्यर्थः करकिसलयस्य = हस्तपल्लवस्य नखमयूखानां = नखकिरणाना लेखाभिः = अवलिभिः जनितः = कृतः लोकानां = जनानां व्यामोहः = मोहनं येन तम् उत् = ऊर्ध्वं ग्रीवा यस्य तम् मयूरं मरकतमणेः करकं = कमण्डलुम् ( 'कमण्डलौ च करकः' इत्यमरः ) वारिधाराभिः = जलधाराभिः पूरयन्तम् = भरन्तम् इवेत्युत्प्रेक्षा इतस्ततः पिपीलिकानां = पिपीलानां श्रेणीनां श्यामाकतण्डुलानां = मुनिधान्यविशेषाणां कणान् किरन्तम् = विक्षिपन्तम् अरुण० अरुणेन = रक्तवर्णेन चीवरं = मुनिवसनं तस्य पटलेन = आच्छादनेन म्रदीयसा = अतिशयेन मृदुना संवीतम् = आवृ-तम् ( 'संवीतं रुद्धमावृतम्' इत्यमरः ) बहलः = प्रचुरः यः बालातपः = नवसूर्यालोकः प्रातःकालीनसूर्यरक्तप्रभेतियावत् तेन अनुलिप्तम् = रञ्जितमित्यर्थः पौरन्दरं = पुरन्दरस्य = इन्द्रस्य इमम् दिग्भागं = दिशाविभागम् पूर्वदिशामित्यर्थः उल्लिखितः = शाणे घृष्टः यः पद्मरागः = पद्मरागमणिः तस्य प्रभा = कान्तिः प्रतिमा = प्रतिमानं प्रतिमूर्तिरिति यावत् यस्याः

**टिप्पणी**—शिक्षापद को पाली में सिक्खापद कहते हैं ये बुद्ध भगवान के दश उपदेश हैं इन्हें ही दश शील भी कहा जाता है। ये दश हैं—अहिंसा, अस्तेय, शौच, सत्य, मदिरात्याग, निषिद्ध समय में भोजन त्याग, सांसारिक मनोविकारों का त्याग, अंग राग एवं भूषणों का त्याग, विशाल-भूषित शय्या का त्याग और द्रव्य का अग्रहण।

**हिन्दी**–हों जो बायें करतल पर बैठे हुए मुनि धान्य खाते कबूतर के बच्चे से ऐसे प्रतीत होते थे मानो प्रिया मैत्री (जीवमात्र के प्रति सद्भावना) को कर्णोत्पल द्वारा प्रसन्न कर रहे हों जो दूसरे (दाहिने) कर पल्लव के नखों की किरण कलियों से लोगों को मोहित करते हुए ऊपर गर्दन किए मोर के मुंह में जल धारा डालते हुए ऐसे लगते थे मानो मरकतमणि की कलशी को भर रहे हों जो इधर-उधर चीटियों की पंक्तियों के लिए साँवा चावल की कणियों को स्वयं बिखेर रहे थे जो घने बालातप से रंगे पूर्व दिग्भाग के सदृश लाल मुनिजनोचित वस्त्र से आच्छादित हुए शाण चढ़ी पद्मराग मणि की प्रभा की तरह अपनी लाल श्वेत देह प्रभा से लाल बनाई हुई दिशाओं को भी मानो कषाय वस्त्र धारण करने का उपदेश दे रहे थे, जो विनय के कारण नतमुख हुए, कुछ बन्द हुए कुमुद के सदृश श्वेत और प्रसन्न चक्षु से लोगों द्वारा पद

वाकारेण स्निग्धधवलप्रसन्नेन चक्षुषा जनक्षुण्णक्षुद्रजन्तुजीवनार्थममृतमिव वर्षन्तम्, सर्वशास्त्राक्षरपरमाणुभिरिव निर्मितं परम-सौगतमप्यवलोकितेश्वरम्, अस्खलितमपि तपसि लग्नम्, आलोकमिव यथावस्थितसकलपदार्थप्रकाशकं दर्शनार्थिनाम्, सुगतस्याप्यभिगमनीयमिव, धर्मस्याप्याराधनीयमिव, प्रसादस्यापि प्रसादनीयमिव, मानस्यापि माननीयमिव, वन्द्यत्वस्यापि वन्दनीयमिव, [1]आत्मनोऽपि स्पृहणीयमिव, ध्यानस्यापि ध्येयमिव, ज्ञानस्यापि ज्ञेयमिव, जन्म[2] जपस्य, नेमिं नियमस्य, तत्त्वं तपसः, शरीरं शौचस्य, कोशं कुशलस्य, वेश्म विश्वासस्य, [3]सर्वस्वं सद्वृत्ततायाः[4], दाक्ष्यं दाक्षिण्यस्य, पारं परानुकम्पायाः, निर्वृतिं सुखस्य, मध्यमे वयसि वर्तमानं दिवाकरमित्रमद्राक्षीत् । अतिप्रशान्तगम्भीराकारारोपितबहुमानश्च सादरं दूरादेव सम शिरसा मनसा वचसा च ववन्दे ।

---

टीका—त्वया रक्तया = रक्तवर्णया अवदातया = श्वेतवर्णया च देहस्य प्रभया = कान्त्या पाटलीकृतानां = रक्तश्वेतीकृतानां दिशाम् = आशानां काषायग्रहणं = काषायवस्त्रधारणम् इव उपदिशन्तम् = शिक्षयन्तम् अनौ० अनौद्धत्यात् = औद्धत्यराहित्याद् नम्रभावेनेत्यर्थः अधोमुखेन = नतमुखेन मन्दम् = ईषत् यथा स्यात्तथा मुकुलितं = मुकुलावस्थां प्राप्तं यत् कुमुदं = रात्रिकमलं तस्य आकारः इव आकारो यस्य तेन तत्सदृशेनेत्यर्थः स्निग्धं = स्नेहपूर्णं धवलं = श्वेतञ्च प्रसन्नं शान्तमित्यर्थः तेन चक्षुषा = नयनेन जनैः = लोकैः क्षुण्णाः = पददलिताः ये क्षुद्राः = लघवः जन्तवः = जीवाः तेषां जीवनायेति जीवनार्थम् अमृतम् इव वर्षन्तम् = विकिरन्तम् अमृतमपि स्निग्धं ( चिक्कणं ) धवलं प्रसन्नं ( स्वच्छं ) भवति अत एव अमृतवृष्टित्वेन उत्प्रेक्षा सर्व० सर्वशास्त्राणां यानि अक्षराणि = वर्णाः एव परमाणवः = जगन्निर्मातृसूक्ष्मभूतानि तैः इवेत्युत्प्रेक्षायाम् निर्मितं = उत्पन्नं अर्थात् स सकलशास्त्राणां ज्ञाता आसीत् । परमः = महान् सौगतः = बुद्धस्य अनुयायी अपि अवलोकितः = दृष्टः स्वीकृतः इत्यर्थः ईश्वरः = परमात्मा येन तम् यः खलु परमबुद्धभक्तः स कथं ईश्वरवादी बौद्धैः ईश्वरस्य अस्वीकृतत्वात् इति विरोधः तत्परिहारस्तु अवलोकितेश्वरः = बोधिसत्त्वविशेषः यः उत्तरभारते पूज्यते तम् अस्खलितम् = अपतितम् अपि तपसि तपस्यायां लग्नं = संसक्तम् यः एव स्खलितो भवति स एव अवलम्बनाय क्वचित् लग्नो भवति अस्खलितोऽपि लग्नः इति विरोधः तत्परिहारश्च अस्खलितम् = धर्ममार्गात् अभ्रष्टम् तपसि संसक्तं चेति दर्शनं = साक्षात्कारं अन्यत्र तत्त्वज्ञानम् अर्थयन्ते = कामयन्ते इति तथोक्तानां कृते यथा येन = रूपेण अवस्थिताः वर्तमानाः ये सकलाः = समस्ताः पदार्थाः = वस्तूनि तेषां प्रकाशकं = बोधकम् अन्यत्र व्याख्यातारम् आलोकम् = प्रकाशम् इवेत्युपमायां यथा सूर्यस्य दीपादीनां वा आलोकः यथावस्थितान् = पदार्थान् प्रकाशयति तद्वत् सोऽपि यथावस्थितपदार्थानां व्याख्यां करोति स्मेति भावः सुगतस्य = बुद्धस्य अपि अन्येषां तु वार्तैव केत्यर्थापत्तिः अभिगमनीयम् = आश्रयणीयम् इवेत्युत्प्रेक्षायाम् महाज्ञानित्वात्, आराधनीयम् = आराधानायोग्यं महाधार्मिकत्वात् प्रसादस्य = अनुग्रहस्यापि प्रसाद-

हिन्दी—दलित हुए क्षुद्र जीवजन्तुओं के जीवन के लिए मानो अमृतवर्षा कर रहे थे जो सकल शास्त्रों के अक्षरों के परमाणुओं से जैसे निर्मित हुए थे जो बुद्ध के कट्टर अनुयायी होते हुए भी ( अवलोकितेश्वर ) ईश्वर को देखे = माने हुए थे, नहीं नहीं अवलोकितेश्वर ( बोधिसत्त्व विशेष ) थे । जो स्खलित ( ठोकर खाकर गिर पड़े ) न होने हुए भी तप में लग्न ( सहारा लिए हुए ) थे, नही नहीं स्खलित (धर्म मार्ग से च्युत) न होते हुए भी तप में लग्न ( व्यस्त थे )। जो आलोक की तरह दर्शनार्थियों ( दर्शन चाहने वालों ) तत्त्व ज्ञान के इच्छुकों के लिए यथावस्थित सकल पदार्थों के प्रकाशक ( दिखाने वाले व्याख्याता ) थे । जो बुद्ध के भी आश्रय योग्य जैसे, धर्म के भी आराध्य जैसे, प्रसाद के भी प्रसाद जैसे, सम्मान के भी सम्माननीय जैसे, वन्द्यत्व के भी वन्द्य जैसे, आत्मा के भी स्पृहणीय जैसे, ध्यान के ध्यान योग्य जैसे, और ज्ञान के भी ज्ञेय जैसे थे। जो जप के उत्पत्तिस्थान, नियम की चक्र (परिधि), तप के तत्त्व, शुद्धता के शरीर, कल्याण के निधि, सच्चरित्र के सर्वस्व, शिष्टता के नैपुण्य, पर दया के अन्त एवं सुख के सुख थे और मध्य आयु के थे ( उनकी ) अति प्रशान्त एवं गम्भीर आकृति के कारण ( उनके प्रति हृदय में ) महान् आदर भाव रखे हुए हर्ष ने दूर से ही आदरपूर्वक शिर, मन और वाणी द्वारा उन्हें प्रणाम किया ।

---

१. आत्मनोऽपि ज्ञेयत्वमिव एतद् क्वचिन्नास्ति । २. जन्म यमस्य ।
३. सद्वृत्तम् । ४. सद्वृत्ततायाः सर्वस्वं सर्वज्ञतायाः ।

दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या विशेषतस्तेनापरेणादृष्टपूर्वेणामानुषलोकोचितेन सर्वाभिभाविना महानुभावाभोगभाजा भ्राजिष्णुना भूपतेरप्राकृतेनाकारविशेषेण तेन चाभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण चाह्लादितश्चक्षुषि च चेतसि च युगपदग्रहीत् । धीरस्वभावोऽपि च सम्पादितससम्भ्रमाभ्युत्थानः सचूलम्य किञ्चिदुद्गमनकेन विलोलं विलम्बमानं वामांसाच्चीवरपटान्तमुत्क्षिप्यानेकाभयदानदीक्षादक्षिणो दक्षिणं महापुरुषलक्षणलेखाप्रशस्तं हस्तं स्निग्धमधुरया वाचा सगौरवमारोग्यदानेन राजानमन्वग्रहीत् । अभ्यनन्दच्च स्वागतगिरा गुरुमिवाभ्यागतं बहु मन्यमानः स्वेनासनेनाध्यमन्त्रेति निमन्त्रयांचक्रे । पार्श्वे

---

टीका-नीयम् = प्रसादनयोग्यं इव मानस्य = सम्मानस्य अपि माननीयं = सम्मानयोग्यं वन्द्यत्वस्य = वन्दनार्हत्वस्य स्पृहणीयम् = अभिलषणीयम् उपरि सर्वत्र उत्प्रेक्षा, जन्म = उत्पत्तिस्थानं जपस्य = मानसप्रार्थनाया इत्यर्थः नेमि = परिधि पराकाष्ठामिति यावत् नियमस्य = धर्मानुष्ठानस्य अथवा योगाङ्गविशेषस्य [ शौच: सन्तोष: तपः स्वाध्याय: ईश्वरप्रणिधानानि नियमाः ] ( योग सू०—२।३२ ) तत्त्वं = वास्तवरूपं तपसः = तपस्यायाः इव कोषं = निधिम् कुशलस्य कल्याणस्य वेश्म = गृहम् सर्वस्वम् = सर्वधनम् सद्वृत्ततायाः = सच्चरित्रतायाः दाक्षिण्यस्य = शिष्टतायाः दाक्ष्यं = नैपुण्यम् शिष्टतायाः परिपूर्णत्वमित्यर्थः परेषु अनुकम्पा = दया तस्याः पारम् = अन्तम् परां कोटिमित्यर्थः निर्वृत्तिः = सुखम् सुखस्य सुखमपि तं प्राप्य सुखी भविष्यतीति भावः मध्ये वयसि = प्रौढावस्थायाम् अद्राक्षीत् = अपश्यत् । अतिशयेन प्रशान्तः = प्रकर्षेण शान्तः गम्भीरः = गम्भीरश्च यः आकारः = आकृतिः तेन आरोपितः = स्थापितः बहुमानः = अत्यादरः यस्मिन् तथाभूतः अर्थात् दिवाकरमित्रस्य शान्तगम्भीराकृतिं दृष्ट्वा राज्ञो मनसि तस्मिन् महान् आदरभावः उत्पन्नः सादरं = आदरपूर्वकम् समं = सहैव ववन्दे = प्रणतवान् तेन वाण्या प्रणामं करोमीत्युक्त्वा शिरोनमितमित्यर्थः । -

प्रकृत्या = स्वभावतः मैत्री एव मैत्रीमयः = सद्भावनापरिपूर्णः इत्यर्थः विशेषतः तेन अपरेण = नास्ति परः द्वितीयः यस्मात् तेन अनन्येनाद्वितीयेनेत्यर्थः अदृष्टपूर्वेण = पूर्वं कदापि न दृष्टेन, न मानुषलोकस्य = मनुष्यलोकस्य उचितेन = योग्येन मनुष्यलोकाद् बहिर्भूतेन दिव्येनेति यावत् सर्वान् अभिभवति = अतिक्रामतीति तथोक्तेन सर्वातिशायिनेत्यर्थः महान् अनुभावः = प्रभावः यस्य तथाभूतः यः आभोगः = शरीरविस्तारः व्यक्तित्वमितियावत् तं भजति = आश्रयतीति तथोक्तेन भ्राजिष्णुना = राजमानेन भूपतेः = राज्ञः हर्षस्य अप्राकृतेन = असाधारणेन आकारविशेषेण = विशिष्टाकृत्या अभिजातः = कुलीनः तस्य भावः आभिजात्यं कुलीनत्वमित्यर्थः तस्य प्रकाशकेन = द्योतकेन गरीयसा = अतिशयेन गुरुणा = महता प्रश्रयेण = विनयेन च आह्लादितः = प्रहृष्टः चक्षुषि = नयने चेतसि = हृदये च राजानं युगपत् = समम् अग्रहीत् = गृहीतवान् अर्थात् चक्षुषा हृदयेन च तस्य स्वागतमकरोत् । धीरः = धीरतापरिपूर्णः स्वभावः = आकृतिः यस्य स अत्र 'धीरस्वभावः' इति पाठः साधीयान् सम्पादितं = कृतं ससंभ्रमम् = सवेगम् अभ्युत्थानम् ( राज्ञः स्वागतार्थम् ) समुत्थानं येन स उद्गमनकेन = उत्थानेन किञ्चित् विलोल = चञ्चलं विलम्बमानं दोलायमानं वामात् अंसात् = स्कन्धात् चीवरपटस्य = मुनिवसनस्य अन्तः = प्रान्तभागं संकलय्य = संगृह्य अनेकेषां जीवानां कृते यानि अभयदानानि = अभयमस्त्विति वचनदानानि तेषां दीक्षा = वृत्तं अत्र दक्षिणः = अनुकूलः दिवाकरमित्रः महापुरुषस्य यानि लक्षणानि = चिह्नानि तेषां लेखाभिः = रेखाभिः प्रशस्त = प्रशंसनीयं दक्षिणं = वामेतरं हस्तम् उत्क्षिप्य = ऊर्ध्वीकृत्य स्निग्धया = स्नेहपूर्णया मधुरया च वाचा = वाण्या सगौरवं = गौरवपूर्वकम् आरोग्यस्य = नैरुज्यस्य दानेन राजानं = हर्षम् अन्वगृहीत् = अनुगृहीतवान् स्वागतस्य = शुभागमनस्य गिरा = वाण्या अभ्यागतम् = अतिथि हर्षमित्यर्थः गुरुमाचार्यम् इवेत्युपमालाम् बहु-

हिन्दी-दिवाकरमित्र जो स्वभावतः मैत्रीमय थे विशेषतः राजा के उस अनन्य और अदृष्टपूर्व, मनुष्यलोक के अयोग्य सब का पराभव कर देने वाले महान् प्रभावशाली शरीर गठन रखे हुए तेजपूर्ण, असाधारण आकृति विशेष और उच्च कुलीनता द्योतक महान् विनय से आह्लादित हुए, उसे एक साथ ही नयनों और हृदय में ग्रहण कर बैठे । धीर स्वभाव के होते हुए भी ( स्वागतार्थ ) जल्दी खड़े होकर उठने से हिले डुले बायें कन्धे से लटकते हुए चीवर वस्त्र का छोर बटोरते हुए अनेकों जीवों को अभय दान का वचन देने के वृत्त मे निपुण दिवाकरमित्र ने महापुरुषों के लक्षणों की रेखाओं से सराहनीय बना अपना दाहिना हाथ उठाकर स्नेह भीनी मधुर वाणी से आदरपूर्वक राजा को आरोग्य प्रदान द्वारा अनुगृहीत किया और स्वागत वचन द्वारा उसका अभिनन्दन किया एवं अतिथि को गुरु की तरह बड़ी मान्यता

स्थितं च शिष्यमब्रवीत्—'आयुष्मन्, उपानय कमण्डलुना पादोदकम्' इति। राजा त्वचिन्तयत्—'अलोहः खलु संयमनपाशः सौजन्यमभिजातानाम्। स्थाने खलु तत्रभवान्गुणानुरागी ग्रहवर्मा बहुशो वर्णितवानस्य गुणान्' इति। प्रकाशं चाबभाषे—'भगवन्, दर्शनपुण्यानुगृहीतस्य मम पुनरुक्त इवायमार्यप्रयुक्तः प्रतिभात्यनुग्रहः। चक्षुष्प्रमाणप्रसादस्वीकृतस्य च परकरणमिवासनादिदानोपचारचेष्टितम्। 'अतिभूमिर्भूमिरेवासनं भवादृशां पुरः, सम्भाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशवृत्ति पाद्यमप्यपार्थकम्। आसतां भवन्तो यथासुखम्। आसीनोऽहम्' इत्यभिधाय क्षितावेवोपाविशत्।

'अलंकारो हि परमार्थतः प्रभवतां प्रश्रयातिशयः, रत्नादिकस्तु शिलाभारः' इत्याकलय्य पुनः पुनरभ्यर्थ्यमानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनं तदा स्वमेवासनं पुनरपि भेजे भदन्तः। भूपतिमुखनलिननिहितनिभृतनयनयुगलनिगडनिश्चलीकृत-

---

टीका—मन्यमानः = आद्रियमाणः अभ्यनन्दत् = अभिनन्दितवान् स्वेन = निजेन आसनेन आध्वम् [आस + लोट् मध्यमपुरुष बहु० व० ] = उपविशत इति निमन्त्रयाञ्चक्रे = निमन्त्रितवान्, अब्रवीत् = अवदत् पादोदकं = पाद्यम् पादप्रक्षालनार्थंजलमित्यर्थः अभिजातानां = उच्चकुलोत्पन्नानां सौजन्यं = सज्जनता खलु निश्चयेन अलोहः = अलोहनिर्मितः संयमनस्य = बन्धनस्य पाशः = रज्जुः भवतीति शेषः। स्थाने (अव्य०) उचितमेवैतत् तत्रभवान् = आदरणीयः गुणानामनुरागी = प्रेमी बहुशः = बहुबारम् वर्णितवान् = अवर्णयत् प्रकाशं = प्रकटं यथास्यात्तथा आबभाषे = अकथयत् दर्शनमेव पुण्यं तेन अनुगृहीतस्य = अनुकम्पितस्य पुनरुक्तः = अपेक्षातिरिक्तः अनावश्यकः इत्यर्थः आर्येण = भवता प्रयुक्तः = कृतः अनुग्रहः = पादोदकम् आसनदानम् प्रतिभाति = प्रतीयते चक्षुः = नेत्र प्रमाणं = ज्ञानसाधनम् यस्य तथाभूतः यः प्रसादः = अनुग्रहः तेन स्वीकृतस्य = आत्मीकृतस्य मम आसनादीनां दानम् एव उपचारः = शिष्टाचारः तस्य चेष्टितं = व्यापारः परकरणं = आत्मनोभिन्नीकरणम् इत्यर्थः अर्थात् आर्यस्य नयनेन एव मयि महान् अनुग्रहो दर्शितः अहमात्मीयः कृतः उपचारेण तु भवान् मां परकीयीकरोति परकीयेष्वेव उपचारदर्शनात् भवादृशां = भवत्सदृशानां पुरः = अग्रे भूमिः = पृथिवी एव आसन = स्थानम् अतिभूमिः = सम्मानस्य पराकाष्ठेत्यर्थः, सम्भाषणं = वार्तालापः एव अमृतं तेन यः अभिषेकः = सेचनं तेन क्षालितं = धौतं शुद्धीकृतमिति यावत् सकलं वपुः = शरीरं यस्य तस्य मे प्रदेशे = शरीरस्यैकभागे पादे इत्यर्थः वृत्तिः = स्थितिः यस्य तत् पाद्यम् = पादोदकम् अपि अपार्थकम् = व्यर्थं। अयं भावः सम्भाषणामृतसेकेन यदा सकलमेव शरीरं प्रक्षालितं जातं तदा शरीरैकदेशभूतयोः पादयोः प्रक्षालनार्थं जलस्य नास्ति आवश्यकता। यथासुखं = सुखपूर्वकम् आसताम् = उपविशन्तु अहमासीनः = स्थितोऽस्मि भूमौ एवं अभिधाय = कथयित्वा क्षितौ = भूमौ एव उपाविशत् = अतिष्ठत्। परमार्थतः = वस्तुतः प्रभवतां = प्रभावशालिना, प्रश्रयस्य = विनयस्य अतिशयः = अतिरेकः रत्नादिकस्तु = अलंकारः शिलाभारः = प्रस्तराणां भारः रत्नानां शिलात्वादिति आकलय्य = अवबुध्य अभ्यर्थ्यमानः = प्रार्थ्यमानः अपि पार्थिवः = राजा हर्षः वचनं = कथनं न प्रत्यपद्यत = स्वीकृतवान् स्वम् = निजमेवासनम् भदन्तः =

हिन्दी—देकर यहाँ विराजिए कहकर अपने आसन पर बैठने के लिए आमन्त्रित किया और पास बैठे शिष्य को कहा आयुष्मन् कमण्डलु से इनके पांव पखारने के लिए जल लाओ, राजा सोचने लगा उच्च कुलीन की सज्जनता वास्तव में बाँधने के लिए बिना लोहे का पाश हुआ करती है, सचमुच यह उचित ही था कि गुणानुरागी मान्य गृहवर्मा ने इनके गुणों का बारम्बार वर्णन किया और प्रकट में बोला भगवन् दर्शन रूपी पुण्य से अनुगृहीत हुए, मेरा आप द्वारा किया जा रहा यह अनुग्रह मुझे आवश्यकता से अधिक जैसा लग रहा है चक्षु प्रमाण से (दिये गए) अनुग्रह द्वारा आत्मीय बनाये मुझे आसन देने के शिष्टाचार वाली (आपकी) चेष्टा पराया जैसा बना रही है आप जैसों के सामने भूमि को ही आसन बनाना (गौरव की) पराकाष्ठा है वार्तालाप रूपी अमृत के सेवन द्वारा धो दिये गये सारे ही शरीर वाले मेरे शरीर के एक देश (पैर) से सम्बन्ध रखने वाला पादोदक बेकार है आप सुविधा से बैठिए मैं बैठा हुआ हूँ ऐसा कह कर राजा हर्ष भूमि पर ही बैठ गये।

वास्तव में प्रभावशाली व्यक्तियों का अत्यन्त विनय भाव ही अलंकार हुआ करता है, रत्नादि तो शिला भार है यह सोचकर बार-बार प्रार्थना किये जाने पर भी जब राजा ने कहना नहीं माना, तो भदन्त फिर अपने ही आसन पर बैठ गये। राजा के मुख कमल पर गड़ाये एकटक लगाये नयन युगल रूपी बन्धन द्वारा हृदय को निश्चल किये हुए कुछ

---

१. अतिभूमिरेव भवादृशाणाम्।

हृदयस्य स्थित्वा कांचित्कालकलां[1] कलिकालकल्मषकालुष्यमिव क्षालयद्भिरमलाभिर्दन्तमयूखमालाभिर्मूलफलाभ्यवहारसम्भव-सुरभमिव च परिमलसुभगं विकचकुसुमपटलपाण्डुरं लतावनमवादीत्—'अद्यप्रभृति न केवलमयमनिन्द्यो वन्द्योऽपि प्रकाशित-सत्सारः संसारः। किं नाम नालोक्यते जीवद्भिरद्भुतं येन रूपमचिन्तितोपनतमिदं दृक्पथमुपगतम्। एवंविधैरनुमीयन्ते जन्मान्तरावस्थितसुकृतानि हृदयोत्सवैः। इहापि जन्मनि वत्समेधास्माधममुना तपःक्लेशेन फलमसुलभदर्शनं दर्शयता देवानां प्रियम्। आ तृप्तेः पीतममृतमीक्षणाभ्याम्। जातं निरुत्कण्ठं मानसं निर्वृत्तिसुखस्य। महद्भिः पुण्यैर्विना न विश्राम्यन्ति सज्जने त्वादृशि दृशः। सुदिवसः स यस्मिञ्जातोऽसि। सा सुजाता जननी या सकलजीवलोकजीवितजनकमजनयदायुष्मन्तम्।

---

टीका-माननीयभिक्षुः दिवाकरमित्र इत्यर्थः भेजे=सेवितवान् अध्यतिष्ठदित्यर्थः भूपति० भूपतेः=राज्ञः हर्षस्य मुखं=आननं नलिनं=कमलं इवेत्युपमितत्तरु० तस्मिन् निहितं=दत्तं निभृतं=अविचलं नयनयोः युगलं=द्वयम् एव निगडः=पाशः तेन निश्चलीकृतं=स्थिरीकृतं हृदयं यस्य स कांचित् कालस्य कलां समयभागं (कालात्यन्तसंयोगे द्वि०) स्थित्वा अमलाभिः=निर्मलाभिः दन्तमयूखानां=दशनकिरणानां मालाभिः=अवलिभिः कलिकालस्य=कलियुगस्य यत् कल्मषं=पापं ('पापं किल्विष कल्मषम्' इत्यमरः) तस्य कालुष्यं=मलम् इवेत्युत्प्रेक्षायाम् क्षालयन्=प्रक्षालयन् मूलानि च फलानि च तेषां यः अभ्यवहारः=भक्षणम् तस्मात् सम्भवः=उत्पत्तिः यस्य तत् परिमलेन=सौरभेण सुभगं=सुन्दरम् विकचितानि=विकसितानि यानि पुष्पाणि=तेषां पटलेन=समूहेन पाण्डुरं=श्वेतम् लतानां वनम् उद्वमन् =मुखादुद्गिरन् इवेत्युत्प्रेक्षायाम् अवादीत्=अवदत् अकथयत् अद्यप्रभृति=अद्यतनदिवसात् आरभ्य प्रकाशितः =प्रकटीकृतः सन् उत्कृष्टसारः=स्थिरांशः येन अथवा प्रकाशितः=प्रकटीकृतः सत्सु=सज्जनेषु सारं=श्रेष्ठं येन स ('सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु' इत्यमरः) संसारः असार एव कथ्यते स्म किन्तु इदानीं स ससारो अस्तीति भावः न केवलम् अनिन्द्यः=अनिन्दायोग्यः अपितु वन्द्यः=वन्दनयोग्योऽपि जातः भवत्सदृशस्य नररत्नस्य प्रकटितत्वात् जीवद्भिः=प्राणद्भिः लौकिकैरित्यर्थः किं नाम अद्भुतं=आश्चर्यंकरम् न आलोक्यते=दृश्यते अर्थात् जीविते सति लोके किम् अद्भुतं न दृश्यते अपितु बहुलम् अद्भुत दृश्यते यथा भवान् येन इदम् अचिन्तितोपनतम्=अतर्कितोपनतम् सहसा समुपस्थितमित्यर्थः रूपम्=आकृतिः दृक्पथम्=दृग्गोचरताम् उपगतम्=अवतीर्णम्। एवंविधैः हृदयस्य उत्सवैः=आनन्दैः जन्मान्तरेषु=पूर्वजन्मसु अवस्थितानि=सञ्चितानीत्यर्थः सुकृतानि=पुण्यानि अनुमीयन्ते=अनुमितिविषयीक्रियन्ते अर्थात् भवद्दर्शनजनित-

**टिप्पणी लतावनम्**—भदन्त केवल फल-मूल ही खाया करते थे, अन्न नहीं इसलिए इनके निश्वासों में सौरभ था जब वे ओठ खोलते थे तो बाहर निकलते हुए निःश्वास ऐसे लगते थे मानो श्वेत पुष्पों से सुगन्धित लतावन हों, क्योंकि उनके दांत श्वेत पुष्पों की तरह थे।

**देवानां प्रियः**—इसका वाच्यार्थ है देवताओं का प्यारा। यह शब्द प्राचीन काल में अत्यादर रूप में प्रयुक्त हुआ करता था। बाण भी इसी अर्थ में प्रयुक्त कर रहा है। महाभाष्यकार ने भी इसी अर्थ में लिया है - "के पुनर्वंदादयः। भवान् दीर्घायुः देवानांप्रियः आयुष्मानिति" किंतु आजकल (देवानां प्रिय) मूर्ख को कहते हैं।

**हिन्दी**-देर ठहर कर दांतों की निर्मल किरणावलियों से कलिकाल के पाप का मैल धोते हुए जैसे-फलमूल खाने से उत्पन्न सौरभ से सुन्दर विकसित पुष्प समूह से श्वेत बने लता वन को मुख से निकलते हुए जैसे बोले—आज से लेकर यह संसार-जिसने उत्कृष्ट सार वस्तु प्रकट कर दी है—न केवल अनिन्दनीय बल्कि वन्दनीय भी है, जीते रहें तो कौन सी अद्भुत वस्तु देखने में नहीं आती, जैसे कि वह रूप आज हमारे आंखों के सामने प्राप्त हुआ है, जिसकी कभी कल्पना भी नहीं की थी। इस तरह के हृदय के आनन्दों से पूर्वजन्म में सञ्चित पुण्यों का अनुमान किया जाता है हमारी इस तपस्या क्लेश ने इस जन्म में भी असुलभ दर्शनों वाले आपके दर्शन दिलाकर फल दे ही दिया है आँखों ने छक कर अमृत पान कर लिया है, मन निर्वाण-सुख की उत्कण्ठा छोड़ बैठा है, बड़े भारी पुण्यों के बिना आप जैसे सज्जन पर दृष्टि नहीं पड़ती। वह दिन धन्य है जब आपने जन्म लिया। वह जननी सफलजन्मा है जिसने सकल जीवलोक के

---

1. कालकल्याम्।

पुण्यवन्ति पुण्यान्यपि तानि येषामसि परिणामः। सुकृततपसस्ते परमाणवो ये तव परिगृहीतसर्वावयवाः। सत्सुभगं सौभाग्यमाश्रितोऽसि येन। भव्यः स पुरुषभावो भवत्यवस्थितो यः। यत्सत्यं मुमुक्षोरपि मे पुण्यभाजमालोक्य पुनः श्रद्धा जाता मनुजजन्मनि। नेच्छद्भिरप्यस्माभिर्दृष्टः कुसुमायुधः। कृतार्थमद्य चक्षुर्वनदेवतानाम्। अद्य सफलं जन्म वनपादपानां येषामपि गतो गोचरम्। अमृतमयस्य भवतो वचसां माधुर्यं कार्यमेव। अन्य स्वीदृशे शैशवे विनयस्योपाध्यायं ध्यायन्नपि न सम्भावयामि। भुवि सर्वथा शून्य आसीदजाते दीर्घायुषि गुणग्रामः। धन्यः स भूभृत्स्य वंशे [1]मणिरिव मुक्तामयः सम्भूतोऽसि। एवंविधस्य च पुण्यवतः कथंचित्प्राप्तस्य केन प्रियं समाचराम इति पारिप्लवं चेतो नः। [2]सफलवनचरसार्थसाधारणस्य

---

टीका-महानन्देनानुमीयन्ते, यदस्माभिः पूर्वजन्मनि महान्ति पुण्यानि कृतानि आसन् इह अपि=अस्मिन् अपि अमुना=अनेन तपःक्लेशेन=तपस्याकष्टेन न सुलभं=सुप्रापं दर्शनं यस्य तम् देवानां प्रियम् = भवन्तमित्यर्थः दर्शयता=दृष्टिगोचरं प्रापयता, आतृप्तेः=तृप्तिपूर्वकं कर्णे इत्यर्थः ईक्षणाभ्यां=नयनाभ्याम् अमृतम् पीत=पानविषयीकृतम् निवृत्तिः=जन्ममरणोपरमः तस्याः सुखम् अस्माक विचारेण निवृत्तिस्थाने निर्वृत्तिः पाठः साधीयान् निर्वृत्तिः=मोक्षः निवृत्तिशब्दस्य मोक्षार्थस्तु दूराक्षिप्तः एव त्वादृशि=त्वत्सदृशे दृशः=नेत्राणि न विश्राम्यन्ति=पतन्तीत्यर्थः। जातः=जन्मगृहीतवानसि, सुजाता=सफलजन्मवती जननी=माता सकलस्य जीवलोकस्य संसारस्य जीवितस्य प्राणानां जनकम् उत्पादकम् अर्थात् सकलजीवलोकस्य रक्षकं पालकञ्च आयुष्मन्तम्=भवन्तम् अजनयत्=प्रसूतवती, तानि पुण्यानि=सुकृतानि अपि पुण्यवन्ति=सुकृतीनि येषां परिणामः=फलम् अपि ते परमाणवः=जगदारम्भकाणि सूक्ष्मभौतिकतत्त्वानि, न्यायदर्शनानुसारेण परमाणुभिः जगत् निर्मीयते सु=सुष्ठु कृतानि=अनुष्ठितानि तपांसि यैः ते तव परिगृहीताः=आश्रिताः सर्वे अवयवाः=अङ्गानि यैस्ते तत् सौभाग्यं=भाग्यशालिता सुभगं=शोभनम् येन आश्रितः=परिगृहीतः असि। कः पुरुषभावः=पुरुषत्वं भव्यः=शुभः यः भवति=त्वयि अवस्थितः। पुण्यभाजम्=पुण्यवंतम् त्वाम् आलोक्य=दृष्ट्वा मुमुक्षोः=मोक्षेच्छुकस्य अपि मे पुनः मनुष्यजन्मनि=मनुष्यरूपेण जन्मधारणे विश्वासः=श्रद्धा जाता अर्थात् अद्य यावत् कालुषजस्य दोषानुबिद्धं मत्वा ततो विरक्त आसम् किंतु इदानीं त्वां दृष्ट्वाऽहमस्य गुणवत्त्वे श्रद्धावान् जातः, न इच्छद्भिः=कामयमानैः कुसुमायुधः=कामदेवः दृष्टः अर्थात् कामदेवसदृशः सुन्दरोऽसि, अद्य वनदेवतानां चक्षुः न मम ( त्वां दृष्ट्वा ) कृतार्थं=चरितार्थं सफलमित्यर्थः वनपादपानां=वनवृक्षाणां गोचरं गतः=दृष्टिगोचरीभूतः। अमृतमयस्य=अमृतरूपस्य भवतः वचनानां माधुर्यं=मधुरिमा कार्यमेव, अयंभावः (न्यायशास्त्रे कारणगुणाः कार्यगुणानारभन्ते इत्यस्ति नियमः, अर्थात् कारणगतगुणाः कार्यगतगुणारम्भकाःभवन्ति) त्वदुत्पन्नवचोरूपकार्ये माधुर्यं दृष्ट्वा अनुमीयते वचःकारणीभूते त्वयि माधुर्यमस्ति ( मधुरञ्चामृतम् अतस्त्वममृतमयः ) ईदृशे शैशवे=शैशवावस्थायाम् ध्यायन्=चिन्तयन् अपि विनयस्य=विनम्रतायाः उपाध्यायम्=आचार्यम् न सम्भावयामि अर्थात् तवास्मिन् शैशवे केन गुरुणा ते विनयस्य शिक्षा दत्ता इति बहु चिन्तयन्नपि न ज्ञातुं शक्नोमि दीर्घायुषि=चिरञ्जीविनि त्वयि इत्यर्थः अजाते=अनुत्पन्ने गुणानां=विनयादीनां ग्रामः=समूहः शून्यः=अभाववान् निराश्रयः इत्यर्थः धन्यः

हिन्दी-प्राणरक्षक आपको जन्म दिया है। वे पुण्य भी पुण्यशाली हैं जिनके आप परिणाम है। वे परमाणु भी भाग्यवान् हैं जो आपके सभी अंगों को अपनाये हुए है। वह सौभाग्य धन्य है जिसने आपका आश्रय लिया है, वह पुरुषत्व भव्य है जो आपमें स्थित है। यह सत्य है कि आप जैसे पुण्यशाली को देखकर मोक्ष चाहते हुए भी मेरी इच्छा फिर मनुष्यजन्म में हो उठी है। न चाहते हुए भी हमने कामदेव को देख लिया है, आज वनदेवियों की आँख सफल हुई है, आज वनं वृक्षों का जन्म भी सफल हुआ है जिन्होंने आपके दर्शन किये हैं आप अमृतमय है अतः वाणी में माधुर्य ( अमृत का ) कार्य ही है। ऐसी शैशव अवस्था में इस विनय भाव की शिक्षा देने वाला गुरु कौन होगा, यह सोचते सोचते भी वह मेरी कल्पना मे नहीं आ रहा है। आप चिरंजीवी के जन्म न लिए, पृथिवी में गुण समूह सर्वथा निराश्रय था, वह भूप धन्य है जिसके वंश में [ वंश=बांस में उत्पन्न मुक्ता-मोती की तरह ] आप मुक्तामय ( स्वस्थ ) निर्दोष उत्पन्न हुए हैं। किसी तरह महापुण्यों से प्राप्त हुए ऐसे पुण्यात्मा का किस ( वस्तु द्वारा ) प्रिय करे, इसके लिए हमारा मन अधीर हुआ

१. मणिसदृश। २. सार्थसाधारणस्य।

कन्दमूलफलस्य गिरिसरिदम्भसो वा के वयम्। अपरोपकरणीकृतस्तु कायकलिरयमस्माकम्। सर्वस्वमयमिष्टस्यातिथेरातिथ्याय। स्वायत्तास्तु विद्यन्ते विद्याबिन्दवः कतिचित्। उपयोगं तु न प्रीतिर्विचारयति। यदि च नोपरुणद्धि कश्चित्कार्यलवमक्षरलघीयांसं वा कथनीयं तत्कथयतु भवाञ्छ्रोतुमभिलषति हृदयं सर्वमिदं नः। केन कृत्यातिभारेण भव्यो भूषितवानिमां भूमिमेतामभ्रमणयोग्याम्। कियच्चिरमियं शून्याटवीपर्यटनक्लेशः कल्याणराशेः। कस्माच्च सन्तप्तरूपेव ते तनुरियमसन्तापार्हा विभाव्यते' इति।

---

टीका—भाग्यवान् भूभृत् = राजा यस्य वंशे = कुले वंशो च मुक्तः = त्यक्तः आमयः = रोगः येन स रोगविनिर्मुक्तः = स्वस्थः इति यावत् अथ मुक्तामयः = मौक्तिकमयः मणिः इत्युपमायाम् एवं सम्भूतः = जातः वंशेभ्योऽपि मुक्ता जायन्ते इति पूर्वमुक्तमेव। कथञ्चित् = महाभाग्यादित्यर्थः प्राप्तस्य = लब्धस्य केन वस्तुना इत्यर्थः प्रियम् = अभीष्टम् समाचरामः = कुर्मः इति नः अस्माकं चेतः मनः पारिप्लवं = चञ्चलं ( 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यमरः ) दोलायितम् = अधीरमिति यावत् सकलाः = समस्ताः ये वनचराः = अरण्यवासिनः तेषां सार्वस्य = समूहस्य साधारणस्य = सामान्यस्य कन्दानि च मूलानि च फलानि च तेषां समाहारः तस्य गिरिसरितः = पर्वतीयनद्याः अम्भसः = जलस्य के वयम् ? न केऽपि इत्यर्थः अयं भावः कन्दमूलफलानि गिरिसरिदम्भश्च न वयमेवाधिकारिणः अपितु तत्र सर्वेषामेव वन्यप्राणिनां समानाधिकारः = अस्माकं स्वकीयमेव विशिष्टं किमपि नास्ति भवते दातुम्। उपक्रियते अनेनेति उपकरणम् = उपकारसाधनम् परस्य उपकरणमिति परोपकारः अपरोपकरणं परोपकरणं कृतः इति परोपकरणीकृतः न परोपकरणीकृतः इत्यपरो० ( च्वि प्रत्ययः ) अर्थात् येन न कस्यापि परस्योपकारः कृतः केचित्तु स्वायत्तः इति व्याचक्षते ? कायः = शरीरं कलिः = कलियुगमिवेत्युपमितत्पु० कलिर्हि पापमयो भवति अतः एवः पापः कायः इत्यर्थः अस्माकम् अस्तीति शेषः कतिचित् = केचित् विद्याबिन्दवः = ज्ञानकणाः स्वायत्ताः = अस्मदधीनाः यान् दातुम् अहं समर्थः इति शेषः तु = किन्तु अस्माकं प्रीतिः = स्नेहः तेषां ज्ञानबिन्दूनाम् उपयोगम् = उपयोगिताम् न विचारयति = चिन्तयति अर्थात् प्रीत्या अहं भवद्भ्यो विद्याबिन्दून् समुपस्थापयामि। ते भवतः उपयोगितां यान्ति न वेति प्रीतिर्न गणयति। यदि कश्चित् कार्यस्य लवं = लघु कार्यमपि न उपरुणद्धि = न प्रतिबध्नाति बाधते इति यावत् भवान् कथनीयं = कथ्यं वस्तु न रक्षणीयानि = गोपनीयानि अक्षराणि यस्य तत् यदि गोपनीयं नास्तीति भावः तत् = तर्हि केन कृत्यस्य = कार्यस्य अतिशयितेन = भारेण केन अत्यन्तमहत्वपूर्णकार्येणेत्यर्थः भव्यः = कल्याणी भवानित्यर्थः अभ्रमणयोग्याम् = अभ्रमणोचिताम् = एतां भूमिम् = स्थानमित्यर्थः भूषितवान् = अलंकृतवान् कल्याणानां राशेः = समूहस्य भवतः इत्यर्थः. अयम् शून्या = निर्जना अटवी = अरण्यम् तस्यां पर्यटनम् = परिभ्रमणम् तस्य क्लेशः = कष्टम् कियान् = कियत्कालपर्यन्त. अवधिः = सीमा यस्य सः कस्मात् = केन हेतुना न सन्तापं = खेदम् अर्हतीति तथोक्ता असन्तापयोग्येत्यर्थः ते = तव इयं तनुः = शरीरं सन्तप्तं = खिन्नम् रूपं यस्याः सा विभाव्यते = दृश्यते।

हिन्दी—बैठा है, जिनमें सभी वनचर प्राणीसमूह का समान अधिकार है—ऐसे कन्दमूल फल और गिरि नदी का जल देने वाले हम कौन होते हैं हमारा अपना तो यह पापी देह ही है। जिससे किसी दूसरे का उपकार नहीं हुआ है, प्रिय अतिथि के सत्कार के लिए बचा हुआ सर्वस्व यही देह है। कुछ विद्याकण अपने वश के हैं, प्रीति उपयोगिता को महत्त्व नहीं देती, यदि किसी छोटे से भी कार्य में बाधा न पहुँचे और बात गोपनीय न हो तो उसे कहिए हमारा हृदय यह सब सुनना चाह रहा है कि किस बड़े भारी कार्य के हेतु भ्रमण के अयोग्य इस भूमि को आपने अलंकृत किया कल्याणराशि आप कितने समय तक इस निर्जन वन में घूमते रहने का कष्ट उठायेंगे, और क्या कारण है कि सन्ताप के अयोग्य आपका यह शरीर सन्तप्त जैसा दिखाई पड़ रहा है।

1. इष्टस्य = प्रियस्य अतिथेः = अभ्यागतस्य आतिथ्याय = सत्काराय अवशिष्टम् = शेषम् सर्वस्वम् कायकलिरेवास्ति।

राजा तु सादरतरमब्रवीत्—'आर्य, दर्शितसम्भ्रमेणानेन मधुररसविसरममृतमिव[1] हृदयधृतिकरमनवरतं वर्षता वचसैव ते सर्वमनुष्ठितम्। धन्योऽस्मि यदेवमभ्यर्हितमनुपचरणीयमपि मान्यो मन्यते माम्। अस्य च महावनभ्रमणपरिक्लेशस्य कारणमवधारयतु मतिमान्। मम हि विनष्टनिखिलेष्टबन्धोर्जीवितानुबन्धस्य निबन्धनमेकैव यवीयसी स्वसावशेषा[2]। सापि भर्तृवियोगाद्वैरिपरिभवभयाद्भ्रमन्ती कथमपि विन्ध्यवनमिदम्, अशुभशबरबलबहुलम्, अगणितगजकुलकलिलम्, अपरिमितमृगपतिशरभभयम्, उरुमहिषमुषितपथिकगमनम्, अतिनिशितशरकुशपरुषम्, अवटशतविषममविशत्। [3]अतस्तामन्वेष्टुं वयमनिशं निशिनिशि च सततमिमामटवीमटामः। न चैनामासादयामः। कथयतु च गुरुरपि यदि कदाचित्कुतश्चिद्वने चरतः श्रुतिपथमुपगता तद्वार्ता' इति।

---

टीका—सादरतरम् = अत्यधिकादरसहितं यथा स्यात्तथा अब्रवीत् = अकथयत् दर्शितः = प्रकटितः संभ्रमः = साश्चर्यम् आदरः येन तेन मधुरसः = मधुररसः तस्य विसरः = विस्तारः = यस्मिन् तत् हृदयस्य धृतिकरम् = प्रोत्साहकम् आनन्दकरमिति यावत् अमृतमिवेत्युत्प्रेक्षायाम् वर्षता = स्रवता ते वचसा = वाण्या एव सर्वम् आतिथ्यमिति शेषः अनुष्ठितम् = विहितम् धन्यः = भाग्यवान् अनुपचरणीयम् = उपचारायोग्यम् अपि मां मान्यः भवान् एवम् अभ्यर्हितम् = पूज्यं मन्यते = अवगच्छसि मतिमान् = विद्वान् भवानित्यर्थः महावने भ्रमणस्य यः परिक्लेशः = परितः क्लेशः = कष्टं तस्य कारणम् = हेतुम् अवधारयतु = अवगच्छतु शृणोतु इत्यर्थः विनष्टाः = मृताः निखिलाः = सर्वे इष्टाः = प्रिया बन्धवः = बान्धवाः यस्य तस्य मम जीवितस्य = जीवनस्य अनुबन्धस्य = सातत्यस्य धारणस्येति यावत् निबंधनम् = कारणम् अर्थात् यस्याः कारणात् अहं ध्रिये, एका एव यवीयसी = कनीयसी स्वसा = भगिनी अवशेषा = अवशिष्य अस्तीति शेषः भर्तुः = पत्युः वियोगात् = मृत्युकृतविच्छेदात् वैरिणः = शत्रोः यः परिभवः = अपमानः तस्मात् कारणात् भयात् = भीत्याः भ्रमन्ती = इतस्ततः अटन्ती कथमपि = केनापिप्रकारेण इदम् अशुभाः = अशुभाचरणाः ये शवराः = भिल्लाः; तेषां बलेन = सैन्येन बहुलम् = पूर्णमित्यर्थः अगणितानि = असंख्यानीत्यर्थः यानि गजानां = हस्तिनां कुलानि = दलानि तैः कलिलम् = गहनं व्याप्तमित्यर्थः [ 'कलिलं गहनं समे' इत्यमरः ] अपरिमिताः = असंख्याः ये मृगपतयः = सिंहाश्च शरभाः = 'अष्टपादूर्ध्वनयनाः ऊर्ध्वपादचतुष्टयाः' इत्युक्तलक्षणाः मृगविशेषाः यस्मिन् तत् उरवः = विशालकायाः ये महिषाः = वनसैरिभाः तैः मुषितं हृतम् रुद्धमित्यर्थः पथिकानां = अध्वगानां गमनं = चलनं यस्मिन् तत् अतिशयेन निशिताः = तीक्ष्णाः ये शराः = घासविशेषाः कुशाः = दर्भाश्च तैः परुषम् = कठोरम् अवटानां = गर्तानाम् [ 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः ] शतैः = शतशः अवटैः इत्यर्थः विषमम् = नतोन्नतम् दुर्गममितियावत् विन्ध्यस्य = विन्ध्याचलस्य वनम् आविशत् = प्रविष्टवती तां = भगिनीम् अन्वेष्टुम् = अनुसंधातुम् अनिशम् = निरंतरमहर्निशम् निशि निशि = प्रतिनिशञ्च सततम् निरंतरम् इमाम् अटवीं = अरण्यम् अटामः = भ्रमामः न च एतां भगिनीं आसादयामः = प्राप्नुमः। कथयतु गुरुः = भवानित्यर्थः अपि = प्रश्ने वने चरतः = विचरतः कुतश्चित् = कस्मादपि वनचरात् = भवतः श्रुतिपथं = कर्णगोचरम् उप-

हिन्दी—राजा और भी आदरभाव से बोला—आर्य आदरभाव दिखाये अत्यन्त मधुर रसभरा अमृत जैसा निरन्तर बरसाते हुए आपकी वाणी ने ही हृदय को आनन्दित कर देनेवाला सब कुछ आतिथ्य कर दिया है. मैं धन्य हूँ कि जो आप उपचार के अयोग्य मुझे पूज्य मान रहे हैं, और मेरे इस महावन में भ्रमण के कष्ट का कारण आप सुनिए, मेरे सभी इष्ट बन्धु स्वर्ग सिधार गये हैं, मेरे जीवन धारण का कारण मेरी एक ही छोटी बहिन बची हुई है। वह भी वियोग के कारण शत्रु से होने वाले अपमान के भय से इधर-उधर भटकती हुई किसी तरह इस विन्ध्य वन में आ घुसी है जहां दुराचारी शबरों की बहुत सी सेना रहती है। असंख्य गज दल भरे पड़े हैं, अनेक सिंहों और शरभों का भय बना रहता है, बड़े-बड़े भैंसे पथिकों का मार्ग रोके रहते हैं, और जो अति तीक्ष्ण शरकंडों एवं कुशाओं से कठोर और सैकड़ों गर्तों से विषम है इसलिए उसे ढूंढने के लिए हम प्रत्येक रात्रि को लगातार इस बन में घूम रहे हैं, किन्तु उसे प्राप्त नहीं कर पा रहे हैं। गुरुदेव कहिए कि यदि वन में विचरण करते हुए किसी वनचर से आपको उसके सम्बन्ध में कोई समाचार मिला हो तो।

---

१. विसरधृतमिव हृदयम्। २. अवशेषाम्। ३. अयोगादतस्ताम्।

अथ तच्छ्रुत्वा जातोद्वेग इव भदन्तः पुनरभ्यधात्—'धीमन्, न खलु कश्चिदेवंरूपो वृत्तान्तोऽस्मानभ्युपगतवान्। अभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां भवताम्[1]।' इत्येवं भाषमाण एव तस्मिन्नकस्मादागत्यापरः शमिनि वयसि वर्तमानः सम्भ्रान्तरूप इव पुरस्तादुपरचिताञ्जलिर्जातकरुणः प्रक्षरितचक्षुर्भिक्षुरभाषत—'भगवन्भदन्त, महत्करुणं वर्तते। बालैव बलवद्व्यसनाभिभूता भूतपूर्वापि कल्याणरूपा स्त्री शोकवेगविवशा वैश्वानरं विशति। सम्भावयतु तामप्रोषितप्राणां भगवान्। अभ्युपपद्यतां समुचितैः समाश्वासनैः। अनुपरतपूर्वं कृमिकीटमपि दुःखितं दयाराशेरार्यस्य गोचरगतम्' इति।

राजा तु जातानुजाशङ्कः सोदर्यास्नेहादन्तर्द्रुत इव दुःखेन दोदूयमानहृदयः कथमपि गद्गदिकागृहीतकण्ठो विकलवाग्वाष्यायमानदृष्टिः पप्रच्छ—"पाराशरिन्, कियद्दूरे सा योषिदेवंजातीया जीवेद्वा कालमेतावन्तमिति। पृष्टा वा त्वया 'कासि, कस्यासि, कुतोऽसि, किमर्थं वनमिदमभ्युपगतासि, विशसि च किंनिमित्तमनलम्' इत्यादितः प्रभृति कार्त्स्न्येन कथ्यमानमिच्छामि श्रोतुं कथमार्यस्य गता गोचरमाकारतो वा कीदृशी" इति।

---

टीका—गता = प्राप्ता तद्वार्ता = तस्याः सम्बंधे समाचारः जातः उद्वेगः = उद्विग्नता क्षोभः इत्यर्थः यस्य सः भदन्त = मान्य-भिक्षुः दिवाकरमित्रः इत्यर्थः अभ्यधात् वृत्तांत = समाचार अभ्युपगतवान् = प्राप्तवान् वयम् ईदृशानाम = एवं विधानां प्रियाणाम् = प्रीतिकराणाम् आख्यानानाम् = समाचाराणाम् एव उपायनानां = उपहाराणां भवतां कृते दीयमानानाम् अभाजनम् = अपात्रम् अर्थात् एतत्सम्बन्धि प्रियसमाचाररूपोपहारं भवते दातुम् अस्माकं भाग्ये नास्ति, भाषमाणे = कथयति एवं तस्मिन् दिवाकरमित्रे अकस्मात् = सहसा आगत्य = एत्य अपरः = अन्यः शमः = रागादिदोषाणामुपशमः यस्मिन् अस्तीति तस्मिन् वयसि = अवस्थायां वर्तमानः = स्थितः संभ्रान्तं = व्यग्ररूपम् आकारः यस्य स पुरस्तात् = अग्रतः उपरचितः = कृतः अञ्जलिः येन स बद्धकरः इत्यर्थः जाता करुणा = दया यस्य स प्रक्षरितं = गलदश्रुः चक्षुर्यस्य स अश्रुपूर्णनयनः इत्यर्थः भिक्षुः = बौद्धसंन्यासी अकथयत् = अभाषत, महत् करुणं = अतिदयनीयघटनेत्यर्थः वर्तते = अस्ति। बाला = बाल्ये स्थिता एव बलवता = महता व्यसनेन = विपदा अभिभूता = आक्रान्ता पूर्वंभूता भूतपूर्वा कल्याणं = सुखसमृद्धिसम्पन्नं रूपं = स्वरूपं स्थितिरित्यर्थः यस्याः तथाभूताऽपि अर्थात् तया पूर्वं सुखसमृद्धिदिनानि दृष्टानि इति प्रतीयते शोकस्य = दुःखस्य वेग = आवेगः तेन विवशा = शोकाकुलेत्यर्थः वैश्वानरम् = अग्निम् विशति = प्रविशति न प्रोषिताः = गताः प्राणाः, यस्याः ताम् भगवान् = भवान् सम्भावयतु = आद्रियताम् ताम् आश्वासयतु इति भावः समुचितैः समाश्वासनैः = आश्वासनदानैः अभ्युपपद्यताम् = अनुगृह्यताम् दयाराशेः = करुणालयस्य आर्यस्य = भवतः गोचरतां = दृग्विषयतां गतं = प्राप्तम् दुःखितम् कृमयश्च = कीटाश्च तेषां समाहारः तत् अपि न पूर्वम् उपरतः = मृतः अर्थात् भवद्दृष्टिपतितः क्षुद्रकीटोऽपि न पूर्वं मृतः। अनुजायाः = भगिन्याः शंका = सन्देहो यस्य स सहोदर्याः = भगिन्याः स्नेहात् = प्रीतेः अन्तः = हृदये द्रुतः = करुणार्द्रः इव दोदूयमानम् = अतिशयेन

हिन्दी—इसके बाद यह सुनकर उद्विग्न जैसे हुए भदन्त फिर बोले—धीमन्—ऐसा समाचार वास्तव में हमारे पास कोई नहीं पहुँचा है। क्योंकि हम आपको प्रिय समाचारों के रूप में ऐसे उपहार देने के पात्र नहीं हैं दिवाकरमित्र के ऐसे कहते कहते ही, अकस्मात् एक दूसरा भिक्षु जो शम पूर्ण आयु का था और घबराया हुआ सा था आगे अञ्जली बांधे करुणा से द्रवित हुए और आँखों से आंसू बहाये हुए बोला—भगवन् भदन्त बड़ी करुणाजनक बात है। बाल्यावस्था की ही कोई स्त्री जो पहले सुख समृद्धि सम्पन्न रही होगी बड़ी विपत्ति की मारी हुई शोकावेग वश अग्नि में प्रवेश करने जा रही है जब तक वह जीती है आप उसका आदर कीजिए उचित आश्वासनों से उसे अनुगृहीत कीजिए। दया राशि भूत आपकी दृष्टि में आया हुआ दुःखी कोई कृमिकीट भी पहले नहीं मरा है। सन्देह में पड़ा हुआ राजा बहिन के स्नेह के कारण भीतर द्रवीभूत हुआ गद्गदता से रुद्ध कण्ठ आंखों में आंसू भरे टूटती-फूटती वाणी में किसी तरह पूछ बैठा। भिक्षु बाबा इस तरह की वह स्त्री कितनी दूरी पर है? क्या वह इतने समय तक जी रही होगी क्या तुमने उसे पूछा है तुम कौन हो किसकी हो? कहाँ से आई हो, क्यों इस वन में आई हो और किस कारण अग्नि प्रवेश कर रही हो, यह तुम आदि से लेकर सारी बात कहो मैं सुनना चाहता हूँ, आप उसे किस तरह पाये? वह कैसी है?

---

1. भवतम्।

तथाभिहितस्तु भूभुजा भिक्षुराचचक्षे—'महाभाग, श्रूयताम्। अहं हि प्रत्यूषस्येवाद्य वन्दित्वा भगवन्तमनेनैव गिरिनदी-रोधसा सैकतसुकुमारेण यदृच्छया विहृतवानतिदूरम्। एकस्मिंश्च वनलतागहने गिरिनदीसमीपभाजि भ्रमरीणामिव हिमहत-कमलाकरकातराणां रसितं सायमानानामतितारतानवर्तिनीनां [1]वीणातन्त्रीणामिव झाङ्कारमेकतानं नारीणां रुदितमधृतिकर-मतिकरुणमाकर्णितवानस्मि। समुपजातकृपश्च गतोऽस्मि तं प्रदेशम्। दृष्टवानस्मि च दृषत्खण्डखण्डिताङ्गुलिगलल्लोहितेन च पार्ष्णिप्रविष्टशरशलाकाशल्यशूलसङ्कोचितचक्षुषा चाध्वमीनश्रमश्वयथुमिरचलच्चरणेन च स्थाणवव्रणव्यथितगुल्फबद्धभूर्जत्वचा च वातखुडखेदखञ्जजङ्घाजातज्वरेण च पांसुपाण्डुरपिण्डिकेन च खर्जूरजूटजटाजर्जरितजानुना च शतावरीविदारितोरुणा च

टीका—पौनःपुन्येन च दूयमान ( पद्यन्ते )=खिद्यमानं हृदयं यस्य सः गद्गदिकया=गद्गदतया गृहीतः=रुद्धः इत्यर्थः कण्ठो यस्य सः विकला=स्खलिताक्षरा वाक्=वाणी यस्य सः वाष्पायमाणा=वाष्पमुद्वमन्ती [ 'वाष्पोष्मभ्यामुद्वमने" इति पा० ३।१।१६ ] दृष्टिः=नयनं यस्य स पप्रच्छ = अपृच्छत्—पाराशरिन्! = भिक्षो! योषित् = स्त्री एवंजातीया=एतादृशप्रकारीया एतावन्तम्=इयन्तं कालम् [ कालात्यन्तसंयोगे द्वि० ] जीवेत्=जीविता वा स्यात् अभ्युपगतासि=प्राप्तासि किं निमित्तं=कारण यस्मिन् कर्मणि यथा स्यात्तथा अनलं=वह्निम् विशति=प्रविशति आदितः = आरम्भात् प्रभृति = आरभ्य कार्त्स्न्येन=सम्पूर्णतया कथ्यमानम्=प्रोच्यमानम् श्रोतुम् इच्छामि। गोचरं=दृष्टिपथं गता आकारतः=आकृत्या अभिहित=कथितः भूभुजा = राज्ञा हर्षेण आचचक्षे = अकथयत् श्रूयताम्=आकर्ण्यताम् प्रत्यूषसि=उषः काले भगवन्तम्=पूज्यं दिवाकरमित्रम् वन्दित्वा=प्रणम्य अनेन एव गिरि-नद्याः=पर्वतनद्याः=सरितः सैकतेन=सिकतामयेन सुकुमारेण=कोमलेन रोधसा=तीरेण यदृच्छया=अकस्मादि-त्यर्थः अतिदूरम्=अतिदूरप्रदेश विहृतवान्=विचरितवान् वनलताभिः गहने=दुष्प्रवेशस्थाने इत्यर्थः गिरिनद्याः= समीपं=सान्निध्यं भजतीति तथोक्ते हिमेन=तुषारेण हतः=मारितः यः कमलानां=पद्मानां आकरः=वनम् तेन कातराणां=व्याकुलानां भ्रमरीणां=भ्रमराङ्गनानां रसितं=झङ्कारम् इवेत्युपमायाम् सायमानानाम्=अङ्गुलिभिः चाल्यमानानाम् अतिशयेन तारः=उच्चः तानं=मूर्छना [ 'तानाः स्युर्मूर्छना शुद्धा षाडवौडवितीकृताः' इति सङ्गीत-रत्नाकरः ] तस्मिन्—वर्तन्ते इति तथोक्तानां वीणायाः तन्त्रीणाम्=गुणानाम् एकतानाम्=समस्वरम् झङ्कारम्= ध्वनिम् इवेत्युपमायाम् नारीणां=स्त्रीणाम् अधृति=धैर्याभावम् करोतीति तथोक्तम् धैर्यनाशकमित्यर्थः अतिशयेन-करुणाम्=करुणापूर्णम् एकतानाम्=निरन्तरम् रुदितम्=रोदनम् आकर्णितवान्=श्रुतवान् अस्मि। समुपजाता =उत्पन्ना कृपा=दया यस्य तथाभूतोऽहं तम् प्रदेशं=स्थानं गतः अस्मि। दृष्टवानस्मि च"....."अबलानां चक्रवालेन परिवृताम्"....."योषितम् इत्यस्ति वाक्यम्। ईषत् दृषदां=प्रस्तराणां खण्डैः=शकलैः खण्डिता या अङ्गुलयः= पादाङ्गुलयः ताभ्यः गलत्=स्रवत् लोहितं=रुधिरम् यस्य तेन एतत् अन्यानि च तृतीयान्तानि अबलाचक्रवालेन इत्यस्य विशेषणानि सन्ति। पार्ष्णि० पार्ष्णिषु=गुल्फयोरधोभागेषु ['गुल्फौ पुमान् पार्ष्णिस्तयोरधः' इत्यमरः] प्रविष्टानि=

हिन्दी—राजा के इस तरह कहने पर भिक्षु बोला महाभाग सुनिए आज मैं दिन खुलते ही भगवान् को नमस्कार करके इस नदी के रेतीले कोमल तीर से होकर अकस्मात् बहुत दूर विचरण कर बैठा और नदी समीप ही लताओं के झुरमुट में कमल वन के पाने से मारे जाने के कारण व्याकुल हुई भ्रमरियों के ( दीन ) झंकार की तरह, बड़ी ऊँची तान में बजाये जा रहे वीणा के तारों की एक तान वाली झन-झनाहट की तरह, मैं नारियों की ऐसी रुदन ध्वनि सुन बैठा जो हृदय के धैर्य को तोड़े जा रही थी, और करुणा पूर्ण थी। दया वश मैं उस स्थान में चला गया, और ( वहाँ ) मैंने एक नारी को देखा, जो ऐसी स्त्रियों के समूह से घिरी हुई थी, जिनके पैरों की अंगुलियाँ पत्थर के टुकड़ों से चोट खा कर खून बहा रही थी, जो एड़ियों में घुसी सरकण्डों की छड़ियों की नोकों की टीस से आँखें कुछ नीचे हुए थीं जिनके पैर रास्ते की थकान से सूज जाने के कारण चल नहीं सक रहे थे जिन्होंने ठूठों के घावों से दुख रहे टखनों पर भूर्ज वृक्षों की छाल बांध रखी थी जिन्हें वातखुड ( वात व्याधि विशेष ) की पीड़ा से जंघाओं के जड़ हो जाने के कारण ज्वर हो गया था, जिनकी पिण्डलियाँ धूल से सफेद हो रही थी घूटने खजूर पंक्ति की जटाओं से छिदे हुए थे जाँघें शतावरी

[1] वर्णातन्त्रीगाम्।

विदारीदारिततनुदुकूलपल्लवेन चोत्कटवंशविटपकण्टककोटिपाटितकञ्चुककर्पटेन च फललोभालम्बितानम्रबदरीलताजालकोल्लिखितसुकुमारकरोदरेण च कुरङ्गशृङ्गोत्खातैः कन्दमूलफलैः कदर्थितबाहुना च ताम्बूलविरहविरसमुखखण्डितकोमलामलकीफलेन च कुशकुसुमाहतिलोहितानां श्वयतामक्ष्णां लेपीकृतमनःशिलेन च कण्टकिलतालूनालकलेशेन च केनचित्किसलयोपपादितातपत्रकृत्येन केनचित्कदलीदलव्यजनवाहिना केनचित्कमलिनीपलाशपुटगृहीताम्भसा केनचित्पाथेयीकृतमृणालपूलिकेन

---

टीका-अन्तर्गतानि शराणां=घासविशेषाणां शलाकानां=तनुदीर्घयष्टिकानां यानि शल्यानि=अग्राणीत्यर्थः तैः यः शूलः =तीव्रवेदना तेन संकोचितानि=ईषन्निमीलितानि चक्षूंषि=नयनानि येन तेन अध्वनी० अध्वनि इति साधुः [ अध्वन् + ख तस्य ईन ] अध्वनीनः=अध्वजनितेत्यर्थः तेन मार्गचलनजातेनेत्यर्थः श्रमेण=क्लमेन यः श्वयथुः=पादयोः शोथः तेन निश्चलौ=जडौ चलितुमशक्तौ इत्यर्थः चरणौ यस्य तेन स्थाणु० स्थाणूनां इमे इति स्थाणवः ( अण् ) स्थाणवा वातजनिता इत्यर्थः स्थाणुश्छिन्नशाखो वृक्षः तैः ये व्रणाः=ईर्माणि तैः व्यथिताः=व्यथायुक्ताः ये गुल्फाः=घुटिकाः तेषु बद्धा=नद्धा भूर्जस्य=एतदाख्यवृक्षविशेषस्य त्वक्=वल्कलं येन तेन वात० वातखुडः=गतिप्रतिघातलक्षणो वातव्याधिः इति शंकरः तेन यः खेदः=वेदना इत्यर्थः तेन खञ्जा=खोड़ा गन्तुमशक्ता इत्यर्थः या जङ्घा=प्रसृता तया ज्वरः यस्य तेन पांसु० पांसुना=धूल्या पाण्डुरा=धूसरा पिण्डिका=जङ्घापिण्डः यस्य तेन खर्जूर० खर्जूराणां=वृक्षविशेषाणां जूटस्य=समूहस्य जटाभिः=शाखाभिः इत्यर्थः जर्जरितं=च्छिन्नमित्यर्थः जानूः=ऊरुपर्वः यस्य तेन शता० शतावर्याः=नारायण्या औषधिविशेषेणेतियावत् विदारितः=विदीर्णीकृतः उरुः=सक्थिः यस्य तेन विदारी० विदार्या=क्षीरशुक्ल्या कन्दविशेषेणेति यावत् दारितः=छिन्नः तनुः=सूक्ष्मः दुकूलपल्लवः=वसनप्रान्तभागः यस्य तेन उत्कट० उत्कटा=विशाला ये वंशानां=वेणूनां विटपानां=शाखानां कंटकाः तेषां कोटिभिः=अग्रभागैः पाटितं=छिन्नं कञ्चुकं=कूर्परः कञ्चुकवसनं यस्य तेन उत्कंटकैः=उद्गता कंटका येभ्यः तैः कंटकितैरित्यर्थः फल० फलानां लोभेन=अभिलाषेण आलम्बितानि=गृहीतानि अत एव आनम्राणि=ईषन्निम्नीभूतानि यानि बदरीलतानां=वन्यबदरीफलवल्लीनां जालकैः=समूहैः उल्लिखितं=छिन्नमित्यर्थः सुकुमारं=कोमलं करस्य हस्तस्य उदरम्=अभ्यन्तरभागो यस्य तेन कुरङ्ग० कुरङ्गाणां=मृगाणां शृङ्गैः=विषाणैः उत्खातैः=उत्पाटितैः कन्दाश्च मूलानि च फलानि च तैः कदर्थिताः=पीडिताः बाहवः यस्य तेन ताम्बूल० ताम्बूलस्य=चर्वणयोग्यपत्रविशेषस्य विरहेण=अभावेन विरसं=शुष्कं यद् मुखं तेन खण्डितं=चर्वितम् आमलकीफलं येन तेन कुश० कुशस्य=दर्भस्य कुसुमानां=पुष्पाणाम् आहत्या=आघातेन लोहितानां=रक्तीभूतानां श्वयताम् [ श्वि + शतृ ]=स्फायमानानाम् शोथयुक्तिभूतानामित्यर्थः अक्ष्णां=नयनानां लेपीकृता=लिप्ता मनःशिला=उपधातुभेदः येन तेन 'मनःशिलालेपेन अक्ष्णो शोथः शाम्यति' इति वैद्यकैः प्रतिपादितम् कण्ट० कण्टकिनीभिः=कण्टकयुक्ताभिः लताभिः लूनः=छिन्नः अलकानां=चूर्णकुन्तलानां लेशः=कश्चित् भागः यस्य तेन किसल० केनचित् ( चक्रवालेन ) किसलयैः=पल्लवैः उपपादितम्=कृतम् आतपत्रस्य=छत्रस्य कृत्यं=कार्यं येन तेन कदली० कदल्याः=रम्भावृक्षस्य दलं=पत्रं एव व्यजनं=वीजनसाधनं वहति=धारयति इति तथोक्तेन कमलि० कमलिन्याः=पद्मिन्याः पलाशस्य=पत्रस्य पुटे=पत्रात्मकाधारे इत्यर्थः गृहीतं=धृतम् अम्भः जलं येन तेन पाथेयं=पथिभोजनं कृतेति पाथेयीकृता मृणालानां=बिसानां पूलिका=गुच्छिका येन तेन चीनां० चीनांशुकस्य=सूक्ष्मचीनवस्त्रस्य

हिन्दी-(के काँटों) से बिंध गई थी रेशमी साड़ियों की किनारियाँ विदारी कन्द की लताओं में (फंस जाने) से फट गई थी, कञ्चुक का कपड़ा बड़े-बड़े बांसों की शाखाओं के कांटों की नोकों से फट गया था, कोमल हथेलियाँ फल के लोभ से पकड़ी और नीचे झुकी ( जंगली ) बेर की लताओं के कंटीले झाड़ों से छिद गई थी तथा मृग के सींग द्वारा खोदे गये कन्द मूल फलों से भुजाओं का बुरा हाल हो गया था। जो ( चाबने ) को पान न मिलने के कारण सूखे पड़े हुए मुख से कोमल आँवले का फल तोड़ रही थी और कुशा के फूलों से टकरा जाने के कारण लाल बनी और सूजती हुई आँखों पर मैनशिल का लेप लगाये हुई थी जिनके बालों की कुछ लटें काँटेदार लताओं से ( उलझ जाने के कारण ) छूट गई थीं कोई केले के पत्ते को पंखे के रूप में लिए हुए थीं, किन्हीं ने कमलिनी के पत्तों के दोनों पर पानीघर रखा था, किन्हीं

१. श्वयुष्यमता।

केनचिच्चीनांशुकदशाशिक्यनिहितनालिकेरकोशकलशीकलितरसालतैलेन[1], कतिपयावशेषशोकविकल[2]कलामूककुब्जवामनबधिर-बर्बराविरलेनाबलानां चक्रवालेन परिवृताम्, आपत्कालेऽपि कुलोद्गतेनेवामुच्यमानां प्रभालेपिना लावण्येन, प्रतिबिम्बितैरा-सन्नवनलताकिसलयैः सरसैर्दुःखक्षतैरिवापाटलीक्रियमाणकायाम्, कठोरदर्भाङ्कुरक्षतक्षारिणा क्षतजेनानुसरणालक्तकेनेव रक्तचरणाम्, उन्नालेनान्यतरनारीधृतेनारविन्दिनीदलेन कृतच्छायमपि विच्छायं मुखमुद्वहन्तीम्, आकाशमपि शून्यतयाति-शयानाम्, मृण्मयीमिव निश्चेतनतया, मरुन्मयीमिव निश्वाससम्पदा, पावकमयीमिव सन्तापसन्तानेन, सलिलमयीमिवास्रप्रस्रव-

टीका–चीनांशुकशाटिकाया: इत्यर्थः दशायाः=प्रान्तभागस्य तन्निर्मितमित्यर्थः यत् शिक्यं=काच: तस्मिन् निहिता=स्थापिता या नारिकेलकोशस्य=शिर फलास्थ्न: कलशी=लघुपात्रम् तस्यां कलितं धृतम्=रसालतैलम् येन तेन कति० कतिपये=केचिदेव अवशेषा:=अवशिष्टा: शोकेन विकला:=आकुला: ये कलामूका:=अत्र कलमूकेति पाठ: साधीयान् कलमूका:=अवाक्श्रुतय: ( 'कलमूकोऽवाक्श्रुतिः' इति हलायुध: ) कादम्बर्यामपि बाण एवमाह—प्रनृत्तकलत्रककुब्ज-किरातेत्यादि. हर्षचरितेप्यन्यत्र–कुब्ज किरात बधिर वामन वर्षधर कलत्रकानुगते न परिजने इत्यायातम्। शंकरस्तु "[ कलामूका षण्डका वर्षवरा ] इति व्याचष्टे, कुब्जा:=ककुप्मन्तश्च वामना=खर्वाश्च बधिरा=श्रवणशक्तिरहिताश्च बर्बरा:=बर्बरदेशजा: इति शंकर: तै अविरलेन=पूर्णेन अबलानां=स्त्रीणाम् चक्रवालेन=समूहेन परिवृतां=परिगतां आपत्० आपत्काले=विपत्तिसमयेऽपि कुलोद्गतेन=कुलपरम्परागतेन मित्रेणेति शेष: इवेत्युपमायाम् प्रभया=कान्त्या लिम्पति पदार्थजातं लिप्तीकरोतीति तथोक्तेन लावण्येन=सौन्दर्येण अमुच्यमानम्=अपरिहीयमानम्—प्रतिबि० प्रतिबिम्बितै:=प्रतिफलितै: सरसै:=रसयुक्तै: आसन्नानां=समीपस्थानां वनलतानां किसलयै:=पल्लवै: सरसै:=आर्द्रै: रुधिरलिप्तैरित्यर्थः दुःखस्य क्षतै:=आघातै: पाटलीक्रियमाण:=रक्तवर्णीक्रियमाण: काय:=शरीरं यस्या: ताम् अर्थात् तस्या: उज्ज्वलदेहे प्रतिबिम्बिता: सन्निहितलतापल्लवा रुधिरस्रावि-दुःखक्षतानीव प्रतीयन्ते स्म, कठोर०–कठोरेण=तीक्ष्णेन दर्भस्य=कुशस्य अंकुरेण अग्रेणेत्यर्थः यत् क्षतं=व्रणं तस्मात् क्षरति=स्रवतीति तथोक्तेन=क्षतजेन=रुधिरेण अनुसरणं=नित्याभ्यास: नित्यक्रियेति यावत् तस्य तत्कृतेनेत्यर्थः अलक्तकेन=लाक्षया इवेत्युत्प्रेक्षायाम् रक्तौ=रक्तवर्णौ चरणौ यस्या: ताम् वने नित्याभ्यस्तालक्तकालाभात् क्षतजं अलक्तकस्य कार्यं करोति स्मेति भाव:, उत्=ऊर्ध्वं नालं=दण्डो यस्य तेन अन्यतरया=अन्यया कयापि एकया धृतेन=शिर: उपरि कृतेन अरविन्द-दलेन=कमलपत्रेण कृता च्छाया=अनातप: यस्मिन् तत् अपि विच्छायम्=विगता छाया=अनातप: यस्मात् तत् इति विरोध: विगता छाया कान्ति: यस्मात् इति तत्परिहार: [ 'छाया सूर्य-प्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमर: ] शून्यतया=रिक्ततया हृदयस्य आकाशम् अपि अतिशयानाम्=अतिक्रामन्तीम्, निश्चेतनतया=पदे-पदे मूर्छाकारणात् जडतया मृण्मयीम्=मृत्तिकामयीम् इवेत्युत्प्रेक्षायाम्, मृत्तिका हि पृथिवी, पृथिवी च निश्चेतना भूतानां जडत्वात्, निश्वासस्य=दीर्घनिश्वसितस्य सम्पदा=आधिक्येन मरुन्मयीं=वायुरूपाम् इव सन्तापस्य=दुःखस्य सन्तानेन=विस्तारेण अथ च औष्ण्यप्रबन्धेन पावकमयीम्=अग्निमयीम् तेजोमयीमित्यर्थः, अस्राणाम्=अश्रूणां प्रस्रवणेन=प्रवाहेण सलिलमयीम्=जलमयीम् इव

हिन्दी–ने मृणाल की गुच्छियों को पाथेय बना रखा था, किन्हीं का साड़ियों के किनारों के ( बने ) छीकों के भीतर रखे नारियल की खोपड़ी की कुप्पी में आम का तेल धरा हुआ था, जिनमें इने गिने शेष बचे हुए गूंगे बहरे कुबड़े बौने बहरे और बर्बर जाति के लोग थे। जिस नारी को विपत्तिकाल में भी कान्ति छिटकाता लावण्य इस तरह नहीं छोड़ जा रहा था जैसे कुलक्रमागत मित्र, जिसका शरीर आसपास की वन लताओं के सरस किसलयों के प्रतिबिम्बों से ऐसा प्रतीत होता था मानो दुःख के कच्चे घावों से भीतर ही भीतर लाल किया जा रहा हो जिसके चरण दर्भ के कठोर अंकुर से बिंध जाने के कारण बहते हुए खून से नित्य लगाये जाने वाले महावर से—जैसे लाल हो रखे थे, जो अन्य स्त्री द्वारा धारण किये, ऊपर उठे नालवाले कमलिनी के पत्ते से छाया ( छाँह ) किये जाने पर भी छायारहित [ छाँह-रहित; कान्ति-रहित ) मुख रख रही थी, जो शून्यता से आकाश को भी अतिक्रमण कर रही थी, जो ( पद-पद ) में मूर्छा खाने से मिट्टीमय-जैसी, आहों के आधिक्य से वायु-मय-जैसी, संताप के विस्तार से अग्निमय-जैसी, अश्रुप्रवाह से जल-

१. कलित सरल तैलेन। २. विकलमूक।

नेन, वियन्मयीमिव निरवलम्बनतया, तडिन्मयीमिव पारिप्लवतया, शब्दमयीमिव परिदेवितवाणीबाहुल्येन, मुक्तमुक्तांशुकरत्नकुसुमकनकपत्राभरणां कल्पलतामिव महावने पतिताम्, परमेश्वरोत्तमाङ्गपातदुर्ललिताङ्गां गङ्गामिव गां गताम्, वनकुसुमधूलिधूसरितपादपल्लवाम् प्रभातचन्द्रमूर्तिमिव लोकान्तरमभिलषन्तीम्, निजजलमोक्षकदर्थितदर्शितधवला[1]यतनेत्रशोभाम् मन्दाकिनीमृणालिनीमिव परिम्लायमानाम्, दुःसहरविकिरणसंस्पर्शक्लेशनिमीलितां कुमुदिनीमिव दुःखेन दिवसं नयन्तीम्, दग्धदशाविसंवादितां प्रत्यूषप्रदीपशिखामिव क्षामक्षामां पाण्डुपाण्डुवपुषम्, पार्श्ववर्तिवारणाभियोगरक्ष्यमाणां वनकरिणीमिव महाह्रदे निमग्नाम्, प्रविष्टां वनगहने[2] ध्याने च, स्थितां तरुतले मरणे च, पतितां धात्र्युत्सङ्गे महानर्थे च, दूरीकृतां भर्त्रा सुखेन च, विरेचितां

टीका-निरवलम्बनतया = अवलम्बाभावेन अर्थात् अवलम्बरूपे तस्याः पार्श्वे किमपि नासीत् वियन्मयीम् = आकाशमयीम् आकाशमपि निरालम्बं भवति, परिप्लवा = चञ्चला [ 'चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे' इत्यमरः ] तस्याः भावः तत्ता तया अर्थात् सा दुःखात् वेपते स्म, तडिन्मयीम् = विद्युन्मयीम् विद्युदपि चपला भवति कम्पते च, परिदेवितं = विलपनं तस्य वाण्याः = वचसः बाहुल्येन = आधिक्येन शब्दमयीम् = शब्दरूपाम् इवेत्युपरिसर्वत्रोत्प्रेक्षा, मुक्त० मुक्तानि = त्यक्तानि मुक्ताः = मौक्तिकानि च अंशुकम् = कौशेयवस्त्रं च रत्नानि = मणिमाणिक्यानि च कुसुमानि = पुष्पाणि च पत्राणि = पल्लवानि अथवा वाहनानि आभरणानि = आभूषणानि च यया ताम् कल्पलताम् = नन्दनवनस्य-वल्लीविशेषम्, महावने = अरण्यान्याम् अन्यत्र महाजले समुद्रे इति यावत् [ 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः ] पूर्वं कल्पलता समुद्रे स्थिता आसीत् समुद्रमन्थने च तदुद्गता इन्द्रेण स्वर्गं नीता ताम् इव, राज्यश्रिया शोककारणात् सर्वमपि मुक्तादिकं मुक्तम्, कल्पलताऽपि अर्थिने यथाभिलषितानि मुक्तादीनि मुञ्चति उपरिष्टात् क्षिपति = ददातीत्यर्थः, परमे० — परमेश्वरस्य = शिवस्य उत्तमाङ्गे = शिरसि पातः = पतनं स्वर्गादवतरणमित्यर्थः तेन दुर्ललितं = दृप्तं गर्वितमिति यावत् अङ्गं = शरीरं यस्याः ताम् अन्यत्र परमेश्वरस्य = महाराजाधिराजस्य पत्युः = ग्रहवर्मणः उत्तमाङ्गस्य = शिरसः पातेन = शत्रुकृतच्छेदेन दुर्ललितानि = दुः = दुःस्थितानि

हिन्दी–मय-जैसी, अवलम्ब न होने से आकाशमय-जैसी, चंचलता से विद्युन्मय-जैसी, विलाप-भरी वाणी की अधिकता से शब्दमय-जैसी प्रतीत हो रही थी, जो ( वैधव्य के कारण ) मोती, रेशमी वसन, रत्न, पुष्प, सुवर्ण, वाहन और आभूषण छोड़ महावन ( घोर जंगल ) में पड़ी उस कल्पलता के समान थी जो महावन ( समुद्र ) में पड़ी ( प्रार्थियों के लिए ) मोती, रेशमी वसन, रत्नपुष्प, सुवर्ण वाहन और आभूषण छोड़ ( फेंक ) दिया करती है, जो परमेश्वर ( शिव ) के सिर पर पतन ( गिरने ) से शरीर में दुर्ललित ( अभिमान में अकड़ी हुई ) भूमि पर आई गंगा की तरह परमेश्वर ( अधिराज ग्रहवर्मा ) के शिर के पतन ( शत्रु द्वारा छेदन ) से दुर्ललित अंगों ( बुरी हालत में पड़े अवयवों ) वाली ( वन की ) भूमि पर आ पड़ी है, जो वन ( जल ) के कुसुमों ( कुमुदों ) की धूलि की तरह मटमैले बने किरण-समूह वाली लोकान्तर [ पश्चिमी गोलार्ध ] को जाना चाहती हुई प्रभात-समय की चन्द्र-मूर्ति के सदृश वन ( अरण्य ) के कुसुमों की धूलि से मटमैले बने चरण-किसलयों वाली लोकान्तर ( परलोक, मृत्यु ) चाह रही थी, जो अपना जल छोड़ देने से पीड़ित एवं लम्बी-लम्बी श्वेत नेत्रों से ( जड़ों ) की शोभा दिखाए म्लान हो रही मन्दाकिनी की कमलिनी की तरह अपना जल ( अश्रु ) छोड़ने से मन्द पड़ी बड़ी-बड़ी आँखों की धवल दिखाये म्लान होती जा रही थी, जो असह्य सूर्य-किरणों के सम्पर्क के क्लेश से निमीलित ( बन्द हुई पड़ी ) कुमुदिनी की तरह असह्य सूर्य-किरणों के सम्पर्क के क्लेश से निमीलित ( सतायी जा रही ) बड़ी कठिनाई से दिन काट रही थी, जो दग्ध दशा ( भस्म हुई बत्ती ) से वञ्चित हुई, अति क्षीण एवं सफेद-सी हुई पड़ी प्रातःकालीन दीपक की ज्योति की तरह दग्धदशा (दुरवस्था) से निराश हुई अतिक्षीण और शरीर में सफेद-सी हुई पड़ी थी, जो पार्श्ववर्ती ( समीप-स्थित ) वारण ( हाथी ) के अभियोग ( बलात्कार ) से ( अपने द्वारा ) बचाई जा रही, महान् जलाशय में निमग्न ( डूबी ) हथिनी की तरह पार्श्ववर्तियों ( भृत्यजनों ) द्वारा वारण ( रोकने ) के अभियोग ( प्रयत्न ) से बचाई जा रही महान् जलाशय में निमग्न ( स्नान किये ) बैठी थी, जो वन के दुर्गम स्थान और ध्यान ( दोनों में एक साथ ) में प्रविष्ट थी, पेड़ के तले बैठी थी तो मरण पर भी बैठी थी, धाई की गोद और महाविपत्ति में पड़ी हुई थी, पति और सुख— दोनों से दूर कर दी गई थी,

१. 'धवलायित०' २. 'गहनं ध्यानं च'

भ्रमणेनायुषा च, आकुलां केशकलापेन मरणोपायेन च, विवर्णितामध्वधूलिभिरङ्गवेदनाभिश्च, दग्धां चण्डातपेन वैधव्येन च, धृतमुखीं पाणिना मौनेन च, गृहीतां प्रियसखीजनेन मन्युना च. तथा च भ्रष्टं बन्धुभिर्विलासैश्च, मुक्तेन श्रवणयुगलेनात्मना च, परित्यक्तं भूषणैः सर्वारम्भैश्च, भग्नं वलयं मनोरथैश्च, चरणलग्नाभिः परिचारिकाभिर्दर्भाङ्कुरसूचीभिश्च, हृदयविनिहितेन

---

टीका—ललितानि=सुन्दराणि अङ्गानि यस्याः ताम् गां=पृथिवीम् अन्यत्र विना वाहनं=पादाभ्यामेव वनभूमिं गतां=प्राप्तां गंगां=भागीरथीम् इव, वन०—वनस्य=जलस्य कुसुमानां=पुष्पाणां कुमुदानामित्यर्थः धूलिवत्=रजोवत् धूसरितः=धूसरवर्णीभूतः पादानां=किरणानां पल्लवः=विस्तरः यस्याः ताम्, अन्यत्र वनस्य=अरण्यस्य कुसुमानां धूलिभिः धूसरितो पादपल्लवौ=चरणकिसलयौ यस्याः ताम्. लोकान्तरम्=मेरुद्वितीयपार्श्वं पृथिव्या अपरं गोलार्धमित्यर्थः अन्यत्र लोकान्तरं=परलोकं स्वर्गमित्यर्थः यत्र ग्रहवर्मा गतः आसीत् अभिलषन्तीम्=गन्तुमिच्छन्तीम् प्रभातचन्द्रस्य=अस्तोन्मुख-चन्द्रमसः मूर्तिम्=आकृतिम् बिम्बमित्यर्थः इव, निज०—निजस्य=स्वस्य जलस्य मोक्षेण=त्यागेन जलस्य न्यूनतां गतत्वेनेत्यर्थः कदर्थिताः=पीडिता च दर्शिता=प्रकटिता धवलानां=श्वेतानाम् आयतानां=दीर्घाणां नेत्राणां=मूलानां शोभा यया च ताम्. परितः म्लायमानां म्लानीभवन्तीं शुष्यन्तीमित्यर्थः मन्दाकिन्याः=स्वर्गंगाया मृणालिनीं=पद्मिनीम् इव, निजजलस्य=स्वाश्रुजलस्य मोक्षेण पातेन कदर्थिता=दर्शिता धवलयोः आयतयोः=विशालयोः नेत्रयोः=नयनयोः शोभा यया ताम्, परिम्लायमानाम्=क्लाम्यतीम्. दुःसह०—दुःसहः=सोढुमशक्यः यः रविकिरणानां=सूर्यरश्मीनां स्पर्शः=सम्पर्कः तेन खेदेन तस्मात् जातेन क्लेशेन निमीलितां=म्लानाम्. अन्यत्र विषण्णाम्. कुमुदिनीम्=रात्रिकमलिनीम् इव दुःखेन=कृच्छ्रेण दिवसं नयन्तीं=यापयन्तीम्. दग्ध०—दग्धा प्लुष्टा या दशा=वर्त्तिः तया विसंवादिताम्=वञ्चिताम्. अन्यत्र दग्धदशा=दुरवस्था तया विसंवादिताम्=निराशीभूताम्. प्रत्यूषस्य=कल्यस्य प्रदीपस्य शिखाम्=ज्योतिः इव, क्षाम-क्षामाम्=क्षीण क्षीणाम्. पाण्डु=पाण्डुरं वपुः=शरीरं यस्याः ताम्., पार्श्व०—पार्श्ववर्ती=सन्निहितः यः वारगः=हस्ती तस्य अभियोगात्=आक्रमणात् बलात्कारात् इति यावत् रक्ष्यमाणाम्=त्रायमाणाम्. अन्यत्र पार्श्ववर्तिनां=भृत्यजनस्य वारणे=व्यावर्तने यः अभियोगः=अभिनिवेशः रोधस्य दीर्घप्रयत्नः इति यावत् तेन रक्ष्यमाणाम्., अग्निप्रवेशात् साग्रहं रुध्यमानमित्यर्थः महाह्रदे=महाजलाशये निमग्नाम्=पतिताम्. अन्यत्र कृतस्नानाम्., स्नानानन्तरमेव अग्निप्रवेशः क्रियते, उपरि सर्वत्र श्लिष्टोपमालंकारः, वनस्य गहने=दुर्गमस्थाने ध्याने=चिन्तने च प्रविष्टाम्. कृतप्रवेशाम्.. तरुतले=वृक्षतले च स्थिताम्. एकत्र कृतावस्थानाम्. अन्यत्र कृतनिश्चयाम्., धात्र्याः=उपमातुः उत्सङ्गे=क्रोडे महानर्थे=महाविपत्तौ च पतिताम्. स्थापितदेहाम्. अन्यत्र च मग्नाम्. भर्त्रा=पत्या सुखेन च दूरीकृताम्=वियोजिताम्., भ्रमणेन=वने पर्यटनेन आयुषा=जीवनलोकेन च विरेचिताम्=क्लमं प्रापिताम्. अन्यत्र रिक्तीकृताम्.. केशकलापेन=केशसमूहेन मरणोपायेन=मृत्युसाधनेन आकुलाम्=विकीर्णां स्रस्तकेशीमित्यर्थः अन्यत्र व्याकुलाम्. केनोपायेन मरिष्यामीति चिन्ताकुलामित्यर्थः, अध्वनि=मार्गस्य धूलिभिः=रजोभिः अङ्गानां=पादादीनां वेदनाभिः=व्यथाभिश्च विवर्णिताम्=धूसरिताम् अन्यत्र निष्प्रभाम् चण्डातपेन=प्रचण्डघर्मेण वैधव्येन=विगतः धवः=भर्ता यस्याः सा विधवा तस्या भावः वैधव्यं तेन दग्धाम्=तप्ताम्. अन्यत्र दुःखिताम्., पाणिना=करेण मौनेन=तूष्णींभावेन च धृतं मुखं यस्याः ताम्.. चिन्तया तया स्वकरे मुखं स्थापितम्. आसीत्, तस्याः ओष्ठौ च मौनमाकलयतः स्मेति भावः प्रियसखीजनेन=प्रियसखीभिः मन्युना=दुःखेन च गृहीताम्=अन्यत्र आक्रान्ताम्., उपरि सर्वत्र प्रस्तुताप्रस्तुतयोः एकक्रियारूपधर्माभिसम्बन्धात् तुल्ययोगितालंकारः, भ्रष्टः=च्युतैः मृतैरित्यर्थः अन्यत्र त्यक्तैः बन्धुभिः=पित्रादिभिः

हिन्दी—(वन) पर्यटन से विरेचित (थकी) थी तो आयु से भी विरेचित (खाली) हो पड़ी थी, केश-समूह से आकुल (बिखरी हुई) थी तो मृत्यु के उपाय से भी आकुल (व्याकुल) थी, मार्ग की धूलियाँ और अंगों की वेदनायें–दोनों रंग बदले हुए थी, प्रचण्ड धूप और वैधव्य-दोनों से दग्ध हुई पड़ी थी, हाथ और मौन—दोनों से मुख धारण किये हुए थी, तथा प्रिय सखीजन और दुःख द्वारा ग्रहण की हुई थी, जिसके बन्धु-बान्धव और विलास दोनों समाप्त हो गए थे, कानों से आभरण चले गए तो (भीतर से) मन भी चला गया, भूषण गए और सभी काम-धन्धे भी गए, हाथ के कड़े और मनोरथ-दोनों भग्न हो गए, चरणों में दासियाँ और दर्भाकुरों की नोंकें दोनों लगी हुई थी, चक्षु हृदय (वक्षःस्थल)

चक्षुषा प्रियेण च, दीर्घैः शोकश्वसितैः केशैश्च, क्षीणेन वपुषा पुण्येन च, पादयोः पतन्तीभिर्वृद्धाभिरश्रुधाराभिश्च, स्वल्पावशेषेण परिजनेन जीवितेन च, अलसामुन्मेषे, दक्षामश्रुमोक्षे, सन्ततां चिन्तासु, विच्छिन्नामाशासु, कृशां काये, स्थूलां श्वसिते, पूरितां दुःखेन, रिक्तां सत्त्वेन, अध्यासितामायासेन, शून्यां हृदयेन, निश्चलां निश्चयेन, चलितां धैर्यात्, अपि च वसतिं व्यसनानाम्, आधानमाधीनाम्, अवस्थानमनवस्थानाम्, आधारमधृतीनाम्, आवासमवसादानाम्, आस्पदमापदाम्, अभियोगमभाग्यानाम्, उद्वेगमुद्वेगानाम्, कारणं करुणायाः, [1]पारं परायत्ततायाः योचितम् । चिन्तितवानस्मि च चित्रमीदृशीमप्याकृतिमुपतापाः स्पृशन्तीति । सा तु समीपगते मयि तदवस्थापि सबहुमानमानतमौलिः प्रणतवती । अहं तु प्रबलकरुणाप्रेर्यमाणस्ता-

---

टीका-विलासैः = सुखचेष्टाभिः आनन्दोपभोगैर्वा इत आरभ्य सर्वत्र तृतीया-स्थलेषु उपलक्षणे तृतीया ज्ञेया अर्थात् भ्रष्टैः = वन्धुभिः विलासैश्च उपलक्षिताम् युक्तामित्यर्थः भूषतेन = रहितेन कर्णाभरणैरिति शेषः अन्यत्र शून्येन श्रवणयुगलेन = कर्णद्वयेन आत्मना मनसा शून्यमनस्कतयेत्यर्थः उपलक्षिताम्, परित्यक्तैः = उज्झितैः भूषणैः सर्वारम्भैः = सर्वकार्यैश्च, भग्नैः = त्रुटितैः वलयैः = कंकणैः यतः सा विधवा आसीत् ध्वस्तैश्च मनोरथैः = अभिलषितैः, चरणयोः लग्नाभिः = पतिताभिः प्रणतिपूर्वकं मरणोद्यमात् निवारयन्तीभिरित्यर्थः चरणयोः लग्नाभिः = अन्तः प्रविष्टाभिः दर्भाङ्कुराणां सूचीभिः कण्टकैरित्यर्थः, हृदये = वक्षःस्थले अन्यत्र मनसि विनिहितेन = निक्षिप्तेन, अन्यत्र स्थापितेन च चक्षुषा = नयनेन प्रियेण = भर्त्रा, दीर्घैः = आयतैः अन्यत्र लम्बमानैः शोकस्य श्वसितैः = निःश्वासैः केशैश्च, क्षीणेन = कृशेन वपुषा = देहेन क्षीणेन = क्षयं गतेन पुण्येन = सुकृतेन च, पादयोः पतन्तीभिः = प्रणमन्तीभिः, गलन्तीभिश्च वृद्धाभिः = वृद्धनारीभिः अश्रुधाराभिश्च स्वल्पः अवशेषः यस्य तेन कतिपयावशिष्टेनेत्यर्थः परिजनेन = भृत्यवर्गेण, स्वल्पावशेषेण = किञ्चिच्छेषकालावस्थायिनेत्यर्थः जीवितेन = प्राणैः उपलक्षिताम्, अलंकारः पूर्ववदेव । उन्मेषे = नेत्रोन्मीलने अलसाम् = मन्दाम् नेत्रमीलनासमर्थामित्यर्थः अश्रुमोक्षे = अश्रुप्रवाहे दक्षाम् = निपुणाम् अनलसामिति यावत् इदानीं ग्रन्थकारः परस्पर-विरुद्धार्थकं विशेषणयुगलं प्रयुङ्क्ते यथा—अलसां दक्षाञ्च, कृशां स्थूलाञ्च, निश्चलां चलिताञ्च किन्तु विषयभेदात् विरोधपरिहारः चिन्तासु = मनस्तापेषु सन्तताम् अविच्छिन्नाम् निरन्तरचिन्ताकुलामित्यर्थः आशासु विच्छिन्नाम् = भग्नाम् भग्नाशामित्यर्थः, काये = शरीरे कृशां = क्षीणां श्वसिते = दीर्घनिश्वासे स्थूलां = विपुलाम् दुःखेन = शोकेन पूरितां = भरितां, सत्त्वेन = बलेन उत्साहेन वा रिक्तां = शून्याम्, आयासेन = क्लेशेन अध्यासिताम् = अधिष्ठिताम् हृदयेन शून्यां = रिक्तां निश्चयेन = मरणाऽध्यवसायेन निश्चलां = दृढां धैर्यात् चलिताम् = च्युताम् गतधैर्यामित्यर्थः, अपि च व्यसनानाम् = आपत्तीनाम् वसतिं = निवासस्थानम्, आधीनां = मनोव्यथानाम् आधानम् = आधारम्, अनवस्थानां = दुरवस्थानाम् अवस्थानम् = आवासस्थानम्, अधृतीनाम् = अधैर्याणाम् आधारम् = अधिकरणम्, अवसादानाम् = मूर्छाणाम् आवासम् = स्थानम्, आपदाम् = संकटानाम् आस्पदम् = स्थानम् अभाग्यानां = दौर्भाग्यानां अभियोगम् = उद्योगम्, उद्वेगानां = विषादानां नैराश्यानामिति यावत् उद्वेगम् = विषादम् अर्थात् सा नैराश्यानां चरमोत्कर्ष आसीत् करुणायाः = कारुण्यस्य कारणं = हेतुं करुणोत्पादिकामित्यर्थः परायत्ततायाः = पराधीनतायाः निराश्रयतायाः इति यावत्

हिन्दी-पर स्थापित था, तो प्रिय हृदय में शोक की आहें और केश दोनों लम्बे थे, शरीर क्षीण था तो पुण्य भी क्षीण था, पैरों में वृद्धायें और अश्रुधारायें—दोनों गिर रही थी और मृत्यु तथा प्राण दोनों ही थोड़े ही शेष बचे हुए थे, जो आँखें खोलने में ढीली थी ( पर ) आँसू गिरने से तेज, चिन्ताओं में खूब फँसी हुई थी ( किन्तु ) आशाओं में भग्न, शरीर में कृश थी ( किन्तु ) निश्वासों में स्थूल, दुःख से भरी हुई थी ( किन्तु उत्साह से रिक्त, थकान से भरपूर थी ( किन्तु ) हृदय से शून्य और निश्चय से अविचल थी ( किन्तु ) धैर्य से विचलित, तथा जो विपत्तियों का घर, मनोव्यथाओं का आधार, दुरवस्थाओं का स्थान, अधीरताओं का आश्रय, मूर्छाओं का आवास, आपदाओं का भाजन, दौर्भाग्यों का उद्योग, उद्वेगों का उद्वेग, करुणा का कारण और विवशता की पराकाष्ठा थी । और सोचनेलगा—"कितनी आश्चर्य की बात है कि ऐसी ( सुन्दर ) आकृति के ऊपर भी दुःख आ पड़ते हैं ।" मेरे समीप आने पर वैसी अवस्था में होती हुई भी उसने सिर झुकाकर मुझे प्रणाम किया । बड़ी भारी करुणा से प्रेरित

---

१. 'पदं परायत्ततायाः' ।

मालपितुकामः पुनः कृतवान्मनसि—कथमिव महानुभावामेनामामन्त्रये । 'वत्से' इत्यतिप्रणयः, 'मातः' इति चाटु, 'भगिनि' इत्यात्मसम्भावना, 'देवि' इति परिजनालापः, 'राजपुत्रि' इत्यस्फुटम्, 'उपासिके' इति मनोरथः, 'स्वामिनि' इति भृत्यभावाभ्युपगमः, 'भद्रे' इतीतरस्त्रीसमुचितम्, 'आयुष्मति' इत्यवस्थायामप्रियम्, 'कल्याणिनि' इति दशायां विरुद्धम्, 'चन्द्रमुखि' इत्यमुनिमतम्, 'बाले' इत्यगौरवोपेतम्, 'आर्ये' इति जरारोपणम्, 'पुण्यवति' इति फलविपरीतम्, 'भवति' इति सर्वसाधारणम् । अपि च 'कासि' इत्यनभिजातम्, 'किमर्थं रोदिषि' इति दुःखकारणस्मरणकारि, 'मा रोदीः' इति शोकहेतुमनपनीय न शोभते, 'समाश्वसिहि' इति किमाश्रित्य, 'स्वागतम्' इति यातयामम्, 'सुखमास्यते' इति मिथ्या । इत्येवं चिन्तयत्येव मयि तस्मात्स्त्रैणावृत्यायान्यतरा योषिदार्यरूपेव शोकविक्लवा समुपसृत्य कतिपयपलितशारं शिरो नत्वा महीतलमतुलहृदयसन्तापसूचकैरश्रुबिन्दुभिश्चरणयुगलं दहन्ती ममातिकृपणैरक्षरैश्च हृदयमभिहितवती—'भगवन् , सर्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या ।

---

टीका—पारम् = अन्तम् पराकाष्ठामित्यर्थः योषितम् = नारीम् दृष्टवान् अस्मि इति पूर्वान्वयः चिन्तितवान् अस्मि = अचिन्तयम् चित्रम् = आश्चर्यमस्ति उपतापाः = सन्तापाः सांसारिकदुःखानीत्यर्थः ईदृशीम् अपि आकृतिम् = सुन्दरदेहमित्यर्थः स्पृशन्ति = स्वायत्तीकुर्वन्ति । तदवस्था = सा अवस्था = दशा यस्याः तथाभूतापि बहुना मानेन = आदरेण सहितं यया स्यात्तथा आनतः = अवनतः मौलिः = शिरः यया सा प्रणतवती = प्रणामं चक्रे ।

प्रबला = महती या करुणा = दया तया प्रेर्यमाणः = प्रणुद्यमानः ताम् आलपितुं कामः = इच्छा यस्य तथाभूतः [ 'तुम्काम-मनसोरपि' इति मकारलोपः ] मनसि कृतवान् = विचारितवान्, आमन्त्रये = सम्बोधयेयम् 'वत्से' इति सम्बोधने तु अति प्रणयः = अतिवात्सल्यम् तत्तु पित्रोरेवोचितम्, चाटु = मिथ्याप्रियोक्तिः तस्याः तरुणत्वात् आत्मसम्भावना = आत्मनः आदरः अर्थात् भगिनीति सम्बोधने आत्मनः तस्याः समकक्षत्वे स्थापनम् परिजनस्य = भृत्यवर्गस्य आलापः = सम्बोधनमित्यर्थः, अहं तु भृत्यो नास्मि, अस्फुटम् = अस्पष्टं तस्याः राजपुत्रीत्वेन अज्ञातत्वात्, मनोरथः = इच्छामात्रम् संभवतः बुद्धोपासिका न स्यात् यद्यप्यहम् इच्छामि सा तथा स्यात्, भृत्यभावस्य = सेवकत्वस्य अभ्युपगमः = स्वीकरणम् नचाऽहं भृत्यभावं स्वीकर्तुं शक्नोमि, इतराः = साधारणाः याः स्त्रियः तासां समुचितम्, सा तु साधारणा स्त्री नासीत् तस्याः जीवनस्य उच्चस्तरत्वात्, अवस्थायां = मरणोद्यमस्थितयां अप्रियं = श्रोतुमयोग्यमित्यर्थः कल्याणिनि सौभाग्यशालिनि दशायां = दुरवस्थायामित्यर्थः विरुद्धं विपरीतं सौभाग्ये सा कथं मर्तुमुद्यता स्यात्, चन्द्रवत् मुखं यस्याः तत्सम्बुद्धौ अमुनिमतं = मुनिभिः न स्वीकृतं संन्यासिनां तादृशसम्बोधनानौचित्यात्, अगौरवोपेतं गौरवरहितमित्यर्थः तथा सम्बोधने तस्या अनादरात्, जरायां = वृद्धावस्थायाम् आरोपं = स्थापनं सा तु युवतिरासीत्, फलविपरीतं = परिणामविरुद्धम्, पुण्यवतीषु तादृशदुर्गते अदर्शनात्, सर्व-साधारणं = सर्वसामान्यम् अनभिजातम् = न सत्कुलोत्पन्नोचितम्, धृष्टतापूर्णमित्यर्थः, दुःखकारणस्य स्मरणम् कारयतीति तथोक्तम्, शोकहेतुं = दुःखकारणम् अनपनीय = न शोभते = न साधु प्रतीयते, किमाश्रित्य = कस्याश्रये, विना आश्रयं न भवति समाश्वासनम्, यात-याम = याताः = वीताः

हिन्दी—किया जा रहा, उससे बोलना चाहता हुआ मैं फिर सोचने लगा कि किस प्रकार मैं उस महानुभावा को सम्बोधित करूँ ।'' 'बच्ची'' कहना अतिशय प्रेम है, ''माता'' कहूँ तो यह चाटुकारिता है, ''बहिन'' कहने में अपना सम्मान होता है, ''देवी'' कहता हूँ तो यह नौकरों का सम्बोधन है, ''राजपुत्री'' पुकारने में बात अस्पष्ट है, ''उपासिका'' कहता हूँ तो यह मनोरथ मात्र है, 'स्वामिनी'' कहता हूँ तो इसमें दासत्व स्वीकार होता है, ''भद्रे'' कहना साधारण स्त्रियों के योग्य है, ''आयुष्मती'' यह शब्द ऐसी अवस्था में अप्रिय है, ''कल्याणिनी'' कहना भी दशा के विपरीत है ''चन्द्रमुखी'' पुकारूँ तो यह संन्यासियों के लिये निषिद्ध है, ''लड़की'' कहने में इसका गौरव नहीं रहता, ''आर्या'' कहने में इसे बूढ़ी बनाना है, ''पुण्यवती'' कहूँ तो यह फल के विपरीत है, ''भवती'' यह सर्वसाधारण का सम्बोधन है, अपिच 'तू कौन है'' यह ( पूछना ) धृष्टता है, ''क्यों रो रही है'' ? ऐसा पूछना दुःख कारण की याद दिलाना है, ''मत रो'' ऐसा कहना बिना शोक का कारण दूर किए शोभा नहीं देता है, 'धैर्य रख' यह भी किसके सहारे कहूँ । 'स्वागत है' यह कहना पुराना पड़ गया है, 'आनन्द से हो ?' यह पूछना भी झूठ है, इस प्रकार मेरे सोचते-सोचते उस स्त्री-समूह में से कोई एक स्त्री जो संभ्रान्त जैसी दिखाई पड़ रही थी और शोक से विह्वल थी—आगे आकर वृद्धावस्था के कारण सफेद हुए पड़े हुए कुछ बालों से रंग-बिरंगे बने शिर को भूतल की ओर ले जाकर हृदय के अतुलनीय संताप के सूचक आँसुओं की बूँदों से मेरे पैरों को और अति-दीनता-भरे शब्दों से मेरे हृदय को जलाती हुई बोल उठी—भगवन् ! सन्यास-

प्रतिपन्नपरदुःखक्षपणदीक्षादक्षाश्च भवन्ति सौगताः। करुणाकुलगृहं च भगवतः शाक्यमुनेः शासनम्। सकलजनोपकारसज्जा सज्जनता जैनी। परलोकसाधनं च धर्मो मुनीनाम्। प्राणरक्षणाच्च न परं पुण्यजातं जगति गीयते जनेन। अनुकम्पाभूमयः प्रकृत्यैव युवतयः किं पुनर्विपदभिभूताः। साधुजनश्च सिद्धक्षेत्रमार्तवचसाम्[1]। यत इयं नः स्वामिनी मरणेन[2] पितुरभावेन भर्तुः प्रवासेन च भ्रातुः भ्रंशेन च शेषस्य बान्धववर्गस्यातिमृदुहृदयतयानपत्यतया च निरवलम्बना, परिभवेन च नीचारातिकृतेन प्रकृतिमनस्विनी, अमुना च महाटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या, दग्धदैवदत्तैरेवंविधैर्बहुभिरुपर्युपरि व्यसनैर्विक्लवीकृतहृदया, दारुणं दुःखमपारयन्ती सोढुं निवारयन्तमनतिक्रान्तपूर्वं स्वप्नेऽप्यवगणय्य गुरुजनमनुनयन्तीरखण्डितप्रणया नमस्वपि समवयोयं प्रियसखीर्विज्ञापयन्तमशरणमश्रुव्याकुलनयनमपरिभूतपूर्वं मनसापि परिभूय भृत्यवर्गमग्निं प्रविशति। परित्रायताम्।

---

टीका—यामाः = प्रहराः यस्य तत् पर्युषितम् जीर्णप्रायमित्यर्थः मिथ्या = अयथार्थं तस्याः दुःखात्तरं नात् इति एवं मयि चिन्तयति = विचारयति एव स्त्रैणात् = स्त्रीणां समूहः इति ( स्त्री + नञ् पा० ४।१।८७ ) तस्मात् उत्थाय = उत्थिताभूत्वा अन्यतरा = एकतरा योषित् = स्त्री आर्यायाः इव रूपं यस्याः सा इव अर्थात् या सामान्या इव दृश्यतेस्म, शोकेन विक्लवा = विह्वला समुपश्रित्य = समुपगम्य कतिपयानि = कतिचित् यानि पलितानि = वार्धक्यकृत-शुक्लकेशाः तैः शारम् = कबुंरितम् शिरः महीतलं = भूतलं नीत्वा = विरः आवर्ज्येत्यर्थः अतुलः = असाधारणः यः हृदयस्य तापः = शोकः तस्य सूचकैः = द्योतकैः अश्रूणां बिन्दुभिः मम चरणयुगलं पादद्वयम् अतिकृपणैः = अतिदीनैश्च अक्षरैः = शब्दैरित्यर्थः हृदयं दहन्ती = ज्वलयन्ती अभिहितवती = अकथयत् प्रव्रज्या = संन्यासः प्रायः सर्वे च ते सत्त्वाः = जीवाः तान् अनुगृह्णातीति तथोक्ता भवतीति शेषः। सौगताः = सुगतस्य = बुद्धस्य अनुयायिनः बौद्धाः इति यावत् प्रतिपन्ना = स्वीकृता परेषां = अन्येषां दुःखस्य क्षपणं = निराकरणमित्यर्थः तस्य दीक्षायां = व्रते दक्षाः = निपुणाश्च भवन्ति। शाक्यमुनेः = बुद्धस्य शासनं = उपदेशः करुणायाः = दयायाः कुलगृहं = पितृगृह जन्मस्थानमिति यावत् पितृगृहे यथा कन्या मानं लभते तथैव बुद्धोपदेशे करुणायाः महत्वपूर्णं स्थानमिति भावः। जिनस्य = बुद्धस्य ( 'समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः' इत्यमरः ) इयम् इति (अण् + ङीप्) जैनी = बौद्धी सज्जनता = सज्जनसमूहः सकलानां जनानां = लोकानाम् उपकारे = हितकरणे सज्जा = उद्यता : मुनीनां = संन्यासिनां भिक्षूणामित्यर्थः परलोकस्य = उत्कृष्टलोकान्तरस्य साधनं = प्रापकमित्यर्थः धर्मः भवतीति शेषः, स च धर्मः पुण्यरूपो भवति जीवानां प्राणरक्षणात् परम् = उत्कृष्टं पुण्यजातम् = पुण्यराशिः जगति लोके जनेन = लोकैः न गीयते = प्रशस्यते, युवतयः - तरुणस्त्रियः प्रकृत्या = स्वभावतः एव अनुकम्पायाः = दयायाः भूमयः = पात्राणि भवन्तीति शेषः किं पुनः = किमुत विपदा = विपत्त्या अभिभूताः = आक्रान्ताः। साधुजनः = साधवः आर्त्तानाम् = दुःखार्त्तानां वचसां = वाणीनां प्रार्थनानामित्यर्थः सिद्धक्षेत्रं = सिद्धायतनं भवतीतिशेषः, अणिमादि सिद्धिप्राप्ताः पुरुषाः

हिन्दी—धर्म प्रायः सभी जीवों पर दया करने वाला होता है। बौद्ध लोग दूसरों के दुःखों को दूर कर देने की दीक्षा में दक्ष हुआ करते हैं। भगवान् बुद्ध का उपदेश करुणा का कुलगृह होता है। बौद्ध साधु-समाज सभी लोगों के उपकार हेतु तय्यार रहता है। और धर्म मुनि लोगों के लिये परलोक का साधन होता है। प्राण-रक्षा से अधिक ( कोई ) पुण्यराशि लोग नहीं मानते। स्वभावतः महिलाएँ दया की पात्र हुआ करती हैं, जिसपर यदि वे विपत्ति की मारी हुई हों तो बात ही क्या ?. साधु लोग दीनों के वचनों के सिद्धायतन हुआ करते हैं। क्योंकि यह हमारी स्वामिनी जो पिता के मर जाने, पति के विनाश, भाई के प्रवास चले जाने, शेष बान्धवों के छूट जाने, अति कोमल हृदय वाली होने और सन्तान न होने से निराश्रय हुई बैठी है, जो स्वभावतः महामना है जो नीच शत्रु द्वारा किये अपमान एवं इस विशाल वन में पर्यटन के क्लेश से अपना सौकुमार्य खोये हुए है, जो नीच दैव द्वारा उत्तरोत्तर दी गई ऐसी-ऐसी बहुत सी विपत्तियों के कारण हृदय में विह्वल हो गई है जो दारुण दुःख को न झेल सकती हुई उन गुरुजनों की—जिन ( की आज्ञा ) का इसने स्वप्न में भी पहले उल्लंघन नहीं किया था—कुछ परवाह न करके, उन प्रिय सखियों को—जिनसे परिहासों में भी इसका प्रेम अखण्डित ही रहा—ठुकराकर, प्रार्थना कर रहे, निराश्रय बने और आँखों में आँसू भरे उस भृत्य वर्ग का जिसका पहले कभी तिरस्कार नहीं किया था-तिरस्कार करके अग्नि में प्रवेश करने जा रही है। (उसकी) रक्षा कीजिए।

---

१. 'आर्यवचसां'। २. 'मरणेन च मातुः प्रवसनेन च पितुरभावेन च भर्तुः परलोकगमनेन च भ्रातुर्भ्रंशेन च'।

आर्योऽपि तावदसह्यशोकापनयनोपायोपदेशनिपुणां व्यापारयतु वाणीमस्याम्' इति चातिकृपणं व्याहरन्तीमहमुत्थाप्योद्विग्नतरः शनैरभिहितवान् 'आर्ये, यथा कथयसि तथा अस्मद्गिरामगोचरोऽयमस्याः पुण्याशयायाः शोकः। शक्यते चेन्मुहूर्तमात्रमपि त्रातुमुपरिष्टादस्य व्यर्थतामभ्यर्थना भविष्यति। मम हि गुरुरपर इव भगवान्सुगतः समीपगत एव। कथिते मयास्मिन्नुदन्ते नियतमागमिष्यति परमदयालुः। दुःखान्धकारपटलभिदुरैश्च सौगतैः सुभाषितैः स्वकैश्च दर्शितनिदर्शनैर्नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोधपदवीमारोपयिष्यति' इति। तच्च श्रुत्वा 'त्वरतामार्यः' इत्यभिदधाना सा पुनरपि पादयोः पतितवती। सोऽहमुपगत्य त्वरमाणो व्यतिकरमिममधृतिकरमशरण[1]कृपणबहुयुवतिमरणमतिकरुणमत्रभवते गुरवे निवेदितवान्' इति।

---

टीका–सिद्धाः उच्यन्ते, अयं भावः साधु-पुरुषाणां अग्रे आर्त्तानां वचांसि न विफलीभवन्ति, ते तेषाम् अवश्यं दुःखनिवारणं कुर्वन्ति। अत्र यतः इयं न स्वामिनी ·····अग्निं प्रविशति ···· आर्योऽपि तावत् व्यापारयतु वाणीमस्याम् इत्यस्ति वाक्य-रचना। यतः=यस्मात् नः=अस्माकं स्वामिनी=ईश्वरी पितुः=प्रभाकरवर्धनस्येत्यर्थः मरणेन=निधनेन, भर्त्तुः=पत्युः ग्रहवर्मणः इत्यर्थः अभावेन=विनाशेन भ्रातुः==हर्षवर्धनस्य प्रवासेन=यात्रायां गमनेन शेषस्य=अवशिष्टस्य बान्धववर्गस्य=ज्ञातिसमूहस्य भ्रंशेन=वियोगेन अतिशयेन मृदु=कोमलं हृदयं यस्याः तस्याः भावः तत्ता तया न अपत्यं=सन्ततिः यस्याः तस्याः भावः तत्ता तया निर्गतम् अवलम्बनम् = आश्रयो यस्याः सा निराश्रयेत्यर्थः नीचः=अधमः यः आरातिः = शत्रुः तेन कृतेन परिभवेन = अपमानेन प्रकृतितः = स्वभावतः मनस्विनी · महानुभावा, महाटव्यां = महारण्ये पर्यटनस्य = परिभ्रमणस्य क्लेशः = खेदः तेन कदर्थितं = पीड़ितं सौकुमार्यं=कोमलत्वं यस्याः सा, दग्धेन = हतेन अधमेनेत्यर्थः दैवेन = भाग्येन दत्तैः एवं विधैः = एतादृशैः बहुभिः उपरि उपरि - उत्तरोत्तरैः व्यसनैः=विपद्भिः विक्लवीकृतं=विह्वलीकृतं हृदयं यस्याः सा दारुणं= कठिनं दुःखं सोढुं = तत्सहनं कर्त्तुं अपारयन्ती अक्षमवन्ती, निवारयन्तं=प्रतिषेधन्तं स्वप्ने अपि न पूर्वम् अतिक्रान्तं= उल्लंघितम् अर्थात् येषां गुरूणां वचनं तया स्वप्नेऽपि नोल्लंघितमासीत्, गुरुजनं=वृद्धपुरुषान् अवगणय्य=अनादृत्य अनुनयन्तीः प्रबोधयन्तीः=अग्निप्रदेशात् निवारयन्तीः इत्यर्थः नर्मसु=परिहासेषु अपि न खण्डितः=विच्छिन्नः प्रणयः= स्नेहो यस्याः सा प्रियसखीः=प्रियसखीजनं समवधीर्य=अवज्ञाय, विज्ञापयन्तं=निवेदयन्तम् अशरणं=निराश्रयम् अश्रुभिः व्याकुलं=पूर्णं नयनं यस्य तं मनसा अपि वाचा कर्मणा तु किं वक्तव्यम् न पूर्वं परिभूतं=तिरस्कृत भृत्यवर्गं=परिचारकान् परिभूय=तिरस्कृत्य अग्निं प्रविशति। परित्रायतां=रक्ष्यताम् एषा। आर्यः=भवान् अपि असह्यस्य=सोढुमशक्यस्य शोकस्य यत् अपनयनं निराकरणं तस्य उपायस्य=साधनस्य उपदेशे निपुणां=दक्षां वाणीं=वाचम् अस्यां= नार्यां व्यापारयतु=प्रयोगे आनयतु अर्थात् वाण्या ज्ञानोपदेशं दत्त्वा मरणान्निवारयतु इति अतिकृपणम्=अतिदीनता पूर्वकं यथा स्यात्तथा व्याहरन्ती=कथयन्तीम् अहं तां स्त्रियम् उत्थाप्य=उन्नमय्य अतिशयेन उद्विग्नः=व्याकुलः अभिहितवान्=कथितवान्—अस्माकं गिरां=वाचाम् अगोचरः=अविषयः अस्याः तस्याः शोकः=दुःखम् अस्तीति शेषः अस्याः शोकः मम वाण्या अपनेतुमशक्यः इति भावः। मुहूर्त्तं=किंचित्कालम् एव मुहूर्त्तमात्रम् एनां त्रातुं=रक्षितुं शक्यते

हिन्दी–आप भी असह्य शोक को दूर करने का—उपायभूत उपदेश में निपुण अपनी वाणी का इस पर प्रयोग कीजिए, इस तरह बड़ी दीनतापूर्वक कहती हुई उस स्त्री को उठाकर मैं बहुत ही उद्विग्न हुआ बोला—'अजी, जैसा तुम कह रही हो, इस पवित्र विचारों वाली नारी का शोक हमारी वाणियों के वश से बाहर का है। यदि थोड़ी देर तक भी तुम इसकी रक्षा कर सको, तो इसके बाद तुम्हारी प्रार्थना व्यर्थ नहीं जायगी, क्योंकि दूसरे भगवान् बुद्ध—जैसे मेरे गुरु पास में ही है। मेरे यह समाचार कहने पर परम दयालु वे अवश्य आ जायेंगे और दुःख रूपी अन्धकार-समूह को फाड़ देने वाले, बुद्ध के सुभाषितों तथा अपने दृष्टान्तपूर्वक दिखाये नानाशास्त्रों के महत्त्व से भरे वाक्चातुर्यों से इस पवित्र स्वभाव वाली नारी को ज्ञान-मार्ग पर आरूढ़ कर देंगे'। यह सुनकर 'तो शीघ्रता कीजिए' यह कहती हुई वह स्त्री फिर मेरे पैरों में गिर पड़ी। मैंने शीघ्र आकर धैर्य भंग कर देना वाला, बहुत-सी निःसहाय, दीन युवतियों के प्राणों को लेने वाला अति करुणापूर्ण यह समाचार आदरणीय गुरु चरणों में निवेदन कर लिया है।

---

1. 'अशरणम्'।

अथ भूभृद् भैक्षवं समवधार्य तद्बाष्पमिश्रितमश्रुतेऽपि स्वसुर्नाम्नि निम्नीकृतमना मन्युना सर्वाकारसंवादिन्या तथैव दूरीकृतसंदेहो दग्ध इव सोदर्यावस्थाश्रवणेन श्रवणयोः श्रमणाचार्यमुवाच—'आर्य, नियतं सैवेयमनार्यस्यास्य जनस्यातिकठिनहृदयस्यातिनृशंसस्य मन्दभाग्यस्य भगिनी भागधेयैरेतामवस्थां नीता निष्कारणवैरिभिर्वराकी विदीर्यमाणं मे हृदयमेवं निवेदयति' इत्युक्त्वा तमपि श्रमणमभ्यधात्—'आर्य, उत्तिष्ठ। दर्शय क्वासौ। यत[1]स्व प्रभूतप्राणिपरित्राणपुण्योपार्जनाय। यामः। यदि कथंचिज्जीवन्तीं सम्भावयामः' इति भाषमाण एवोत्तस्थौ।

---

टीका—प्रार्थ्यते चेत् तर्हि उपरिष्ठात् मुहूर्त्तानन्तरमित्यर्थः इयं ते अभ्यर्थना=मरणनिवारणविषयकप्रार्थना व्यर्था=निष्फला न भविष्यति। हि=यतः मम गुरुः=आचार्यः अपरः भगवान् सुगतः=बुद्ध इवेत्युत्प्रेक्षायां समीपगतः=सन्निहित एव अस्तीति शेषः। मया तं प्रति अस्मिन् उदन्ते=वृत्तान्ते कथिते=उक्ते सति पर दयालुः स नियतं=अवश्यमेव आगमिष्यति। दुःख एव अन्धकारपटलम्=अन्धकारराशिः तस्य भिदुरैः=भेदकैः निराकर्तृभिरित्यर्थः सौगतैः=सुगतस्य=बुद्धस्य इमानि तैः बुद्धप्रोक्तैरित्यर्थः सुभाषितैः=सूक्तिभिः स्वकैः=स्वकीयैः दर्शितानि=संगमितानि निदर्शनानि=दृष्टान्ताः येषु तैः नानागमैः=विविधशास्त्रैः गुरुभिः=महत्वपूर्णैः गिरां=वाचां कौशलैः=नैपुण्यैः कुशलं=पुण्यं शीलं=स्वभावो यस्याः ताम् एनाम्=नारीं प्रबोधस्य=ज्ञानस्य पदवीं=मार्गम् आरोपयिष्यति=आरूढां करिष्यति। त्वरतां=शीघ्रता क्रियताम् इति अभिदधाना=कथयन्ती पादयोः=चरणयोः भिक्षोरिति शेषः पतितवती=अपतत्। त्वरमाणः=त्वरांकुर्वन् उपगम्य=भवतः समीपे आगत्य इमं अधृतिकरं=अधैर्योत्पादकम्, अशरणानां=अनाश्रयाणां कृपणानां=दीनानां बह्वीनां=अनेकासां युवतीनां=तरुणीनां मरणं=मृत्युः यस्मिन् तम् अतिकरुणम्=अत्यन्तकरुणापूर्णं व्यतिकरं=वृत्तम् अत्र भवते=आदरणीयाय गुरवे निवेदितवान्=विज्ञापितवान्।

भूभृत्=राजा हर्षः भैक्षवं=भिक्षोः=बौद्धसन्यासिनः इदं इति (अण्) अश्रुभिः मिश्रितं=सम्मिलितं तत् भाषितं=कथनं समवधार्य=आकर्ण्येत्यर्थः स्वसुः=भगिन्याः नाम्नि=नामधेये अश्रुते=न श्रवणविषयीकृते अपि मन्युना=दुःखेन निम्नीकृतं=नीचैः कृतम् अभिभूतमित्यर्थः मनः यस्य सः, सर्वैः आकारैः=आकृतिभिः सम्वदति=मिलतीति तथोक्तया दशया=अवस्थया तस्याः नार्याः इति शेषः दूरीकृतः=निराकृतः सन्देहः येन सः, सोदर्यायाः=भगिन्याः अवस्थायाः श्रवणेन=आकर्णनेन श्रवणयोः=कर्णयोः दग्धः=प्लुष्टः इवेत्युत्प्रेक्षायां श्रमणाचार्यं=बौद्धभिक्षुकम् उवाच=अकथयत्—नियतम्=अवश्यम् अनार्यस्य=नीचस्य अतिशयेन कठिनं=कठोरं हृदयं यस्य तस्य अतिशयेन नृशंसस्य=निर्दयस्य दौर्भाग्यवतः अस्य जनस्य=ममेत्यर्थः निष्कारणं=कारणं विनैव यथास्यात्तथा वैरिभिः=शत्रुभिः भागधेयैः=भाग्यैः एताम् अवस्थां=दशां नीता प्रापिता वराकी=तपस्विनी भगिनी=स्वसा मे विदीर्यमाणं=स्फुटत् हृदयं एवं निवेदयति=विज्ञापयति कथयतीत्यर्थः इति उक्त्वा=कथयित्वा तम् अपि श्रमणम् बौद्धसंन्यासिनम् अभ्यधात्=अकथयत्—यतस्व=प्रयत्नंकुरु प्रभूताः बहवः=ये प्राणिनः=शरीरिणः तेषां परित्राणं=परिरक्षणं तेन यत् पुण्यं=सुकृतं तस्य उपार्जनाय=लाभाय एकस्या राजश्रियः पश्चात् अनेकेषामपि स्त्रीणाम् आत्मदाहो निश्चित एव। यामः=गच्छाम-स्तत्र। कथंचित्=केनापि प्रकारेण जीवन्तीम्=प्राणान् धारयन्तीम् अद्य यावत्तु अग्नौ प्रविष्टामित्यर्थः सम्भावयामः=आद्रियामहे अर्थात् यदि वयं तत्र गच्छेम तां जीवितां लभेमहि इति भाषमाणः=कथयन् उत्तस्थौ=प्रस्थानाय उत्थितवान्।

हिन्दी—इसके बाद भिक्षु का आँसुओं से भरा वह कथन सुनकर, बहन का नाम न सुनने पर भी दुःख से अभिभूत हुआ सभी आकारों में मिलने-जुलने वाली उसकी दशा से ही सन्देह मिटाये, बहन की दुर्दशा से कानों में जला हुआ-जैसा हर्ष, बौद्ध भिक्षु से बोला— आर्य, बिना कारण वैरी बने भाग्यों द्वारा इस अवस्था को पहुँचाई अवश्य यही बेचारी मुझ अधम, अति कठोर हृदय वाले, अति निर्दयी, मन्दभागी की बहन है—यह फटा जा रहा मेरा हृदय बोल रहा है यह कहकर वह उस बौद्ध भिक्षु को भी बोला—'आर्य, उठो दिखाओ वह कहाँ है? अनेक प्राणियों की रक्षा द्वारा पुण्योपार्जन का प्रयत्न करो। चलो, चलें। सम्भवतः हम किसी तरह उसे जीती (पाकर) सम्मानित कर लें' यह कहता-कहता ही राजा उठ खड़ा हुआ।

---

1. 'यतः सप्रभूतप्राण०'।

अथ समग्रशिष्यवर्गानुगतेनाचार्येण तुरगेभ्यश्चावतीर्य समस्तेन सामन्तलोकेन पश्चादाकृष्यमाणाश्वीयेनानुगम्यमानः पुरस्ताच्च तेन शाक्यपुत्रीयेण प्रदिश्यमानवर्त्मा पद्भ्यामेव तं प्रदेशमविरलैः पदैः पिबन्निव प्रावर्तत । क्रमेण च समुपगतः शुश्राव लतावनान्तरितस्य मुमूर्षोर्महतः स्त्रैणस्य तत्कालोचितानमनेकप्रकारानालापान् – 'भगवन्धर्म, धाव शीघ्रम् । क्वासि कुलदेवते । देवि धरणि, धीरयसि न दुःखितां दुहितरम् । क्व नु खलु प्रोषिता पुष्यभूतिकुटुम्बिनी लक्ष्मीः । अनाथां नाथ मुखरवंश्य विविधाधिविधुरां वधूं विधवां विबोधयसि किमिति नेमाम् । भगवन्, भक्तजने संज्वरिणि सुगत सुप्तोऽसि । राजधर्म पुष्यभूतिभवनपक्षपातिन्, उदासीनीभूतोऽसि कथम् । त्वय्यपि विपद्बान्धव विन्ध्य वन्ध्योऽयमञ्जलिबन्धः । मातर्महाटवि, रटन्तीं न शृणोषि[1] मामापत्पतिताम् । पतङ्ग, प्रसीद पाहि पतिव्रतामशरणाम् । प्रयत्नरक्षित कृतघ्न चारित्रचण्डाल

टीका–समस्तः=सकलश्चासौ शिष्यवर्गः=शिष्यमण्डलं तेन अनुगतेन=अनुसृतेन आचार्येण=दिवाकरमित्रेण, तुरगेभ्यः अश्वेभ्यश्च अवतीर्य=नीचैः आगत्य, समस्तेन सामन्तलोकेन=अधीनराजगणेन पश्चात्=पृष्ठतः आकृष्यमाणं=वल्गां गृहीत्वा नीयमानमित्यर्थः, अश्वीयम्=अश्ववृन्दं येन तेन [ 'वृन्दे त्वश्वीयमश्ववत्' इत्यमरः ] अनुगम्यमानः=अनुस्रियमाणः हर्षः पुरस्तात्=अग्रतः तेन शाक्यपुत्रीयेण=शाक्यभिक्षुकेण दिवाकरमित्रशिष्येणेत्यर्थः प्रदिश्यमानं=निर्दिश्यमानं वर्त्म=मार्गः यस्मै स हर्षः पद्भ्यां=चरणाभ्याम् एव प्रदेशं=स्थानम् अविरलैः=दीर्घैः पदैः=पादप्रक्षेपैः पिबन्=पानविषयीकुर्वन् इवेत्युत्प्रेक्षायाम् प्रावर्त !=प्रचलितः इत्यर्थः, समुपगतः=तत्स्थानं प्राप्तः लतानां वनेन अन्तरितस्य=व्यवहितस्य आवृतस्येति यावत् मुमूर्षोः=मर्तुमिच्छोः मरणोन्मुखस्येत्यर्थः स्त्रैणस्य=स्त्रीसमूहस्य तस्मिन् काले=मरणकाले इत्यर्थः, उचितान्=अनेकप्रकारान् विविधान् आलापान्=संलापान्—धाव=द्रुतमागच्छ । धरणि=पृथिवि धीरयसि=धीरीकरोषि धैर्यं ददासीत्यर्थः दुहितरं=पुत्रीम् । प्रोषिता=प्रवासं कृतवती गतेत्यर्थः पुष्पभूतेः=हर्षवंशप्रवर्तकस्य एतन्नामकस्य राज्ञः कुटुम्बिनी=गृहिणी लक्ष्मीः=राजश्रीः । मुखरवंश्य !=मुखरवंशोत्पन्न ! नाथ=स्वामिन् ग्रहवर्मन् ! अनाथां=नाथरहितां विविधैः=नानाप्रकारैः आधिभिः=मनोव्यथाभिः विधुरां=विकलवां विधवाम् इमां वधूं=पत्नीं राज्यश्रीमित्यर्थः किमिति=कस्मात् न विबोधयसि=बोधं प्रापयसि सान्त्वयसीत्यर्थः । सुगत !=बुद्ध ! भक्तजने संज्वरिणि=सन्तापवति ( 'सन्तापः संज्वरः समौ' इत्यमरः ) सति त्वं सुप्तः असि, भक्ताः संकटपतिताः त्वञ्च स्वपिषीत्यर्थः । पुष्पभूतेः भवनस्य=गृहस्य पक्षपातिन् = अनुग्राहक ! इत्यर्थः राजधर्म=राजकर्तव्य ! रक्षा हि राज्ञः प्रथमो धर्मः, शंकरस्तु 'राजधर्मो वृद्ध' इति व्याचष्टे उदासीनीभूतः=तटस्थीभूतः । विपत्सु बान्धव ! =बन्धो ! विन्ध्य ! विन्ध्याचल ! त्वयि अपि=त्वां प्रति अपि कृतः अञ्जलिबन्धः=करद्वयसंयोगः वन्ध्यः=विफलः त्वमपि न रक्षसीत्यर्थः, महाटवि=अरण्यानि आपत्सु=विपत्सु पतिता=गता रटन्तीं=विलपन्तीम् एनां=राजश्रियम् न शृणोषि=आकर्णयसि । पतङ्ग !=सूर्य ! प्रसीद=प्रसन्नो भव, अशरणाम्=असहायाम् पाहि=रक्ष । प्रयत्नेन रक्षित=पालित । कृतघ्न=अकृतज्ञ । चारित्र्यं=सच्चरित्रता पतिव्रतात्वमित्यर्थः चण्डाल !=नीच । नारीणां पातिव्रत्यं हि विपदि रक्षति किन्तु तदपि न रक्षार्थमागच्छति । लक्षणैः=राज्यश्रियः हस्तादिषु शुभ-चिह्नैः तस्याः कृते किम् अवधृतम्=निश्चितम् ? दुहि-

हिन्दी–तदनन्तर सभी शिष्य-गण अपने पीछे लिए-आचार्य दिवाकरमित्र तथा घोड़ों से उतरकर घोड़ों का समूह अपने पीछे खींचे चले आ रहे सामन्त लोगों को अपने पीछे रखे और आगे-आगे उस बौद्ध भिक्षु से मार्ग दिखाये हर्ष पैदल ही लंबे-लंबे डगों से उस स्थान को पीता हुआ-जैसा चल पड़ा । और क्रमशः वहाँ पहुँचे हुए उसने लतावन से घिरे, मरने को तय्यार हुए बैठे बड़े भारी स्त्री-समूह के तत्कालोचित अनेक प्रकार के विलाप सुने—'धर्म भगवान्, शीघ्र दौड़े आओ' 'कुल-देवता तुम कहाँ हो ?' 'देवी धरणी, दुःखी पुत्री को क्यों धीरज नहीं बँधाती ?' 'पुष्पभूति की गृहणी लक्ष्मी कहाँ प्रवास में चली गई हो ?' 'मुखरवंशीयनाथ, विविध मनोव्यथाओं से अकुलाई इस अनाथ विधवा को क्यों नहीं समझाते ?' 'भगवान् बुद्ध ! दुःख सतप्त भक्तजनों की ओर से तुम सोये पड़े हो ?' 'पुष्पभूति कुल के पक्षपाती हे राजधर्म ! तुम कैसे उदासीन हुए बैठे हो ?' 'विपत्ति के बान्धव हे विन्ध्याचल ! तुम्हें हाथ जोड़ती हूँ' 'माँ महाटवी ! विपत्ति में पड़ी, विलाप करती हुई इसकी तू नहीं सुनती ?' 'सूर्य ! प्रसन्न हूजिए, असहाय पतिव्रता को बचाइये' 'प्रयत्न से बचाए, हे

१. 'शृणोषि मामापद्•' ।

न रक्षसि राजपुत्रीम्। किमवष्टब्धं लक्षणैः। हा देवि दुहितृस्नेहमयि यशोमति, मुषितासि दग्धदैवदस्युना। देव, दुहितरि दह्यमानायां नापतसि प्रतापशील, शिथिलीभूतमपत्यप्रेम। महाराज राज्यवर्धन, न धावसि मन्दीभूता भगिनीप्रीतिः। अहो निष्ठुरः प्रेतभावः। व्यपेहि पाप पावक स्त्रीघातनिर्घृण, ज्वलन्न लज्जसे। भ्रातर्वात, दासी तवास्मि। संवादय द्रुतं देवीदाहं देवाय दुःखितजनार्तिहराय हर्षाय। नितान्तनिःशूक शोकश्वपाक, सकामोऽसि। दुःखदायिन्वियोगराक्षस, तुष्टोसि। विजने वने कमाक्रन्दामि, कस्मै कथयामि, कमुपयामि शरणम्, कां दिशं प्रतिपद्ये, करोमि किमभागधेया। गान्धारि, गृहीतोऽयं लतापाशः। पिशाचि मोचनिके, मुञ्च शाखाग्रहणकलहम्। कलहंसि, हंसि किमतः परमुत्तमाङ्गम्[1]। मङ्गलिके मुक्तगलं किमद्यापि रुद्यते। सुन्दरि, दूरीभवति सखीसार्थः। शबर्यसि कथमिवाशिवे शवशिविरे शबरिके। सुतनु, तनूनपाति पतिष्यसि त्वमपि। मृणालकोमले मालावति, म्लानासि। मातर्मातङ्गिके, अङ्गीकृतस्त्वयापि मृत्युः। वत्से वत्सिके

टीका—तरि = पुत्र्यां यः स्नेहः = प्रेम स एव तन्मयी = तत्सम्बुद्धौ दग्धं = हतं नीचमित्यर्थः यद् दैवं = भाग्यम् एव दस्युः चौरः तेन मुषिता = लुंठिता असि। देव = महाराज प्रतापशील! = एतत् प्रभाकरवर्धनस्योपनामासीत् अर्थात् प्रभाकरवर्धन! दुहितरि = पुत्र्यां राज्यश्रियां दह्यमानायाम् = आत्मानं दग्धुमुद्यतायाम् अत्रासन्नभविष्यत्कालीनलटि शानच् ज्ञेयः, न आपतसि = आगच्छसि, अपत्ये = सन्ततौ प्रेम शिथिलीभूतम् = मन्दीभूतम्? भगिन्यां = स्वसरि राज्यश्रियां प्रीतिः = स्नेहः। प्रेतभावः = प्रेतत्वं निष्ठुरः = निर्दयः अर्थात् मृतानां संसारः निष्करुणः। व्यपेहि = अपगच्छ पावक! = वह्ने! स्त्रीणां घाते = मारणे निर्घृणः = निर्दयः! वात! वात = वायो! संवादय = कथय देव्याः = राज्यश्रियः दाहम् = अग्निप्रवेशवृत्तान्तमित्यर्थः दुःखितजनस्य आर्ति = पीडां हरतीति तथोक्ताय देवाय = हर्षाय। नितान्तम् = अत्यन्तं यथा स्यात्तथा निःशूक = निर्दय ('शूकोऽस्त्री शुङ्कदययोः' इति मेदिनी) शोक एव श्वपाक = चण्डाल! सकामः = सफलमनोरथः। दुःखदायिन् = दुःखदायक वियोग एव राक्षस तुष्टः = प्रसन्नः असि? विजने = शून्ये वने आक्रन्दामि = आह्वयामि ['आक्रन्दः क्रन्दने ह्वाने मित्रदारुणयुद्धयोः' इति मेदिनी] प्रतिपद्ये = गच्छामि। अभागधेया = अभागिनी। गान्धारीत्यादीनि दासीनां नामानि सन्ति, लता एव पाशः = बन्धनम् गृहीतः = धृतः गलबन्ध द्वारा प्राणविमोचनार्थमिति भावः, त्वम् अन्यं गृहाण पिशाचि (यतः वृक्षशाखासु पिशाचाः निवसन्तीति कथयन्ति) मोचनिके लताशाखाग्रहणस्य कलहं = विवादं मुञ्च = त्यज। अतः परम् = इदानीमपि उत्तमाङ्गं = शिरः हंसि = ताडयसि अर्थात् तव दुःखानामन्तः आगतः एव। मुक्तगलं = मुक्तकण्ठं यथा स्यात्तथा। सखीनां सार्थः = समूहः दूरी भवति = दूरं गच्छति अर्थात् तं लोकं गच्छति यतः सा न पुनरावर्तते। शबरिके = किराति सा खलु वने तासां सहायतां करोतिस्म, अशिवे = अमङ्गले शवानां = मृतकानां शिविरे = निवेशे कथम् इवेति वाक्यालंकारे अस्मासु दग्धासु अत्र शवाः एव शवाः अवशिष्टा भविष्यन्तीति भावः। तनूनपाति = अग्नौ मृणालवत कोमला तत्सम्बुद्धौ मृणालकोमले। म्लाना = म्लानिं गतासि? मृत्युः = आत्मदाह इत्यर्थः अङ्गी-

हिन्दी-कृतघ्न, चरित्ररूपी चण्डाल! राजकुमारी की रक्षा नहीं करता?' 'अच्छे लक्षणों ने जाने क्या ठान रखा है?' 'पुत्री के लिए प्रेममयी हा रानी यशोमती। अधम दैव-रूपी डाकू द्वारा तुम लुट गई हो'। 'महाराज प्रतापशील [ प्रभाकरवर्धन ] पुत्री के भस्म होते हुए तुम ( बचाने ) नहीं आते? सन्तान के प्रति प्रेम क्या शिथिल पड़ गया?' 'महाराज-राज्यवर्धन! दौड़े नहीं आते? बहन की प्रीति मन्द हो गई है'? 'आश्चर्य है मरे हुए लोग निष्ठुर हुआ करते हैं!' 'स्त्रियों का वध करने वाली निर्दयी पापी आग परे हट. जलती हुई तू लजाती नहीं?' 'भाई वायु, तेरी दासी हूँ दुःखी लोगों की विपत्ति हरने वाले महाराज हर्षवर्धन के पास रानी के दाह की खबर शीघ्र पहुँचा दे'। 'अरे महानिर्दयी चण्डाल शोक! तेरे मनकी हो रही है' 'दुःख देनेवाला वियोगरूपी राक्षस! तू प्रसन्न है?' 'शून्य वन में किसे पुकारूँ? किसे कहूँ? किसकी शरण में जाऊँ? किस दिशा में जाऊँ? मैं अभागिनी क्या करूँ?' 'गान्धारी यह लतापाश मैंने ले लिया है'। 'पिशाची शाखा ग्रहण करने का झगड़ा छोड़'। 'कलहंसी! अब कितना शिर पीटेगी?' 'मंगलिका! क्या अब भी गला फाड़-फाड़ कर रोती रहेगी?' 'सुन्दरी! सखीगण दूर जा रहा है'। 'शबरिका! मुर्दों के बुरे शिविर में तू कैसे रहेगी?' 'सुतनु! तू भी आग में गिरेगी?' 'मृणाल-सदृश कोमल हे मालावती! कुम्हला गई है'। 'माता मातंगिका!

[1] 'किमपरमुत्त'।

वत्स्यसि [1]कथमनभिप्रेते प्रेतनगरे। नागरिके, गरिमाणमागतास्यनया स्वामिभक्त्या। विराजिके, विराजितासि राजपुत्रीविपदि जीवितव्ययव्यवसायेन। भृगुपतनाम्युद्यमभागाभिज्ञे भृङ्गारधारिणि, धन्यासि। केतकि, कुतः पुनरीदृशी [2]सुस्वामिनी। मेनके, जन्मनि जन्मनि देवीदास्यमेव ददातु देवो देहं दहन्वहनः। विजये वीजय कृशानुम्। सानुमति, नमतीन्दीवरीका दिवं गन्तुकामा। कामदासि, देहि दहनप्रदक्षिणावकाशम्। विचरिके, विरचय वह्निम्। विकिर किरातिके कुसुमप्रकरम्। कुररिके कुरु कुरुवककोरकाचितां चिताम् चामरं चामरग्राहिणि गृहाण पुनरपि कण्ठे। मर्षयितव्यानि नर्मदे नर्मनिर्मितानि निर्मर्यादहसितानि। भद्रे सुभद्रे, भद्रमस्तु ते परलोकगमनम्। अग्रामीणगुणानुरागिणि ग्रामेयिके, गच्छ सुगतिम्। वसन्तिके अन्तरं प्रयच्छ। आपृच्छते छत्रधारी देवि देहि दृष्टिम्। इष्टा तव जहाति जीवितं विजयसेना। सेयं मुक्तिका मुक्तकण्ठ-

---

टीका–कृतः = स्वीकृतः ? वत्स्यसि = वासं करिष्यसि अनभिप्रेते = अनभीष्टे घृणिते इत्यर्थः प्रेतानां = मृतकानां नगरे ? अनया स्वामिन्यां भक्त्या = अनुरागेण गरिमाणं = गौरवम् आगता = प्राप्ता असि, राजपुत्र्याः = राजकुमार्याः राज्यश्रियः इत्यर्थः विपदि = विपत्तौ जीवितस्य = प्राणानां यः व्ययः = विनाशः तस्य व्यवसायेन = निश्चयेन विराजितासि = भ्राजितासि ख्याता भविष्यतीति भावः। भृगुतः = अतटात् [ 'प्रपातस्त्वतटो भृगुः' इत्यमरः ] यत् पतनं = पातः तस्य अभ्युद्यमस्य = उद्योगस्य भागस्य = भाग्यस्य अभिज्ञे ! = ज्ञानवति। अर्थात् मम भाग्ये भृगुपतनमस्तीति त्वं जानासि भृङ्गारं = जलपात्रं धारयतीति तत्सम्बुद्धौ धन्या = पुण्यवती असि। सु = शोभना स्वामिनी। देहं दहन् = भस्मीकुर्वन् देवः दहनः = अग्निः देव्याः = राजश्रियः दास्यम् = परिचारिकात्वम् ददातु = वितरतु। कृशानुम् = अग्निं वीजय = व्यजन द्वारा प्रदीप्तं कुरु इत्यर्थः। दिवं = स्वर्गं गन्तुकामा = गन्तुं कामो यस्याः सा गन्तुमभिलषन्तीत्यर्थः नमति = प्रणमति। दहनस्य = वह्नेः या प्रदक्षिणा = परिक्रमा तदर्थम् अवकाशं = स्थानम् देहि = प्रयच्छ। विरचय = ज्वलय इत्यर्थः। कुसुमानां प्रकरं = समूहम् विकिर = पूजारूपेण अग्नौ प्रक्षेपेणेत्यर्थः। कुरुवकाणां = पुष्पविशेषाणां कोरकैः = कलिकाभिः उचितां = पूर्णां चितां कुरु। 'चामरम्' इत्यस्यस्थाने 'चरमम्' इति पठ्यताम्, चरमं = अन्तिमबारं यथा स्यात्तथा कण्ठे गृहाण = आलिंगनं कुरु। नर्मसु = परिहासेषु निर्मितानि = कृतानि निर्मर्यादानि = मर्यादाम् अतिक्रान्तानि मर्यादातः बहिर्भूतानीत्यर्थः हसितानि = हासाः मर्षयितव्यानि = क्षन्तव्यानि। भद्रं = शुभम् अस्तु। इह लोकेऽपि परदेशगमनसमये उच्यते पथिकः – शुभास्ते सन्तु पन्थानः' इति। ग्रामे भवाः ग्रामीणाः अग्रामीणाः नागरिकाः उच्चकुलीनेषु लभ्यमानाः इत्यर्थः ये गुणाः स्वामिभक्त्यादयः तेषु अनुरागिणि = अनुरक्ते। सुगतिं = सद्गतिम् अन्तरं = अवकाशं स्थानमिति यावत् प्रयच्छ = देहि।

**टिप्पणी—चामरं**—बहुत सी प्रतियों में चामर वाला ही पाठ है। शंकर ने भी यही अपनाया है पर चामरग्राहिणी। चामर को फिर गले लगा यह अर्थ यहाँ संगत ही नहीं बैठता। इसलिए काणे एवं कॉवलमहोदयों ने यहाँ 'चरम' के स्थान में 'चामर' लिखना लिपिकार की भूल मानी है हम भी इस पर सहमत हैं। 'चरम' पाठ से यह अर्थ निकला 'चामरग्राहिणी' अन्तिम बार फिर गले लगा जा' मृत्यु के बाद फिर कौन किसे मिलता है।

**हिन्दी**–तुमने भी मरना स्वीकार कर लिया है ?' 'बेटी वत्सिका। बुरे प्रेतनगर में कैसे रहेगी' ? 'नागरिका इस स्वामिभक्ति से तुम गौरव पा गई हो'। 'विराजिका ! राजपुत्री की विपत्ति में मरना ठानते हुए तुम खूब शोभा दे रही हो'। 'ओ भृङ्गार ( जलपात्र ) धारण करने वाली ! ढंगार ( भृगु ) से गिर पड़ने के उद्योग को अपना भाग्य समझते हुए तू धन्य है'। 'अरी केतकी ! ऐसी स्वामिनी फिर कहाँ मिलेगी ?' 'मेनका ! शरीर को जलाता हुआ अग्निदेव, जन्म-जन्म में रानी की दासता ही दे'। 'अरी विजया ! आग पर पंखा कर'। 'सानुमती स्वर्ग लोक जाना चाह रही इन्दीवरिका नमस्कार करती है'। 'ओ कामदासी ! अग्नि की परिक्रमा करने के लिए स्थान दे'। 'अरी विचरिका ! आग बाल'। 'किरातिका तू कुसुम समूह बिखेर'। 'कुररिका ! चिता को कुरवक के फूलों की कलियों से भर दे'। 'ओ चामर पकड़ने वाली ! अन्तिम बार फिर गले लगा जा'। 'नर्मदा ! मनोविनोदों में की हुई मेरी बेहद हँसियों को क्षमा कर दें।' 'भली सुभद्रा तेरी पर-लोक यात्रा शुभ हो'। 'शिष्टता के गुणों से अनुराग करने वाली ग्रामेयिका ! सद्गति को प्राप्त होओ'। 'अरी वसन्तिका ! जगह तो दे'। "रानीजी ! छत्रधारी विदा दे रहा है, उसकी ओर दृष्टिपात कीजिए

---

१. 'कथनमभि'। २. 'स्वस्वामिनी'।

मारटति निकटे नाटकसूत्रधारी। पादयोः पतति ते ताम्बूलवाहिनी बहुमता राजपुत्रि पत्रलता। कलिङ्गसेने, अयं पश्चिमः परिष्वङ्गः पीडय निर्भरमुरसा माम्। असवः प्रवसन्ति वसन्तसेने। मञ्जुलिके, मार्जयसि कतिकृत्वः सुदुःसहदुःखसहस्रावदिग्धं दग्धचक्षुरिदं रोदिषि कियदाश्लिष्य च माम्। निर्माणमीदृशं प्रायशो यशोधने। धीरयस्यद्यापि किं मां माधविके। केयमवस्था संस्थापनानाम्। गतः कालः कालिन्दि सखीजनानुनयाञ्जलीनाम्। उन्मत्तिके मत्तपालिके, कृताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः। शिथिलय चकोरवति चरणग्रहणं ग्रहिणि। कमलिनि, किमनेन पुनः पुनर्दैवोपालम्भेन। न प्राप्तं चिरं सखीजनसङ्गमसुखम्। आर्ये महत्तरिके तरङ्गसेने नमस्कारः। सखि सौदामिनि, दृष्टासि। समुपनय हव्यवाहनार्चनकुसुमानि कुमुदिके। देहि चिताराोहणाय रोहिणि हस्तावलम्बनम्। अम्ब धात्रि, धीरा भव। भवन्त्येवंविधा एव कर्मणां विपाकाः पापकारिणीनाम्। आर्यचरणानामयमञ्जलिः। परः परलोकप्रयाणप्रणामोऽयं मातः। मरणसमये कस्मात्लवलिके हलहलको बलीयानानन्दमयो हृदयस्य मे। हृष्यन्त्युच्चरोमाञ्चमुच्चैः किमङ्गीकृत्याङ्गानि। वामनिके, वामेन मे स्फुरितमक्ष्णा। वृथा

---

टीका-छत्रधारी=छत्रधारकः सेवकः इत्यर्थः आपृच्छते=आमन्त्रयते देवि दृष्टि देहि=पश्येत्यर्थः। तव दृष्टा=प्रिया विजयसेना जीवितं=प्राणान् जहाति=त्यजति। नाटकानां=नाट्यानां सूत्रधारी=सूत्रधारकार्यनिष्पादिका अर्थात् या त्वद्विनोदाय नाटकानां प्रबन्धं करोतिस्म मुक्तकण्ठं=मुक्तः कण्ठः यस्मिन् कर्मणि यथा स्यात्तथा आरटति=विलपतीत्यर्थः बहुमता=यां देवी बहुमन्यते स्म। पश्चिमः=अन्तिमः परिष्वङ्गः=आश्लेषः निर्भरं=पूर्णतया उरसा=वक्षसा। असवः=प्राणाः प्रवसन्ति=प्रवासं कुर्वन्ति गच्छन्तीत्यर्थः। मार्जयसि=प्रोञ्छसि कतिकृत्वः=कतिवारं सुदुःसहानि=सोढुमशक्यानि यानि दुःखानां सहस्राणि तैः दिग्धं=लिप्तं अश्रुपूर्णमित्यर्थः दग्धचक्षुः=चक्षुर्हतकमित्यर्थः कियत्=कियदधिकं यथा स्यात्तथा आश्लिष्य=आलिंग्य। प्रायशः=प्रायेण निर्माणं=सृष्टिरित्यर्थः अर्थात् ब्रह्मणः सृष्टौ सर्वेऽपि प्राणिनः एवं दौर्भाग्यैः अभिभूयन्ते, धीरयसि=मह्यं धैर्यं ददासि। संस्थापनानां=समाश्वासनानां का इयम् अवस्था=दशा अर्थात् इदानीमहं समाश्वासनदशाम् अतिवर्ते। सखीजनस्य=सखीनाम् यः अनुनयः (कर्तरि षष्ठी) तत्कर्तृकः सान्त्वनमित्यर्थः तस्मिन् अञ्जलीनां करद्वयसंयोगानाम् कालः समयः गतः=वीतः। प्रणयिनीनां=स्नेहिनीनां सखीनां प्रणिपातः=चरणयोः पतनम् तत्पूर्वका अनुरोधाः=आग्रहाः (मद्यमलो०) मरणान्निवारणप्रयत्नाः इत्यर्थः मया पृष्ठतः कृताः=उपेक्षिताः इत्यर्थः। ग्रहिणि=आग्रहवति (निर्बन्धोपरागार्कादयो ग्रहा' इत्यमरः)। दैवस्य=भाग्यस्य उपालम्भनेन=आक्रोशनेन निन्दनेनेति यावत्। सखीजनस्य=सखीनां सङ्गमः=सहवासः तस्य सुखम्=आनन्दः। महत्तरिके=कञ्चुकिनि हव्यवाहनस्य=अग्नेः अर्चनाय=पूजनाय कुसुमानि समुपनय=आनय। चितायां आरोहणाय हस्तावलम्बनं=सहायताम्। धात्रि=उपमातः कर्मणां=पूर्वजन्मकृतकार्याणां विपाकाः=परिणामाः पापकारिणीनां=पापीनाम्। आर्यस्य=

हिन्दी—तुम्हारी प्रिय विजयसेना प्राणत्याग रही है। नाटकों का प्रबन्ध करनेवाली यह मुक्तिका तुम्हारे निकट गला फाड़-फाड़ कर रो रही है। 'राजपुत्री' तमोलिन पत्रलता—जिसे तुम बहुत माना करती थी—तुम्हारे पैरों में गिर रही है। 'कलिङ्गसेना! यह अन्तिम आलिङ्गन है, खूब जोर-जोर से मुझे छाती से दबा'। 'वसन्तसेना! प्राण प्रवास कर रहे हैं'। 'मञ्जुलिका! हजारों असह्य दुःखों से लिप्त हुई इस अभागी आँख को कितनी बार पोंछती फिरोगी, कितना रोओगी, मुझे गले लगा'। 'यशोधना! प्रायः (सृष्टि का) निर्माण ही ऐसा है'। 'माधविका! अब भी क्या मुझे धीरज बन्धा रही है'? क्या सान्त्वना देने की यह अवस्था है'? कालिन्दी। सखियों द्वारा अञ्जलि बान्धकर मनाने का समय अब गया'। 'पगली मत्तपालिका! प्रिय सखियों के पैरों में पड़-पड़ कर किए गये अनुरोधों को तरह पीठ फेर दी गई है। 'हठीली चकोरवती पकड़े हुए मेरे पैर छोड़ दे'। 'कमलिनी, बार-बार भाग्य को उलाहना देने का क्या काम? 'चिरकाल तक सखियों के समागम का सुख नहीं मिला'। 'आर्या कञ्चुकिनी तरङ्गसेना! नमस्कार'। 'सखी सौदामिनी! तुझे देख लिया है'। कुमुदिका! अग्निपूजा हेतु फूल ला'। 'ओ रोहिणी चिता पर चढ़ने के लिये सहारा दे'। 'धायीमाँ धैर्य रख'। 'फिर पापिनियों के कामों के फल ऐसे ही हुआ करते हैं'। 'आर्य के चरणों में यह अञ्जलि।' हे मा! परलोक प्रयाण करने का यह अन्तिम प्रणाम है। 'अरे मरने के समय मेरे हृदय में यह बड़ी भारी आनन्दमय उत्सुकता क्या हो उठी है; लवलिका! किस निमित्त को लेकर ऊँचे रोमांच-भरे मेरे अंग हर्षित हो रहे हैं'।

विरमसि वायस वायस 'वृक्षे क्षीरिणि क्षणे क्षणे क्षीणपुण्यायाः पुरः । हरिणि, ह्रेषितमिव हयानामुत्तरतः । कस्येदमातपत्रमुच्चमत्र पादपान्तरेण प्रभावति विभाव्यते । कुरंगिके, केन सुगृहीतनाम्नो नाम गृहीतममृतमयमार्यस्य । देवि, दिष्ट्या वर्धसे देवस्य हर्षस्यागमनमहोत्सवेन ।' इत्येतच्च श्रुत्वा सत्वरमुपससर्प । ददर्श च मुह्यन्तीमग्निप्रवेशायोद्यतां राजा राज्यश्रियम् । आललम्बे च मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससंभ्रमम् ।

अथ तेनः भ्रातुः प्रेयसः प्रकोष्ठबद्धानामोषधीनां रसविसरमिव प्रत्युज्जीवनक्षमं क्षरता वमतेव पारिहार्यमणीनामचिन्त्यं प्रभावममृतमिव नखचन्द्ररश्मिभिरुद्गिरता बध्नतेव चन्द्रोदयच्युतशिशिरशीकरं चन्द्रकान्तचूडामणिं मूर्धनि मृणालमयाङ्गुलिनेवातिशीतलेन निर्वापयता दह्यमानं हृदयं प्रत्यानयतेव कुतोऽपि जीवितमाह्लादकेन हस्तसंस्पर्शेन सहसैव समुन्मिमील राज्यश्रीः । तया चासम्भावितागमनस्याचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टदर्शनस्येव कण्ठे समाश्लिष्य

---

टीका—सम्भवतः हर्षपरकोऽयं शब्दः चरणानाम् अञ्जलिः=नमस्कारः इत्यर्थः । परः=अन्तिमः परलोके=लोकान्तरे प्रयाणस्य=गमनस्य प्रणामः । बलीयान्=बलवत्तरः आनन्दमयः=आनन्दात्मकः हलहलकः=उत्कंठा इति शंकरः अयं देशज-शब्दः प्रतीयते । मरणशोकसमये हृदयस्यानन्दानुभूत्या अनुमीयते काचित् शुभघटना प्रत्यासीदति, सा च शुभघटना भ्रातुः हर्षस्य प्राप्तिः यथोक्तमपि आवेदयन्ति 'प्रत्यासत्तमानन्दमग्रजातानि शुभानि निमित्तानि' इति । उच्चं रोमाञ्चम्=रोमहर्षं मुञ्चन्तीति तथोक्तानि अङ्गानि किम् अङ्गीकृत्य=अधिकृत्येत्यर्थः हृष्यन्ति=मोदन्ते । वामेन अक्ष्णा=नयनेन स्फुरितं=स्पन्दितम्, स्त्रीणां वामाङ्गस्फुरणं शुभचिह्नमुच्यते । क्षीणानि=क्षयंगतानि पुण्यानि=सुकृतानि यस्याः तस्याः मम पुरतः=अग्रे हे वायस=काक । क्षीरिणि=क्षीरवति वृक्षे वृथा=व्यर्थं विरमसि=(वि पूर्वक-रम्धातोः परस्मैपदत्वम्) विरामं करोषि तिष्ठसीति यावत् । काकस्य क्षीरिवृक्षेषु अवस्थानं शुभावहं भवति यथाह वृहस्पतिः—'सुस्निग्धपत्रपल्लवकुसुमफलानम्रसुरभि-मधुरेषु । सक्षीराव्रणसुस्थितमनोज्ञवृक्षेषु चार्थकरः' इति । उत्तरतः=उत्तरदिशातः हयानाम्=अश्वानां ह्रेषा=हिन-हिनायितमित्यर्थः इव अस्तीति शेषः । उच्चं=तुङ्गम् आतपत्रं=छत्रं पादपानां=वृक्षानां अन्तरेण=अन्तरालेन मध्ये इत्यर्थः विभाव्यते=दृश्यते । सुगृहीतं नामधेयं=नाम यस्य तस्य स्वानामधन्यस्येत्यर्थः आर्यस्य=महाराजस्य हर्षस्य अमृतमयम्=अमृततुल्यमित्यर्थः नाम गृहीतम् उच्चारितमित्यर्थः । देवि !=महिषि राज्यश्रीः ! इत्यर्थः दिष्ट्या वर्धसे=वर्धाप्यसे आगमनस्य महोत्सवेन महतां आनन्देन एतच्च श्रुत्वा हर्षः सत्वरं=शीघ्रम् उपससर्प=उपागच्छत । अग्नौ प्रवेशाय उद्यताम्=उद्युक्तां मुह्यन्तीं=मूर्छन्तीं राज्यश्रियं ददर्श=अपश्यत । मूर्च्छाया मोहेन मीलिते=मुद्रिते लोचने=नयने यस्याः तस्याः ललाटं=भालं ससंभ्रमं=सत्वरं हस्तेन आललम्बे=गृहीतवान् ।

प्रेयसः=प्रियतरस्य भ्रातुः प्रकोष्ठे=मणिवन्धे बद्धानां=नद्धानाम् धृतानामित्यर्थः औषधीनां=वृक्षलताविशेषाणां प्रत्युज्जीवनस्य=जीवनशक्तिप्रदानस्य क्षमं=समर्थं रसस्य=द्रवस्य विसरं=पूरम् इव क्षरता=स्रवता एतत् अन्यानि च तृतीयान्तानि 'हस्तस्पर्शेन' इत्यस्य विशेषणानि, पारिहार्ये=कटके ('आवापकः पारिहार्यः कटको बलयोऽस्त्रियाम्' इत्यमरः)

हिन्दी—'वामनिका ! मेरी बायीं आँख फरक उठी है'। 'अरे कव्वे ! तू मुझ क्षीण पुण्यवाली के आगे क्षण-क्षण में व्यर्थ ही क्षीर वाले वृक्ष पर बैठ रहा है'। 'हरिणी ! उत्तर की ओर से घोड़ों की हिनहिनाहट सी आ रही है। प्रभावती ! वृक्षों के बीच यह ऊँचा छत्र यहाँ किसका दिखाई दे रहा है ? कुरङ्गिका ! स्वनामधन्य आर्य (हर्ष) का अमृतमय नाम किसने लिया ? 'रानी जी महाराज हर्ष के आ पहुँचने की बड़ी भारी खुशी की बधाई' यह सुनकर राजा शीघ्र ही पास पहुँच गया और अन्य प्रवेश हेतु तय्यार हुई पड़ी मूर्छा खा रही राज्यश्री को देख बैठा। और मूर्छा से आँखे नीचे हुए उसके ललाट को उसने शीघ्र ही हाथ से थाम लिया।

उसके बाद मणिबन्ध (कलाई) पर बँधी औषधियों का पुनरुज्जीवित कर देने की क्षमता रखने वाला रस-प्रवाह बताते हुए—जैसे, कड़े मणियों की अचिन्तनीय शक्ति को उगलते हुए—जैसे, चन्द्रमा के उदय होने पर शीतल जलों के कण छोड़े हुए चन्द्रकान्तमणि का शेखर शिर पर बाँधते हुए के—जैसे अतिशीतल मृणालमय अंगुलि से जले जा रहे हृदय को शान्त करते हुए-जैसे और कहीं से प्राणों को वापस लाते हुए—जैसे प्रिय भाई के आनन्ददायक करस्पर्श से राज्यश्री आँखें खोल बैठी। और जिसके आने की कभी संभावना नहीं की थी,

---

१. 'प्लक्षवृक्षे'

तत्कालाविर्भावनिर्भरेणाभिभूतसर्वात्मना दुःखसम्भारेण निर्दयं नदीमुखप्रणालाभ्यामिव मुक्ताभ्यां स्थूलप्रवाहमुत्सृजन्ती बाष्पवारि विलोचनाभ्याम् 'हा तात, हा अम्ब, हा सख्य ' इति व्याहरन्ती मुहुर्मुहुरुच्चैस्तरां च, समुद्भूतभगिनीस्नेहसङ्क्राद-भारभाविनमन्युना मुक्तकण्ठमतिचिरं विक्रुश्य 'वत्से, स्थिरा भव त्वम्' इति भ्रात्रा करस्थगितमुखी समाश्वास्यमानापि 'कल्याणिनि, कुरु वचनमग्रजाय गुरोः' इत्याचार्येण याच्यमानापि, 'स्वामिनि, भ्रातरमवेक्षस्व' इति निवार्यमाणापि बान्धववृद्धाभिः, 'प्रियसखि, कियद्रोदिषि । तूष्णीमास्स्व । इदं ब्रूमते चैव.' इति सखीभिरनुनीयमानापि, चिरसम्भाविता-नेकदुःखनिवहनिर्वहणबाष्पोत्पीडपीड्यमानकण्ठभागा, प्रभूतमन्युभारभरितान्तःकरणा करुणं [1]काहलेन स्वरेण कालमतिदीर्घं रुरोद । विगते च मन्युवेगे वह्नेः समीपादाक्षिप्य भ्रात्रा नीता निकटवर्तिनि तरुतले निषसाद ।

---

टीका–ये मणयः=रत्नानि तेषाम् अचिन्त्यम्=चिन्तयितुमशक्यम् रहस्यात्मकमिति यावत् प्रभावं=शक्ति वमता=उद्गिरता इव हस्तघृतौषधिरत्नानाम् अचिन्त्यः प्रभावः=सम्बन्धः– शङ्कराचार्योऽप्याह 'लौकिकानामपि मणिमन्त्रौषधि-प्रभृतीनां देशकालनिमित्तवैचित्र्यवशाच्छक्तयो विरुद्धानेककार्यविषया दृश्यन्ते' (वेदान्त सू० २।१।२७) नख एव चन्द्रः तस्य रश्मिभिः=किरणैः अमृतं इव उद्गिरता=उद्वमता, चन्द्रस्य उदयेन च्युताः=गलिताः शिशिराः=शीतलाः शीकराः=बिन्दुकणाः यस्मात् तम् चन्द्रकान्तस्य=चन्द्रकान्तमणेः चूडामणि=शेखरं मूर्ध्नि=शिरसि बध्नता=संयोजयता इव, अतिशीतलेन=मृणालमयेन विषात्मकेन इव अंगुलिना=अंगुल्या दह्यमानं=ज्वलत् हृदयं निर्वापयता=शमम् उपनयता कुतः अपि जीवितं=प्राणान् प्रत्यानयता=प्रत्यावर्त्तयता इव आह्लादकेन=आनन्दजनकेन हस्तस्य स्पर्शेन=सम्पर्केण, उपरि सर्वत्र उत्प्रेक्षालङ्कार नखचन्द्रेत्यत्र रूपकम्। राज्यश्रीः सहसा एव=तत्क्षणादेव समुन्मिमील=चक्षुरुन्मीलितवती चेतनावस्थामागतेतिभावः न सम्भावितं=कल्पितम् आगमनं यस्य तस्य न चिन्तितं=तर्कितं दर्शनं=साक्षात्कारः यस्य तस्य भ्रातुः=हर्षस्य, स्वप्ने दृष्टं दर्शनं यस्य तस्य इवेत्युत्प्रेक्षायाम्. अत्र स्वप्नदृष्टस्येवेत्येतदेव पर्याप्तम् दर्शनस्य दृष्टत्वाभावात्, कण्ठे=गले समाश्लिष्य=आलिङ्ग्य तत्काले=तस्मिन् क्षणे यः (हर्षस्य) आविर्भावः=उपस्थितिरित्यर्थः तेन निर्भरः=पूर्णः, अभिभूतः=आक्रान्तः सर्वः आत्मा=शरीरं शरीराङ्गानि वा येन तेन दुःखसम्भारेण=दुःखसमूहेन (निमित्तभूतेन) मुक्ताभ्यां=निर्निरोधाभ्यां स्वच्छन्दाभ्यामिति यावत् नद्योः=सरितोः मुखयोः प्रभवस्थानयोः प्रणालाभ्यां=जलमार्गाभ्यां धाराभ्यामित्यर्थः इवेत्युपमायां मुक्ताभ्यां विलोचनाभ्यां=नयनाभ्याम् स्थूलः=विपुलः प्रवाहो यस्य तत् बाष्पवारि=अश्रुजलं निर्दयं=प्रचण्डं यथा स्यात्तथा उत्सृजन्ती=त्यजन्ती, व्याहरन्ती=कथयन्ती मुहुर्मुहुः=पुनः पुनः उच्चैस्तराम्=अतिशयेन उच्चैः यथा स्यात्तथा तारस्वरेणेत्यर्थः, समुद्भूतः=आविर्भूतः भगिन्याः=स्वसरि स्नेहस्य=

हिन्दी–न दर्शनों की कभी सोची थी, स्वप्न में देखे हुए—जैसे सहसा प्राप्त हुए उस भाई को गले लगाकर उस समय (भाई की) उपस्थिति में पूरे जोर से फूट पड़े, सारी आत्मा को झकझोर देनेवाले, दुःख समूह के कारण फूटकर प्रचंडरूप से बह रहे, उद्गम-स्थान को निकले दो नदियों के नालो की तरह उन्मुक्त दोनों आंखों से भारी प्रवाह वाला अश्रु जल बहाती हुई—हा पिता जी ! हा माता जी ! हा सखियों ! इस तरह बार-बार जोर-जोर से कहती हुई, चिर-काल से झेले अनेक दुःखों के ढेर के अपनी पूर्णता मे पहुंच जाने से (उमड़े) अश्रु-प्रवाह के कारण गले में घुटन अनुभव किये, हृदय में बड़ा भारी दुःख भार भरे बहुत देर तक बुरी तरह ऊंचे स्वर में रोती रही यद्यपि बहन के प्रति अतिशय स्नेह होने के कारण उमड़े हुए दुःख से पराभूत हो, गला फाड़-फाड़ कर आर्तनाद करके, भाई उसके मुंह को अपने हाथ से ढककर आश्वासन देता रहा –'बच्ची ! धीरज धर' आचार्य दिवाकरमित्र याचना करते रहे—'कल्याणिनी ! बड़े भाई का कहना मान' राजालोग प्रार्थना करते रहे—रानी, महाराज की हालत नहीं देख रही हो क्या ? अधिक रोने से बस करो' भृत्यवर्ग निवेदन कर रहा था–स्वामिनी ! भाई का दखिये' बान्धव वृद्धायें रोकती जा रही थीं · 'बेटी ! रुक जा फिर रो लेना' और सखियां मना रही थी—'प्रिय सखी ! कितना रोओगी, चुप कर, महाराज बड़े दुःखी हो रहे हैं। और दुःख वेग के ठंडे हो जाने पर भाई द्वारा अग्नि के पास से हटा कर लाई हुई राज्यश्री पास में ही वृक्ष के नीचे बैठ गई ।

---

१. 'करूपकाहलेन'

शनैराचार्यस्तु तया हर्ष इति विज्ञाय विवर्धितादरः सुतरां मुहूर्तमिवातिवाह्य निभृतसंज्ञाज्ञापितेन शिष्येणोपनीतं नलिनीदलैः स्वयमादाय नम्रो मुखप्रक्षालनायोदकमुपनिन्ये । नरेन्द्रोऽपि सादरं गृहीत्वा प्रथममनवरतरोदनाताम्रं चिरप्रवृत्ताश्रुजलजालं रक्तपङ्कजमिव स्वसुश्चक्षुरक्षालयत्पश्चादात्मनः । प्रक्षालितमुखशशिनि च महीपाले सर्वतो निःशब्दः सम्बभूव सकलो लिखित इव लोकः । ततो नरेन्द्रो मन्दमन्दमब्रवीत्स्वसारम्---'वत्से, वन्दस्वात्रभव तं भदन्तम् । एष ते भर्तुर्हृदयं द्वितीयमस्माकं च गुरु' इति । राजवचनात्तु राजदुहितरि पतिपरिचयश्रवणोद्गतेन पुनरानीतनेत्राम्भसि नमन्त्यामाचार्यः

टीका- प्रीतेः यः मद्भ्रात्र:=वृत्तिः तस्य भारेण=अतिरेकेण भावितः=नमितः मन्युः=दुःखं यस्य तेन, मुक्तकण्ठम्=उच्चैरित्यर्थः विक्रुश्य=आर्तनादं कृत्वा स्थिरा भव=धैर्यं धर, भ्रात्रा=हर्षेण करेण=हस्तेन ( रुदितनिवारणार्थं ) स्थगितम्=आच्छादितं मुखं यस्याः सा समाश्वास्यमाना=सान्त्व्यमाना अपि, गुरोः=श्रेष्ठस्य अग्रजस्य=भ्रातुः वचनं कुरु=आज्ञां पालय, आचार्येण=भदन्त-दिवाकरमित्रेण याच्यमाना=प्रार्थ्यमाना देवस्य=महाराजस्य हर्षस्य अवस्थां=दशाम्, अतिशयितेन रुदितेन=रोदनेन अलम् इति प्रतिषेधं, राजलोकेन=राज्ञां गणेन अभ्यर्थ्यमाना=प्रार्थ्यमाना, अवेक्षस्व=पश्य परिजनेन=भृत्यवर्गेण विज्ञाप्यमाना=निवेद्यमाना विश्रम्य=विश्रामं कृत्वा आरटितव्यम्=रोदितव्यम्, बान्धवानां=बन्धूनां वृद्धाभिः=वृद्धस्त्रीभिः, निवार्यमाणा=निरुध्यमाना, तूष्णीम् आस्स्व=मौनमाकलय्य तिष्ठ देवः=हर्षः दृढम्=भृशमित्यर्थः दूयते=दुःखीभवति, अनुनीयमाना=प्रबोध्यमाना, चिर०—चिरं सम्भावितः=अनुभूतः इत्यर्थः यः अनेकदुःखानां निवहः=निचयः तस्य यत् निर्वहणम्=अवसानं पूर्णतायां गमनमित्यर्थः शंकरस्तु दुःखनिवहस्य निर्वहणं=प्रकटनं यस्माद्बाष्पोत्पीडादिति समासः इत्याह, तेन य बाष्पोत्पीडः=अश्रुजलौघः तेन पीड्यमानः=रुध्यमानः इत्यर्थः कण्ठभागः=गलप्रदेशो यस्याः सा, प्रभूत०—प्रभूतः=अतिशयितः यः मन्योः दुःखस्य भारः=भरः तेन भरितं=पूरितम् अन्तःकरणं यस्याः सा करुणं=करुणापूर्णं यथा स्यात्तथा काहलेन=महता स्वरेण=ध्वनिना अथवा काहला=महती ढक्का तस्याः अयम् इति काहलः ( अण् ) तेन काहलास्वरसदृशेन स्वरेणेत्यर्थः अतिदीर्घं कालम्=सुचिरं रुरोद=रुदितवती । मन्यो=दुःखस्य वेगे=आवेशे इत्यर्थः विगते=समाप्ते आक्षिप्य=आनीय निकटवर्तिनि=सन्निहिते तरुतले=वृक्षाधः निषसाद=स्थितवती ।

आचार्यः=दिवाकरमित्रः तया=तेन प्रकारेण घटिताभिः घटनाभिरित्यर्थः, आगन्तुकः राजा हर्षोऽस्तीति विज्ञाय सुतराम्=सम्यक्तया विवर्धितः=वृद्धिं नीतः तं प्रति आदरो येन स, मुहूर्तमिव=किञ्चित्कालम् अतिवाह्य=अतिवाह्य निभृतया=मूकया संज्ञया=संकेतेन ज्ञापितेन=बोधितेन शिष्येण नलिनीदलैः=कमलिनीपर्णैः उपनीतम्=आनीत मुख-प्रक्षालनाय=मुखमार्जनाय उदकं जलं स्वयमेव आदाय=गृहीत्वा उपनिन्ये=राज्ञे अर्पितवान् । नरेन्द्रः=हर्षोऽपि अनवरतं=निरन्तरं यत् रोदनं तेन ताम्रं=रक्तवर्णं चिरं प्रवृत्तम्=प्रसृतम् अश्रुजलस्य जालं=समूहः यस्मिन् रक्तं पङ्कजं=कमलमिवेत्युपमायाम्, स्वसुः=भगिन्याः=राज्यश्रियः चक्षुः=नयनम् अक्षालयत्=प्रमार्जयत् पश्चात्=तदनन्तरं आत्मनः=स्वस्य चक्षुरिति शेषः प्रक्षालितमुख शशी=चन्द्रः इवेत्युपमित तत्पु० येन तस्मिन् महीपाले=राज्ञि सर्वतः=परितः निःशब्दः=शब्दरहितः तूष्णींभूतः सकलः=निखिलः लोकः=जनः इत्यर्थः लिखितः=चित्रार्पितः इवेत्युत्प्रेक्षायाम् सम्बभूव=जातः । अब्रवीत्=अकथयत् स्वसारं=भगिनीम् —वन्दस्व=प्रणम अत्र भवन्तं=पूज्यभिक्षुं

हिन्दी—आचार्य दिवाकरमित्र को जब धीरे-धीरे उस तरह ( घटित हुई घटनाओं से ज्ञात हुआ कि यह तो राजा हर्ष है तब ( उसके प्रति ) अच्छी तरह आदर भाव बढ़ाते हुए कुछ समय बिताकर, मौन संकेत से सूचित किए शिष्य द्वारा कमलिनी के पत्तों से लाए हुए जल को स्वयं लेकर, नम्र हो मुंह धोने के लिए राजा को दिया। राजा ने भी आदरपूर्वक ग्रहण करके पहले तो लगातार रोते रहने से लाल बनी, बहुत देर तक अश्रु जल का ढेर बहाए बहन की रक्त कमल—जैसी आँख धोई, बाद को अपनी । राजा के अपने चांद जैसे मुख को धो चुकने पर चारों तरफ सभी लोग ऐसे चुपचाप हो गये मानों चित्र हो । तब राजा ने धीरे-२ अपनी बहन से कहा—'बच्ची ! आदरणीय भदन्त को नमस्कार करो । ये तेरे पति के दूसरे हृदय और मेरे गुरु हैं' । पति के परिचय सुनने के प्रसङ्ग से फिर डबडबाई आँखों वाली राजपुत्री के राजा के कहने से नमस्कार करने पर आचार्य दिवाकर मित्र प्रयत्न से रोके हुए उमड़ते अश्रु-

प्रयत्नरक्षितागतबाष्पाम्भःसम्भारभज्यमानधैर्यार्द्रलोचनः किञ्चित्परावृत्तनयनो दीर्घं निशश्वास। स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुभाषी मधुरया वाचा व्याजहार-'कल्याणराशे, अलं रुदित्वातिचिरम्। राजलोको नाद्यापि रोदनान्निवर्तते। क्रियतामवश्यकरणीयः स्नानविधिः। स्नात्वा च गम्यतां तामेव भूयो भुवम्' इति।

अथ भूपतिरनुवर्तमानो लौकिकमाचारमाचार्यवचनं चोत्थाय स्नात्वा गिरिसरिति सह स्वस्रा तामेव भूमिमयासीत्। तस्यां च सपरिजनां प्रथममाहितावधानः पार्श्ववर्ती परवतीं शुचा पतिपिण्डप्रदर्शनप्रयत्नप्रतिपन्नाभ्यवहारकरणां[1] भगिनीमभोजयत्। अनन्तरं च स्वयमाहारस्थितिमकरोत्। भुक्तवांश्च बन्धनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जाद्गौडसंभ्रमं गुप्तितो

---

टीका-दिवाकरमित्रम्, भर्तुः=पत्युः ग्रहवर्मणः द्वितीयं हृदयम् इवेतिगम्योत्प्रेक्षा मम च गुरुः=आचार्यः। राज्ञः=हर्षस्य वचनात्=कथनात् राजदुहितरि=राजकन्यायां राज्यश्रियाम् पत्युः=स्वभर्तुः परिचयस्य=संस्तवस्य श्रवणस्य=आकर्णनस्य उद्घातेन=प्रसंगेन पुनः आनीतं नेत्रयोः अम्भः अश्रुजलं यया तस्यां=नमन्त्याम् आचार्य-दिवाकरमित्रम् प्रणमन्त्याम् आचार्यः प्रयत्नेन रक्षितः='निवारित इत्यर्थः आगतः=उत्पन्नः यः बाष्पाम्भसः=अश्रुजलस्य सम्भारः=ओघः तेन भज्यमानं=भिद्यमानं यत् धैर्यं तेन आर्द्रे=क्लिन्ने लोचने=यस्य सः, किञ्चित्=किमपि यथा स्यात्तथा परावृत्ते=आचलिते नयने यस्य सः, दीर्घं=आयतं यथा स्यात्तथा निशश्वास=निश्वासममुञ्चत् प्रदर्शितः=प्रकटितः प्रश्रयः=विनयः येन सः, मृदु=कोमलं यथा स्यात्तथा वदतीति तथोक्तः दिवाकरमित्रः व्याजहार=कथयामास—कल्याणानां=श्रेयसां राशे!=निचय! हर्ष इत्यर्थः अतिचिरं रुदित्वा अलमिति प्रतिषेधे बहुरोदनं न कार्यमिति भावः। राजलोकः=राजानः न निवर्तन्ते रोदनात् रोदनं न त्यजतीति भावः। स्नानविधिः=स्नानक्रिया। भूयः=पुनः ताम् एव भुवम् आश्रमस्थानमित्यर्थः यस्मात् आगतोऽसि।

भूपतिः=राजा आचारं=प्रथाम् आचार्यस्य=दिवाकरमित्रस्य च वचनम् अनुवर्तमानः=अनुसरन् गिरिसरिति=गिरिनद्यां स्वस्रा=भगिन्या सह अयासीत्=अगच्छत्। तस्यां=भूमौ आहित-दत्तम् अवधानं=ध्यानं येन सः, सावधानः सन्नित्यर्थः पार्श्ववर्ती=समीपस्थितः सपरिजनां=भृत्यवर्गसहिताम्, शुचा=शोकेन परवतीं=परायत्ताम् शोकाक्रान्तामित्यर्थः; पतये=मृताय भर्त्रे ग्रहवर्मणे इत्यर्थः यः पिण्डः=अन्नपिण्डदानमित्यर्थः, तस्मिन् प्रदर्शितः=हर्षेण कृतः इत्यर्थः यः प्रयत्नः

टिप्पणी—गौडसंभ्रमम्—हमने इसे क्रियाविशेषण बनाकर किसी तरह संगतार्थ करने का प्रयत्न किया है। वास्तव में द्वितीया का क्रम चल पड़ने से यह भी द्वितीया ही होनी चाहिए किन्तु द्वितीया में अर्थ स्पष्ट नहीं होता और 'कान्यकुब्जात्' पञ्चमी के साथ उसका सम्बन्ध भी ठीक नहीं बैठता। हमारे विचार से यहाँ 'गौडसंभ्रमे' पाठ ठीक लगता है। संभ्रम हलचल बलवे अथवा उपद्रव को कहते हैं। गौड का मचाया हुआ उपद्रव उसका धोखे से राज्यवर्धन का वध था। मालव ने ग्रहवर्मा को मारकर कान्यकुब्ज हथिया लिया था और राजश्री को कैद कर दिया था। इस बीच गौड़ ने भी हत्याकाण्ड कर दिया। इसी गड़बड़ी में राज्यश्री को कारागार से छुड़ाने का गुप्त ने अच्छा अवसर पा लिया।

हिन्दी—जल-समूह से टूटे जा रहे धैर्य के कारण आँखें गीली किए कुछ (दूसरी तरफ) आँखों फेरे गहरी साँस खींच बैठे। और क्षणभर रुककर नम्र भाव दिखाए मृदुभाषी आचार्य मधुर वाणी से बोले—'कल्याणों के समूहभूत राजन्, अधिक समय तक रोते रहने से बस करो। राजे लोग भी अब भी रोने से नहीं रुक रहे हैं। अवश्य करणीय स्नानक्रिया कीजिए और स्नान करके फिर उसी स्थान में चलिए।

इसके बाद लौकिक आचार तथा आचार्य के वचन का अनुसरण करता हुआ राजा उठकर बहन के साथ गिरि-नदी में स्नान करके फिर उसी स्थान में चला गया। और वहाँ (बहिन का पूरा) ध्यान रखे पास में बैठे हुए उसने परिजन-सहित पहले पति को भाई द्वारा पिंड दान किये जाने के प्रयत्न के बाद भोजन करना स्वीकार किये हुए बहन को खाना खिलाया और तत्पश्चात् स्वयं भोजन-स्थिति की। और भोजन कर चुके हुए उसने भृत्य वर्ग से बहन के कारागार में पड़ने से लेकर उसका गौड़ के मचाये उपद्रव में गुप्त नाम वाले किसी कुलपुत्र द्वारा कारागार

---

1. 'हारकारणाम्'

गुप्तनाम्ना कुलपुत्रेण निष्कासनं निर्गतायाश्च राज्यवर्धनमरणश्रवणं श्रुत्वा चाहारनिराकरणमनाहारपराहतायाश्च विन्ध्याटवीपर्यटनखेदं जातनिर्वेदायाः पावकप्रवेशोपक्रमणं यावत्सर्वमशृणोद्व्यतिकरं परिजनतः। ततः सुखासीनमेकत्र तरुतले विविक्तभुवि भगिनीद्वितीयं दूरस्थितानुजीविजनं राजानमाचार्यः समुपसृत्य शनैरासांचक्रे। स्थित्वा च कंचित्कालांशं लेशतो वक्तुमुपचक्रमे-'श्रीमन्, आकर्ण्यताम्। आख्येयमस्ति नः किंचित् —

अथ हि यौवनोन्मादात्परिभूय भूयसीर्भार्या यौवनावतारतरलतरस्तारराजो रजनीकर्णपूरः पुरुहूतपुरोधसो धिषणस्य पुरन्ध्रीं धर्मपत्नीं पत्नीयन्प्रतितरलस्तारां नामापजहार। नाकतश्च पलायांचक्रे। चकितचकोरलोचनया तया सहातिकामया सर्वाकाराभिरामया रममाणो रमणीयेषु देशेषु चचार। चिराच्च कथंचित्सर्वगीर्वाणवाणीगौरवाद्गिरां पत्यु पुनरपि प्रत्यर्पयामास ताम्। हृदये त्वनिन्धनमदह्यत विरहाद्वरारोहायास्तस्याः सततम्।

---

टीका—ने०, प्रतिपन्नं = स्वीकृतम् अभ्यवहाररकरणं = भोजनक्रिया यया ताम् अर्थात् तया तदैव भोजनं कृतं यदा तया दृष्टं यद् तद्भ्रात्रा तस्याः मृतपतये पिण्डाः दत्ताः भगिनी = स्वसारं राज्यश्रियम् अभोजयत् = अखादयत्। आहारस्थितिं = भोजनस्थितिम् अकरोत् भोजनमकरोदित्यर्थः। भुक्तवान् = कृतभोजनश्च स्वसुः = भगिन्याः बन्धनात् पतिवधानन्तरं तस्याः कारागारे पातनात् प्रभृति = आरभ्य कान्यकुब्जात् = कान्यकुब्जदेशात्, गौडात् = गौडेन्द्रात् सभ्रमः = भयम् यस्मिन् कर्मणि यथा स्यात्तथा गौडात् भीत्वा भीत्वा इत्यर्थः प्रतीयते गुप्तितः = कारागारात ('गुप्तिस्त्ववकरस्थाने कारागारे च रक्षणे' इति मेदिनी) गुप्तनाम्ना = गुप्तनामकेन कुलपुत्रेण = कुलीनजनेन निष्कासनं = वहिः निस्सारणम् निर्गतायाः = वहिः निस्सृतायाश्च राज्यवर्धनस्य मृत्योः श्रवणम् = आकर्णनम्, आहारस्य = भोजनस्य निराकरणं = त्यागमित्यर्थः, अनाहारेण = अनशनेन पराहतायाः = पीडितायाः विन्ध्याटव्यां पर्यटनस्य = परिभ्रमणस्य खेदः = क्लमम् जातः निर्वेदः = वैराग्यं यस्याः तथाभूतायाः पावके = वह्नौ प्रवेशस्य = आत्मदाहस्येत्यर्थः उपक्रमण = आरम्भम् यावत् = पर्यन्तं सर्वं व्यतिकरं = घटनाचक्रं परिजनतः = भृत्यवर्गात् विस्तारतः = विस्तारपूर्वकम् अशृणोत् = आकर्णयत्। एकत्र = एकस्मिन् तरुतले वृक्षाधोभागे विविक्तायाम् = एकान्तायाम् भुवि = धरण्यां सुखं यथा स्यात्तथा यस्य तम् राजानं शनैः समुपसृत्य = समुपगम्य आचार्यः दिवाकरमित्रः आसाञ्चक्रे = उपविष्टः। कालस्य = समयस्य अंशं = भाग (कालात्यन्तसंयोगे द्वि०) लेशतः = स्तोकशः किञ्चिदित्यर्थः वक्तुं = भाषितुम् उपचक्रमे = आरेभे आकर्ण्यताम् = श्रूयताम्, नः = अस्माकं किञ्चित् आख्येयं = कथनीयम् अस्ति—यौवनस्य = तारुण्यस्य उन्मादात् = चित्तसंमोहात् अयं हि रजन्याः = रात्र्याः कर्णपूरः = कर्णाभरणभूतः ताराणां नक्षत्राणां राजा = अधिपः चन्द्र इत्यर्थः यौवनस्य अवतारेण = आगमनेन तरलतराः = अतिशयेन तरलाः दीप्तिमतीरित्यर्थः भूयसीः = बह्वीः भार्याः = पत्नीः परिभूय = तिरस्कृत्य उज्झित्वेत्यर्थः चन्द्रमसः अश्विन्याद्याः सप्तविंशतिभार्याः (नक्षत्राणि) सन्ति, पुरुहूत = [पुरु = बहु यथा स्यात्तथा यज्ञेपु हूतः =

हिन्दी—और कान्यकुब्ज देश से बाहर निकाला जाना, बाहर निकली हुई उसका राज्यवर्धन का निधन सुनना, सुनकर अनशन करना, अनशन की मारी हुई उसका विन्ध्याटवी में पर्यटन से थक जाना और वैराग्य-भावना लिए उसके अग्नि प्रवेश के लिए तैयार हो जाने तक का सारा घटनाचक्र सुना। तदनन्तर एकान्त स्थान में केवलमात्र बहन को साथ लिए और नौकर-चाकरों को दूर खड़ा किये एक वृक्ष के नीचे आराम से बैठे राजा के पास धीरे से आकर आचार्य दिवाकरमित्र बैठ गये। और कुछ देर ठहरकर अंशतः बोलने लगे—'श्रीमान् जी, सुनिये हमारा कुछ वक्तव्य है [और वह यह कि]—यह रजनी का कर्णाभरणभूत तारों का राजा चन्द्रमा यौवन के उन्माद के कारण तरुणाई आने से और भी अधिक उज्वल बना अपनी बहुत सी पत्नियों को ठुकराकर अति चञ्चल हो इन्द्र के पुरोहित बृहस्पति की गृहिणी तारा नाम की धर्मपत्नी को अपनी पत्नी बनाना चाहता हुआ हर ले गया और स्वर्ग से भाग निकला। भयभीत चकोर सी आँखों वाली, अत्यन्त कामासक्त और सभी हाव-भावों से मनोहर उस (तारा) के साथ आनन्द लूटता हुआ वह सुन्दर-सुन्दर स्थानों में घूमता रहा। और सभी देवताओं के वचनों के प्रति आदरभाव के कारण फिर उसने चिरकाल बाद उसे बृहस्पति को लौटा दिया। किन्तु उस सुन्दरी के विरह के कारण वह हृदय में बिना ईंधन के निरन्तर (कामानल में) जलता रहा।

एकदा तु लीलावुदयावुदयमानो विमले वारिणि वरुणालयस्य संक्रान्तमात्मनः प्रतिबिम्बं विलोकितवान्। दृष्ट्वा च सस्मार सस्मरः स्मेरगण्डस्थलस्य तारायाः मुखस्य। मुमोच च मन्मथोन्मादमथ्यमानमानसः स्वःस्थोऽप्यस्वस्थः स्थवीयसः पीतसकलकुमुदवनप्रभाप्रवाहधवलतारात्म्यामिव लोचनाभ्यां बाष्पवारिबिन्दून्। अथ पततरतानेवाचेमुर्मुक्ताश्शुक्तयः। तासां च कुक्षिकोटेषु मुक्ताफलीभूतानवाप तान्कथमपि रसातलनिवासी वासुकिर्नाम विषमुखानामीशः। स च तैर्मुक्ताफलैः पातालस्थोऽपि तारागणमिव दर्शयन्निव रेकावलीमकल्पयत् चकार च मन्दाकिनीति नाम तस्याः। सा च भगवता सोमस्य सर्वासामोषधीनामधिपतेः प्रभावादत्यन्तविषघ्नी हिमामृतसम्भवत्वाच्च स्पर्शेन सर्वसत्त्वसन्तापहारिणी बभूव। यतः स तां सर्वदा विषोष्मशान्तये वासुकिः पर्यधत्त।

---

टीका–आमन्त्रितः] इन्द्रः तस्य पुरोधसः=पुरोहितस्य धिषणस्य=वृहस्पतेः ['वृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः' इत्यमरः] पुरन्ध्रीं=गृहिणीं धर्मपत्नीं=भार्याम् पत्नीयन्=पत्नीम् आत्मनः इच्छन् इति [ पत्नी + क्यच् 'सुप आत्मनः क्यच्' पा० ३।१।८ ] तां स्वपत्नीं कर्तुमिच्छन्नित्यर्थः, अतिशयेन तरलः=चञ्चलः सन् तारां नाम=तारेति नाम्नीं अपजहार=अपहृतवान्। नाकतः=स्वर्गाच्च पलायांचक्रे = पलायितवान्। चकितः=भयभीतः यः चकोरः= पक्षिविशेषः तस्य इव लोचने अथवा तद्वन् लोचने यस्याः तया, अतिशयितः कामः=कामविकारः यस्याः तया अतिकामुकयेति यावत् सर्वैः आकारैः=इंगितैः [ 'आकारार्विगिताकृती' इत्यमरः ] अभिरामा=रमणीया तया सह रममाणः= रमणं कुर्वन् रमणीयेषु=रम्येषु=स्थानेषु चचार=विजहार। चिरात् चिरकालानन्तरम् कथंचित्=केनापि प्रकारेण सर्वे च ते गीर्वाणाः=देवाः तेषां वाणीषु=वचनेषु गौरवात्=आदरादित्यर्थः देवानां कथनमादृत्येति यावत् गिरां पत्युः =वृहस्पतेः [ 'गीष्पतिः धिषणो गुरुः' इत्यमरः | ताम्=ताराम् प्रत्यर्पयामास = प्रत्यावर्तितवान् तु = किन्तु वरारोहायाः=वरः=सुन्दरः आरोहः=श्रोणी यस्याः तस्याः ( 'श्रोणयामप्यारोहो वरस्त्रियाः' इत्यमरः ) विरहात्= वियोगात् हृदये न इन्धनं=काष्ठम् यस्मिन् कर्मणि यथा स्यात्तथा संततं=निरन्तरम् अदह्यत=दग्धोभवतिस्म तस्याः विरहानलः तं दहतिस्मेतिभावः।

उदयात्=उदयते अस्मात् इति उदयः तस्मात् शैलात्=पर्वतात् उदयाचलादित्यर्थः, वस्तुतः उदयात् इत्येव पर्याप्तम् उदयो हि पूर्वपर्वतः ( 'अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः' इत्यमरः ) उदयमानः=उदयं गच्छन् चन्द्रः वरुणालयस्य=सागरस्य विमले=स्वच्छे वारिणि=जले संक्रांतं=प्रतिफलितं प्रतिबिम्बं=प्रतिच्छायां विलोकितवान्= अपश्यत्, सस्मरः=समदनः तारायाः स्मेरं=स्मितपूर्णं गण्डस्थलं=कपोलस्थलं यस्य तस्य मुखस्य सस्मार=स्मरणं कृतवान् ( अत्र 'अधीगर्थदयेषांकर्मणि' पा० २।३।५२ इत्यनेन कर्मणि षष्ठी ) मन्मथस्य=कामस्य उन्मादेन=चित्तसम्मोहेन मथ्यमानं=विलोड्यमानं मानसं=हृदयं यस्य सः, स्वः=स्वर्गे ('स्वरव्ययं स्वर्गनाक०' इत्यमरः ) तिष्ठतीति तथोक्तः अपि अस्वस्थः=अप्रकृतिस्थः ( अत्र 'स्वस्थोप्यस्वस्थः' इत्युच्चारसाम्यमात्रेण विरोधः अन्यथा सन्दर्भानां भिन्नत्वात् ) स्थवीयसः=अतिशयेन स्थूलान् ( स्थूल + ईयसुन् स्थवादेशश्च ) वाष्पवारिबिन्दून्=अश्रुजलबिन्दून्

हिन्दी–एक समय की बात है कि उदयाचल मे उदय होता हुआ चन्द्रमा समुद्र के निर्मल जल में पड़ा हुआ अपना प्रतिबिम्ब देख बैठा। और देखकर कामोत्तेजित हुए उसे तारा के मुस्कराते गालों वाले मुख की याद आ गई। कामोन्माद से हृदय में मथा जाता हुआ वह स्वस्थ ( स्वर्ग में रहता हुआ ) भी अस्वस्थ ( रुग्ण ) बना, सभी कमल-वनों के पिये हुए प्रभा-प्रवाह से मानों और चमकीली बनी श्वेत आँखों से मोटे-मोटे आँसुओं की बूँदें टपका बैठा। इसके बाद समुद्र में टपकते हुए उन सभी बूँदों को मोती बनाने वाली सीपियाँ पी गईं। उनके भीतर मोती बने हुए उन ( बूँदों ) को पाताल में रहने वाला सर्पों का राजा वासुकि प्राप्त कर गया। और पाताल में भी तारा गणों को—जैसे दिखाते हुए उन मोतियों से उसने एक लड़ बना ली और उसका नाम मन्दाकिनी रख दिया। वह सभी औषधियों के अधिपति भगवान् चन्द्रमा के प्रभाव से बड़ी भारी विषघ्नी और हिम एवं अमृत से उत्पन्न होने के कारण स्पर्श से सभी प्राणियों का संताप हर लेने वाली हो गई। यही कारण है कि वासुकि विष की गर्मी को शान्त करने के लिए उसे सदा धारण किये रहते थे।

समतिक्रामति च कियत्यपि काले कदाचित्तामेकावलीं तस्मान्नागराजान्नागार्जुनो नाम नागैरेवानीतः पातालतलं भिक्षुरभिक्षत लेभे च। निर्गत्य रसातलात्त्रिसमुद्राधिपतये सातवाहननाम्ने नरेन्द्राय सुहृदे स ददौ ताम्। सा चास्माकं कालेन शिष्यपरम्परया कथमपि हस्तमुपगता। यद्यपि च परिभव इव भवति भवादृशां दत्त्रिम उपचारस्तथाप्योषधिबुद्ध्या बुद्धिमता सर्वसत्त्वराशिरक्षाप्रवृत्तेन रक्षणीयशरीरेणायुष्मता विषरक्षापेक्षया गृह्यताम्। इत्यभिधाय भिक्षोरभ्याशवर्तिनश्चीवरपटान्तसंयतां मुमोच तामेकावलीं मन्दाकिनीम्।

---

**टीका**—पीतः = पानविषयीकृतः सकलस्य = निखिलस्य कुमुदवनस्य = कुमुदसमूहस्य यः प्रभाप्रवाहः = कान्तिप्रवाहः तेन धवलाभ्यां = श्वेताभ्यां ताराभ्यां उज्ज्वलाभ्यां च इवेत्युत्प्रेक्षायां लोचनाभ्यां = नेत्राभ्यां मुमोच = तत्याज। अथ उदन्वति = समुद्रे पततः = गलतः समस्तान् = सकलान् एव तान् = अश्रुबिन्दून् मुक्तासूक्तयः = मौक्तिकोत्पादकाः मुक्तास्फोटा आचेमुः = पीतवन्तः। तासां = मुक्तासूक्तीनां कुक्षिकोषेषु = उदरान्तरभागेषु मुक्ताफलीभूतान् = मौक्तिकरूपे परिणतान् तान् = अश्रुबिन्दून् रसातले = पाताले निवसतीति तथोक्तः विषमुचां = विषं = गरलं मुञ्चति दष्टेषु जीवेष्विति तथोक्तानाम् सर्पाणाम् ईशः = स्वामी वासुकिः नाम अवाप = प्राप्तवान्। सः = वासुकिश्च पातालतले = रसातलेऽपि तारागणं = तारासमूहम् इवेत्युत्प्रेक्षायां दर्शयद्भिः प्रकटयद्भिः तैः मुक्ताफलैः = मौक्तिकैः, तारागणो हि आकाशे दृश्यते, न तु पाताले, किन्तु मुक्ताफलानि तारासदृशानि आसन् पाताले नीयमानानि तानि पातालम् आकाशमिव दर्शयन्ति स्मेतिभावः, एकावलीं = एकसूत्रग्रथितमुक्तामालाम् अकलपयत् = अरचयत्। सा च सर्वासां = निखिलानाम् ओषधीनां फलपाकान्तोद्भिज्जानां धान्ययवादीनाम् ('ओषध्यः फलपाकान्ताः' इत्यमरः) अधिपतेः = ईशस्य (ओषधीशो निशांपतिः' इत्यमरः) भगवतः सोमस्य = चन्द्रमसः प्रभावात् = माहात्म्यात् अत्यन्तं यथा स्यात्तथा विषघ्नी = विष विनाशिका हिमं च अमृतं च ताभ्यां संभवः उत्पत्तिः यस्याः तस्याः भावः तत्त्वं तस्मात्, चन्द्रो हि हिममयः अमृतमयश्च भवति, स्पर्शेन = संसर्गेण सर्वे च ते सत्त्वाः = प्राणिनः तेषां सन्तापं हरतीति तथोक्ता बभूव = जाता। यतः = अस्मादेव कारणात् विषस्य उष्मणः = तापस्य शान्तये = उपशमाय ताम् = एकावलीं पर्यधत्त = धृतवान्।

समतिक्रामति = गच्छति कियति = नातिदीर्घे अपि काले = समये तस्मात् नागराजात् = वासुकेः नागैः एव पातालम् = रसातलम् आनीतः नागार्जुनः नाम भिक्षुः = बौद्धसंन्यासी अभिक्षत = याचितवान् लेभे = ताम् एकावलीं प्राप्तवांश्च। रसातलात् = पातालात् निर्गत्य = निःसृत्य त्रयाणां समुद्राणां = सागराणां अधिपतये = अधीश्वराय दक्षिणापथाधिपतयेत्यर्थः, दक्षिणापथस्य राजानो हि पूर्वपश्चिमदक्षिणसमुद्राणाम् अधीशा उच्यन्ते, सार्वभौमो राजातु 'चतुरुदधिमालामेखलाया भुवो भर्ता' भवति, द्वितीयोच्छ्वासे श्री हर्षमधिकृत्य बाणेन लिखितम्—'देवस्य चतुःसमुद्राधिपते'''''' हर्षस्य

**टिप्पणी—नागार्जुन**—बौद्धों में नागार्जुन एक बड़ा प्रसिद्ध नाम है। राजतरंगिणीकार उसे एक नृपति के रूप में वर्णन करता है जो बुद्ध के डेढ़ सौ वर्ष बाद हुआ किन्तु बृहत्कथामञ्जरी (१४।३९२–४०७) में उसे रसायन विद्या का विशेषज्ञ एवं किसी चिरायु नाम के राजा के मंत्री के रूप में बताया गया है। कथासरित्सागर के अनुसार वह एक बोधसत्त्व था। इस विषय में निश्चय रूप से कुछ नहीं कहा जा सकता।

**सातवाहन**—यह 'सातकणि' नरेश के लिए प्रयुक्त हुआ है जिसे संस्कृत में शातकर्णि कहा गया है। सातकणि सातवाहन "यशःप्रतिष्ठापनैकरसः" रूप में उल्लिखित है वास्तव में सात-वाहन उन महीपालों के कुल का नाम है, जिसमें बहुत सारों को शातकर्णि कहा गया है।

**हिन्दी** – कुछ समय बीत जाने पर एक बार नागार्जुन नाम का एक भिक्षु जिसे नाग पाताल में ले आये थे—उस एकावली को नागराज से मांग बैठा और उसे वह मिल गई। पाताल से निकल कर उसने, तीनों समुद्रों के अधिपति अपने मित्र सातवाहननामक राजा को वह दे दी। काल-क्रम से शिष्य-परंपरा द्वारा वह किसी तरह हमारे हाथ आ गई। यद्यपि दान देकर सत्कार करना आप-जैसे लोगों का एक अपमान-जैसा है, तथापि ओषधि समझ कर, सभी प्राणियों की रक्षा में लगे हुए, रक्षणीय शरीरवाले आप बुद्धिमान् विष से रक्षा हेतु इसे ग्रहण करें, यह कहकर उसने समीप में ही बैठे हुए भिक्षु के चीवर वस्त्र के किनारे में बँधी वह मन्दाकिनी-नामक एकावली खोल कर बाहर निकाल ली।

उन्मुच्यमानाया एव यस्याः प्रभालेपिनि लब्धावकाशे [1]विशदमहसि महीयसि विसर्पति रश्मिमण्डले युगपद्धवलायमानेषु दिङ्मुखेषु मुकुलितलतावधूत्कण्ठितैरामूलाद्विकसितमिव तरुभिः, अभिनवमृणाललुब्धैर्धावितमिव धुतपक्षपुटपटलधवलितगगनं वनसरसीहंसयूथैः, स्फुटितमिव भरवशविशीर्यमाणधूलिधवलैर्गर्भभेदसूचितसूचीसञ्चयशुचिभिः केतकीवाटैः [2]उद्गलितदलदन्तुराभिः प्रबुद्धमिव कुमुदिनीभिः, विधुतसितसटाभारभरितदिक्चक्रैश्चलितमिव केसरिकुलैः, प्रहसितमिव सितदशनांशु-

---

टीका–इति । सातवाहनः नाम यस्य तस्मै नरेन्द्राय = नरेशाय सुहृदे = मित्राय ददौ = दत्तवान् ताम् = एकावलीम् । शिष्यपरम्परया = शिष्यात् शिष्यमितिक्रमेण अस्माकं हस्तम् उपगता = अस्माभिः प्राप्तेत्यर्थः परिभवः = तिरस्कारः इव भवति भवादृशां = भवत्सदृशानां दत्तिभिः = दानेन निर्वृत्तः इति ( √दा + क्तिः मप् च ) उपचारः = सत्कारः किमपि दत्वा क्रियमाणः सत्कारः इत्यर्थः औषधिबुद्ध्या = औषधिरूपेयम् इति मत्वेत्यर्थः बुद्धिमता = मतिमता सर्वे च ते सत्वाः = प्राणिनः तेषां यः राशिः = समूहः तस्य रक्षायै = रक्षणाय प्रवृत्तेन = लग्नेन रक्षणीयं शरीरं यस्य तेन आयुष्मता = भवता विषात् या रक्षा तस्या अपेक्षया = इच्छया गृह्यताम् = स्वीक्रियताम् इति अभिप्राय = कथयित्वा अभ्याशवर्तिनः = अभ्याशे = समीपे वर्तते इति तथोक्तस्य सन्निहितस्य इत्यर्थः भिक्षोः चीवरपलटस्य = मुनिवस्त्रस्य अन्ते = प्रान्तभागे संयतां = बद्धां मुमोच = निष्कासितवान् इत्यर्थः ।

उन्मुच्यमानाया = निष्कास्यमानायाः एव यस्या = एकावल्याः प्रभया = कान्त्या लिम्पतीति तथोक्ते, लब्धः अवकाशः = अवसरः येन तस्मिन्, विशदम् = उज्ज्वलं महः = तेजः यस्य तस्मिन् महीयसि = अतिशयेन महति विसर्पति = विस्तीर्यमाणे रश्मीनां = किरणानां मण्डले = चक्रे युगपद् = सममेव दिङ्मुखेषु = दिशाभागेषु धवलायमानेषु = श्वेतीभवत्सु मुकुल०–मुकुलिताः = सञ्जातमुकुलाः कलिकापूर्णा इत्यर्थः याः लताः = वल्ल्यः एव वध्वः = स्त्रियः तासु उत्कण्ठितैः = समुत्सुकैः तत्समागमकामुकैरित्यर्थः तरुभिः = वृक्षैः आमूलात् = मूलपर्यन्तं विकसितं = फुल्लितम् इत्युत्प्रेक्षा सा लतासु वधूत्वारोपाद् रूपकोत्थापिता, अयं भावः सर्वतः प्रसृतः एकावल्याः समुज्ज्वलप्रकाशः एवं प्रतीयते स्म यथा तरवः मूलपर्यन्तं विकसिताः स्युः अभिनव०—अभिनवानि = नूतनानि यानि मृणालानि = बिसानि तेषु लुब्धैः = लोभिभिः तदिच्छुकैरित्यर्थः वनस्य = अरण्यस्य सरसी = महत् सरः तस्याः हंसयूथैः = हंससमूहैः, धुताः = प्रकम्पिताः पक्षपुटाः = पक्षयुगलानि तेषां पटलेन समूहेन धवलितं = श्वेतीकृतं गगनम् = आकाशं यस्मिन् कर्मणि यथा स्यात्तथा धावितम् = उड्डीनम् इव, स्फुटि०–भरः = भारः पुष्पाणामिति शेषः तस्य वशात् = कारणादित्यर्थः विशीर्यमाणा = विकीर्यमाणा या धूलिः = परागः तेन धवलैः = श्वेतैः गर्भस्य = अभ्यन्तरीयभागस्य भेदेन = स्फुटनेन सूचितः = व्यक्तः प्रकटित इत्यर्थः सूचीनां = सूचीवत् तीक्ष्णाग्रभागानां यः सञ्चयः = समूहः तेन शुचिभिः = उज्ज्वलैः केतकीनां = सुगन्धिपुष्पवृक्षविशेषाणां वाटैः = वाटीभिः स्फुटितं = दलितम्, विकसितम् इव, उद्गलि०—उद्गलितानि अत्र उच्छलितानि इति पाठः क्रियताम् उद्दलितानि = उद्घाटितानि यानि दलानि = पत्राणि तैः दन्तुराभिः = उन्नतदन्ताभिः इवेति गम्योत्प्रेक्षा, कुमुदिनीभिः = रात्रिकमलिनीभिः प्रबुद्धम् = जागरितम् इव, अर्थात् कुमुदिनीनां प्रस्फुटन्ति दलानि दन्ता इव कुमुदिन्यश्च नायिकाः इव प्रतीयन्ते स्म, नायिकाऽपि प्रातः प्रबुध्य जृम्भमाणा विशददन्तान् विवृणोति, विधुत०—विधुतः = कम्पितः सितानां = श्वेतानां सटानां = जटानां यः भारः = समूहः तेन भरितं = पूरितं दिक्चक्रं = दिशामण्डलं

हिन्दी–उसके खोलकर बाहर निकालते ही प्रभा से (सभी को) लिप देनेवाले, अवसर पाये, स्वच्छ तेज वाले बड़े भारी रश्मिमंडल के फैलने पर दिग्विभागों के एक साथ ही श्वेत हो जाने पर ऐसा लगा मानों कलियों वाली लता-वधुओं के लिए उत्कण्ठित हुए वृक्ष जड़ तक विकसित हो पड़े हों, मानों नए मृणालों का लोभी, वन की झील का हंस-समूह फड़फड़ाते हुए पक्ष-समूह से आकाश को श्वेत बनाए उड़ गया हो, मानों भार के कारण बिखर रहे पराग से श्वेत हुए भीतरी भाग के फटने से प्रकट हुई सुइयों जैसी नोकों से धवल बने केकड़े के बाड़े विकसित हो गए हों, मानों खुली हुई पंखुड़ियों से दन्तुरित हुई कुमुदिनियाँ जाग उठी हों, मानों हिलाई हुई श्वेत सटाओं (केसरों) के भार से दिङ्मण्डल को भरे केसरियों के झुंड चल पड़े हों, मानों दाँतों की श्वेत किरणावली की छटा से वन को

---

१. 'विषद' । २. 'उच्छलित' ।

मालालोकलिप्यमानवनं वनदेवताभिः, विकसितमिव शिथिलितकुसुमकोशकेसराट्टहासनिरङ्कुशं काशकाननैः, भ्रान्तमिव सम्भ्रमभ्रमितबालपल्लवपरिवेशश्वेतायमानैश्चमरीकदम्बकैः, प्रसृतमिव स्फायमानफेनिलतरलतरतरङ्गोद्गारिणा गिरिनदीपूरेण, अपरतारागण[1]लाभमुदितेनोदितमिव विकचमरीचिचक्राक्रान्तककुभा पूर्णचन्द्रेण, प्रक्षालित इव दावानलधूलिधूसरितदिगन्तो दिवसः, पुनरिव धौतान्यश्रुजलक्लिष्टानि नारीणां मुखानि।

राजा तु मांसलैस्तस्याः सम्मुखैर्मयूखैराकुलीक्रियमाणं मुहुर्मुहुरुन्मीलयन्निमीलयंश्च चक्षुः कथमपि प्रयत्नेन ददर्श सर्वाशापूरणीं पङ्क्तीकृतामिव दिङ्नागकरशीकरसंहतिम्, घनमुक्तां शारदीमिव लेखीकृतां ज्योत्स्नाम्, प्रकटपदकचिह्नां

---

**टीका**—यैः तैः केसरिणां=सिंहानां कुलैः=दलैः चलितम्=प्रस्थितम् इव, प्रहसि०—सितानां=श्वेतानां दशनानां=दन्तानाम् अंशुमालायाः=किरणावल्या आलोकेन=दीप्त्या लिप्यमानं=लिप्तीक्रियमाणं वनं यस्मिन् कर्मणि यथा स्यात्तथा वनदेवताभिः=वनाधिष्ठात्रीभिः देवीभिः प्रहसितम् इव, विकसि०—शिथिलितः=शैथिल्यं प्राप्तः यः कुसुमानां कोशः=कुड्मलम् [ 'कोशोऽस्त्री कुड्मले' इत्यमरः ] तस्य केसराणां=किञ्जल्कानां अट्टहासेन=महाहासेन निरंकुशं=निर्निरोधं यथा स्यात्तथा काशानां=घासविशेषाणां काननैः=वनैः विकसितं=फुल्लितम् इव भ्रान्त०—संभ्रमेण=त्वरया भ्रमिताः बालाः=पुच्छरोमाणि पल्लवाः इवेत्युपमिततत्पु० तेषां परिवेशेन=मण्डलेन श्वेतायमानैः=श्वेतवर्णीभवद्भिः चमरीणां=एतदाख्यगोविशेषाणां कदम्बकैः=समूहैः भ्रान्तम्=भ्रमणं कृतम् इव, प्रसृत०—स्फायमानाः=उपचीयमानाः फेनिलाः=फेनयुक्ता ये तरलतराः=अतिचञ्चलाः तरङ्गाः=वीचयः तान् उद्गिरति=उद्वमतीति तथोक्तेन गिरिनद्याः पूरेण=ओघेन प्रसृतं=प्रवृद्धम् इव, अपर०—अपरः=अन्यः आकाशस्थिततारागणाद्भिन्नः इत्यर्थः यः तारागणः तस्य लाभेन=प्राप्त्या मुदितेन=प्रसन्नेन, विकचैः=विततैः मरीचीनां=किरणानां चक्रेण=समूहेन आक्रान्ताः=अधिष्ठिताः व्याप्ताः इत्यर्थः ककुभः=दिशः येन तेन पूर्णचन्द्रेण=पूर्णमासीचन्द्रमसा उदितम्=उद्गतम् इव, अयं भावः पूर्णचन्द्रप्रभा एकावलीप्रभायाः सदृशी मुक्ताश्च ताराणां सदृशाः आसन् अत एव तासु कविः अपरतारागणत्वमुत्प्रेक्षते प्रक्षालि०—दावानलस्य=वनाग्नेः या धूलिः=भस्म तया धूसरितः=धूसरवर्णीकृतः दिगन्तः=दिक्प्रान्तभागः यस्मिन् सः दिवसः प्रक्षालितः=धौत इव अर्थात् दावानलभस्म धूसरितदिवसः एकावलीप्रभया जलधारया इव क्षालितः सन् पुनर्विद्योतितः अश्रुजलेन=शोकाश्रुभिः क्लिष्टानि=कदर्थितानि नारीणां मुखानि पुनः धौतानि=प्रक्षालितानि अर्थात् एकावली राज्यश्रियाः तत्परिजनानाञ्च सुन्दरमुखानीव समुज्ज्वला आसीत्, अश्रुजलक्लिष्टानि यानि पश्चात् प्रक्षालितानि अभवन्। उपरि सर्वत्रोत्प्रेक्षालंकारः।

राजा=हर्षः मांसलैः=स्थूलैः विपुलैरिति यावत् संमुखैः=अभिमुखैः तस्या एकावल्याः मयूखैः=किरणैः आकुलीक्रियमाणम्=अभिभूयमानं चक्षुः=नयनं उन्मीलयन्=उद्घाटयन् निमीलयन्=मुद्रयन् च कथमपि प्रयत्नेन प्रयासेन ददर्श=

**हिन्दी**—लिप्त करके वन देवियाँ हँस उठी हों, मानों काश के वन ढीली पड़ी फूलों की बन्द कलियों के केसरों के रूप में खुलकर हँसते हुए खिल गए हों, मानों जल्दी-जल्दी घुमाए पल्लव—जैसे ( पूँछ के ) बालों के घेरे से श्वेत बनी चमरी गायों के झुण्ड निकल पड़े हों, मानों बढ़ते जा रहे, फेन भरे एवं और अधिक चञ्चल बने तरंगों को उगलती हुई पहाड़ी नदी में बाढ़ फैल गई हो, मानो दूसरे तारा-गणों की प्राप्ति से प्रसन्न हुआ, चमकीले किरण-समूह से दिशाओं में छाया हुआ पूर्णिमा का चाँद उदय हो गया हो, मानों बनाग्नि के भस्म से मटमैले बने दिग्भागों वाला दिवस धुल गया हो और मानों अश्रुजल से गन्दे बने हुए नारियों के मुख फिर से धुल गए हों।

किन्तु राजा हर्ष सामने से आई उसकी मोटी-मोटी किरणों से चुंधियाई आँख को बार-बार खोलता और बन्द करता जा रहा किसी तरह प्रयत्न से उसे देख पाया—जो सभी आशाओं ( इच्छाओं ) को पूर्ण कर देने वाली ऐसी लग रही थी मानो सभी आशाओं ( दिशाओं ) को पूर्ण कर देने वाली, पंक्तिबद्ध की हुई दिग्गजों के सूँड़ों के जल-कणों की राशि हो जो घनी मुक्ताओं ( मोतियों ) वाली ऐसी लग रही थी मानों घनों ( मेघों ) से मुक्त ( रहित ) रेखा रूप में परिणत शरद की चाँदनी हो, जो स्पष्ट पदक चिह्न ( पद-चिह्न ) रखे द्वितीया के चाँद की घूमने की वीथिका

---

1. 'लोभ'

सञ्चारणवीथीमिव बालेन्दोनिश्चलीभूतां सप्तर्षिमालामिव हस्तमुक्ताम्, अभिभूतसकलभुवनभूषणभूतिप्रभावा[1]मैशानीमिव शशिकलाम्, धवलतागुणपरिगृहीतां कान्तिमिव निर्गतां क्षीरराशेः, अनेकमहामहीभृत्परम्परागतां गङ्गामिव दुर्गतिहराम्, अनवरतस्फुरिततरलांशुकां पुरःसरपताकामिव महेश्वरभावागमस्य, घनसारशुक्लां दन्तपङ्क्तिमिवाभिमुखस्येश्वरस्य, वरमनोरथपूरणसमर्थां स्वयंवरस्रजमिव भुवनश्रियः, निजकरपल्लवावरणदुर्लक्ष्यां चक्षूरागविहसितिकामिव वसुधायाः, मन्त्रकोषसाधन-

---

टीका —दृष्टवान् ताम् एकावलीमिति शेषः इतः परं तस्याः विशेषणानि, सर्वाशा० --सर्वा = निखिलाश्च ताः आशाः = दिशाः अन्यत्र इच्छाः ताः पूरयतीति तथोक्ताम् ( कर्तरि ल्युट् ) पंक्तिकृतां=पंक्तौ स्थापितामित्यर्थः इवेत्युत्प्रेक्षायाम् दिङ्नागानां = दिग्गजानां कराणां = शुण्डानां शीकराणां = जलकणानां संहतिम् = समूहम्, घन०—घनैः = मेघैः मुक्तां = त्यक्तां मेघरहितामिति यावत् अन्यत्र घनाः = निविडाः मुक्ताः = मौक्तिकानि यस्य ताम् शारदीं = शरत्कालीनां लेखीकृतां = रेखारूपेण स्थापितां ज्योत्स्नां = चन्द्रिकाम् इवेत्युत्प्रेक्षायाम् प्रकट० —प्रकटं = स्पष्ट पदकं = पदम् एव पदक पाद इत्यर्थः तस्य चिह्नं पदचिह्नमित्यर्थः यस्याम् अन्यत्र स्पष्टं पदकं = मध्यमणिः इति शंकरः चिह्नं यस्याम् ताम् बालेन्दोः = नवचन्द्रस्य द्वितीयाचन्द्रमसः इत्यर्थः सञ्चारणस्य = इतस्ततः सञ्चरणस्य वीथी = सरणी मार्ग इति यावत् इव, निश्चली० निश्चलीभूतां सप्तर्षीणां = मरीच्यादि—सप्तसंख्यकतारकाणां मालां = राशिं हस्तात् = करात् अन्यत्र हस्तनामकनक्षत्रविशेषात् मुक्तां = त्यक्तां निःसृतां च, उपरि सर्वत्रोत्प्रेक्षा, अभिभूत० —अभिभूतः = पराभूतः सकलस्य = निखिलस्य भूषणानां = कौस्तुभादि-मण्डनानां भूतेः = समृद्धेः प्रभावः = शक्तिः यया ( एकावल्या ) अन्यत्र अभिभूतः = अतिशयितः सकलभुवनभूषणस्य = सकलसंसारालंकारभूतस्य शिवस्येत्यर्थः भूतेः = भस्मनः प्रभावः = महत्त्वं द्युतिरित्यर्थः यया ( शशिकलया ) ताम् ( 'ईश्वरः शर्व ईशानः' इत्यमरः ) इवेति श्लिष्टोपमायाम्, शशिकलां = चन्द्रकलाम् शिवो हि शशिकला शिरसि धत्ते, धवल० —क्षीरराशेः = क्षीरसमुद्रस्य निर्गतां = बहिरागताम् धवलता गुणः = सूत्रञ्च ताभ्यां परिगृहीता = आश्रिता

टिप्पणी—हस्तमुक्ताम्—टीकाकार प्रायः 'हस्तेन हस्तनक्षत्रेण मुक्ताम्=रहिताम्' अर्थात् विना हस्त-नक्षत्र के सप्तर्षिमण्डल को लेते हैं किन्तु सप्तर्षिमण्डल तो हमेशा हस्तरहित ही रहता है, हस्त उसके अन्तर्गत नहीं आता वास्तव में बात यह है कि हस्तनक्षत्र शरद में उदय होता है उससे निकला हुआ सप्तर्षिमण्डल उत्युज्ज्वल रहता है अतः सप्तर्षिमण्डल हस्तरहित नहीं प्रत्युत हस्तोदय सम्बन्धी अभिप्रेत है।

हिन्दी—(मार्ग) हो, जो [ मोतियों के गोल और चिकने होने के कारण आचार्य के ] हस्त ( हाथ ) से मुक्त ( छुटी ) निश्चल पड़ी ऐसी लग रही थी मानों हस्त (नक्षत्र विशेष ) से मुक्त ( निकली ) निश्चल पड़ी सप्तर्षियों की राशि हो, जो सारे भुवन के ( कौस्तुभ आदि ) भूषणों की भूति ( समृद्धि ) के प्रभाव ( उत्कर्ष ) को परास्त किये हुए शिव की उस चन्द्रकला के समान थी जो सारे भुवन के भूषण ( शिव ) की भूति ( भस्म ) ग्रहण किये ऐसी प्रतीत हो रही थी मानों धवलता रूप गुण ( धर्म ) ग्रहण किये बाहर निकली क्षीरसागर की कान्ति हो, अनेक महान् महीधरों राजाओं की परम्परा ( कुलक्रम ) से आई एवं दुर्गति ( गरीबी ) मिटा देने वाली जो उस गङ्गा के सदृश थी जो अनेक महान् महीधरों ( पर्वतों ) की परम्परा ( श्रेणियों ) से आई है और दुर्गति ( नरक ) मिटा देती है, निरन्तर स्फुरित ( झिलमिलाती ) तरल मध्यमणि की अंशुकों ( किरणों ) वाली तथा महेश्वर भाव ( चक्रवर्तित्व ) के आगम ( प्राप्ति ) की अग्रदूतिका जो उस अग्रस्थित पताका के सदृश थी जिसका सरल अंशुक [ चञ्चल रेशमी पट ] निरन्तर तरल ( फर्फराता ) रहता है और जो महेश्वर ( महादेव के मन्दिर ) के भाव ( सत्ता ) का आगम ( बोध ) कराती है और घनसार ( कपूर ) की तरह शुक्ल ऐसी लगती थी मानों सम्मुखस्थित राजे की घन ( घनी ) सार ( मजबूत ) और शुक्ल दन्तपंक्ति हो, जो वर ( श्रेष्ठ ) मनोरथों को पूर्ण कर देने वाली जगत-राजलक्ष्मी की स्वयंवरमाला हो जो अपन-पल्लव ( किरण विस्तार ) के आवरण ( परिवेश ) के कारण न देखे जा सकने वाली ऐसी प्रतीत हो रही थी मानों अपने कर पल्लव ( हस्त-किसलय ) द्वारा आवरण ( मुख ढक देने के कारण ) न देख सकने वाली वसुधा की चक्षु-राग ( आँख लड़ने ) से उत्पन्न हुए प्रेम की मृदु मुसकान हो, जो मंत्र ( गुप्तमन्त्रणा ), कोष ( धन ), और साधन

---

१. 'प्रभावामिवैशानीम्'

प्रवृत्तस्याक्षमालामिव राजधर्मस्य, समुद्रालङ्कारभूतां संख्यालेख्यपट्टिकामिव कुबेरकोशस्य। पश्यंश्चैतां विस्मयमाजगाम मनसा सुचिरम्। आचार्यस्तु तामुद्धृत्य बबन्ध बन्धुरे स्कन्धभागे भूपतेः। अथ नरपतिरपि प्रीतिमुपदर्शयन्प्रत्यवादीत्—'आर्य, रत्नानामीदृशानामनर्हाः प्रायेण पुरुषाः। तपःसिद्धिरियमार्यस्य देवताप्रसादो वा। के च वयमिदानीमात्मनोऽपि किमुत ग्रहणस्य प्रत्याख्यानस्य वा। दर्शनात्प्रभृति प्रभूतगुरुगुणगणहृतेन हृदयेन परवन्तो वयम्। सङ्कल्पितमिदमा मरणादार्योपयोगाय शरीरम्। अत्र कामचारो वः कर्तव्यानाम्' इति।

---

**टीका**—अन्यत्र प्रथितः हारः, कान्ति = शोभाम् इवेत्युत्प्रेक्षायाम्, **अनेक०**—अनेके महान्तः ये महीधराः = राजानः पर्वताश्च तेषां परम्परया = क्रमेण आगताम्, एकावली अनेकराजानां परम्परातः प्राप्ता गंगा अपि क्रमशः अनेक पर्वतानां मध्ये भूत्वा आगच्छति. दुर्गति = नैःस्वम् दारिद्र्यमित्यर्थः अन्यत्र नरकम् ( 'दुर्गतिर्नरके नैःस्वे' इति मेदिनी ) हरतीति तथोक्ताम् गंगाम् = भागीरथीम्, इवेति श्लिष्टोपमायाम्, **अनवरत०** महेश्वरभावस्य = चक्रवर्तित्वस्य आगमनस्य = प्राप्तेः अनवरतं = निरन्तरं यथा स्यात्तथा स्फुरितः = भासिताः तरलस्य = मध्यमणेः ( 'तरलो हारमध्यगः' इत्यमरः ) अंशुकाः = अंशवः एव अंशुकाः ( स्वार्थे कः ) यस्याम् ( एकावल्याम् ), महेश्वरः = शिवः तस्य तन्मन्दिरस्येत्यर्थः भावः सत्ता तस्य आगमनस्य = बोधनस्य सूचनायाः इत्यर्थः अनवरतं = स्फुरितं तरलं = चञ्चलम् अंशुकं = कौशेयं दुकूलवसनं यस्याः ( पताकायाः ) ताम् पुरः सरतीति तथोक्तां पताकाम् = ध्वजम् इवेति श्लिष्टोपमायाम् अर्थात् यथा पुरःस्थिता पताका शिवालयस्य सद्भावं बोधयति तथैव एकावली अपि भाविचक्रवर्तित्वस्य अग्रदूती अस्ति **घन०**—अभिमुखः = अनुकूलः कश्चित् प्रति कृपालुः इत्यर्थः तस्य ईश्वरस्य = प्रभोः कस्यापि राज्ञः इति यावत् घना = निबिडा सारा = दृढा शुक्ला = धवला च या दन्तानां पङ्क्तिः = राजिः ताम् इव घनसारवत् = कर्पूरवत् धवलां = श्वेताम् ( एकावलीम् ) अनुकूलो राजा हसन् दन्तपङ्क्तिञ्च दर्शयति अत्र श्लिष्टोपमा, अथवा ईश्वरशब्देन अत्र हर्षो ग्रहीतुं शक्यते, स एकावल्या अभिमुख स्थित आसीत्, हसितस्य च, एकावली हसितस्य हर्षस्य दन्तपङ्क्तिरिव प्रतीयते स्म, अस्मिन्पक्षे उत्प्रेक्षा, **वर०**—वराः = श्रेष्ठाः ये मनोरथाः अथ च वरस्य = परिणेतुः यः मनोरथः तस्य पूरणे = सम्पादने समर्थाम् भुवनश्रियः = जगल्लक्ष्म्याः स्वयम्वरस्य = स्वयं वरणस्य स्रजम् = मालाम् इवेत्युत्प्रेक्षायाम् अर्थात् भुवनश्रीः एकावली-रूपेण मालां हर्षस्य गले प्रक्षिप्य तं पतित्वेन वृतवती, **निज०**—निजाः ये कराः = किरणाः तेषां पल्लवस्य = विस्तारस्य [ पल्लवोऽस्त्री किसलये विस्तारे' इत्यमरः ] आवरणेन = परिवेशेन दुर्लक्ष्याम् = लक्षयितुमशक्याम् चाकचक्य-कारणात् दृष्टिरोधिनीमित्यर्थः अन्यत्र निजः यः करः = हस्तः पल्लव इव तेन मुखस्य आवरणेन = पिधानेन दुर्लक्ष्याम् वसुधायाः = नायिकाभूतायाः पृथिव्याः चक्षुरागे = परस्परदर्शनेन जाते प्रणये विहसितम् = नर्महासम् इवेत्युत्प्रेक्षायाम् मृदुहसन्ती कापि स्त्री करेण स्वमुखमाच्छादयति अतस्तस्याः स्मितं द्रष्टुं कठिनायते, हासोऽपि कविजगति एकावली-वत् श्वेतो भवति। **मन्त्र०**—मन्त्र. = गुप्तमन्त्रणा कर्तव्यावधारणमित्यर्थः च कोषः = धनम् च साधन हस्त्यश्वादि-सैन्यञ्च तैः प्रवृत्तस्य = कार्यनिरतस्य अन्यत्र मन्त्राः = तत्तद्देवताक—प्रार्थनाशब्दविशेषाः तेषां कोषः = समूहः तस्य साधने = आराधने प्रवृत्तस्य = लग्नस्य राजधर्मस्य राजकर्तव्यस्य राजनीतेरिति यावत्, अक्षमालां = जपमालाम् इवेत्युत्प्रेक्षायां

**हिन्दी**—( सैन्य ) में लगे राजधर्म की मानों मन्त्रकोष (मंत्रसमूह) के साधन (सिद्ध करने) में लगे की जपमाला हो तथा जो समुद्र ( सागर ) की अलङ्कार-भूत बनी ऐसी लगती थी मानों समुद्र (मोहर सहित) की अलंकृत हुई कुबेर के खजाने की गिनती के अंकों का तख्ता हो। इस एकावली को देखते हुए राजा के मन में बहुत देर तक आश्चर्य होता रहा। किन्तु आचार्य दिवाकर मित्र ने उसे उठाकर राजा के उन्नतावनत स्कन्ध-भाग पर बांध दिया। तदनन्तर राजा भी प्रीति दिखलाता हुआ उत्तर में बोला—आर्य, लोग प्रायः ऐसे रत्नों के योग्य नहीं हुआ करते हैं। यह तो आप की तपःसिद्धि है या फिर ( किसी ) देवता की कृपा है। अब हम अपनी आत्मा पर भी अधिकार रखने वाले कौन होते हैं? ( एकावली के ) ग्रहण करने या न करने की बात तो दूर रही। जब से आपके दर्शन हुए हैं, आपके बहुत सारे महान्-गुणगणों द्वारा आकृष्ट हुए हृदय से हम पराधीन हो गये हैं। हमने संकल्प कर लिया है कि मरण-पर्यन्त यह शरीर आप की सेवा के लिए रहे। इस शरीर से आप जो भी काम चाहें ले सकते हैं।

समतिक्रान्ते च कियत्यपि काले गते चैकावलीवर्णनालापे लोकयानन्तरं लब्धविश्रम्भा राज्यश्रीस्ताम्बूलवाहिनीं पत्रलतामाहूयोपांशु किमपि कर्णमूले शनैरादिदेश। दर्शितविनया च पत्रलता पार्थिवं व्यज्ञापयत्— 'देव, देवी विज्ञापयति न स्मराम्यार्यस्य पुरः कदाचिदुच्चैर्वचनमपि। कुतो विज्ञापनम्। इयं हि कुधामसहृता[1] व्यापारयन्ती हतदैवदत्तादेशा[2] शिथिलयति विनयम्। अबलानां हि पतिरपत्यं वावलम्बनम्। उभयविकलानां तु दुःखानलेऽन्धनायमानं प्राणितमशालीनत्वमेव केवलम्। आर्यागमनेन च कुतोऽपि प्रतिहतो मरणप्रयत्नः। अतः काषायग्रहणाभ्यनुज्ञयानुगृह्यतामयमपुण्यभाजनं जनः' इति। अमाधिपस्तु तदाकर्ण्य तूष्णीमेवावातिष्ठत।

---

टीका—अन्योऽपि कश्चित् जनानां महतान् ( तादृशां भवत् ) मन्त्रकोपमाधनलाभो भवति, समुद्रा०—समुद्रस्य=सागरस्य इयं सामुद्री एकावल्या मुक्तानां समुद्रे उत्पन्नत्वात्, अन्यत्र मुद्रया सह या वर्तते इति समुद्रा, मुद्रा= अलंकारभूता=भूषणीभूताम् एकावल्या मुक्ताना मः द्वे उत्पन्नत्वात्, अन्यत्र मुद्रया सह या वर्तते इति समुद्रा, मुद्रा= अलंकारभूता=भूषणीभूताम् एकावल्या मुक्तानां मः द्वे उत्पन्नत्वात्, अन्यत्र मुद्रया सह या वर्तते इति समुद्रा, मुद्रा= अलंकारभूता च ता मुद्रालंकृतामिति यावत्, कुबेरस्य धनाधिपस्य कोशस्य विश्रामोत्पादनचिह्न वशेन समुद्रा। अलंकारभूता च ता मुद्रालंकृतामिति यावत्, कुबेरस्य धनाधिपस्य कोशस्य विश्रामोत्पादनचिह्न वशेन समुद्रा। अर्थात् एकावल्याः प्रत्येकं मौक्तिक कुबेर-निधेः संख्यायाः=गणनायाः लेखारूढ्रिकाय=लेखपट्टिका इवेत्युत्प्रेक्षायाम् अर्थात् एकावल्याः प्रत्येकं मौक्तिक कुबेर-निधेः संख्यायाः=गणनायाः लेखपट्टिका इव। एताम् एकावलीं पश्यन् हर्षं मनसा कोषस्य संख्यावबोधकोऽङ्क इवासीत् एकावली च मुद्राङ्किता लिखितांकिता पट्टिका च। एताम् एकावलीं पश्यन् हर्षं मनसा विस्मयम्=आश्चर्यम् आजगाम=प्राप। उद्धृत्य=उत्थाप्य भूपते=राज्ञः बन्धुरे=उन्नतानते ( 'बन्धुरं तून्नतानतम्' इत्यमरः ) स्कन्ध-भागे=स्कन्धप्रदेशे बबाध=बद्धवान्। प्रीतिं=प्रसन्नतान् उपदर्शयन्=प्रकटयन् प्रत्यवादीत्= उक्तवान्-पुरुषाः=जनाः ईदृशानां रत्नानाम् अनर्हाः=अयोग्याः सन्तीति शेषः। आर्यस्य=भवतः तपसां सिद्धिः= फलमित्यर्थः, देवतायाः प्रसादः=अनुग्रहो वा। आत्मनः=स्वस्य अपि प्रभवः इति शेषः अर्थात् अस्माकम् आत्मापि अस्माकम् न, स भवदीयः एव, किमुत कि वक्तव्यम् एकावल्या ग्रहणस्य=स्वीकारस्य प्रत्याख्यानस्य=अस्वीकारस्य वा। दर्शनात्=भवतः साक्षात्कारात् प्रभृति=आदाय प्रभूताः=बहवः गुणाः=महान्तश्च ये भवदीयाः गुणाः तेषां गणेन =समूहेन हृतेन=आकृष्टेन हृदयेन परवन्तः=परवशाः भवदायत्ता इत्यर्थः। आमरणात्=मृत्युपर्यन्तम् आर्यस्य= भवतः उपयोगाय=सेवायै इत्यर्थः सङ्कल्पितं=निर्धारितम्। अत्र=अस्मिन् शरीरे च=पुनःकं कर्तव्यानाम्= कार्याणां कामचारः=यथेच्छाचरणम् अर्थात् यत्किमपि कार्यं भवान् इच्छति तत्रैतच्छरीरं यथेच्छं नियोज्यताम्।

समतिक्रान्ते=व्यतीते कालेऽस्मिन्=समयेऽस्मिन् एकावल्याः वर्णनस्य आलापे=वार्तालापे गते=समाप्ते अनन्तरम् तत्पश्चात् लब्धः=प्राप्तः विश्रम्भः=विश्वासः यया सा इत्यर्थः यदा सा आहूय=आकार्य उपांशु=गुप्तं यथास्यात्तथा कर्णस्य=श्रोत्रस्य नम्रता यया सा पार्थिवं=राजानं व्यज्ञापयत्=निवेदितवती— देवी=राज्यश्रीः पुरः=समक्ष उच्चैर्वचनम्=उच्चैर्भाषणम् हतेन=दुष्टेन दैवेन=भाग्येन दत्तः आदेशः=आज्ञा यस्यै तथाभूता शुचां=शोकानाम् संदृब्धता=सोढुमशक्या व्यापारयन्तीं=मां वक्तुं प्रेरयन्ती विनयं=नम्रतां शिथिलयति=श्लथीकरोति 'अबलानां=नारीणां अपत्यं=सन्ततिः अवलम्बनम्=आश्रयः भवतीति शेषः, उभयेन पत्या सन्तत्या च विकलानां= रहितानां स्त्रीणां तु दुःखम् एव अनलः=अग्निः तस्य यत् इन्धनम्=एधः तद्वत् आचरतीति इन्धनायमानं प्राणितम्=

हिन्दी—कुछ समय बीत जाने और लोगों की एकावली के वर्णन की बातें समाप्त हो जाने पर, साहस बटोरे राज्यश्री ने तमोलिन पत्रलता को बुलाकर गुप्त रूप से उसके कान के पास धीरे से कुछ आदेश दिया। और नम्रभाव दिखाए हुए पत्रलता राजा से निवेदन करने लगी—'महाराज ! रानी निवेदन करती है कि मुझे स्मरण नहीं कि मैं आपके सामने कभी ऊँचे स्वर में भी बोली हूँगी, निवेदन करना तो कैसे ? वस्तुतः में यह शोक की असह्यता जिसे दैव भाग्य ने आदेश दे रखा है—मुझे प्रेरित कर रही है और मेरे विनय भाव में शिथिलता ला रही है। कारण यह है कि अबलाओं का पति या सन्तान अवलम्बन हुआ करता है। जिनके दोनों ही नहीं है, उनका दुःखाग्नि का ईंधन जैसा बना हुआ जीवन निरी धृष्टता ही है। मरण के लिये प्रयत्न किया भी था, ( पर ) वह आपके आ जाने से विफल हो बैठा। इसलिए मुझ पापिनी को गेरुआ वस्त्र धारण करने की अनुमति देकर अनुगृहीत कीजिये।' किन्तु यह सुनकर राजा चुपचाप ही बैठा रहा।

---

१. 'असह्यता ·········· हतदैवदत्ता च दशा' २. 'देव०'

अथाचार्यः सुधीरमभ्यधात्—'आयुष्मति, शोको हि नाम पर्यायः पिशाचस्य रूपान्तरमाक्षेपस्य तारुण्यं तमसो विशेषणं विषस्यानन्तकः प्रेतनगरनायकः। अयमनिर्वृतिधर्मा दहनः। अयमक्षयो राजयक्ष्मा। अयमलक्ष्मीनिवासो जनार्दनः। अयमपुण्यप्रवृत्तः क्षपणकः। अयमप्रतिबोधो निद्राप्रकारः। अयमनलसधर्मा सन्निपातः। अयमशिवसहचरो विनायकः।

---

टीका—जीवितम् केवलम् अशालीनत्वम्=धृष्टतामात्रम् अर्थात् पतिपुत्रविहीनानां नारीणां शोकाग्निदह्यमान जीवनं निर्लज्जता एव। आर्यस्य=भवतः आगमनेन=उपस्थित्या मरणस्य=आत्मदाहस्येत्यर्थः प्रयत्नः=चेष्टा प्रतिहतः=विघ्नितोऽभवत्। काषायस्य=काषायेण रक्तस्य वस्त्रस्य ग्रहणस्य=धारणस्य अभ्यनुज्ञया=अनुमत्या अपुण्यानां पापानां भाजनम्=पात्रम् अयं जनः अहमित्यर्थः अनुगृह्यताम्=अनुकम्प्यताम् अर्थात् अहं भिक्षुणी भवितुमिच्छामि भवतोऽनुमतिञ्च प्रार्थये। जनाधिपः=राजा आकर्ण्य=श्रुत्वा तूष्णीम् एव=मौनमाकलय्य एव अवातिष्ठत=स्थितवान्।

आचार्यः=दिवाकरमित्रः सुधीरम्=अति गम्भीरं यथा स्यात्तथा अभ्यधात्=अकथयत्—पर्यायः=नामान्तरम्=आक्षेपस्य=अपस्मारस्येति शंकरः रूपान्तरम्=अन्यत् रूपम् तमसः=अन्धकारस्य तारुण्यं=यौवनम् अर्थात् शोकाधीनतायाम् अन्धकारः एव विजयते, विषस्य=गरलस्य विशेषणं=विशेषकः, अनन्तकः=न अन्तकः=यमः इत्यनन्तकः प्रेतनगर्याः=यमपुर्याः नायकः=अधीश्वरः यमपुरीनायकोऽस्ति किन्तु स यमो नास्तीति विरोधः यमस्यैव यमपुर्याः नायकत्वात् तत्परिहारस्तु न अन्तः=पर्यवसानं यस्य स इत्यनन्तः अनन्त एव अनन्तकः (स्वार्थे कः) अथ च यमपुरीं नयतीति तथोक्तः अर्थात् प्राणघातकः, न निर्वृतिः=उपशमः धर्मो यस्य सः दहनः=अग्निः, अग्निस्तु निर्वृतिधर्मा भवतीति विरोधः तत्परिहारः अनिर्वृतिः=असुखम् अशान्तिरित्यर्थः दहनः=दहतीति दहनः सन्तापकरः इत्यर्थः। न क्षयः=शरीरक्षीणता यस्मिन् इति अक्षयः राजयक्ष्मा, राजयक्ष्मा तु शरीरं क्षीणं करोति इति विरोधः परिहारस्तु न क्षयः=अन्तो यस्य स इति। न लक्ष्म्याः=श्रियः निवासः जनार्दनः=विष्णुः लक्ष्मीः हि सदा विष्णोः वक्षसि निवसति अलक्ष्मीनिवासः जनार्दन इति विरोधः परिहारस्तु अलक्ष्मीः=विपत्तिः तस्याः निवासः जनान्=लोकान् अर्दयति=पीडयति इति जनार्दनः। न पुण्याय=पुण्यकर्मणे प्रवृत्तः, क्षपणकः=बौद्धभिक्षुः, बौद्धभिक्षुस्तु पुण्याय प्रवर्तते न अपुण्यायेति विरोधः तत्परिहारस्तु अपुण्यैः पूर्वजन्मनि कृतैः पापैः प्रवृत्तं=प्राप्तम् क्षपयति=विनाशयति जीवनम् इति। न प्रतिबोधः=स्वापाद् उत्थानं=जागरणमित्यर्थः यस्मिन् स निद्राप्रकारः=निद्राविशेषः निद्रा अजागरणमिति विरोधः सर्वासां निद्राणां जागरणपर्यवसितत्वात् तत्परिहारश्च न प्रतिबोधः=विवेकः यस्मिन् निद्रां प्रकिरति=हिनस्तीति निद्राप्रकारः निद्राक्षयकारक इत्यर्थः। अनलसः=आलस्यरहितः क्रियाशील इत्यर्थः धर्मः=स्वभावो यस्य सः सन्निपातः=त्रिदोषजज्वरविशेषः सन्निपातस्तु अलसधर्मा, तस्मिन् हि मनुष्यः अलसो भवति न तु क्रियाशीलः इति विरोधः तत्परिहारश्च अनलेन=अग्निना समानः धर्मः यस्य सः अर्थात् अग्निसदृशः दाहकः सन्निपातः=सम्यक् निपातयति=घातयतीति [ कर्तरि घञ् ] न शिवस्य=महादेवस्य सहचरः=सह स्थितः विनायकः=गणेशः

हिन्दी—इसके अनन्तर आचार्य दिवाकर मित्र बड़ी गम्भीरता के साथ बोल उठे—'आयुष्मती' शोक सचमुच पिशाच का दूसरा रूप है, अन्धकार का यौवन है. विष का विशेषण है और अनन्तक ( यम न होता हुआ ) यम पुरी का नायक है, नहीं, नहीं अनन्तक ( अन्तरहित होता हुआ ) यमपुरी पहुँचाने वाला है। यह ( शोक ) अनिर्वृति-स्वभाव की ( न बुझने वाली ) दहन ( आग ) है नहीं नहीं, अनिर्वृति स्वभाव को चैन न देने वाला एवं दहन ( सन्ताप पहुँचाने वाला ) है। यह अक्षय ( शरीर क्षीण न करने वाला ) तपेदिक है, नहीं नहीं,—यह अक्षय ( कभी समाप्त न होनेवाला ) तपेदिक है। यह अलक्ष्मी-निवास [ लक्ष्मी का निवास-भूत न होता हुआ ] जनार्दन ( विष्णु ) है, नहीं नहीं, अलक्ष्मी ( विपत्ति ) का घर बना हुआ जनार्दन ( लोगों का उत्पीडक ) है। यह अपुण्य प्रवृत्त ( अपुण्य=पाप कर्म में लगा ) क्षपणक ( बौद्धभिक्षु ) है, नहीं नहीं, यह अपुण्यप्रवृत्त ( पूर्व जन्म के पापों से प्राप्त हुआ ) क्षपणक ( नाश कर देने वाला ) है। यह अप्रतिबोध ( जागरण-रहित ) निद्रा-प्रकार ( नींद का भेद ) है, नहीं नहीं यह अप्रतिबोध ( विवेक-रहित ) और निद्रा प्रकार ( नींद खो देने वाला ) है। यह अनलस-धर्मा [ आलस्य उत्पन्न न करने वाला ] सन्निपात ( ज्वरविशेष ) है, नहीं नहीं, यह अनल सधर्मा ( आग-जैसा ) और सन्निपात ( मार देने वाला ) होता है। यह अशिवसहचर ( विना शिव के ) विनायक ( गणेश ) है, नहीं नहीं, अशिव सहचर ( अमङ्गल

अयमबुधसेवितो ग्रहवर्गः। अयमयोगसमुत्थो ज्योतिःप्रकारः। अयं स्नेहाद्वायुप्रकोपः, मानसादग्निसम्भवः, आर्द्रभावाद्रजः-क्षोभः, रसादभिशोषः[1], रागात्कालपरिणामः। तदस्याजस्रास्रस्राविणो हृदयमहाव्रणस्य बहुलदोषान्धकारलब्धप्रवेशप्रसरस्य प्राणतस्करस्य शून्यताहेतोर्महाभूतग्रामघातकस्य सकलविग्रहक्षपणदक्षस्य दोषचक्रवर्तिनः कार्श्यश्वासप्रलापोपद्रवबहुलस्य दीर्घ-

---

टीका–चित्रेषु शिवः स्वाङ्के गणेशं धृत्वा विलोक्यते अशिवसहचरः गणेशः इति विरोधः तत्परिहारः अशिवम्=अशुभम् तस्य सहचरः अशुभकारक इत्यर्थः विनायकः=विशेषेण नयति=यमलोकं प्रापयति मारयतीत्यर्थः अथवा विनायकः=विघ्नः ('विनायकस्तु हेरम्बे तार्क्ष्ये विघ्ने जिने गुरौ' इति मेदिनी)। न बुधेन=ग्रहविशेषेण सेवितः इत्यर्थः ग्रहवर्गः=ग्रहगणः ग्रहगणः बुधरहितो न भवतीति, परिहारश्च न बुधैः=पण्डितैः सेवितः अनुगतः, बुधा हि न शोकमनुवर्तन्ते विवेकित्वात् ग्रहाणां=व्यसनानां (शंकरः) विपत्तीनामित्यर्थः गणः=समूहः शोके विपत्तय आपतन्ति। न योगेन=चित्तवृत्तिनिरोधेन ('योगश्चित्तवृत्तिनिरोधः' योगसू०) समुत्थः=समुद्भूतः ज्योतिःप्रकारः=प्रकाशविशेषः परं ज्ञानं ब्रह्मज्ञानमित्यर्थः तच्च विना योगेन प्राप्तमिति विरोधः परिहारश्च अयोगः=दुर्दैवम् ज्योतिः प्रकारः=अग्निविशेषः शोको हि अग्निभेदः योऽन्तर्ज्वलति। स्नेहात्=तैलात् वायुप्रकोपः=वातव्याधिः, विषगर्भ—महानारायणादितैलप्रयोगात् वातः शाम्यति न तु प्रकुप्यतीति विरोधः परिहारश्च स्नेहात्=प्रीतेः वायुप्रकोपः=उन्मादः शोको हि प्रेमकारणादेव जायते उन्मादे च परिणमते, मानसात्=मानस-सरोवरात् अग्नेः=वह्नेः सम्भवः=उत्पत्तिः, मानसं जलमयं जलादग्नेः संभवः इति विरोधः परिहारश्च मानसात् मनसः शोको हि मानसो धर्मः आर्द्रभावात्=क्लेदात् रजसः=धूलेः क्षोभः=प्रसरणम्, आर्द्रतायां रजो न प्रसरति अपि तु भूमौ लीयते विरोधपरिहारस्तु आर्द्रभावात्=मृदुचित्तत्वात् रजसः=गुणविशेषस्य रागस्येत्यर्थः क्षोभः=उद्वेगः 'रसात्=जलात् अभिशोषः=(मुखस्य) शुष्कता, जलात् शुष्कतेति विरोधः रसात्=प्रीतेः अनुरागादिति यावत् अभिशोषः=शोषणं शरीरस्य, रागात्=लौहित्यात् काले=कृष्णवर्णे परिणामः=परिवर्तनं रक्तवर्णात् कृष्णवर्णे परिणमनम् इति विरोधः रागात्=अभिष्वङ्गात् आसक्तेरिति यावत् काले=मृत्यौ परिणामः=अन्तो यस्य सः। उपरि सर्वत्र विरोधाभासालंकारः। इतः परम् 'तत् (तस्मात्) अस्य (शोकस्य)………… विदुषामपि हृदयानि न अलं सोढुं आपातं ………… किमुत अबलानां हृदयम्' इत्यस्ति वाक्यम्। तत्=तस्मात् कारणात् अजस्रं=निरन्तरं अस्रं=अश्रु रुधिरञ्च ['अस्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणिते' इति मेदिनी] स्रावयति=पातयति

हिन्दी–साथ लिए) विनायक (विघ्न) है। यह अबुध-सेवित (बिना बुध ग्रह के) ग्रहवर्ग (ज्योतिष्पिण्ड-समूह) है, नहीं नहीं अबुध-सेवित [विद्वानों द्वारा न अपनाया जाता हुआ] ग्रह-वर्ग (विपत्तियों का ढेर) है। यह अयोग (बिना योग=चित्तवृत्ति निरोध) से हुआ ज्योतिः प्रकार (प्रकाशविशेष=ब्रह्मज्ञान) है नहीं नहीं, अयोग (बुरे दैवयोग) से हुआ ज्योतिः प्रकार (अग्नि विशेष) है। यह स्नेह (तेल) से हुआ वायु-प्रकोप वात व्याधि है, नहीं नहीं, स्नेह (प्रेम) से हुआ वायु-प्रकोप (उन्माद) है, मानस (मानसरोवर) से हुआ अग्नि का जन्म है, नहीं नहीं, (मानस) से हुआ अग्नि का जन्म है, आर्द्रभाव (गीलेपन) से हुआ रजःक्षोभ (धूल का फैलाव) है, नहीं नहीं, आर्द्रभाव (हृदय की कोमलता) से हुआ रजःक्षोभ (रजोगुण=अनुराग का फैलाव) है, रस (जल) से शोष (मुख की शुष्कता) है नहीं नहीं, रस (प्रेम) से शोष (शरीर का सूखना) है, राग (लाल रंग) से काल परिणाम (काले रंग में बदलना) है, नहीं नहीं, राग (अनुराग) से काल परिणाम (मृत्यु फल) है। इसलिए आ पड़ने वाले इस शोक को जो कि निरन्तर अस्र (खून) बहाता हुआ हृदय का नासूर है अन्धकार–सदृश बहुल (बहुत सारे) दोषों (रागादि) से हृदय में प्रवेश प्राप्त किये हुए जो (शोक) बहुल (कृष्णपक्ष) की दोषा (निशा) के अन्धकार में प्रविष्ट हुआ प्राणों का चोर है (मन में) शून्यता का कारण और प्राणियों के बड़े भारी ग्राम (समूह) का विनाशक जो (शोक) शून्यता (निर्जनता) का कारण बना हुआ बहुत सारे प्राणियों वाले ग्राम (गाँव) का विनाशक है। सकल विग्रह (शरीर) क्षीण कर देने में निपुण और (रागादि) दोषों का मुखिया जो (शोक) सकल विग्रहों (युद्धों) को समाप्त कर देने वाला दुष्ट सम्राट् है, जो कृशता, गहरी साँस, अनर्थक बातें एवं उपद्रव [क्लेश, रोगान्तर] से

---

१. 'अतिशोषः'

रोगस्यासद्ग्रहस्य सकललोकक्षयधूमकेतोर्जीवितापहारदक्षस्याक्षणरुचेरनभ्रवज्रपातस्य स्फुरदनवद्यविद्याविद्युदुद्द्योतमानानि गहनग्रन्थग्रन्थिगूढगर्भग्रहणगम्भीराणि भूरिकाव्यकथाकठोराणि बहुशास्त्रोद्वहनबृहन्ति विदुषामपि हृदयानि नालं सोढुमापातं किमुत नवनवमालिकाकुसुमकोमलानां सरसबिसतन्तुदुर्बलकमबलानां हृदयम् ।

---

**टीका**–अन्यत्र व्रतिः=अरतीति तथोक्तस्य हृदयस्य महाव्रणस्य=महाक्षतस्य **बहुल०**—बहुला: दोषा: = रागादय: अन्धकार इवेत्युपमितस्तु० तेन लब्ध: = प्राप्त: प्रवेशस्य हृदये गमनस्य प्रसर: = अवसर: येन तस्य शोकस्य अथ च बहुलस्य = कृष्णपक्षस्य या दोषा = रात्रि: तस्या: अन्धकारे लब्धप्रसरस्य प्राणानां = जीवितस्य तस्करस्य = चौरस्य **शून्यता०**— शून्यताया: = शून्यमनस्कताया: अथ च निर्जनताया: हेतो = कारणस्य महान् = प्रभूत: य: भूतग्राम: = प्राणिसमूह: तस्य घातक: = विनाशक: तस्य अथ च महान्ति भूतानि जीवा: यस्मिन् तथाभूत: य: ग्राम: = संवसथ: प्राकार–परिखादिरहित: बहुजनवसतिरित्यर्थ: तस्य घातकस्य = विध्वंसकस्य, **सकल०**—सकलस्य = सर्वस्य विग्रहस्य = शरीरस्य क्षपणे = क्षीणीकरणे दक्षस्य = पटो:, अथ च सकला: ये विग्रहा: = युद्धानि तेषां क्षपणे समापने इत्यर्थ: दक्षस्य दोषेषु = कामक्रोधादिषु चक्रवर्तिन: = प्रमुखस्य, अथ च दोषपूर्ण: चक्रवर्ती इति दोषचक्रवर्ती ( मध्यमपदलो० ) तस्य दुष्टसार्वभौमस्येति यावत्, **कार्श्य०**—कार्श्यं = कृशता च श्वास: दीर्घनिश्वसितं अन्यत्र श्वासग्रहणे कठिनता च प्रलाप: = अनर्थकवचनञ्च उपद्रव: = क्लेश: अन्यत्र व्याधिजनित–व्याध्यन्तरं च तेन बहुल: = पूर्ण इत्यर्थ: दीर्घरोगस्य = दीर्घकालव्याधिन: क्षयादिव्याधे:, असति = गर्ह्ये आत्मदाहादि - कर्मणि ग्रह: निर्बन्ध: यस्मिन् तस्य अथ च असन् = दुष्ट: ग्रह: = शनैश्चरादि: तस्य, **सकल०**—सकला: ये लोका: = जना: तेषां क्षयाय = विनाशाय धूमकेतु: = धूम: केतु: = चिह्नं यस्य स: अग्निरित्यर्थ: अथ च धूमकेतु: उत्पातद्योतक: उपग्रहविशेष: सोऽपि सकललोकक्षयकारको भवति तस्य [ 'अग्न्युत्पातौ धूमकेतू' इत्यमर: ] **जीविता०**—जीवितस्य = जीवनस्य अपहारे = अपहरणे दक्षस्य = निपुणस्य [ उभयत्र समानम् ] न क्षणे = उत्सवे रुचि: = अभिलाष: यस्मिन् तस्य अथ च अविद्यमाना क्षणरुचि: = क्षणं = क्षणपर्यन्तमेव रुचि: = दीप्ति: यस्या: सा विद्युत् इत्यर्थ: [ अत एव विद्युत् 'क्षणप्रभा' इत्युच्यते ] यस्मिन् तस्य यदा निरभ्राद् गगनात् वज्रं पतति तदा स्वभावत: विद्युन्न भवति. अनभ्रवज्रपातस्य = अनभ्रेऽशनिपातस्य, अस्य = शोकस्य उपरि सर्वत्र शोके हृदयमहाव्रणादीनाम् आरोपात् रूपकालंकार: स च श्लेषानुप्राणित: मालारूपश्च **स्फुरद०**— स्फुरन्त्य: = भ्राजमाना: अनवद्या: = निर्दोषा: विद्या: = पुराणाद्या: चतुर्दशसंख्यका: एव विद्युत: = सौदामिन्य: ताभि: उद्योतमानानि = प्रकाशमानानि, न्यायनये विद्युत्ज्ञानमपि क्षणिकं भवतीति ध्येयम्, अत एव विद्याया: विद्युदौपम्यम्, **गहन०** गहना: = गभीरा: ये ग्रन्था: = शास्त्राणि तेषां ये ग्रन्थय: = विषमतमप्रदेशा: इत्यर्थ: तेषां गूढ: = गुप्त: रहस्यात्मक: इत्यर्थ: य: गर्भ: = अन्तर्गतभाव: तस्य ग्रहणेन = बोधेन गम्भीराणि = गभीराणि, **भूरि०** –भूरिभि: = बह्वीभि: काव्यकथाभि: = काव्यप्रतिपाद्यवस्तुभि: कठोराणि = कठिनानि, **बहु०**—बहूनां शास्त्राणाम् उद्वहनेन = धारणेन बृहन्ति = विपुलानि विदुषाम् = पण्डितानाम् अपि हृदयानि ( अस्य शोकस्य ) आपातम् = अभ्याघातम् सोढुं न अलम् = समर्थानीत्यर्थ: किमुत = किमु वक्तव्यम् **नव०** –नवं नूतनं यत् नवमालिकाया: = नवमल्लिकाया: पुष्पविशेषलतिकाया: इति यावत् यत् कुसुम: पुष्पं तद्वत् कोमलानां = मृदूनाम् अबलानां = नारीणां **सरस०**—सरस: = आर्द्र: य: बिसतन्तु: मृणालसूत्रं तद्वत् दुर्बलकम् = दुर्बलमेव दुर्बलकं निर्बलमित्यर्थ: हृदयम् ।

**हिन्दी**–भरी हुई लम्बी बीमारी है, असत् ( आत्म दाहादि बुरी ) बातों का ग्रह ( हठ ) पैदा कर देने वाला जो [ शोक ] असत् ( दुष्ट ) ग्रह ( शनैश्चरादि ) है, सभी लोकों ( लोगों ) का विध्वंस कर देने वाला धूमकेतु ( अग्नि ) रूप जो ( शोक ) सारे लोक ( जगत् ) के विनाश का धूमकेतु ( पुच्छल तारा ) है, प्राण लेने में निपुण और क्षण ( उत्सव ) में रुचि मिटाने वाला जो ( शोक ) प्राण लेने में निपुण बिना क्षणरुचि ( बिजली ) और मेघ का वज्रपात है— विद्वानों के कौंधती हुई अनिन्द्य विद्यारूपी विद्युतों से प्रकाशमान, गहन ग्रन्थों के कठिन स्थलों का गूढ़ भाव ग्रहण करने से गम्भीर, बहुत सी काव्य-कथाओं से कठोर और अनेक शास्त्र धारण करने से बृहदाकार बने हृदय भी सहन करने में समर्थ नहीं होते फिर नवमालिका ( चमेली ) के नये कुसुम के सदृश कोमल एवं सरस मृणाल तन्तु के सदृश दुर्बल अबलाओं के हृदयों की तो बात ही क्या ?

एवं सति सत्यव्रते, वद किमत्र क्रियते, कतम उपालभ्यते, कस्य पुर उच्चैराक्रन्द्यते, हृदयदाहि दुःखं वा ख्याप्यते। सर्वमक्षिणी निमील्य सोढव्यममूढेन मर्त्यधर्मणा। पुण्यवति, पुरातन्यः स्थितय एताः केन शक्यन्तेऽन्यथाकर्तुम्। संसरन्त्यो नक्तंदिवं द्राघीयस्यो जन्मजरामरणघटनघटीयन्त्रराजिरज्जवः पञ्चजनानाम्। पञ्चमहाभूतपञ्चकुलाधिष्ठितान्तःकरणव्यवहारदर्शननिपुणाः सर्वंकषा विषमा धर्मराजस्थितयः। क्षणमपि अक्षममाणा गलन्त्यायुष्कलाकलनकुशला निलये निलये कालनालिकाः। जगति सर्वजन्तुजीवितोपहारपातिनी सञ्चरति झटिति चण्डिका यमाज्ञा। रटन्त्यनवरतमखिलप्राणिप्रयाणप्रकटन-

---

टीका—सत्यं व्रतम्=आचारनियमः इत्यर्थः यस्याः तत्सम्बुद्धौ, वद=कथय, कतमः=कः उपालभ्यते=निन्द्यते कस्मिन् दोषारोपणं क्रियते इत्यर्थः, आक्रन्द्यते=रुद्यते, हृदयं दहतीति तथोक्तं दुःखे ख्यायते=कथ्यते, अक्षिणी=नयने निमील्य =मुद्रयित्वा अमूढेन=मोहं न प्राप्तेन अव्याकुलीभूतेनेति यावत् मर्त्यधर्मणा=मरणशीलेन मनुजेन सोढव्यम् सहनीयम्। पुण्यवति! पुण्यं अस्या अस्तीति तत्सम्बुद्धौ एताः पुरातन्यः=प्राक्तन्यः प्राचीनकालादेव आगच्छन्त्यः इति यावत् स्थितयः=नियमाः विधेः आदेशा इत्यर्थः केन अन्यथाकर्तुम्=अन्यथयितुम् परिवर्तयितुमिति यावत् शक्यते=पार्यते न केनापीति काकुः। पञ्चजनानां मनुष्याणाम् ('स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः) द्राघीयस्यः= अतिशयेन दीर्घाः जन्म च जरा=वृद्धावस्था च मरणं=मृत्युश्च तेषां घटनानि=घटनाः एव घटीयन्त्राणाम्=कूपाज्जलोद्धरणार्थं घटनिर्मितानां यन्त्राणां राजीनां=श्रेणीनां रज्जवः नक्तंदिवं=दिवानिशं संसरन्त्यः=भ्रमन्त्यः सन्तीति शेषः अर्थात् घटीयन्त्रवत् जन्ममरण-चक्रं चलति अत्र रूपकम् पञ्च०—पञ्चमहाभूतानि=पृथिवी-जल-तेजोवाय्वाकाशानि शरीरोत्पादकानि तत्त्वानि शरीरमिति यावत् एव पञ्चकुलः=(सन्दिग्धार्थोऽयं शब्दः) अध्यक्षः, इति शंकरः तेन अधिष्ठितम्=कृताधिष्ठानं सञ्चालितम् इत्यर्थः यत् अन्तःकरणं=मनः तस्य व्यवहारः=व्यापारः तस्य दर्शने=अवलोकने निपुणाः=दक्षाः सर्वान् कषन्ति=आत्माधीनीकुर्वन्तीत्यर्थः तथोक्ताः विषमाः=कठोराः धर्मराजस्य=यमस्य स्थितयः= नियमाः सन्तीति शेषः। क्षण०—क्षणम्=कालस्य लघुतमम् अपि भागम् अक्षममाणाः तदतिक्रमणम् असहमाना इत्यर्थः आयुषः=जीवनकालस्य या कला=अंशः तस्य कलने=गणने कुशलाः=निपुणाः कालस्य=यमस्य समयस्य च नालिकाः=घटिकाः निलये निलये=गृहे गृहे गलन्ति=स्रवन्ति, प्राचीनकाले कालमानज्ञापकः सच्छिद्रः घटो भवति स्म छिद्राज्जलबिन्दुस्रवणक्रमेण कालो मीयते स्म, एतस्यैव नाम जलघटीयन्त्रमिति। जगति०—जगति=संसारे सर्वे च ते जन्तवः=प्राणिनः तेषां जीवितं प्राणाः एव उपहारः=उपायनम् तत्र ग्रहणार्थं पतति=धावतीति तथोक्ता चण्डिका=

**टिप्पणी—पञ्चकुल**—इस सन्दर्भ का भावार्थ अस्पष्ट-सा है। उसके समझने में पञ्चकुल शब्द ने कठिनता उत्पन्न कर रखी है। शंकर के अनुसार उससे यदि अध्यक्ष अर्थ लें तो सन्दर्भ का सारा अर्थ अमनोवैज्ञानिक सा लगता है। पञ्चभूतात्मक शरीर से अन्तःकरण सञ्चालित नहीं होता है प्रत्युत अन्तःकरण द्वारा ही शरीर और सभी इन्द्रियाँ सञ्चालित होती हैं। अतः हमारे विचार से 'पञ्चमहाभूतानां यत् पञ्चकुलम्=पञ्चमण्डली (पञ्चायत) तत् अधिष्ठितं= तदध्यक्षीभूतम् अन्तःकरणम्' यों विग्रह होना चाहिए इसके अतिरिक्त यहाँ और आगे भी बाण ने 'करण', 'व्यवहार' आदि शब्दों में श्लेष भी ठूँस रखा है, जो बड़ा क्लिष्ट और प्रयास-साध्य है।

**हिन्दी**—ऐसी अवस्था में, हे सत्यव्रते! बोल, इस सम्बन्ध में क्या किया जाय? किसको उलाहना दिया जाय? किसके आगे गला फाड़-फाड़ कर रोया जाय? अथवा हृदय को जला देने वाला दुःख कहा जाय? मनुष्य को बिना व्याकुल हुए, आँख मींचकर सब कुछ सह लेना चाहिए। हे पुण्यवती! पहले से चली आ रही इन स्थितियों को कौन उलट सकता है? मनुष्यों के जन्म, वृद्धावस्था और मृत्यु की घटना-रूपी रँहटों की पंक्तियों की लम्बी-लम्बी रस्सियाँ रात-दिन सरकती रहती हैं। यमराज के सबको रगड़ देने वाले कठोर नियम पञ्चमहाभूतों की पञ्चायत (शरीर) के अध्यक्ष मन के (सभी) व्यापारों को देख लेने में निपुण हुआ करते हैं। क्षणभर (का विलम्ब) भी न सहन करती हुई, (प्राणियों की) आयु के एक लघु अंश को (भी) गिनने में निपुण काल (यम) की काल-घड़ियाँ (जलघटी यन्त्र) घर-घर में टपक रही हैं। सभी जीवों के प्राणों की भेंट (लेने) के लिए दौड़ी चली आ रही यम की भीषण आज्ञा जगत में चक्कर काट रही है। अखिल प्राणियों की कूच की घोषणा करने में निपुण यमराज

पटवः प्रेतपतिपटहाः। प्रतिदिशं पर्यटन्ति पेटकैः प्रतिपुरं प्रतप्तलोहलोहिताक्षाः कालकूटकान्तिकालकायाः कालपाशपाणयः कालपुरुषाः। प्रतिभवनं भ्रमन्ति भीषणकिङ्करकरघट्टितयमघण्टापुटपटुटाङ्कारभयङ्कराः सर्वसत्त्वसङ्घसंहरणाय घोराघातघोषणाः। दिशि दिशि वहन्ति बहुचिताधूमधूसरितप्रेतपतिपताकापटुपतितगृध्रदृष्टयः शोककृतकोलाहलाकुलकुटुम्बिनीविकीर्णकेशकलापशबलशवशिबिकासहस्रसङ्कुलाः किलकिलायमानश्मशानशिबिरशिवाशावकाः परलोकावसथपथिकसार्थप्रस्थानविशिखावीथयः। सकललोककवलावलेहलम्पटा बहला बहुंलिहा लेढि लोहिताचिता चिताङ्गारकाली कालरात्रीजिह्वा जीवितानि जीविनाम्। तृप्तिमशिक्षिता च भगवतः सर्वभूतभुजो बुभुक्षा मृत्योः। अतिद्रुतवाहिनी चानित्यतानदी। क्षणिकाश्च महाभूतग्रामगोष्ठ्यः। रात्रिषु भङ्गुराणि [1]गात्रयन्त्रपञ्जरदारूणि देहिनाम्। अशुभशुभावेशविवशा विशरारवः शरीरनिर्माणपर-

---

टीका–भीषणा ( दुर्गा देवी च ) यमस्य आज्ञा आदेशः सञ्चरति = भ्रमति। रटन्त्य०—अनवरतं = निरन्तरम् अखिलाः = समस्ताः ये प्राणिनः = जीवाः प्रयाणं = लोकान्तरगमनं तस्य प्रकटने = उद्घोषणे पटवः = दक्षाः प्रेतपतेः यमस्य पटहाः आनकाः वाद्यविशेषाः इत्यर्थः रटन्ति = शब्दायन्ते। प्रति० – प्रतिदिशं = दिशायां दिशायां, प्रतिपुरं = पुरे पुरे प्रतप्तम् = अग्नौ उत्तप्तम् यत् लोहम् = आयसं तद्वद् लोहिते = रक्ते अक्षिणी = नयने येषां ते कालकूटस्य = विषविशेषस्य इव कान्तिः = दीप्तिः येषाम् अत एव कालः = कृष्णवर्णः कायः = शरीरं येषां ते, कालपाशः = मृत्युपाशः पाणौ = हस्ते येषां ते कालस्य = यमस्य पुरुषाः दूता इत्यर्थः पेटकैः = समूहैः पर्यटन्ति = परिभ्रमन्ति। प्रतिभवनं०—प्रतिभवनं = प्रतिगृहं भीषणाः = भयंकराः ये किंकराः = यमदूताः तेषां करैः = हस्तैः घट्टितः = आहत इत्यर्थः यः यमस्य = अन्तकस्य घण्टापुटः = पुटाकारघण्टा तस्य पटुना = तीव्रेण टांकारेण = टंकारध्वनिना भयंकराः = भीषणाः सर्वे च ते सत्त्वाः = प्राणिनः तेषां संघस्य = समूहस्य संहरणाय = संहाराय विनाशायेति यावत् घोरा = भीषणा आघाताः यासु ताः घोषणा = सूचनाः इत्यर्थः भ्रमन्ति = संचरन्ति। दिशि दिशि = प्रतिदिशम् बहुचिता०— बह्वीनां = अनेकासां चितानां = प्रेतदाहाधाराणां धूमैः धूसरिता = मलिना या प्रेतपतेः = यमस्य पताका = ध्वजः तस्यां पटु = निशितं यथा स्यात्तथा पतिता गृध्राणां = दाक्षाय्याणां दृष्टिः चक्षुः यासु तासु ताः शोक०—शोकेन कृतः कोलाहलः = कलकलः हाहाकार इत्यर्थः याभिः ताः आकुलाः = विह्वलाश्च याः कुटुम्बिन्यः पुरन्ध्रय तासां विकीर्णाः = इतस्ततो विक्षिप्ताः ये केशानां = कचानां कलापाः = समूहाः तैः शवलं = चित्रवर्णं शवानां = मृतकानां शिविकानां = याप्ययानानाम् [ 'शिविका याप्ययानं स्यात्' इत्यमरः ] यत् सहस्रं तेन सङ्कुलाः = पूर्णाः, किल०—किलकिलायमानाः उत्क्रोशन्तः श्मशान-शिविरे = शवदाहस्थाने अथवा श्मशानम् एव शिविरं येषां ते शिवानां = शृगालीनां शावकाः = शिशवः यासु ताः, परलोक०—परलोकः = लोकान्तरम् आवसथः = निवासस्थानम् इव तस्य पथिकानां = यात्रिणां सार्थस्य = समूहस्य प्रस्थानस्य = प्रयाणस्य विशिखानां =

हिन्दी–के नगाड़े निरन्तर बजते रहते हैं। तपे हुए लोहे की तरह आँखों और कालकूट विष की-सी कान्ति के काले-कलूटे शरीरों वाले यम के दूत हाथ में मृत्युपाश लिए हुए दिशा-दिशा में नगर-नगर में दल बाँधे घूमते रहते हैं। सभी प्राणि-समूह के संहार के लिए भीषण दूतों के हाथों द्वारा बजाए यम के घण्टों की तीव्र टट-टन ध्वनि से भयंकर बनी, घोर चोट के साथ की जाने वाली घोषणाएँ घर-घर में घूम रही हैं। परलोक-प्रवास के पथिक-समूहों के प्रस्थान के लिए गलियों की लाइनें जा रही हैं—जहाँ बहुत सारी चिताओं के धुंओं से मैली बनी यम की पताका पर गीधों की पैनी दृष्टि पड़ी रहती है, शोक के कारण किये हुए हाहाकार से अकुलाई गृह-स्वामिनियों के बिखरे केश-समूह से बहुरंगी बनी हजारों अर्थियाँ भरी रहती हैं और श्मशान के खेमे में गीदड़ियों के बच्चों की किलकिलाहट मची रहती है। सकल जगत को ग्रास बनाकर चाटने की लालसा रखे खून से सनी, चिता के कोयलों की तरह काली छिद्रान्वेषी कालरात्रि की-सी काल की लम्बी जिह्वा जीवों के प्राणों को चाट रही है [ जैसे काली गाय अपने बछड़े के कन्धे को चाटा करती है ]। सभी प्राणियों को खा जाने वाले भगवान यम की भूख ने तृप्ति नहीं सीखी। अनित्यता-रूपी नदी बड़े वेग से बहने वाली है ( पृथिवी आदि पञ्च ) महाभूत समूह का सम्मेलन क्षणिक होता है। यन्त्र-सदृश शरीर रूपी पिंजर की छड़ियाँ रातों-रात टूट जाती हैं। शरीर बनाने वाले परमाणु ( पूर्वजन्म

१. 'पात्र'।

माणवः छिदुरा जीवबन्धनपाशतन्त्रीतन्तवः। सर्वमात्मनोऽनीश्वरं विश्वं नश्वरम्। एवमवधृत्य नात्यर्थमेवार्हसि मेधाविनि मृदुनि मनसि तमसः प्रसरं दातुम्। एको हि प्रतिसंख्यानक्षण आधारीभवति धृतेः। अपि च दूरगतेऽपि हि शोके नानिवबानी-मपेक्षणीय एवायं ज्येष्ठः पितृकल्पो भ्राता भवत्या गुरुः। इतरथा को न बहु मन्येत कल्याणकल्पमीदृशं सङ्कल्पमत्रभवत्याः काषायग्रहणकृतम्। अखिलमनोज्वरप्रशमनकारणं हि भगवती प्रव्रज्या। न्यायः खल्विवं पदमात्मवताम्। महाभागस्तु भिनत्ति मनोरथमधुना। यदयमादिशति तदेवानुष्ठेयम्। यदि भ्रातेति यदि ज्येष्ठ इति यदि वत्सल इति यदि गुणवानिति यदि राजेति सर्वथा स्यातव्यमस्य नियोगे।' इत्युक्त्वा व्यरंसीत्।

---

रथ्यानाम् [ 'रथ्या प्रतोली विशिखा' इत्यमरः ] वीथयः=श्रेणयः [ 'वीथ्यालिरावलिः पंक्तिः श्रेणी' इत्यमरः ] वहन्ति=गच्छन्तीत्यर्थः। सकल० —सकलाः=सर्वे लोकाः=जनाः एव कवलाः=ग्रासाः तेषाम् अवलेहे=आस्वादने लम्पटा=लोभिनी, बहुला=दीर्घेत्यर्थः, 'गोश्च यथोक्तं बहुलाः कृत्तिकाः गावः' इति, वहंलिहा=छिद्रान्वेषिणी अथ च वहं=स्कन्धं ( वत्सस्य ) लेढीति तथोक्ता [ 'स्कन्धप्रदेशस्तु वहः' इत्यमरः ] लोहितेन=प्राणिनां रुधिरेण आचिता व्याप्ता, चितायाः अङ्गारवत् काली=श्यामवर्णा कालस्य अन्तकस्य कालरात्र्याः=प्रलयरात्र्याः इव जिह्वा जीविनां= देहभृतां जीवितानि=प्राणान् लेढि=आस्वादयति सर्वाणि भूतानि=प्राणिनः भुङ्क्ते=भक्षयतीति तथोक्तस्य भगवतः मृत्योः=यमस्य बुभुक्षा=क्षुधा तृप्ति=सन्तुष्टिम् अशिक्षिता=न शिक्षां प्रापिता। अनित्यता=नश्वरता एव नदी अतिशयेन द्रुतं=शीघ्रं यथा स्यात्तथा वहतीति तथोक्ता अस्तीति शेषः महाभूतानां=पृथिव्यादीनां ग्रामस्य=संघस्य गोष्ठ्यः=सम्मेलनानि क्षणिकाः=क्षणपर्यन्तस्थायिन्यः भवन्तीति शेषः बौद्धसिद्धान्तानुसारेण 'सर्वं क्षणिकम्'। देहिनां= देहधारिणां गात्रं=शरीरं यन्त्रमिवेति गात्रयन्त्रम् तदेव पञ्जरं=पिञ्जरं तस्य दारूणि=काष्ठानि पिञ्जरयष्टय इत्यर्थः रात्रिषु भङ्गुराणि=भङ्गशीलानि सन्ति। शरीरस्य निर्माणाः=निर्मान्तीति ( कर्तरि ल्युट् ) निर्मातारः अथवा निर्माणस्य=निर्माणसम्बन्धिनः परमाणवः=नित्यानि सूक्ष्मपृथिव्यादि-तत्त्वानि अशुभस्य शुभस्य वा पूर्वजन्मकृतकर्मणः आवेशेन=प्रवेशेन प्रभावेणेत्यर्थः विवशाः=पराधीनीभूताः विशरारवः=विशीर्यन्ते इति ( वि + √शॄ + आरुः ) विशरणशीलाः भवन्तीति शेषः, परमाणूनां नाशो न भवति, ते विशीर्यन्ते, पृथक् पृथक् भवन्तीत्यर्थः शरीरं च नश्यति। जीवस्य=जीवात्मनः बन्धनस्य भौतिकशरीरे संसारचक्रे वा संयमनस्य पाशः=रज्जुः तस्य तन्त्र्याः=वीणायाः इव तन्तवः=सूत्राणि छिदुराः=यद्यपि छिन्दन्तीति कर्तरि [ 'विदिभिदिच्छिदेः कुरच्' पा० ३।२।१६१ ] कुरच्-प्रत्ययो भवति किन्तु कर्मकर्तरि प्रत्ययः' इति वृत्त्यनुसारेण अत्र छिद्यन्ते इति कर्मकर्तरि प्रयोगो ज्ञेयः भङ्गशीला इत्यर्थः। सर्वं नश्वरं=नश्यतीति [ √नश् + क्वरप् ]। नाशशील विश्वं=जगत् आत्मनः=स्वस्य अनीश्वरम्=अनायत्तम् न स्वायत्तं परतन्त्रमित्यर्थः। अवधृत्य=निश्चित्य अत्यर्थम्=भृशम् यथा स्यात्तथा हे मेधाविनि=बुद्धिमति, मृदुनि= सुकुमारे मनसि तमसः=अन्धकारस्य मोहस्येति यावत् प्रसरं=प्रसारं विस्तारमित्यर्थः दातुं न अर्हसि न योग्यासि। प्रतिसंख्यानस्य=विवेककुशलायाः मतेः ( शंकरः ) क्षणः=लघुरपि कालः धृतेः=धैर्यस्य आधारीभवति=आधारत्वम् एति। शोके दूरं=वृद्धयतिशयं गते=प्राप्ते अपि पितृकल्पः=ईषदूनः पिता इति पितृकल्पः पितृतुल्यः इति यावत्

हिन्दी—के ) बुरे-भले कर्मों के प्रभाव के अधीन होकर बिखर जाते हैं। जीव को ( संसार के ) बन्धन में डालने वाली रस्सी की तन्तुएँ वीणा की तन्तुओं की तरह टूट जाया करती हैं। विनाशवान् सारा संसार अपने वश का नहीं है। इस तरह निश्चय करके, हे बुद्धिमती ! तुम्हें अपने कोमल मन के भीतर अन्धकार को बहुत अधिक विस्तार नहीं देना चाहिए। विवेक का एक भी क्षण धैर्य के लिए आधार बनता है। शोक के बहुत अधिक होने पर भी इस समय तुम्हें गुरु और पिता-तुल्य अपने ज्येष्ठ भाई का खयाल करना चाहिए। नहीं तो काषाय धारण करने के आपके ऐसे कल्याण-रूप संकल्प का कौन आदर न करे ? क्योंकि पवित्र संन्यास सभी मानसिक क्लेशों को शान्त करने का कारण है। संयतात्माओं के लिए यह पद ( संन्यास ) सचमुच ही श्रेष्ठ है, किन्तु इस समय महाभाग ( हर्ष ) तुम्हारे मनोरथ को भंग कर रहे हैं। यह जो कुछ आज्ञा देते हैं वही करना चाहिए। यदि ये भाई हैं, ज्येष्ठ हैं, स्नेही हैं, गुणवान् हैं अथवा राजा हैं तो सर्वथा इनके आदेश पर चलना होगा' यह कहकर वे चुप हो गए।

उपरतवचसि च तस्मिन्निजगाद नरपतिः—'आर्यमपहाय कोऽन्य एवमभिदध्यात् । अनभ्यर्थितदैवनिर्मिता हि विषम-विपदवलम्बनस्तम्भा भवन्तो लोकस्य । स्नेहार्द्रमूर्तयो मोहान्धकारध्वंसिनश्च धर्मप्रदीपाः । किन्तु प्रणयप्रदानदुर्ललिता दुर्लभमपि मनोरथमतिप्रीतिरभिलषति । धीरस्यापि धाष्ट्यमारोपयति हृदयलघिमलङ्घितमतिवल्लभत्वम् । युक्तायुक्तविचार-शून्यत्वाच्च शालीनमपि शिक्षयन्ति स्वार्थतृष्णाः प्रागल्भ्यम् । अभ्यर्थनाया रक्षन्ति च जलनिधय इव मर्यादामार्याः । दत्तमेव च शरीरमिदमनभ्यर्थितेन प्रथममेवातिथ्याय माननीयेन भवता मह्यम् । अतः किंचिदर्थये भदन्तम्—इयं नः स्वसा बाला च बहुदुःखखेदिता च सर्वकार्यावधीरणोपरोधेनापि यावल्लालनीया नित्यम् । अस्माभिश्च भ्रातृवधापकारिरिपुकुलप्रलयकरणोद्यतस्य

---

टीका–[ 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' पा० ५।३।६७ ] अपेक्षणीयः=अवेक्षणीयः अवधानीय एवेत्यर्थः । इतरथा=अन्यथा कल्याण रूपं=शुभमित्यर्थः संकल्पं=विचारं अत्र भवत्याः=मान्यायाः काषायस्य=काषायरक्तवसनस्य ग्रहणं करोतीति ( कर्तरि क्विप् ) तम् न बहुमन्येत=आद्रियेत, भगवती=पुनीता प्रव्रज्या=संन्यासः अखिलस्य=समग्रस्य मनोज्वरस्य=मनोदाहस्य मानसिकक्लेशस्येति यावत् प्रशमनस्य=निराकरणस्येत्यर्थः करणं भवतीति शेषः । इदं पदम्=स्थानम् प्रव्रज्येति यावत् आत्मवताम्=प्रयतात्मनां ज्यायः=श्रेष्ठम् । महाभागः हर्ष इत्यर्थः मनोरथं=तव काषायधारणाभिलाषं भिनत्ति=प्रत्याचष्टे, न स्वीकरोतीत्यर्थः । अयम्=हर्षः आदिशति=आज्ञापयति अनुष्ठेयं=करणीयम् । यदि भ्राता इति मन्यसे इति शेषः एवमन्यत्रापि वत्सलः=स्नेहवान्, अस्य=हर्षस्य नियोगे=आदेशे स्थातव्यम् अस्यादेशः पालनीय इति भावः । उक्त्वा=कथयित्वा व्यरंसीत्=व्यरमत् तूष्णीम्बभूवेत्यर्थः ।

उपरतं=समाप्तं वचः=वचनं यस्य तस्मिन् दिवाकरमित्रे नरपतिः=हर्षः जगाद=अकथयत्—आर्यम्=भवन्तम् अपहाय=वर्जयित्वा अभिदध्यात्=कथयेत् । अनभ्यर्थितम्=अप्रार्थितं यद् दैवं=भाग्यं तेन निर्मिताः=सृष्टाः विषमा=कठिना या विपद्=विपत्तिः तस्याम् अवलम्बनस्य=आश्रयणस्य स्तम्भाः=स्थूणाः भवन्तः=यूयं लोकस्य=जगतः अर्थात् भवत्सदृशा सत्पुरुषाः घोरविपत्सु लोकानामवलम्बनाय ब्रह्मणा प्रार्थनां विनैव निर्मिताः सन्ति । रूपकम् । स्नेहेन=प्रेम्णा तैलेन च आर्द्रा=कोमला क्लिन्ना च मूर्तिः=आकृतिः येषां ते, मोहः=अज्ञानम् एव अन्धकारः तं ध्वंस-यन्ति=विनाशयन्तीति धर्मस्य=कर्तव्यस्य प्रदीपाः=प्रदीपयन्तीति द्योतकाः इत्यर्थ, प्रदीपाः=दीपकाश्च, दीपका अपि स्नेहार्द्रमूर्तयः अन्धकारं विनाशयन्ति, अत्रापि रूपकम् तच्च श्लिष्टम् प्रणयस्य=प्रीतेः प्रदानेन दुर्ललिता=धृष्टा अतिप्रीतिः=अत्यधिका प्रीतिः दुर्लभं=दुष्प्रापम् । अपि मनोरथम्=अभीष्टम् अभिलषति इच्छति कस्मादपि प्रणयं प्राप्य तस्मिन् उत्पन्ना अतिप्रीतिः तस्मात् दुर्लभमपि पदार्थं कामयते इति भावः । हृदयस्य लघिम्ना=लाघवेन लंघितम्=आक्रान्तम् इति शंकरः अति वल्लभत्वम्=अतिप्रियत्वं धीरस्य=गंभीरस्य अपि पुरुषस्य धाष्ट्यं=धृष्टताम् आरोपयति आपादयतीत्यर्थः अर्थात् प्रेमाधिक्यं गाम्भीर्यं विलोप्य लघिमानमुत्पाद्य च धीरमपि धृष्टीकरोति, शंकरस्तु 'हृदयं लंघितलघिमातिवल्लभत्वम्' इति पाठमाक्ते । स्वार्थस्य=स्वकार्यस्य तृष्णाः=इच्छाः युक्तम्=उचितम् च अयुक्तञ्च तयोः यः विचारः=विवेकः तेन शून्यः=रहितः तस्य भावः तत्त्वं तस्मात् शालीनम्=विनीतम् अधृष्टमिति यावत् [ 'स्यादधृष्टे तु शालीनः' इत्यमरः ] प्रागल्भ्यम् प्रगल्भस्य=धृष्टस्य भावम् शिक्षयन्ति=अध्यापयन्ति । आर्याः=

हिन्दी–दिवाकर मित्र के अपना कथन समाप्त कर चुकने पर राजा हर्ष बोला— आपको छोड़ कर कौन दूसरा इस तरह कहता ? बिना प्रार्थना के ही भाग्य द्वारा निर्मित आप घोर विपत्ति में लोगों के सहारे के खम्भे हैं । और स्नेहार्द्र ( प्रेम-मृदु, तेल से गीले ) मूर्ति वाले आप मोह-रूपी अन्धकार का विनाश कर देने वाले धर्म-प्रदीप हैं । किन्तु प्रेम प्रदान से ढीठ बनी अति प्रीति कुछ दुर्लभ मनोरथ भी चाहती है । हृदय में लाघव उत्पन्न किये हुए अतिप्रियता धीर व्यक्ति को भी धृष्ट बना देती है । स्वार्थ की तृष्णा विनीत को भी धृष्टता सिखा देती है । श्रेष्ठ लोग सागर की तरह प्रार्थना की मर्यादा रखते हैं । माननीय ( आप ) ने बिना प्रार्थना के ( अपना ) यह देह आतिथ्य हेतु पहले ही मुझे दे रखा है । इसलिए आदरणीय बौद्धभिक्षु ( आप ) से मैं कुछ मांगता हूँ । इस समय मुझे अपनी यह बहिन–जो बालिका है और बहुत सारे दुःखों की सताई हुई है—सब कामों की उपेक्षा के रूप में—बाधा होने पर भी सदा पालनी-पोसनी है । भाई की हत्या के रूप में बुराई करने वाले रिपुदल के विनाश हेतु उद्यत हुई अपनी

बाहोर्विधेयैर्भूत्वा सकललोकप्रत्यक्षं प्रतिज्ञा कृता। पूर्वावमाननाभिभवमसहमानैरर्पित आत्मा कोपस्य। अतो नियुङ्क्तां कियन्तमपि कालमात्मानमार्योऽपि कार्ये मदीये। दीयतामतिथये शरीरमिदम्। अद्यप्रभृति यावदयं जनो लघयति प्रतिज्ञाभारमाश्वासयति च तातविनाशशुचाविक्लवाः प्रजाः, तावदिमामत्रभवतः कथाभिश्च धर्म्याभिः, कुशलप्रतिबोधविधायिभिरुपदेशैरपगतरजोभिः, शीलोपशमदायिनीभिश्च देशनाभिः, क्लेशप्रहाणहेतुभूतैश्च तथागतदर्शनैः, अस्मत्पार्श्वोपवर्तिनीमेव प्रतिबोध्यमानामिच्छामि। इयं तु ग्रहीष्यति मयैव समं समाप्तकृत्येन काषायाणि। अर्थिजने च किमिव नातिसृजन्ति महान्तः। सुरनाथमात्मास्थिभिरपि यावत्कृतार्थमकरोद्धर्योदधिचिर्दधीचिः। मुनिनाथोऽप्यनपेक्षितात्मशरीरस्थितिरनुकम्प्येति कृत्वा कृपावानात्मानं जठरसत्त्वेभ्यः कतिकृत्वो न दत्तवान्। अतः परं भवन्त एव बहुतरं जानन्ति।' इत्युक्त्वा तूष्णीं बभूव भूपतिः।

---

टीका–श्रेष्ठपुरुषाः जलनिधयः=सागरा इवेत्युपमायाम्, अभ्यर्थनायाः=प्रार्थनायाः मर्यादां सीमां रक्षन्ति=पालयन्ति अर्थात् समुद्रः स्वसीमां नोल्लंघयति तथैव साधवोऽपि प्रार्थनायाः अनौचित्येऽपि न तामुल्लंघयन्ति अपितु स्वीकुर्वन्त्येव। अनभ्यर्थितेन=अप्रार्थितेन अयाचितेनेति यावत् माननीयेन=आदरणीयेन भवता इदं शरीरं=स्वदेहमित्यर्थः प्रथमम् एव=पूर्वम् एव आतिथ्याय=अतिथिभूतानाम् अस्माकं सत्कारायेत्यर्थः दत्तम्=अर्पितम् एव [ यथा अपरोपकारिणो-कृतस्तु कायकलिरयमस्माकम्। 'सर्वस्वमदनिष्टमिष्टातिथ्याय' इति ] भदन्तम्=माननीयं बौद्धाचार्यं भवन्तमित्यर्थः किंचित् अर्थये=याचे [ अर्थ–धातोः द्विकर्मकत्वम् ] स्वसा=भगिनी बहुभिः दुःखैः=क्लेशैः खेदिता=खेदमवापिता सर्वाणि च तानि कार्याणि तेषाम् अवधीरणम्=अवहेलनम् उपेक्षेति यावत् एव उपरोधः=बाधा विघ्न इत्यर्थः तेन अपि यावत् किञ्चित्कालाय नित्यं लालनीया=पालनीया। भ्रातुः=राज्यवर्धनस्य य वधः=मारणं तेन अपकारिणः=दुष्कृतिनः द्रोहिण इत्यर्थः ये रिपवः=शत्रवः तेषां कुलस्य=वंशस्य प्रलयकरणे=विनाशने उद्यतस्य=सन्नद्धस्य बाहोः=भुजस्य विधेयैः=दासैः आयत्तैरित्यर्थः भूत्वा सकलाः=समस्ताश्च लोकाः=जनास्तेषां प्रत्यक्ष=समक्षं प्रतिज्ञा=संकल्पः कृता=अनुष्ठिता। पूर्वा=प्रथमा या अवमानना=अवज्ञा उपमानः भ्रातृवध इति यावत् तया यः अभिभवः=पराजयः तम् असहमानैः=अक्षममाणैः अस्माभिः आत्मा कोपस्य=क्रोधस्य अर्पितः=दत्तः अस्माकम् आत्मा क्रोधाकुलीभूतोऽस्तीति भावः। कियन्तं=कञ्चित् कालम् ( कालात्यन्तसंयोगे द्वि० ) आर्यः=भवान् अपि आत्मानम् मदीये=मामके कार्ये नियुङ्क्ताम्=व्यापारयतु नियोजयत्विति यावत्। अतिथये=मह्यमित्यर्थः शरीरं=स्वकायः दीयताम्=समर्प्यताम् अद्यप्रभृति अद्यतनदिवसात् आरभ्य अयं जनः=अहमित्यर्थः प्रतिज्ञायाः=शत्रुविनाशसंकल्पस्य भारं लघयति=लघूकरोति स्वप्रतिज्ञां न पूरयतीत्यर्थः ततस्य=पितुः प्रभाकरवर्धनस्य विनाशस्य=निधनस्य दुःखेन=शोकेन विक्लवाः=विह्वलाः प्रजाः लोकान् आश्वासयति सान्त्वयति, इमाम् राज्यश्रियम् अत्रभवतः=आदरणीयस्य भवतः धर्म्याभिः=धर्मादनपेताभिः धार्मिकीभिः इति यावत् कथाभिः अरजोभिः=अविद्यमानं रजः=रजोगुणः यस्मिन् तैः=रजोगुणरहितैः रजोगुणविकारभूतेन रागेण शून्यैः कामशमकैरिति यावत्, कुशलः=सम्यक् यः प्रतिबोधः ज्ञानं तस्य विधायिभिः=आपादकैः उपदेशैः=शिक्षाभिः, शीलैः=अहिंसास्तेयशौचादिदशनैतिकाचरणैः यः उपशमः=चित्तस्य शान्तिः तां

हिन्दी–इस भुजा के दास बनकर हमने सभी लोगों के सामने प्रतिज्ञा कर रखी है पहले-पहल के अपमान के अभिभव न सहन करते हुए हमने क्रोध को आत्मा सौंप दी है इस लिए कुछ समय तक के लिए आप भी अपने को मेरे कार्य में लगा दीजिए। अतिथि को ( अपना ) यह शरीर दे दीजिए। आज से लेकर जब तक यह जन ( मैं ) अपना प्रतिज्ञा-भार हल्का नहीं कर देता और तात ( पिता ) की मृत्यु के दुःख में व्याकुल हुई पड़ी प्रजा को आश्वासन नहीं दे देता तब तक मैं चाहता हूँ कि मेरे पास ही रहती हुई इस ( राज्यश्री ) को आप धार्मिक कथाओं, सम्यक् ज्ञान उत्पन्न करने वाले रजोगुणरहित उपदेशों, शीलों द्वारा शान्ति देनेवाली शिक्षाओं और क्लेशपरित्याग के कारणभूत बुद्ध भगवान् के सिद्धान्तों द्वारा ज्ञान देते रहा करें। कार्य समाप्त किये हुए मेरे ही साथ यह काषाय ग्रहण करेगी। महापुरुष याचक को क्या कुछ नहीं दे देते हैं ? 'धर्म के समुद्र दधीच ने इन्द्र को अपनी हड्डियों तक से भी कृतार्थ कर दिया था। दयावान् बुद्ध ने भी अपने जीवन की पर्वाह न करके 'दया करनी चाहिए' यह सोचकर कितनी बार अपने आप को जड़ पशुओं को नहीं सौंपा ? इससे अधिक बहुत कुछ आप ही जानते हैं' यह कहकर राजा चुप हो गया।

भूयस्तु बभाषे भदन्तः—'भव्या न द्विरुच्चारयन्ति वाचम्। चेतसा प्रथममेव प्रतिग्राहिता गुणास्तावकाः कायबलिमिमम् अमुना जनेनोपयोगस्तु निरुपयोगस्यास्य लघुनि गुरुणि वा कृत्ये गुणवदायत्तः'. इति। अथ तथा तस्मिन्नभिनन्दितप्रणये प्रीयमाणः पार्थिवस्तत्र तामुषित्वा विभावरीमुषसि वसनालङ्कारादिप्रदानपरितोषितं विसर्ज्य निर्घातमाचार्येण सह स्वसारमादाय प्रयाणकैः कतिपयैरेव कटकमनुजाह्नवि निविष्टं प्रत्याजगाम।

टीका-ददतीति तथोक्ताभिः देशनाभिः=शिक्षाभिः क्लेशानाम्=लोभ-मोह मान-दृष्टिविचिकित्सादीनां विकाराणां यत् प्रहाणं =परित्यागः तस्य हेतुभूतैः कारणभूतैः तथागतैः=बौद्धैः दर्शनैः=सिद्धान्तैः अस्माकं पार्श्वं=समीपम् उपयाति=उपगच्छतीति तथोक्ताम् अस्मत्पार्श्ववर्तिनीमिति यावत् इमाम्=भगिनीं राज्यश्रियम् प्रतिबोध्यमानां=उपदेशद्वारा ज्ञानं प्राप्यमाणाम् इच्छामि समाप्तं कृत्यं=शत्रुविध्वंसरूपं कार्यं यस्य तेन मया एव समं=सह काषायाणि=काषायरक्तवस्त्राणि ग्रहीष्यति=धारयिष्यति। महान्तः=महापुरुषाः अर्थिजने=याचक-लोके किम् इवेति वाक्यालंकारे न अतिसृजन्ति=अत्यर्थं ददाति अपितु सर्वमेवातिसृजन्तीति काकुः। धैर्यस्य=धीरतया उदधिः=समुद्रः (रूपकम्) दधीचः=एतन्नामा ऋषिः सुराणां=देवानां नाथं=स्वामिनम् इन्द्रमित्यर्थः आत्मनः=स्वस्य अस्थिभिः=कीकसैः अपि यावत् इत्यवधारणे कृतार्थं=कृतकृत्यं सफलमनोरथमिति यावत् अकरोत्। पुरा वृत्रासुरस्य वधहेतोः इन्द्रेण दधीचस्य अस्थीनि याचितानि तेन च देवानामुपकृत्यं तानि दत्तानि तैश्च वज्रं निर्माय इन्द्रो वृत्रं जघानेति पुराणवार्ताऽत्रानुसन्धेया। मुनिनाथः भगवान् बुद्धः ('सर्वज्ञः सुगतो बुद्धः····· ···· ····। मुनीन्द्रः श्रीघनः शास्ता' इत्यमरः) अपि न अपेक्षिता=गणिता आत्मनः स्वशरीरस्येत्यर्थः स्थितिः येन सः स्वशरीरमवगणय्येति भावः अनुकम्पा=दयेति कृत्वा=विचार्य कृपावान्=दयालुः सन् आत्मानं=स्वदेहम् जठरसत्त्वेभ्यः=जडेभ्यः। सिंहादिपशुभ्यः कतिकृत्वः=कतिवारं बहुशः इत्यर्थः ('संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' पा० ५।४।१७) दत्तवान्=अर्पितवान् शंकरानुसारेण एवं किल श्रूयते-पुरा काचन सिंही प्रसवकाले बुभुक्षातुरा स्वशावकान् भक्षयितुं प्रवृत्ता, सौगतेन च समालोक्याति कारुण्यात्स्वमांसप्रदानेन तस्मान्निवारितेति। बहुतरम्=अधिकतरम्। तूष्णींबभूव=मौनमाकलयत्;

भूयः=पुनः बभाषे=अकथयत् भदन्तः=आदरणीयो बौद्धभिक्षुः दिवाकरमित्रः—भव्याः=साधुपुरुषाः भाग्यवन्तः इति शंकरः द्वि=द्विवारं वाचं=वाणीं न उच्चारयन्ति=उद्गिरन्ति। अर्थात् सज्जनानाम् एका एव बाणी भवति। अमुना जनेन=मयेत्यर्थः चेतसा=हृदयेन प्रथमं=पूर्वं दर्शनक्षणे एवेत्यर्थः तावकाः=त्वदीयाः गुणाः=धीरत्वादयः इदम् कायः=शरीरम् एव बलिः=उपहारः तम् प्रतिग्राहिताः=स्वीकारिता अर्थात् तव गुणेभ्यः मया मनसा पूर्वमेव स्वशरीरम् उपहाररूपेण समर्पितम्, व्याकरणानुसारेण अत्र मूलावस्था 'गुणाः बलिं प्रतिगृह्णन्ति, ण्यन्तावस्था' अतो जनः गुणान् बलिं प्रतिग्राहयति कर्मवाच्यावस्था च 'गुणाः अमुना जनेन बलिं प्रतिग्राहिताः' इति.' निरुपयोगस्य=उपयोगरहितस्य निष्प्रयोजनस्येति यावत् अस्य कायस्य लघुनि=अल्पे गुरुणि=महति कार्ये उपयोगः=नियोजनम् गुणवतः=गुणिनः भवतः इत्यर्थः आयत्तः=आधीनः अस्तीति शेषः। तथा अभिनन्दितः=स्वागतीकृतः स्वीकृत इत्यर्थः प्रणयः=प्रार्थना येन तस्मिन्=दिवाकरमित्रे प्रीयमाणः=प्रसन्नोभवन् पार्थिवः=राजा हर्षः ताम् विभावरीं=रात्रिं (कालात्यन्तसंयोगे द्वि०) तत्र आश्रमे उषित्वा वासं कृत्वा उषसि=प्रभाते वसनं=वस्त्रम् अलंकारः भूषणञ्च आदिर्येषां तेषां प्रदानेन=वितरणेन सन्तोषितं=सन्तोषं नीतं निर्घातम्=एतन्नामानं शबरयुवानम् (येन राज्ञे

हिन्दी-किन्तु मान्य बौद्धभिक्षु (दिवाकरमित्र) फिर बोले-भले लोग वाणी दो बार नहीं बोला करते हैं। मन ही मन इस जन (मेरे) द्वारा पहले ही आपके गुणों से इस शरीर की भेंट स्वीकार करवा ली गई है। किन्तु इस निरुपयोगी (शरीर) को छोटे या बड़े किसी भी कार्य में लगाना गुणवान् (आप) के अधीन है तदनन्तर प्रार्थना का स्वागत करने वाले उन (भदन्त) पर प्रसन्न होता हुआ राजा उस रात को वहीं रहकर पौ फटते ही वस्त्र और अलंकार आदि के प्रदान से सन्तुष्ट किये निर्घात को विदा करके आचार्य दिवाकरमित्र के साथ-साथ बहिन को लेकर कुछ ही पड़ावों के बाद गंगा के निकट स्थित शिविर में पहुंच गया।

१. 'विधायिनीभिरुपदेशैश्च दूरापसारितरजोभिः'

तत्र च राज्यश्रीप्राप्तिव्यतिकरकथां कथयत एव प्रणयिभ्यो रविरपि ततार गगनतलम् । बहलमधुपङ्कपिङ्गलः चक्रवाकवल्लभो वासरः । प्रकीर्णानि नवरुधिररसारुणवर्णानि लोकालोकजुंषि यजूंषीव कुपितयाज्ञवल्क्यवक्त्रवान्तानि निजवपुषि पूषा पापमूंषि पुनरपि सञ्जहार जालकानि रोचिषाम् । क्रमेण च समुपोह्यमानमांसलराग-

टीका—भदन्तस्य सूचना दत्ताऽऽसीत् ) विसर्ज्य = आपृच्छ्य आचार्येण = दिवाकरमित्रेण सह स्वसारं = भगिनीं राज्यश्रियम् आदाय आनीय कतिपयैः = कतिभिश्चित् प्रयाणकैः = प्रयाणैः = यात्राभिः यात्रामध्ये अवस्थानैरिति यावत् जाह्नव्याः = गंगायाः अन्तायतम् इत्यनुजाह्नवि ( अव्ययी० ) निविष्टं = स्थितं कटकं शिविरं प्रत्याजगम् = प्रत्यावृत्तवान् ।

तत्र कटके राज्यश्रियाः प्राप्तेः = लाभस्य व्यतिकरस्य = घटनायाः कथां = वृत्तं प्रणयिभ्यः = स्नेहिभ्यः मित्रेभ्यः कथयतः = वदतः हर्षस्य रविः = सूर्यः अपि गगनतलम् = आकाशतलम् ततार = लंघितवान् अस्तमगादिति भावः । बहल० — बहलं = प्रचुरं यत् मधु = माक्षिकं तस्य पंकेन = द्रवेण पिंगलः = पीतवर्णः चक्रवाकानां वल्लभः = प्रियः उभयत्र समानम् पङ्कजानां = कमलानाम् आकरः = समूहः इव वासरः = दिवसः सञ्चुकोच = सङ्कोचमवाप । प्रकीर्णा० — 'पूषा रोचिषां जालकानि पुनरपि निजवपुषि सञ्जहार' इत्यस्ति वाक्यम् । प्रकीर्णानि = दिशि दिशि प्रसारितानि ( जालकानि ) प्रकाशितानि प्रसिद्धीकृतानीत्यर्थः ( यजूंषि ) नवः = प्रत्यग्रः यः रुधिर-रसः = रक्तद्रवः तद्वत् अरुणः = रक्तवर्णः = रूपं येषां तानि अन्यत्र नवरुधिररसेन अरुणाः = वर्णाः अक्षराणि येषां तानि लोकस्य = संसारस्य आलोकं = प्रकाशं जुषन्ते = सेवन्ते इति तथोक्तानि लोके प्रकाशकारीणीत्यर्थः अन्यत्र लोकालोकः = पर्वतविशेषः जुषन्ते तत्पर्यन्तं गतानीत्यर्थः, पापं मुष्णन्ति = अपहरन्तीति ऋषिविशेषेण वक्त्रात् = स्वमुखात् वान्तानि = उद्गीर्णानि यजूंषि = यजुर्वेदमन्त्रान् इव पूषा = सूर्यः निजवपुषि = स्वशरीरे रोचिषां = किरणानां जालकानि = समूहान् पुनरपि सञ्जहार = गृहीतवान् । 'क्रमेण च उष्णांशुः ( सूर्यः )……महूर्तमदृश्यत' इत्यस्ति वाक्यम् । क्रमेण—समुपोह्यमानः = वृद्धिं गच्छन्, च मांसलः = निचितश्च यः रागः = रक्तवर्णः तेन रोचिष्णुः रोचते इति [ रुच् + इष्णुच् ] भ्राजिष्णुः = भ्राजमान इति यावत् उष्णांशुः = उष्णाः अंशवो = रश्मयो यस्य स सूर्य इत्यर्थः वृकोदरस्य = भीमसेनस्य करपुटेन = करद्वयेन

टिप्पणी—यजूंषि इव—ब्रह्मा से परम्परा द्वारा प्राप्त वेद को वेदव्यास ने मन्दमति मनुष्यों के लिए चार विभागों में बाँट कर चार वेद किये और उन्हें अपने शिष्यों को पढ़ाया, व्यास-शिष्य वैशम्पायन ने अपने याज्ञवल्क्य आदि शिष्यों को यजुर्वेद पढ़ाया । कहते हैं कि वैशम्पायन ने कोई ब्रह्महत्या कर रखी थी । उससे अपने को दोषमुक्त करने हेतु उसने अपने शिष्यों तथा अन्य ब्राह्मणों से यज्ञ करवाना चाहा । 'अथाह याज्ञवल्क्यस्तं किमेतैर्बहुभिर्द्विजैः । क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम्' ॥ ( वि० पुरा० ) । ब्राह्मणों की निन्दा सुनकर वैशम्पायन को क्रोध आ गया और याज्ञवल्क्य को बोल उठे—'मुच्यतां यत् त्वयाधीतं यतो विप्रावमानकः', इस पर याज्ञवल्क्य ने मूर्तरूप, रुधिरलिप्त सारे यजुर्वेद का वमन कर दिया । वमन किये हुए उस वेद को तीतर बनकर वैशम्पायन ( उनके शिष्य ) खा गए। यह कृष्णयजुर्वेद के नाम से ख्यात है । याज्ञवल्क्य ने सूर्य की आराधना करके उनसे शुक्लयजुर्वेद प्राप्त किया और उसका प्रचार किया । लोकालोक० सातों द्वीपों से परे यह एक पौराणिक पर्वत है । इसके इस ओर तो प्रकाश है और पहली तरफ निरा अन्धकार, देखिए विष्णुपु० - लोकालोकस्ततः शैलो योजनायुतविस्तृतः ।……ततस्तमः समावृत्य तं शैलं सर्वतः स्थितम् । तमश्चाण्डकटाहेन समन्तात् परिवेष्टितम्' [ २ । ४ । ९५-९६ ]

हिन्दी—और वहाँ राजा के अपने मित्रों को राज्यश्री के मिलने की घटना की कहानी कहते-कहते सूर्य भी गगनतल को पार कर बैठा । शहद के प्रचुर द्रव से पीले बने चक्रवाकों को प्रिय लगने वाले कमल-समूह की तरह शहद के प्रचुर द्रव के सदृश पीला, चक्रवाकों को प्रिय लगने वाला दिवस संकुचित होने लगा । ताजे-ताजे खून की तरह लाल रंग वाली, लोकालोक पर्वत तक पहुँची हुई, पापों को हर देने वाली अपनी प्रकीर्ण ( फैली हुई ) किरणावलियों को फिर सूर्य इस तरह अपने शरीर के भीतर समेटने लगा—जैसे ताजे-ताजे खून से लाल रंग वाली बनी लोक को आलोक ( प्रकाश ) देने वाली, पापों को हर देने वाली, प्रकीर्ण ( जगत्प्रचलित ) कुपित याज्ञवल्क्य के मुख से वमन की हुई यजुओं को वैशम्पायन ( उनके शिष्य ) अपने शरीर में समेट ( निगल ) गए थे । धीरे-धीरे बढ़ती आती हुई बनी

रोचिष्णुरुष्णांशुः उष्णीषबन्धसहजचूडामणिरिव वृकोदरकरपुटोत्पाटितः प्रत्यग्रशोणितशोणाङ्गरागरौद्रो द्रौणायनस्य, रुद्रभिक्षादानशौण्डपुरमथनमुक्तमुण्डशिरानाडिरुधिरपूरणशोणितकपिलः[1] कपालकर्पर इव च पैतामहः, पितृवधरुषितरामरागरचित पृथुविकटकार्तवीर्यांसकूटकुट्टाककुठारतुण्डनष्टदुष्टक्षत्रियकण्ठकुहररुधिरकुल्याप्रणालसहस्रपूरितो ह्रद इव दूरतो रौधिरः, भयनिगूढकरचरणमुण्डमण्डलाकृतिर्गरुडनखपञ्जराक्षेपक्षणक्षिप्तक्षतजोक्षितो व्यसुर्विभावसुः कमठ इव च[2]

टीका—उत्पाटितः = उन्मूलितः उद्धृत इत्यर्थः, प्रत्यग्रम् = अभिनवं यत् शोणितं = रुधिरं तेन शोणः = रक्तवर्णः अङ्गरागः = अङ्गलेपः तेन रौद्रः = भीषणः अन्यत्र ( सूर्यपक्षे ) अङ्गरागवत् रौद्रः द्रौणायनस्य = द्रोणपुत्रस्य अश्वत्थाम्नः उष्णीषस्य = शिरोवेष्टनस्य [ 'उष्णीषं शिरोवेष्टकिरीटयोः' इत्यमरः ] बन्धः = बन्धनं यस्मिन् तत् शिरः इत्यर्थः तस्मिन् सहजः = सहजातः नैसर्गिक इति यावत् चूडामणिः = शिरोरत्नम् इव, रुद्र०—रुद्रेभ्यः = रुद्रदेवताभ्यः, रुद्रा एकादश भवन्ति यत् भिक्षायाः दानम् अथवा रुद्रायाः = भीषणायाः भिक्षायाः आदानं = ग्रहणं तस्मिन् शौण्डः = निपुणः अथवा तत्परः यः पुरमथनः त्रिपुरारिः शङ्कर इत्यर्थः एकादश-रुद्रेषु शङ्करः अथवा शम्भुः एव प्रमुखोऽस्ति तेन मुक्तं = प्रक्षिप्तं यत् मुण्डं = शिरः तस्य शिरायां अशुद्धरक्तवाहिनीनां नाडीनाम् = शुद्धरक्तवाहिनीनां धमनीनाञ्च यत् रुधिरं = रक्तं तेन यत् पूरणं = भरणं तेन शोणित-कपिलः = आरक्तपीतः अत्र 'पूरणशोणितकपिल.' इत्यस्य स्थाने 'पूरणकपिल.' इत्येव पाठः 'साधीयान्' । पैतामहः = पितामहस्य = ब्रह्मणः अयम् (अण्) ब्राह्मः, कपाल-कर्परः = कपालपात्रम् इव, पितृ०—पितुः = जनकस्य जमदग्नेरित्यर्थः वधेन = कार्तवीर्यपुत्रहत्यया रुषितः = कुपितः यः रामः = परशुरामः तेन रागेण = मात्सर्येण क्लेशेन वा [ 'रागस्तु मात्सर्ये लोहितादिषु । क्लेशादावनुरागे च' इति मेदिनी ] रचितः = निर्मितः, पृथुः विस्तीर्णः विकटः = भीषणश्च कार्तवीर्यस्य = सहस्रार्जुनस्य अंसस्य = स्कन्धस्य कूटः = शिखरम्, शिखरसदृशोच्चस्कन्धमित्यर्थः तस्य कुट्टाकः = छेदनशीलः यः कुठारः = परशुः तस्य तुण्डेन = मुखेन धारयेत्यर्थः नष्टानि = कृत्तानि यानि

टिप्पणी—द्रौणायन—अश्वत्थामा के सम्बन्ध में शंकर ने महाभारत की यह कथा उद्धृत कर रखी है—'अश्वत्थाम्ना सौप्तिके हतेषु निजपुत्रेषु द्रौपद्या भीमसेनोऽभ्यधायि—यद्यश्वत्थाम्नः शिरश्छित्त्वा न आनीयते तदाहं जीवितं त्यजामीति । ततोऽहमेवं करोमीति प्रतिज्ञाय आयान्तं भीमं दृष्ट्वा व्यासाश्रमस्थोऽश्वत्थामा ब्रह्मास्त्रं भीमवधाय प्राहिणोत् । एकाकिनश्च भ्रातुर्गमनाद् भीतेन अर्जुनेन तमेवानुसरता ब्रह्मशिरोऽस्त्रं मुमुचे । तदवसरागतेश्च नारदादिमध्यस्थैर्भूत्वोक्तम्—द्रौणेरस्त्रमभिमन्त्र्य प्रियायाः ( उत्तरायाः ) गर्भे पतिष्यति । अर्जुनेनाप्यात्मीयेऽस्त्रे संहृते भीमोऽश्वत्थाम्नः सहजातं मूर्धमणिमुच्चीय नातिचिरेणाजगाम । कपालकर्पर—यहाँ शिव द्वारा ब्रह्मा के पाँचवें सिर के काटे जाने की ओर संकेत है। सुनते हैं कि एक बार बहुत पहले कभी सुमेरु के शिखर पर बैठे हुए ऋषि लोग ब्रह्मा को पूछ बैठे कि 'परतत्त्व' कौन है ? ब्रह्मा ने अपने को ही परतत्त्व बताया । इस पर विष्णु का अंशभूत क्रतु क्रुद्ध हो गया । वह अपने को ही परतत्त्व कहने लगा, दोनों में विवाद बढ़ गया तो वे वेदों के पास इस बात पर निर्णय लेने पहुँचे । वेदों ने रुद्र को परतत्त्व बताया, तो ब्रह्मा रुद्र की निन्दा करने लगे । रुद्र क्रुद्ध हो गए । उन्होंने कालभैरव का सृजन किया, जिसने बायें हाथ के नखाग्र से ब्रह्मा का शिरश्छेद कर दिया ।

हिन्दी—लालिमा से चमकता हुआ, ताजे-ताजे खून का लाल-सा भीषण सूर्य थोड़ी देर के लिए भीम द्वारा दोनों हाथों से उखाड़े, ताजे-ताजे खून के लाल अंगराग से भीषण बने, अश्वत्थामा के शिर के सहजात शिरोरत्न के समान, भीषण भिक्षा लेने में निपुण शंकर द्वारा ( काटकर ) फेंके हुए मुण्ड की शिराओं और धमनियों का खून भर जाने से लाल-पीले बने हुए ब्रह्मा के मस्तक के खप्पर के समान, पिता के वध से रुष्ट हुए परशुराम द्वारा बनाये कार्त्तवीर्य के विशाल और विकट कन्धे के शिरे का छेदन कर देने वाले कुल्हाड़े की धार से काटे हुए दुष्ट राजाओं के कण्ठ-छिद्र से निकले खून की नहरों के हजारों परनालों से भरे हुए दूर तक फैले खून के सरोवर के समान, भय के मारे हाथ पैर और शिर को सिकोड़े एवं मण्डलाकार बने गरुड़ के विशाल नख पंजों द्वारा उठाकर नोच डालने से गिरे हुए खून से लथपथ, आकाश में लुढ़कते, निष्प्राण विभावसु नामक कछुए के ( शरीर के ) समान नियत समय बीत जाने पर दुःखी हुई

---

१. 'पूरणकपिल': २. विभावसुकमठ इव,

लोठ्यमानो नभसि, अरुणगर्भमांसपिण्डाण्ड इव च खण्ड्यमानमानीतो नियतकालानिपातदूयमानदाक्षायणीक्षिप्तः, धातुतट इव च सुमेरोरसुरवधाभिचारचरुपचनपिशुनः, शोणितक्वाथकषायितकुक्षिरतिविसङ्कटः कटाह इव च बार्हस्पत्य सद्योगलितगजदानवदेहलोहितोपलेपभीषणो मुखमण्डलाभोग इव महाभैरवस्य मुहूर्तमदृश्यत। जलनिधिजलप्रतिबिम्बितरविबिम्बराजिभास्वराजावलम्बिनी गृहीतार्द्रमांसभारेव बाबभासे वासरावसानवेला वेतालनिभा। ज्वलत्सन्ध्यारागरव्यामाबलप्रवाहः

---

दुष्ट-क्षत्रियाणां=दुर्वृत्त-राजानां कण्ठ-कुहराणि=गलछिद्राणि तेषां रुधिराणां=रक्तानां कुल्यानां=लघुकृत्रिमसरिताम् ('कुल्याल्पा कृत्रिमा सरित्' इत्यमरः) ये प्रणालाः=निस्सरणमार्गाः तेषां सहस्रेण पूरितः=भरितः दूररोधी=दूरं प्रदेशं रुणद्धीति तथोक्तः=दूरप्रदेशव्यापीत्यर्थः, रौधिरः=रुधिरस्यायम् (अण्) रुधिरस्येत्यर्थः ह्रदः=सरः इव भय०—भयेन=त्रासेन निगूढं=संवृत संकोचितमित्यर्थः करौ च चरणौ च मुण्डः=शिरश्च तेषां समाहारः० मुण्डम् यस्य स घासो च मण्डला=गोला आकृतिः यस्य स च, गुरुः=विशालः गरुडस्य यः नखपञ्जरः नखराणां पार्श्वास्थीनि तेन यः आक्षेपः=उत्क्षेपः तेन यत् क्षपणं=मञ्जनं विदलनमिति यावत् तेन। क्षिप्तेन=निःसृतेन क्षतजेन=रुधिरेण उक्षितः=सिक्तः, व्यसुः=विगता असवः=प्राणाः यस्य स मृत इत्यर्थः विभावसुः एतन्नामकः कमठः=कच्छपः इव नभसि=आकाशे लोठ्यमानः=परिभ्रमन्, आकाशे सूर्यः रक्तरञ्जितः मंडला-कृतिः मृतविभावसु—सदृशः दृश्यते स्मेति भावः। अरुण०—अरुणः=एतन्नामा गरुडभ्राता गर्भे अभ्यन्तरे यस्य तथाभूतः मांसपिण्डस्य=मांसखण्डस्य अण्डः इव खण्डिमानं=खण्डरवम् आनीत. खण्डीकृत इत्यर्थः नियतकालस्य=गर्भस्थितेः नियतसमयस्य अतिपातेन=अतिक्रमणेन। निश्चितप्रसवकालसमत्ययेत्यर्थः दूयमाना=चिताकुलेत्यर्थः या दाक्षायणी=दक्षप्रजापतेः पुत्री (कश्यपस्य पत्नी) विनतेत्यर्थः तया क्षिप्तः=उत्क्षिप्तः, धातु०—सुमेरोः=एतदाख्यस्य देवनिवासभूतस्य सुवर्णपर्वतस्य धातुतटः=

**टिप्पणी—रौधिरः ह्रदः**—परशुराम के सम्बन्ध में पीछे भी यह प्रसंग आया कि एक बार कार्तवीर्य—जिसे सहस्रबाहु भी कहते हैं—परशुराम के पिता जमदग्नि के आश्रम में आया और बलपूर्वक उनकी कामधेनु हर ले गया परशुराम घर में नहीं थे। जब उन्हें इस घटना का पता चला तो, उन्होंने कार्तवीर्य पर आक्रमण कर दिया और अपने कुल्हाड़े से उसे काट डाला। कार्तवीर्य के पुत्र पिता-बध का समाचार सुनते ही आश्रम में आ धमके और परशुराम की अनुपस्थिति में उनके पिता जमदग्नि को मार कर पिता के बध का बदला चुका गए। फिर तो क्या था, परशुराम आग-बबूले हो गए और सारी क्षत्रिय-जाति के संहार का प्रण कर बैठे। तदनुसार उन्होंने इक्कीस बार क्षत्रियों का विनाश किया और उनके खून से तालाब भर दिए। **विभावसुः**—विभावसु और सुप्रतीक दो भाई थे। सुप्रतीक छोटा था। घर की एकता बनाए रखने हेतु विभावसु भाई के साथ मिलकर ही रहना चाहता था, पर सुप्रतीक नहीं मानता था। वह बँटवारे की जिद कर बैठा। क्रोध में आकर बड़े भाई ने छोटे को शाप दे दिया—'जा हाथी बन जा'। छोटे ने भी प्रतिशाप दे दिया—'कछवा बन जा' नयी योनियाँ पाकर सरोवर में भी वे दोनों लड़ते ही रहते थे। एक दिन गरुड़ दोनों को आकाश में उठा ले भागा और चट कर गया।

**दाक्षायणी**—दक्ष प्रजापति की कद्रू और विनता नाम की दो पुत्रियाँ थी। वे दोनों कश्यप को ब्याह दी गई थीं। पति ने कहा कि कद्रू की एक हजार सन्तानें होंगी और विनता को केवल दो ही, कद्रू ने एक हजार सर्पों को जन्म दिया, किन्तु 'अण्डाभ्यां विनतायास्तु मिथुनं न व्यदृश्यत। ततः पुत्रार्थिनी देवी व्रीडिता च तपस्विनी॥ अण्डं बिभेद विनता तत्र पुत्रमपश्यत। अप्यर्धकायसम्पन्नमितरेणाप्रकाशता॥ महा० आ० १६। १६। १७] विनता ने गर्भाण्ड को तोड़कर आकाश मे फेंक दिया जिसके भीतर अरुण था, इसलिए अरुण विकलांग ही रहा। वह सूर्य का सारथि है।

**हिन्दी**—दाक्षायणी (विनता) द्वारा तोड़कर ऊपर फेंके, गर्भ में अरुण को रखे मांसपिण्ड के अण्डे के समान, असुरवध हेतु अभिचार (मारण-यज्ञ) सम्बन्धी चरु-पाक के सूचक सुमेरु पर्वत के धातुओं से भरे ढलान के समान, खून के क्वाथ से लाल बने पार्श्वभागों वाली बृहस्पति की विशाल कढ़ाई के समान एवं ताजा-ताजा गिरे हुए गजासुर की देह के खून की लेप से भीषण बने महाभैरव के विस्तृत मुख-मण्डल के समान दिखाई दिया। समुद्र के जल में पड़ी प्रतिबिम्बों की राजि से चमकीले बने मेघ का आश्रय लिये वेताल-सदृश सायंकालीन वेला ऐसी लग रही थी मानो कच्चा मांस-

पुनरिव पुराणपुरुषपीवरोरुसम्पुटपिष्टमधुकैटभरुधिरपटलपाटलवपुरभवदधिपतिरर्णसाम्। अवसिते सन्ध्यासमये समनन्तरम-परिमितयशःपानतृषिताय मुक्ताशैलशिलाचषक इव निजकुलकीर्त्या, कृतयुगकरणोद्यतायादिराजराजतशासनमुद्रानिवेश इव राज्यश्रिया, सकलद्वीपजिगीषाचलिताय श्वेतद्वीपदूत इव छायया, श्वेतभानुरुपानीयत निशया नरेन्द्रायेति।

॥ इति श्रीबाणभट्टकृतौ[१] हर्षचरितेऽष्टम उच्छ्वासः ॥

---

टीका-धातुयुक्तो नितम्बः इव असुराणां=दानवानां वधाय=मारणाय यः अभिचारः=यज्ञक्रियाविशेषः तस्य यः चरुः=हव्यम् तस्य पचनस्य=पाकस्य पिशुनः=सूचकः अर्थात् सुमेरोः सौवर्णी प्रभेव सायंकालीनसूर्यस्य यः क्वाथः=पाकः तेन कषायितः=रक्तवर्णीभूतः कुक्षिः=पार्श्वभागः यस्य सः अतिशयेन विशंकटः=पृथुः विशाल इति यावत् ['विशङ्कटं पृथु बृहत्' इत्यमरः] बृहस्पतेः अयम् इति (अण्) बार्हस्पत्यः कटाहः=पिठरः स्थालीविशेषः इति यावत् सूर्यः रुधिरपूर्णमहाकटाह—समानो दृश्यते स्मेति भावः, बृहस्पतिर्हि देवतानां हव्यं पचतिस्म, सद्यो०—सद्यः=प्रत्यग्रं गलितं क्षरितं गजदानवस्य=गजासुरस्य यत् लोहितं=रुधिरं तस्य उपलेपेन=लेपनेन भीषणः=भयंकरः महाभैरवस्य=शिवरूपविशेषस्य मुखमण्डलस्य आभोगः=विस्तार इव, गजासुरो महिषासुरस्य पुत्र आसीत्, स च महादेवेन, भैरवरूपं धृत्वा हतः, मुहूर्तं=किञ्चित्क्षणं अदृश्यत=दृष्टोऽभवत् (उष्णांशुः) उपरि सर्वत्र उपमा सा च मालारूपा क्वचित् श्लेषगर्भिता चापि। जल०—जलनिधेः=समुद्रस्य जले प्रतिबिम्बिता=प्रतिफलिता या रविबिम्बानां=सूर्यमण्डलानां राजिः=पंक्तिः तया भास्वरं=दीप्यमानम् अभ्रं=मेघम् आकाशं वा अवलम्बते आश्रयतीति तथोक्ता वासरस्य=दिवसस्य अवसानस्य=समाप्तेः वेला=समयः=सायं समय इत्यर्थः गृहीतः=धृतः आर्द्रमांसस्य=पिशितस्य भारः=समूहः यया सा इव वेतालनिभा=नीचयोनिविशेषस्य तुल्या आवभासे=प्रकाशतेस्म, वेतालो हि आर्द्रमांसभोजी भवति। अत्र निभशब्दस्य, सादृश्यवाचकत्वात् उपमा सा च इवशब्देन वासरावसानवेलायां गृहीतार्द्रमांस-भारत्वोत्प्रेक्षणात् उत्प्रेक्षया संकीर्यते। ज्वलत्०—ज्वलन् दीप्यमानः यः सन्ध्यायाः रागः=अरुणिमा तेन रज्यमानः=रक्तवर्णीक्रियमाणः जलस्य प्रवाहो यस्य सः अर्णसां=अपाम् अधिपतिः=स्वामी समुद्र इत्यर्थः पुनः इवेत्युत्प्रेक्षायां, पुराणपुरुषः=विष्णुः तस्य पीवरं=स्थूलं यत् ऊरुसंपुटं=सक्थिद्वयम् तेन पिष्टौ=दलितौ यौ मधु—कैटभौ एतन्ना-मानौ दानवविशेषौ तयोः रुधिरस्य=रक्तस्य पटलेन=समूहेन पाटलं=रक्तवर्णं वपुः=शरीरं यस्य तथाभूतोऽभवत् सन्ध्यायाः समये अवसिते=समाप्ते सति समनन्तरम्'...........श्वेतभानु. उपनीयत निशया नरेन्द्राय' इत्यस्ति वाक्यम्। अपरिमित०—अपरिमितम्=अनन्तं यत् यशः=कीर्तिः तस्य पानाय=पानविषयीकरणाय तृषिताय=पिपासवे गृध्नवे इत्यर्थः मुक्ता-शैलस्य=मौक्तिकपर्वतस्य शिलायाः=शिलानिर्मितः इत्यर्थः चषकः=पानपात्रम् इव निजकुलस्य=पुष्प-भूतिवंशस्य कीर्त्या, अयं भावः तस्य कुलं पूर्वमेव यशस्वि आसीत् यथा खलु निशा स्फुरत्तारकपंक्तिभिः पूर्वमेव उद्दीप्ता भवति किन्तु हर्षः तावन्मात्रेण सन्तुष्टो नासीत्, असौ तादृशं यशः कांक्षति स्म यत् सर्वमेव जगद् व्याप्नुयात् यथा चन्द्र-रश्मयः सर्वमेव जगद् व्याप्नुवन्ति। कृत०—कृतयुगं=सत्ययुगं धर्मयुगमित्यर्थः तस्य करणे=विधाने प्रवर्तने इत्यर्थः उद्यताय=सज्जिताय आदिराजस्य=प्रथमनृपतेः मनोः वा पृथोः वा या राजती=रौप्यमयी शासनमुद्रा=शासना-धिकारस्य राजकीयचिह्नविशेषः तस्या निवेशः=न्यासः इव राज्यश्रिया=राजलक्ष्म्या अर्थात् राज्यश्रीः पुरा पृथोः मनोर्वा हस्तस्थिता आसीत् यः कृतयुगे शास्तिस्म, तेन स्वाधिकारः हर्षे हस्तान्तरितः, तदर्थं च चन्द्ररूपेण मुद्रितं शासनपट्टं हर्षाय दत्तम्' केचित् व्याचक्षते अत्र हर्षस्य भगिनी राज्यश्रीः भ्रात्रे न केवलं कर्तुमादिष्टवती' इत्यर्थोऽपि व्यज्यते, सकल०—सकलानां द्वीपानां जिगीषायै=जयेच्छायै चलिताय=प्रस्थिताय श्वेत द्वीपस्य=द्वीपविशेषस्य यत्र

---

१. '०कृते' 'श्रीचित्रभानुसूनुमहाकविचक्रचूडामणिश्रीबाणभट्टकृतौ श्रीहर्षचरिते महाकाव्ये विन्ध्याद्रिनिवेशनं नामाष्टम उच्छ्वासः सम्पूर्णः। समाप्तमिदं श्रीहर्षचरितमहाकाव्यम्'

टीका—सर्वमपि श्वेतं भवति, अतः चन्द्रमाः श्वेतद्वीपस्य दूतत्वेन उत्प्रेक्ष्यते इव आयत्या=उत्तरकालेन ( 'उत्तरःकाल आयतिः' इत्यमरः ) उज्ज्वलाभयेत्यर्थः श्वेतभानुः=चन्द्रः निशया=रात्र्या नरेन्द्राय=हर्षाय उपानीयत=उपाह्रियत उपहाररूपेण दत्त इति यावत्, उपरि सर्वत्रोत्प्रेक्षालङ्कारः स च समासोक्त्या संकीर्यते कीर्त्यादिषु नायिकाव्यवहार-समारोपात्। 'इति' ग्रन्थ समाप्तौ कॉवलस्य यामसस्य विचारानुसारेण सूर्यास्तस्य चन्द्रोदयस्य च वर्णनेन भाविरक्ताक्तानि युद्धानि शत्रुविनाशः हर्षस्य विजयाश्च व्यज्यन्ते।

'पन्त' मोहनदेवेन गढदेशनिवासिना।
टीका 'हर्षचरितस्य' रचिता छात्रतोषिणी ॥ १ ॥

'पुरुषाविद्याऽनित्यत्वात्' दोषाः स्युर्बहुला इह।
कृपापरास्तु विद्वांसः क्षमिष्यन्तीति प्रार्थये ॥ २ ॥

टिप्पणी - मधुकैटभौ—दुर्गासप्तशती के अनुसार सृष्टि के आरम्भ में विष्णु भगवान् जब योगनिद्रा में सोये पड़े थे तब उनके कर्णमल से मधु और कैटभ नाम के दो असुर उत्पन्न हुए। वे नाभिकमल स्थित ब्रह्मा को खाने को तय्यार हो रहे थे कि ब्रह्मा ने विष्णु को योगनिद्रा से जगा दिया। तब विष्णु और उन राक्षसों के मध्य चिरकाल तक घोर युद्ध चलता रहा। राक्षस भगवान् की वीरता से प्रसन्न हो उठे और उन्हें वर मांगने को कहा। भगवान् ने यही वर मांगा तुम दोनों मेरे हाथों मारे जाओ। फिर उन्होंने दोनों असुरों को अपनी जांघों के बीच रखकर कुचल दिया। तुलना कादम्बरी—अविरमृदितमधुकैटभरुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्'।

समूह पिये हुए हो। चमकती हुई सन्ध्या की लालिमा से लाल जल-प्रवाह वाला सागर ऐसा प्रतीत हो रहा था मानो उसकी काया पुराण पुरुष ( विष्णु ) की मोटी-मोटी जाँघों के बीच कुचले मधु और कैटभ राक्षसों के रुधिर-समूह से फिर लाल हो उठी हो। सायं समय के समाप्त हो जाने पर बाद को निशा नरेन्द्र हर्ष के लिए उपहार रूप में चन्द्रमा को ले आई, ऐसा लगता था मानो यशपान के प्यासे उसके लिए उसकी निज कुलकीर्ति मौक्तिक पर्वत की शिला का बना पान-पात्र ले आई हो अथवा मानो सत्ययुग प्रारम्भ करने के लिए उद्यत हुए उसके लिये राजर्षी आदि राजा ( मनु अथवा पृथु ) की मुद्रांकित चाँदी की ( गोल ) शासन पट्टिका ( अधिकार-पत्र ) ले आई हो अथवा मानो समस्त द्वीपों को जीतने की इच्छा से इसके लिये आयति ( भविष्य ) श्वेत द्वीप का दूत ले आई हो।

बाणभट्टकृत हर्षचरित का अष्टम उच्छ्वास समाप्त

# हर्षचरितम्

## "छात्रतोषिणी" संस्कृत-हिन्दी-व्याख्याभ्यां टिप्पण्या च समलङ्कृतम्

### (१-४ उच्छ्वासात्मकः पूर्वभागः)

### प्राचार्य-श्रीमोहनदेवपन्तः

ईसा की सातवीं शती के पूर्वार्ध में उत्तरी भारत में सार्वभौम नृपति हर्षवर्धन हुए जिनकी राजधानी स्थाण्वीश्वर थी जो कि आजकल कुरूक्षेत्र के निकट 'थानेसर' नाम से प्रख्यात है। प्रस्तुत कृति के रचयिता बाणभट्ट ने इनका जीवनचरित लिखा जो 'हर्षचरित' नाम से प्रसिद्ध है।

बाण का हर्षचरित हर्षवर्धन की आंशिक जीवनी पर आधारित है, हर्ष के सम्बन्ध में बाण ने जो मुख्य-मुख्य बातें लिखीं, वे भी थोड़ी-सी हैं। राज्य का आठ उच्छ्वासों तक का विस्तार तो उनकी अलंकृत शैली का विलास है, उनके लम्बे-लम्बे काव्यमय वर्णन हैं, पाठकों को मनोमुग्ध करने के लिए बनाई हुई एक विशाल शब्द-चित्रशाला है।

किसी भी कृति का अपने सम-सामयिक समाज से प्रभावित होना स्वाभाविक है। बाण के हर्षचरित से हमें सातवीं शताब्दी के समाज का पूरा परिचय मिलता है।

आठ उच्छ्वासों में विभाजित इस कृति को हमने दो भागों में छापा है। ये भाग अलग-अलग जिल्दों में प्रकाशित हुए हैं। प्रस्तुत भाग में शुरू के चार उच्छ्वास हैं। इनमें पहले दो उच्छ्वासों में तथा तीसरे उच्छ्वास के कुछ अंश में बाणभट्ट ने अपना जीवन-चरित दिया है।

तृतीय उच्छ्वास में बाणभट्ट का गृहागमन, बन्धु-जनों से भेंट, उनकी हर्षचरित सुनने की जिज्ञासा और जिज्ञासा-पूर्ति के लिये 'हर्षचरित' का आरम्भ वर्णित है। हर्ष के एक पूर्वज पुष्पभूति से आख्यान का आरम्भ होता है। पुष्पभूति का भैरवाचार्य से समागम, शैव-साधना में भैरवाचार्य को सहायता, भैरवाचार्य का गन्धर्व रूप में स्वर्गारोहण आदि कुछ अमानुष तत्त्वों ने आख्यान को रोचक बना दिया है।

चतुर्थ उच्छ्वास में कहा है कि पुष्पभूति से वर्धन-वंश के राजाओं का उद्गम हुआ। इस वंश के प्रभाकर-वर्णन, उनकी पत्नी यशोमती, उनके पुत्र राज्यवर्धन और हर्षवर्धन तथा कन्या राज्यश्री का चरित दिया है। राज्यश्री और गृहवर्मा के विवाह का सुन्दर चित्र खींचा गया है।

इस संस्करण की कुछ विशेषताएँ इस प्रकार हैं-प्रत्येक उच्छ्वास में मूलपाठ के साथ संस्कृत और हिन्दी में टीकाएं जोड़ दी हैं। कई स्थलों पर टिप्पणी भी कर दी हैं। जहां पद्य आये हैं टीका सहित उनका अन्वय भी लगा दिया हैं। भूमिका में बाण और हर्ष का सक्षिप्त परिचय देकर कृति के सभी पहलुओं की समीक्षा भी कर दी है।

MLBD
E-mail: mlbd@mlbd.com
Website: www.mlbd.com

₹ 495

Literature

ISBN 978-81-208-2616-8
9 788120 826168